## चः

च । अ । अन्वाचये ॥ यत्रैकस्य प्राधान्येना ऽपरस्य गौणत्वेनाख्यानं सो-ऽन्वाचयः । यथा । भोवटो भिक्षा-मट गाञ्चानयेति । अत्र भिक्षाट-नं प्रधानं तत्कुर्वाणो यदि गाः पश्यसि तदा ता अप्यानय नोचेत् भि-क्षामेवाटेति ॥ समुच्चये । परस्पर-निरपेक्षस्य अनेकस्य कस्मिंश्चिदन्वये ॥ यथा । ईश्वरं गुरुञ्च भजस्वेति । उ-भयत्र न समासोऽसामर्थ्यात् ॥ इत-रेतरयोगे । अन्योन्यार्थे । मिलिता-नामन्वये ॥ समाहारे । समूहे ॥ प-क्षान्तरे ॥ पादपूरणे ॥ अवधारणे ॥ हेतौ ॥ तुल्ययोगितायाम् ॥ विनि-योगे ॥ चनति चिनोति वा । चन शब्दे चिञ् चयने वा । अन्येभ्योऽपीति डः ॥ ... चैकारावधिस्वरूपवर्त्तोभ-यतः ॥ चण् ० प्रत्यर्थे णित् । समुच्चया-दौ चत्वमनुबन्धः ॥

चः । पुं । चण्डेशे ॥ कच्छपे ॥ चन्द्रे ॥ चौरे ॥ चवर्णे ॥ त्रि । दुर्जने ॥ नि-र्बीजे ॥

चकासत् । त्रि । प्रकाशमाने ॥ चका-



स्ति । चकास्दीप्तौ । लटः शत्रा-देशः ॥

चकितम् । न । भयसंभ्रमे ॥ त्रि । श-ङ्किते ॥ भीते ॥ तस्यलक्षणम् । प्रि-याग्रे चकितं भीते रस्थानेपि भयं महदिति ॥

चकिता । स्त्री । अष्टिसंचकषोडशाच्च-रायां वृत्तौ ॥ भात् सभतनगै रष्ट-च्छेदेश्चादिह चकिता ॥ दुर्जयदनु-जश्रेणी दुष्वेष्टागतचकिता यद्वत् परिचञ्चलता यातास्तर्धस्तविक्रमम् । दीव्यतिदिविषन्मोखा भव्यनन्दनवि-पिने गच्छत शरणं कृष्णं भोभीता भवरिपुतः ॥

चकोरः । पुं । स्वनामप्रसिद्धे पक्षिवि-शेषे । कौमुदीजीविनि । चन्द्रिका-पायिनि ॥ चटकं शीतलं स्वच्छं वृ-ष्यं कापिञ्जलमिषस्तु । तद्वच्चकोर-जं मांसं तथाच्च बलपुष्टिदम् ॥ च-कति । चकतृप्तौ । कठिचकिभ्यो-ऽरन् ॥

चकोरकः । पुं । चकोरे ॥ स्वा० कन् ॥

चक्रः । पुं । कोके । चक्रवाके । चकवा इतिप्रसिद्धे पक्षिणि ॥ न । व्रजे । ग-णे ॥ सैन्ये ॥ रथाङ्गे । चक्का पैया इतिचभाषा ॥ राष्ट्रे ॥ दम्भान्तरे ॥ कुम्भकारोपकरणे । चाक इतिभा

पा ॥ अस्त्रविशेषे । प्रकरणे ॥ पुटभेदे । जलावर्त्ते ॥ ग्रामजाले ॥ तगरपुष्पे ॥ महाभारतप्रसिद्धे व्यूहविशेषे ॥ तैलयन्त्रे ॥ मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञाख्येषु शरीरस्थेषु षट्सु ॥ सर्वतोभद्रादौ । देवार्चाधारयन्त्रे ॥ मन्त्रदीक्षोपयोगिष्वकडमादिषु ॥ श्रीचक्रे ॥ कौलिकानां हितार्थाय श्रीसदाशिवोक्तेषु महाचक्रादिपञ्चसु ॥ यथा । श्रीश्वरउवाच । चक्रं पञ्चविधं प्रोक्तं श्रीतन्त्रेरुद्रयामले । विधिनापूजिते चक्रे सौख्यमोक्षफलं लभेत् ॥ महाचक्रं चक्रराजं दिव्यचक्रं तथापरम् । वीरचक्रं चतुर्थञ्च पशुचक्रञ्च पञ्चममिति ॥ पञ्चचक्रे सकामानामधिकारः । यथा । राजचक्रं राज्यदं स्यात् महाचक्रन्तु मोक्षदम् । दिव्यदं देवचक्रं वीरचक्रन्तु सिद्धिदम् ॥ पशुचक्रन्तु दारिद्र्यदुःखशोकामयप्रदम् । कामक्रोधविहीने सर्वचक्रन्तु निष्फलमिति ॥ सकामाश्चैव निष्कामा द्विविधा भुवि मानवाः । चतुराश्रयाः कामिनो ये तेषां मत्राधिकारिता ॥ * ॥ ब्रह्मज्ञानायतु प्रोक्ता भैरवीचक्रमुत्तमम् ॥ ब्रह्मज्ञानयुतानान्तु तत्त्वचक्रेऽधिकारिता ॥ यथोक्तं श्रीमहानिर्वाणे । नाधिकारः सर्वेषां ब्रह्मज्ञान् साधकान् विना । परब्रह्मोपासका ये ब्रह्मज्ञा ब्रह्मतत्पराः । शुद्धान्तःकरणाः शान्ताः सर्वप्राणिहिते रताः ॥ निर्विकारा निर्विकल्पा दयाशीला दृढव्रताः । सत्यसङ्कल्पका ब्राह्मास्त एवात्राधिकारिणः ॥ ब्रह्मभावेन तत्त्वज्ञे ये पश्यन्ति चराचरम् । तेषां तत्त्वविदां पुंसां तत्त्वचक्रेऽधिकारिता ॥ सर्वं ब्रह्ममयं भावश्चक्रेऽस्मिंस्तत्त्वसंज्ञके । येषामुत्पद्यते देवि त एव तत्त्वचक्रिण इति ॥ छन्दोविशेषे । यथा । कुण्डलकलितमगणमिह रचितयं गन्धकुसुमरसविरचय वलयम् । चक्रमुरगपतिवरपरिगुणितं षोडशकलमतिसुललितभणितम् ॥ सुन्दरि नभसि जलदचयरुचिरे देहिनयन्युगमतिघनचिकुरे । मानमिह हि नहि जलधरसमये किन्तव भवति हृदयमिद सदये [illegible] ॥ क्रियतेऽनेन । घञर्थे कः । के कृञादीनामिति द्वित्वम् ॥ अर्द्धर्चादि ॥ ८

चक्रकः । त्रि । तर्कविशेषे ॥ अन्योन्याश्रयमेवावर्त्तितं चक्रकं भवति । स्वापेक्षापेक्षापेक्षित्वनिबन्धनेऽनिष्टप्रसङ्गे । चतुष्काद्यादावपि स्वस्य

स्वापेक्षापेक्ष्यपेक्षित्वसत्त्वान्नाधिक्यम् ॥ अस्यात्माश्रयवत् त्रैविध्यम् ॥ अपिचास्य लक्षणं यथा । स्वापेक्षणीयापेक्षितसापेक्षितत्वनिबन्धनप्रसङ्गत्वमिति । अपेक्षाच उत्पत्तौ स्थितौच ग्राह्या । तत्राद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात् । द्वितीया यथा । घटोयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात् । तृतीया यथा । घटोयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथात्वेनोपलभ्येतेति । इतितर्कशास्त्रम् ॥

चक्रकारकम् । न । व्याघ्रनखाख्यगन्धवस्तुनि । करजे ॥ चक्रस्यकारकम् ॥

चक्राङ्ग्या । स्त्री । पृश्निपर्णीम् ॥

चक्रगजः । पुं । चक्रमर्द्दे ॥

चक्रगण्डुः । पुं । वर्त्तुलाकारोपधाने । चातुरे । गालसिर्हाना गोलसिर्हाना इतिचभाषा ॥

चक्रगदाधरः । पुं । परमात्मनि वासुदेवे ॥ मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयन् लोकरक्षार्थं मुक्तश्चक्रगदाधरः ॥ चक्रगदे धरति । धृञ्० । पचाद्यच् ॥ चक्रगदयोर्धरोवा ॥

चक्रगुच्छः । पुं । अशोकपादपे ॥

चक्रजीवकः । पुं । कुलाले । कुम्भकारे ॥ चक्रंजीवनमस्य ॥

चक्रदंष्ट्रः । पुं । शूकरे ॥

चक्रदन्ती । स्त्री । दन्तीवृक्षे ॥

चक्रदन्तीबीजम् । न । जयपाले ॥

चक्रधरः । पुं । अङ्गे । विष्णौ ॥ अहौ । सर्पे ॥ त्रि । चक्रिणि ॥ ग्रामजालिनि ॥ धरति । धृञ्० । अच् । चक्रस्यधरः ॥ चक्रंधारयतिवा । अच् वा हृत्वकोक्षिप्तुक् ॥

चक्रधारणम् । न । अक्षे । रथावयवे । काष्ठविशेषे ॥

चक्रधारा । स्त्री । प्रधौ ॥ चक्रस्यधारा ॥

चक्रनखः । पुं । व्याघ्रनखाभिधेगन्धद्रव्ये ॥

चक्रनदी । स्त्री । गण्डक्याम् ॥

चक्रनामा । पुं । माक्षिकधातौ ॥

चक्रनायकः । पुं । व्याघ्रनखे ॥

चक्रपन्नाटः । पुं । दद्रुघ्ने ॥

चक्रपरिव्याधः । पुं । आरग्वधवृक्षे ॥

चक्रपर्णी । स्त्री । पृश्निपर्णीम् ॥

चक्रपाणिः । पुं । विष्णौ । नारायणे ॥ चक्रं पाणौ यस्यसः । प्रहरणार्थेभ्यःपरे निष्ठासप्तम्याविति सप्तम्याःपरत्वम् ॥

चक्रपादः । पुं । रथे ॥ गजे । हस्तिनि ॥

चक्रपुष्करिणी । स्त्री । मणिकर्णिकायाम् ॥

चक्रफलम् । न । अस्त्रविशेषे । अट्टने ॥

चक्रबन्धः । पुं । चित्रकाव्यविशेषे ॥

चक्रबन्धुः । पुं । } रवौ ॥
चक्रबान्धवः । पुं । }

चक्रभृत् । पुं । विष्णौ ॥

चक्रभेदिनी । स्त्री । रात्रौ ॥

चक्रभ्रमः । पुं । } कुन्दाख्ये शिल्पियन्त्रे । चक्राकारे श-
चक्रभ्रमिः । स्त्री । } स्त्रोत्तेजनयन्त्रे । शाणे ॥

चक्रमण्डली । पुं । अजगरसर्पे ॥

चक्रमर्दः । पुं । चकवँड इति पमाँड इति च भाषाप्रसिद्धे क्षुपविशेषे । दद्रुघ्ने । एडगजे ॥ चक्रमर्दो लघुः स्वादुः रूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् ॥ उष्णाम्लं तत् फलं कुष्ठकफदद्रुविषानिलान् । गुल्मकासकृमिश्वासनाशनं कटुकं स्मृतम् ॥ चक्रं दद्रुं मृद्नाति । मृद् क्षोदे । कर्मण्यण् ॥

चक्रमर्दकः । पुं । चक्रमर्दे ॥ स्वा० कन् ॥

चक्रयानम् । न । असाङ्ग्रामिके रथे । पुष्परथे ॥

चक्रयानकम् । न । चक्रयाने ॥

चक्ररदः । पुं । शूकरे ॥

चक्रलक्षणः । पुं । विष्णौ ॥ रथे ॥



चक्रलक्षणा । स्त्री । गुडूच्याम् ॥

चक्रलतामः । पुं । वट्टरसालवृक्षे ॥

चक्रला । स्त्री । उच्चटायाम् । मुस्ताविशेषे ॥ चक्रं लाति । ला० । आत इति कः ॥

चक्रवर्त्ती । पुं । समुद्रपरिवृताया: सर्वभूमेरीश्वरे । सार्वभौमे ॥ चक्रे भूमण्डले राजमण्डले वर्त्तितुं चक्रं सैन्यं वर्त्तयितुं सर्वभूमौ चालयितुं वा शीलमस्य ॥ सुप्यजातौ णिनिः ॥ अवश्यं वा चक्रं वर्त्तयति । आवश्यके णिनिः ॥ वास्तूके ॥ उगणे मध्यगुरौ । इ । संज्ञायाम् ॥ त्रि । चक्रवर्त्तिनि ॥

चक्रवर्त्तिनी । स्त्री । जन्याम् । अलक्तकायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

चक्रवाकः । पु । कोकपक्षिणि । चकवा इति भाषा ॥ अस्य मांसं लघु स्निग्धं बलप्रदमुदाहृतम् ॥ चक्रशब्देन उच्यते । वचपरिभाषणे । घञ् । न्यङ्क्वादिः ॥

चक्रवाकी । स्त्री । चक्रवाकस्य स्त्रियाम् । चकवी इति भाषा ॥ जातेरस्त्रीविषयादिति ङीष् ॥

चक्रवाटः । पु । क्रियारोहे ॥ शिखातरौ ॥ पर्यन्ते ॥ मेरोर्मस्तकसमीपे लोकपालाश्रयभूताया अष्टादशसहस्रयोजनविस्तीर्णायां नेमौ ॥

चक्रवाडः । पुं । लोकालोकाख्यपर्वते ॥ चक्राकारेण वाडते । वाडृआप्लाव्ये । अच् ॥ न । चक्रवाले । मण्डले ॥ चक्रं भूमण्डलं वलते । वलवेष्टने । कर्मण्यण् । डलयोरेकत्वम् ॥

चक्रवातः । पुं । वात्यायाम् । बवूरा इति भाषा ॥

चक्रवालः । पुं । लोकालोकपर्वते ॥ न । मण्डलाकारेण परिणतसमूहे । मण्डले ॥ चक्राकारेण वलते । वल संवरणे । अच् । अन्येषामपीतिदीर्घः ॥ यद्वा । भावेघञ्चिवालः । चक्रमिववालोऽस्य ॥ चक्रं भूमण्डलं वलते । वलवेष्टने । कर्मण्यणवा ॥ चक्रवालमस्त्यस्मिन्निति वा । अर्श आद्यच् ॥

चक्रवृद्धिः । स्त्री । यत्रवृद्धिरूपधनंदातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीतिस्वीकरोतितत्रयावृद्धिः सा । सूदका सूद इति भाषा ॥ वृद्धेरपि पुनर्वृद्धि श्चक्रवृद्धि रुदाहृतेति नारद ॥

चक्रव्यूहः । पुं । युद्धार्थं मण्डलाकारेण सैन्यरचनायाम् ॥

चक्रशल्या । स्त्री । काकतुण्ड्याम् ॥ श्वेतगुञ्जायाम् ॥

चक्रश्रेणी । स्त्री । अजशृङ्ग्याम् ॥

चक्रसंज्ञम् । न । वङ्गे ॥

चक्रसम्वरः । पुं । बुद्धभेदे । वज्रटीके ॥

चक्रा । स्त्री । नागरमुस्तायाम् ॥ कर्कटशृङ्ग्याम् ॥

चक्राङ्गः । पुं । श्वेतगरुति । हंसे ॥ चक्राण्यङ्गान्यस्य ॥ रथे ॥ चक्रमङ्गमस्य ॥

चक्राङ्गा । स्त्री । सुदर्शनायां लतायाम् ॥

चक्राङ्गी । स्त्री । कटुरोहिण्याम् ॥ विषमोचिकायाम् ॥ मञ्जिष्ठायाम् ॥ वृषपर्ण्याम् ॥ कर्कटशृङ्ग्याम् ॥ चक्राकारमङ्गमस्याः । गौरादित्वान् ङीष् ॥ हंस्याम् ॥

चक्राट । पुं । विषवैद्ये ॥ धूर्ते ॥ दीनारे ॥

चक्राधिवासी । पुं । नारङ्गवृक्षे । किर्मीरत्वचि ॥

चक्रायुधः । पुं । यूथेने ॥

चक्राह्वः । पुं । चक्रमर्दे ॥

चक्रिकः । पुं । घटिके । घटिकावादके ॥ चक्रंवादयत्वेनास्त्यस्य । ठन् ॥

चक्रिका । स्त्री । दुरालोगे ॥ युद्धावर्ते ॥ जानुनि ॥ चक्री इतिभाषा प्रसिद्धे द्रव्यस्वरूपे ॥

चक्री । पुं । जालिकभिदि ॥ कोके ॥ कुलाले ॥ अहौ ॥ द्यूचके ॥ वैष्णवे । नारायणे ॥ चक्रं मण्डलमात्मकं सुदर्शनाख्य मस्यास्ति इनिः ॥ चक्रवर्त्तिनि ॥ चक्रमर्दे ॥ तिनिशे ॥

व्याघनखे ॥ काके ॥ खरे ॥ त्रि । चक्रविशिष्टे ॥ चक्रमस्यास्ति । अतइनिठनाविति इनिः ॥ चक्रयुक्तरथादियानारूढे ॥

चक्री । स्त्री । चक्री इतिसर्वजनप्रसिद्धायां घूर्णपेषण्याम् । जाँता इति भाषा ॥

चक्रीवान् । पुं । गर्दभे ॥ चक्रवद्भ्रमणं चक्रम् । तदस्यास्ति । मतुप् । आसन्दीवदितिसाधुः ॥ चक्रीवान्नाम राजादि ॥

चक्रुः । पुं । कर्त्तरि ॥ करोति । डुकृञ्० । कृञ्श्चेति चकारात् क्रुःप्रत्ययो धातोर्द्वित्वञ्च ॥

चक्रेश्वरी । स्त्री । जिनानांविद्यादेवी विशेषे ॥ इतिहेमचन्द्रः ॥

चषणम् । न । अवदंशे । मद्यपानरोचकभक्ष्यद्रव्ये । चखना इति भाषा ॥

चक्षाः । पुं । बृहस्पतौ ॥ उपाध्याये ॥

चक्षुःश्रवाः । पुं । सर्पे ॥ चक्षुःश्रवःकर्णौऽस्य । सान्तः ॥

चक्षुर्वर्द्धनम् । न । मेषशृङ्गीवृक्षे ॥

चक्षुष्यः । पुं । कतके ॥ पुण्डरीकवृक्षे ॥ शोभाञ्जनवृक्षे ॥ रसाञ्जने ॥ न । सौवीराञ्जने ॥ खर्परीतुत्थे ॥ प्रपौण्डरीके । स्थलपद्मे ॥ त्रि । प्रियदर्शने ॥ अक्षिहिते ॥ चक्षुषादर्शनीये ॥ चक्षुषेहितम् । शरीरावयवाद्यत् ॥

चक्षुष्या । स्त्री । कुलत्थिकायाम् ॥ सुभगायाम् ॥ अजशृङ्ग्याम् ॥ अरण्यकुलत्थिकायाम् ॥ चक्षुषे हिता । यत् । टाप् ॥

चक्षुः । न । लोचने । नयने । नेत्रे । रूपग्रहणलिङ्गेन्द्रिये । रूपप्रकाशके ॥ उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसङ्ख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ क्रियां जातिं योग्यवृत्तिसमवायञ्च तादृशम् । गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोरिति कारिकावली ॥ पाणिभ्यां न स्पृशेच्चक्षुः चक्षुषी नैकपाणिनेति कर्मलोचनम् ॥ चष्टे पश्यत्यनेन चष्टेऽस्मिन् रूपमनुभवत्यनेन वा । चक्षिङ्० । चक्षेःशिच्चेत्युसिः । शित्त्वादनार्द्धधातुकत्वात् ख्याञ् न ॥ मेषशृङ्गीवृक्षे ॥

चङ्कुरः । पुं । स्यन्दने । रथे ॥ वृक्षे ॥ न । भोज्ये । यानमात्रे ॥ चङ्कति । चकि सौत्रः । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच ॥

चङ्क्रमणम् । न । अतिशयभ्रमणे । इतस्ततो भ्रमणे ॥ पुनः पुनर्भ्रमणे ॥ अनतिदेहपीडाकारकचङ्क्रमणस्य गु-





णाः । आयुर्बलमेधाग्नीन्द्रियशुद्धिकारित्वम् ॥ सदोपानद्धृतपादत्वक्रमणगुणाः । अनारोग्यत्वम् । अनायुष्यत्वम् । इन्द्रियदृष्टिनाशित्वञ्चेति राजवल्लभः ॥

चङ्गः । त्रि । शोभने ॥ दक्षे ॥ इति मेदिनी ॥

चचेण्डा । स्त्री । फललताविशेषे । बृहत् फले ॥

चञ्चः । पुं । पञ्चाङ्गुले ॥ चञ्चति । चञ्चुगतौ । पचाद्यच् ॥

चञ्चत् । त्रि । देदीप्यमाने ॥

चञ्चत्पुटः । पुं । तालप्रभेदे ॥ ताले चञ्चत्पुटेचेयं गुरुद्वन्द्वं लघुप्लुतम् ॥

चञ्चरी । स्त्री । तिन्तिडीवृते ॥ भ्रमर्याम् ॥

चञ्चरीकः । पुं । भ्रमरे । षट्पदे ॥ चञ्चति । चञ्चु० । पर्फरीकादित्वात् साधुः ॥ चरति वा । चर० । पर्फरीकादित्वादीकन् चरेर्नुम् च ॥

चञ्चलः । पुं । कामुके ॥ अनिले ॥ त्रि । अस्थिरे । सदाचलनस्वभावे । लोले । तरले ॥ कदाचिच्चञ्चलासती । चञ्चति । चञ्चु० । बाहुलकात् अलच् ॥

चञ्चला । स्त्री । लक्ष्म्याम् ॥ तडिति ॥ पिप्पल्याम् ॥ वर्णवृत्तविशेषे । यथा । तूर्यतालपद्मिराजमेरुहारनायकेन चामरध्वजेन चापि मण्डिता सुवर्णकेन । वर्णिता ऽतिसुन्दरेण पन्नगेन्द्रपिङ्गलेन चञ्चलाचकोरचारुलोचने सुमङ्गलेन ॥ यथा । आलियालि मञ्जुकुञ्जगुञ्जितालिमालितेन भास्करात्मजाविराजिरम्यतीरकाननेन । शोभिते स्थले स्थितेन सङ्गता यदूत्तमेन माधवेन भाविनी तडिल्लतेव नीरदेनेति ॥ चञ्चनम् । चञ्चु० । घञ् । चञ्चं लाति । ला० कः ॥

चञ्चा । स्त्री । नलनिर्माणे । नलनिर्मिते । चाँच इति गौडभाषा ॥ तृणनिर्मितपूरुषे । बजूका इतिभाषा ॥ चञ्चति । चञ्चु० । अच् । टाप् ॥ चञ्चेव मनुष्यः । लुम्मनुष्य इति कनो लुप् ॥

चञ्चुः । पुं । नाडीचशाके ॥ व्यडम्बके । रक्तैरण्डे ॥ एरण्डसामान्ये ॥ क्षुद्रचञ्चुवृक्षे ॥ स्त्री । पक्षिणामोष्ठे । त्रोट्याम् । चूँच इति भाषा ॥ चञ्चति । चञ्चु० । बाहुलकादुः ॥ चिञ्चुकायाम् । चेंचूनाडीतिख्याते ॥ चञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा । धातुपुष्टिकरी बल्या मेध्या पिच्छिलिका स्मृता ॥ पत्रशाकविशे

घे । विजलायाम् । चीरपत्रिकायाम् ॥

चञ्चुका । स्त्री । चञ्चौ । पक्षिणामोष्ठे ॥

चञ्चुपत्र । पुं । सुशाके । विजलायाम् ॥

चञ्चुभृत् । पुं । स्त्री । } खगे । पक्षिणि ॥
चञ्चुमान् । पुं । स्त्री । }

चञ्चुरः । पुं । चञ्चुशाके ॥

चञ्चुसूचि । पुं । } सुगृहे । पीततुण्डे । बया इतिभाषा ॥ चञ्चौ सूचिरस्य । स्वार्थे कः ॥
चञ्चुसूचिक । पुं । }

चञ्चू । स्त्री । चञ्च्वाम् । चोञ्च्याम् ॥ जटुल ॥

चञ्चक । पुं । चेञ्च इतिप्रसिद्धे शाके ॥

चटक । पुं । कलविङ्के । गृहनीडे । चिडा इतिभाषा ॥ चटतिभिनत्ति गृहीतधान्यादिकं मुखेन । चटभेदने । पचाद्यच् । तस्मात् स्वार्थेकः ॥

चटकका । स्त्री । चटकायाम् । चटकिकायाम् ॥ उदीचामातःस्थानइति पचेइदादेशाभाव ॥

चटका । स्त्री । चटकस्यस्त्रियाम् ॥ चटकस्यचटकाया वा स्त्र्यपत्ये । चिडिया इतिभाषा ॥ चटकस्य चटकाया वा स्त्र्यपत्यम् । चटकायाऐरक् स्त्रियामपत्येलुग्वक्तव्य. । तत्र टावन्तात् तद्धितेलुप्ते लुक्तद्धितलुकीतिटापोलुकि पुनरजादिलक्षणष्टाप् सचजातिलक्षणस्यङीषोबाधइति



भावः ॥ नचाग्रप्रत्ययस्यादितीकारः शङ्क्यः चटकायाऐरगितिलिङ्गादर्शनादिपुनिपातनाद्वातदप्रवृत्तेः । क्षिपकादित्वान्नेत्व मितितुयुक्तम् । पुंयोगलक्षणो जातिलक्षणो वा ङीप् अजादिपाठाद्बाध्यते ॥ श्यामाख्यपक्षिणि ॥

चटकाशिरः । न । पिप्पलीमूले ॥ चटकायाःशिरइव ॥

चटकिका । स्त्री । चटककायाम् ॥ उदीचामातःस्थानेयकपूर्वायाः इतिपचेइदादेश ॥

चटु । अ । प्रियेवाक्ये ॥

चटुः । पुं । चाटौ । प्रियेवाक्ये ॥ व्रतिनामासने ॥ पिचण्डे । उदरे ॥ चटति । चट० । मृगय्वादित्वात् कुः ॥

चटुलः । त्रि । चञ्चले ॥ शोभने ॥ चटति । बाहुलकादुलच् ॥ मत्वर्थे सिध्मादित्वाल्लच्वा ॥

चटुला । स्त्री । विद्युति ॥ अजा० टाप् ॥

चटुलोल. । त्रि । चाटुलोले । सुचञ्चले ॥ इति हारावली ॥

चट्टलम् । न । सिद्धपीठविशेषे ॥ यथा । चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखर । व्यक्तरूपा भगवती भवानी तत्रदेवता । विशेषत. कलियुगे वसामिचन्द्रशेखरे । इति ॥

चणक. । पुं । धान्यविशेषे । हरिमन्थे ॥ चणक. शीतलो रूक्ष. पित्तरक्तकफापहः । लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः ॥ सचाङ्गारैस्तसम्भृष्टस्तैलभृष्टश्च तद्गुणः । आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः ॥ शुष्कभृष्टोऽतिरूक्षः स्याद्वातकुष्ठप्रकोपनः । स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरोऽहितः ॥ आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः ॥ * ॥ हरितार्द्रचणकान्घनम् । सुहरितहरिमन्थं चोदभिन्नो नखाद्यैः प्रथमसुदकसिक्तो वेसवारे घसिद्धः । लवणमरिचसङ्गात् तैलहिङ्गुप्रसिक्तः शिखरयति विभोक्तुर्जठरं मन्दवह्निम् ॥ कोलाभिधानकफलं परिगृह्य शुद्धं तप्ते घृते सुखचितकथितो घणाभ्याम् । संसाधितं सुरभितं सुचिरामठेन जिह्वातले विशतिनित्यमतिप्रकामम् ॥ चणयते । चणदाने । कुन् ॥ मुनिविशेषे ॥

चणकरोटिका । स्त्री । चणकमुद्रायाम् ॥ चाणक्यरोटिका रूक्षा श्लेष्मपित्तास्रनुद्गुरुः । विष्टम्भिनी न चक्षुष्या तद्गुणा तिलशष्कुली ॥

चणकशाकम् । न । स्वनाम्ना प्रसिद्धे शाके ॥ रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् । अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ॥ सुकृतं चाणकं शाकं मम्लतक्रेण साधितम् । सहिङ्गुलवणोत्तमे भर्जितं रामठान्वितम् ॥ चाराम्लभावसचणा, स्वणकप्रवाला सम्मर्द्दितामरिचसैन्धवशृङ्गवेरैः । सम्यक् चूर्णिताः कटुकतैलयुतैः सुपक्वैर्भृष्टैः सुहिङ्गुचणकैः परिहृत्तवासाः ॥

चणकात्मज. । पुं । वात्स्यायनमुनौ ॥

चणकाम्लम् । न । चणकक्षारे ॥ चणकाम्लकमत्यम्लं दीपनं दन्तहर्षणम् । लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥

चणकात्मिका । न । चोरम्थफलनचणकपत्रधिमिरवारिणि ॥

चणद्रुमः । पुं । चुद्रगोक्षुरे ॥

चणपत्री । पुं । रुदन्तीवृक्षे ॥

चणिका । स्त्री । तृणविशेषे । गोदुग्धायाम् ॥

चण्ड । पुं । तिन्तिडीवृक्षे ॥ यमकिङ्करे ॥ दैत्यविशेषे ॥ न । तीक्ष्णे ॥ त्रि । अतिकोपने ॥ तीव्रे ॥ तीक्ष्णवति ॥ चण्डते । चडिकोपे । पचाद्यच् ॥ चमति । चमुअदने । चणति वा । चणदाने । अमन्ताड्डः ॥

चण्डता । स्त्री । उग्रतायाम् ॥ भावे तल् ॥

चण्डनायिका । स्त्री । दुर्गायाम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥

चण्डमुण्डी । स्त्री । स्थानविशेषे ॥ यथा । चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरीति ॥

चण्डरुद्रिका । स्त्री । विद्याविशेषे ॥

चण्डवती । स्त्री । चण्डीविशेषे ॥

चण्डवृष्टिप्रपात । पुं । दण्डकविशेषे । यथा । यदिह नयुगलं ततः सप्त रेफा सदा चण्डवृष्टिप्रपातो भवेद् दण्डकः । यथा । प्रलयघनघटाप्रमारम्भमेघावली चण्डवृष्टिप्रतापाकुलं गोकुलम् सपदि समवलोक्य सलीलेन हस्तेन गोवर्द्धनं नाम शैलं दधद्गीलया । कमलनयने रचरचोतिगर्ज्जत्स्वसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गद्गदभिन्नधातुर्यारावि विस्वाङ्गरागो मुरारातिरस्तु प्रमोदाय वदति ॥

चण्डा । स्त्री । धनहरीक्षुपे । चोरनामगन्धद्रव्ये ॥ शङ्खपुष्प्याम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥ जिनानां शासनदेवताविशेषे ॥ लिङ्गिनीलतायाम् ॥ कपिकच्छ्वाम् ॥ आखुपर्ण्याम् ॥ श्वेतदूर्व्वायाम् ॥ पद्मातीनद्याम् ॥ टाप् ॥

चण्डांशुः । पुं । सूर्य्ये ॥ चण्डा अंशवो यस्य सः ॥

चण्डातः । पुं । करवीरे ॥ चण्डमत ति । अत० । कर्म्मण्यण् ॥

चण्डातकः । पुं । न । अर्द्धोरुके । वरस्त्रीणामर्द्धोरुपर्य्यन्तवस्त्रे ॥ चण्डां कोपनां वरस्त्रियमतति । अत० । ण्वुल् ॥

चण्डालः । पुं । शूद्राद्ब्राह्मण्यामुत्पन्ने । प्लवे । मातङ्गे । दिवाकीर्त्तौ । श्वपचे । नृणामधमे ॥ चण्डते । चडि० । पतिचण्डिभ्यामालच् ॥

चण्डालकन्दः । पुं । कन्दविशेषे ॥

चण्डालवल्लकी । स्त्री । चण्डालवीणायाम् । कण्डोलवीणायाम् । किन्नरीतिभाषा ॥ चण्डालवल्लकी ॥

चण्डालिका । स्त्री । किन्नरायाम् ॥ उमायाम् ॥ ओषधीभेदे ॥

चण्डिः । स्त्री । चण्ड्याम् ॥ चण्डति । चडि० । सर्व्वधातुभ्य इन् ॥

चण्डिका । स्त्री । भवान्याम् । चण्ड्याम् ॥ अथ्या-स्थानममरेशे ॥ चण्डैव । स्वार्थे कन् । टाप् । इत्वम् ॥

चण्डिकेश्वरः । पुं । शिवे ॥

चण्डिमा । पुं । चण्डत्वे ॥ चण्डस्य भावः । पृथ्व० इमनिच् ॥

चण्डिलः । पुं । रुद्रे ॥ वास्तूकशाके ॥ ना

स्योपरिचतुष्टये । नौकाचतुष्टयं यत्र क्रियते यस्य नौकया ॥ नौकाचतुष्टयं तत्र वृहन्नौकेति मन्यते ॥ * ॥ नकुलैर्दिक्तदा राजन् गजस्याभिमुखं गजम् ॥ यदि कुर्वीत धर्मज्ञ पापग्रस्तो भविष्यति । स्याना भावे यदा पार्थेव स्तिनं वस्तिसम्मुखम् ॥ करिष्यति तदा राजन्निति गौतमभाषितम् । प्राप्ते गजवधे राजन् चत्वारोमासनोग जः ॥ इति तिथ्यादितत्त्वे चतुरङ्गकीडनम् ॥

चतुरङ्गा । स्त्री । घोटिकाभेदे ॥

चतुरङ्गिणी । स्त्री । सेनायाम् ॥ रथगजहयपदातयः चत्वारि अङ्गानि यस्याम् सा ॥

चतुरङ्गुलः । पुं । धनवहेडा इति प्रसिद्धे आरग्वधवृक्षे ॥ चतस्रोऽङ्गुलयः प्रमाणमस्य पर्वफलस्य योगात् इति पि ॥

चतुरब्दा । स्त्री । चतुर्वर्षयस्कागवि ॥ चत्वारोऽब्दा वयःप्रमाणमस्याः । धात्वीयठक् । अध्यर्द्धेति लुक् ॥

चतुरम्लम् । न । कोलदाडिमटचाम्लाऽम्लवेतसे ॥ अम्लवेतसवृक्षाम्ल दैर्ध्यजम्बीरनिम्बुकैः । चतुरम्लमिदंमोतं ग्रन्थे भावप्रकाशके ॥

चतुरस्रः । त्रि । चतुष्कोणे ॥ लग्नाच्चतुर्थाऽष्टमस्थाने । लग्नाच्चतुर्थनिधनेचतुरस्रसंज्ञे ॥ चतस्रोऽश्रयोऽस्य । सुप्रातसुश्वेत्यजन्तो निपातितः ॥

चतुरात्मा । पुं । परमात्मनि परमेश्वरे ॥ सर्गादिषु पृथग्विभूतयश्चतस्र आत्मानो ऽस्य । यथा । ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरे रेता जगतः सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णो रेता विभूतयः ॥ रुद्रः कालोन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्द्धा प्रलयायैता जनार्दनविभूतयः ॥ इति विष्णुपुराणम् ॥ यद्वा । रागद्वेषादिरहितत्वात् चतुरं मनः आत्मास्वरूपः । मनोवुद्ध्यहङ्कारचित्तचतुष्टयात्मत्वाद्वा ॥

चतुराननः । पुं । ब्रह्मणि । अजयोनौ ॥ यथा । तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानीति । श्रीभागवतम् । चत्वारि आननान्यस्य ॥

चतुरूषणम् । न । कणामूलसहिते त्र्यूषणे ॥ त्र्यूषणं सकणामूलं कथितं चतुरूषणम् । व्योषस्यैव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥

चतुर्गतिः । पुं । नारायणे ॥ चतुर्गा

माश्रमाणां वर्णानाञ्च यथोक्तकारिणां गतिराश्रयः॥ कच्छपे ॥

चतुर्ज्ज्ञातकम्। न। त्वगेलापत्रकनागकेसरेषु॥ एतच्चरोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघुपित्ताग्निकृद्वर्ण्यं कफवातविषापहम्॥

चतुर्थः। त्रि। तुरीये॥ चतुर्णां पूरणः। तस्यपूरणेडट् तस्यथुगागमः॥

चतुर्थकः। पुं। चतुर्थेह्नि चतुर्थक इति ख्यातज्वरे विषमज्वरविशेषे॥ चतुर्थेह्निभवः। कालप्रयोजनाद्रोगे इति कन्। दिनद्वयन्त्वतिक्रम्य यःस्यात्सचिचतुर्थकंप्युक्तः। चतुर्थक श्चतुर्थेह्निस्यर्गमादिनंग्रहाख्याख्येयम्॥

चतुर्थांशः। त्रि। चतुर्भागैकभागे। तुरीये। पादे॥

चतुर्थिका। स्त्री। पलपरिमाणे॥

चतुर्थी। स्त्री। चन्द्रस्यचतुर्थकलाक्रियारूपायां तिथौ॥ तत्रजातस्यफलं यथा। स्वपुत्रमित्रप्रमदाप्रमोदी द्यूताभिलाषी कृपया समेतः। त्रिवादशीलो विजयी विवादे भवेच्चतुर्थीप्रभवः कठोर इति॥ डेच्यामस्यस् इति चिके॥ टिच्चान्ङीप्॥

चतुर्द्दन्तः। पुं। ऐरावते। इन्द्रस्यगजे॥ चत्वारोदन्ताः अस्य॥

चतुर्द्दशः। त्रि। चतुर्द्दशानांपूरणे॥ स्तस्यपूरणेडट्॥

चतुर्द्दश। त्रि। सङ्ख्याविशेषे १४॥ सङ्ख्येये॥ चत्वारश्च दशच॥ चतुरधिकादशवा॥

चतुर्द्दशभुवनम्। न। पञ्चीकृतेभ्यो भूतेभ्योजातानि भूर्भुवःस्वर्म्महोजनस्तपःसत्यमित्येतन्नामकानि उपर्युपरिविद्यमानानि सप्त। अतलवितलसुतलरसातलतलातलमहातलपातालनामकानि अधोऽधोविद्यमानानिच सप्त। मिलित्वाचतुर्द्दशभुवनानि भवन्ति॥ चतुर्द्दशानां भुवनानांसमाहारः॥

चतुर्द्दशलोकम्। न। चतुर्द्दशभुवने॥

चतुर्द्दशी। स्त्री। चन्द्रस्यचतुर्द्दशकलाक्रियारूपायांतिथौ॥ तत्रोत्पन्नस्य फलम्। यथा। विरुद्धभाक् पुरुषः सरोष श्चौरः कठोरः परवञ्चकश्च। परान्नभोक्ता परदाररतश्च चतुर्द्दशीचे जननस्य कालेऽस्ति॥ टिच्चान्ङीप्॥

चतुर्द्दोलः। पु। न। चण्डोलइति चन्दोलइतिचख्याते द्विपदवाह्ये यानविशेषे॥ यथा। राजोचितं द्विपदं यानं विशेषाख्यमस्याविदुः। चतुर्भिरुह्यतेयत्तुचतुर्द्दोलंतदुच्यते इति-

॥ अथ भोजः । चतुर्भिर्वाहकैर्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः । स्तम्भैरष्टाभिरुदितं चतुर्दोलमनुत्तमम् ॥ * ॥ तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् । चतुर्विधानां भूपानां चतुर्दोलाः प्रकाशिताः ॥ विंशत्सम्मितायामो विंशत्परिणाहवान् । हस्तद्वयोन्नतः प्रोक्तश्चतुर्दोलो जयाख्यया ॥ १ ॥ चतुर्हस्तायतो यस्तु सार्द्धहस्तस्तदन्यथा । चतुर्दोलः समाख्यातः कल्याणः सार्द्धमुन्नतः ॥ २ ॥ पञ्चहस्तायतो यस्तु त्रिहस्तपरिणाहवान् । सार्द्धद्व्युन्नतो वीरश्चतुर्दोल उदाहृतः ॥ ३ ॥ आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः । चतुर्दोलोऽयं सिंहस्त्रिहस्तेनोन्नतः शुभः ॥ ४ ॥ * ॥ स एव द्विविधः प्रोक्तः सच्छदिश्च विनिश्छदिः । आद्यः समस्तवर्णानां परः केवलनाख्ये ॥ * ॥ सर्वेषामेव काष्ठानां दण्डः स्याद्दक्षवारणः । चन्दनेनैव घटना सर्वेषामुपयुज्यते ॥ लोमसंसर्गवस्त्रेषु कनकं सर्वधातुषु । कुम्भश्च पद्मकोषश्च गिरिश्चेति यथाक्रमम् ॥ चैदेशानां महीन्द्राणां चतुर्दोलेषु विन्यसेत् ॥ दर्पणं चार्द्धचन्द्रश्च हंसः केकी शुको गजः । अश्वः सिंहश्च त



स्याग्रे आदिच्चादिदशोत्तरान् ॥ मणिनियमस्तु दण्डवत् ॥ * ॥ रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथारुणः । नीलः कपिल इत्युक्ताः पताकानां सुसङ्ग्रहः ॥ चतुर्दोलः सपताकः शुभयानमिति स्मृतः ॥ * ॥ मुक्तादामकैर्दशभिर्युक्तः स्याद्राजकेशानाम् । चामरदण्डैर्दशभिर्दिग्गजयिनां चतुर्दोलः ॥ चापपत्रपुच्छश्चेत् सर्वोपरि परिन्यसेत् । यानानि हिरण्यनाम्ना चतुर्दोलो महीभुजाम् ॥ सम्यक्छादरहितो निश्छदिरुक्तश्चतुर्दोलः । मानं पूर्ववत् ॥ * ॥ स पुन द्विविधः प्रोक्तः सच्छन्नश्च निश्छन्नः । अथवामुपडच न्यस्तन्ति षड्गोषिजयैषिणः ॥ तेषां मानन्तु चत्वारः स्वामिहस्तैः कसम्मिताः । कोणेषु पञ्चा दण्डेच हस्तद्वयमितौ ध्वजौ ॥ सुवर्णं रजतं युग्मं त्रिविधा नाम महीभुजाम् । मणिचामरकुम्भानां खङ्गादीनां विनिश्चय ॥ चतुर्दोलवज्जो राज्ञां विज्ञेयो नवदण्डवत् । निश्छदेच चतुर्दोले मानमन्यत् शृणु ॥ आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः । विजयो नाम विज्ञात चतुर्दोलो महीभुजाम् ॥ विनयो मङ्गलो भव्यो वितस्ये कैक

दृष्टितः । त्रिविधानां महीन्द्राणां या-
नत्रयमुदाहृतम् ॥ * ॥ अष्टाभिरुच्छ्र-
येयस्तु अष्टदोलमुशन्ति च । सोया-
नदिलयम्बा च विशेयं शिल्पिनिर्मितम्
॥ * ॥ भोजस्तु । अष्टाभिर्वाजिभिर्दै-
र्घ्यैः षड्भिस्तु दैर्घ्यभिर्घटैः । स्तम्भै-
स्तु दशभिर्वैयं अष्टदोलं महीभुजा-
म् ॥ तद्भेदा जयकल्याणवीरसिंहा-
ख्यया क्रमम् । चतुर्विधानां भूपाना-
मष्टदोलाः प्रकीर्त्तिताः ॥ षड्भिर्ह-
स्तैर्मितायामः परिणाहस्तु भूजः ॥
चतुर्हस्तोन्नतो राज्ञामष्टदोलं जयं
विदुः ॥ आयामपरिणाहाभ्यां पञ्चह-
स्तमितोच्छ्रयः । कल्याणाख्योष्टदो-
लोयं चतुर्हस्तमितोन्नतिः ॥ सप्तह-
स्तायतः कार्य्यप्रवरे पञ्चहस्तकः । प-
ञ्चहस्तोन्नतो वीरस्याष्टदोलो मही-
भुजाम् ॥ आयामपरिणाहाभ्यामष्ट-
हस्तमितोच्छ्रयः । सिंहनामाष्टदो-
लोयं विशेषः षड्भुजोन्नतः ॥ * ॥
सर्व्वोयद्विविधः प्रोक्तः सच्छद्मश्चापि
निश्छदिः । काष्ठवस्त्रघटादीनां म-
यानां चामरस्य च ॥ चतुर्दोलवदुक्तो
येनियमोन्योपिच्छदिभिः । पूर्व्ववन्नि-
श्छदैर्मानं ध्वजमानमिहोच्यते ॥
दण्डध्वजा स्तेषु चाष्टौ स्वामिहस्तद-
योन्नताः । पञ्च दण्डेध्वजोराज्ञस्तु



हस्तमितोमतो ॥ मणिचामरपञ्चा-
शो निर्याणो निष्पताकवत् । निर्ध्वज-
श्चाष्टदोलोयः शिविकेतिसंगद्यते ॥
मणिकुम्भसुखादीनां नियमो नृपदृ-
ष्टवत् । इत्यष्टदोलकथनम् ॥ *
॥ एवं दाशिङ्गपुष्पविशतिदोलादि-
काः कार्याः ॥ मानं सार्द्धद्विगुणितं
सार्द्धद्विगुणितं युक्तमेतेषाम् । विं-
शतिदोलात् परतो भोजमतेसूक्ष्म-
वेधानम् ॥ यानं वहनुयोग्यवस्तु-
पुत्रमेतद्भगादवैद्याः ॥ * ॥ भवि-
ष्योत्तरेपि । यदुक्तदेवपदं यानेन ते
नसमानेनयोन्वपः । सयानं कुरुते-
दिव्यं सुचिरं सुखमश्नुते ॥ स्वयोग्य-
कयानस्थो भोगमाप्नोतिमानवः ।
परयोगिकयानस्थः क्लेशमाप्नोतिपु-
ष्कलम् ॥ योदम्भाद्यथाऽयानोचा-
नं प्रकुरुतेऽन्यथा । तस्यैतानिविन-
श्यन्ति आयुर्विद्यायशोधनम् ॥ प्रधा-
नं यानमाश्रित्य नियमोयं समाश्रि-
तः । भाप्रधाने नियमोस्ति तल्लिङ्गन्तु
मनोज्ञता ॥ इतियुक्तिकल्पतरुः ॥
चतुर्धा । अ । चतुष्प्रकारे ॥ यथा । च-
तुर्धाविभजति । संख्याया विधार्थे धा
॥ एकराशिं चतुर्धाकुरु । अनाधि
करणविचालेचैतिधा ॥
चतुर्भद्रम् । न । सकलेषु धर्मार्थकाम

मोक्षेषु ॥ चत्वारि भद्राणि श्रेष्ठान्यत्र वृन्दे ॥ यद्वा । चत्वारि भद्राणि । दिक्सङ्ख्ये संज्ञायामिति समासः ॥

चतुर्भुजः । पुं । विष्णौ । माधवे ॥ त्रि ॥ भुजचतुष्टयविशिष्टे ॥ चत्वारो भुजा यस्य सः ॥ यद्वा । भुङ्क्ते भुनक्ति इति भुजः । चतुर्णां धर्मार्थकाममोक्षाणां भुजः ॥

चतुर्मुखः । पुं । ब्रह्मणि । परमेष्ठिनि ॥ औषधविषये रसविशेषे ॥ यथा । रसगन्धकलौहाभ्रं समं सूताङ्घ्रि हेम च । सर्वं खल्वतले पिष्ट्वा कन्यारसविमर्दितम् ॥ एरण्डपत्रैरावेष्ट्य धान्यराशौ दिनत्रयम् । संस्थाप्य तत उद्धृत्य सर्वरोगेषु योजयेत् ॥ एष रसायनवरं त्रिफलामधुसंयुतम् । क्षयाग्निवर्णं खादेद्दीपलितनाशनम् ॥ क्षयमेकादशविधं कासं पञ्चविधं तथा । कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम् ॥ वातान् सर्वान् नाशयेत्त्वं विसर्पं विद्रधिं तथा ॥ अपस्मारग्रहोन्मादान् सर्वार्शांसि त्वगामयान् । क्रमेणासेवितं हन्ति दृष्टमिन्द्राग्निनिर्णया ॥ पौष्टिकं बलमायुष्यं पुत्रप्रसवकारणम् । चतुर्मुखेनादेवे



न कृष्णात्रेयलक्षितम् ॥ इति प्रयोगामृतम् ॥ चत्वारि मुखानि यस्य ॥

चतुर्मूर्तिः । पुं । विष्णौ ॥ चतस्रो मूर्तयो विराट्सूत्रात्माव्याकृततुरीयात्मानोऽस्य ॥ सिता पीता रक्ता कृष्णा चेति चतस्रो मूर्तयोऽस्य वा ॥

चतुर्युगम् । न । चतुर्षु सत्यत्रेताद्वापरकलिसंज्ञकेषु ॥ चतुर्णां युगानां समाहारः । पात्रादित्वात् स्त्रीत्वं न ॥

चतुर्वक्त्रः । पुं । ब्रह्मणि । वेधसि ॥

चतुर्वर्गः । पुं । धर्मार्थकाममोक्षेषु मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विद्यः । पुं । चातुर्वैद्ये । चतुर्वेदवेत्तरि ॥

चतुर्विधशरीरम् । न । जरायुजाण्डजस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः । सुकृतान्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

चतुर्बीजम् । न । मेथिकादिचतुष्टये ॥ मेथिका चन्द्रसूरश्च कालाजाजी यवानिका । एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् ॥ तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयान् । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् ॥ इति भावप्रकाशः ॥

चतुर्व्यूहः । पुं । विष्णौ । नारायणे ॥

मोक्षेषु ॥ चत्वारि भद्राणि श्रेष्ठान्यस्य
न्तूते ॥ यद्वा । चत्वारि भद्राणि ।
दिक्सङ्ख्ये संज्ञायामिति समासः ॥

चतुर्भुजः । पुं । विष्णौ । माधवे । वि
भुजचतुष्टयविशिष्टे ॥ चत्वारो भु
जा यस्य सः ॥ यद्वा । भुज्यते भुनक्ति
इति भुजाः । चतुर्णां धर्मार्थकाममो
क्षाणां भुजः ॥

चतुर्मुखः । पुं । ब्रह्मणि । परमेष्ठिनि
॥ औषधविशेषे रसविशेषे ॥ यथा ।
रसगन्धकलौहाभ्रं समं सूताङ्घ्रि
हेम च । सर्वं खल्लतले क्षिप्त्वा क
न्यारसविमर्दितम् ॥ एरण्डपत्रे रोधे
द्धान्यराशौ दिनत्रयम् । संस्था
प्य तत उद्धृत्य सर्वरोगेषु योजयेत्
॥ एतद्रसायनवरं त्रिफलामधुसंयु
तम् । तद्यथाग्निबलं खादेत् क्षीप
लितनाशनम् ॥ क्षयमेकादशविधं
कासं पञ्चविधं तथा । कुष्ठमष्टादश
विधं पाण्डुरोगान् प्रमेहकान् ॥
शूलं श्वासं च हिक्कां च मन्दाग्निं चा
म्लपित्तकम् । रोगान् सर्वान्नाशयेत्
तं विसर्पं विद्रधिं तथा ॥ अपस्मा
रमहोन्मादान् सर्वार्शांसि त्वगामया
न् । क्रमेणाभ्यसितं हन्ति रोगमिन्द्रा
रिनिर्यथा ॥ पौष्टिकं बल्यमायुष्यं
पुत्रप्रसवकारकम् ॥ चतुर्मुखेवाद्देने



न कृष्णास्य वेदसूचितम् ॥ इति प्रयो
गामृतम् ॥ चत्वारि मुखानि अस्य ॥

चतुर्मूर्त्तिः । पुं । विष्णौ ॥ चतस्रो मू
र्त्तयो विराट्सूत्रात्माव्याकृततुरीयात्मा
नो ऽस्य ॥ सिता पीता रक्ता कृष्णा चे
ति चतस्रो मूर्त्तयो ऽस्य वा ॥

चतुर्युगम् । न । चतुर्षु सत्यत्रेताद्वाप
रकलिसंज्ञकेषु ॥ चतुर्णां युगानां
समाहारः । पात्रादित्वात् स्त्रीत्वं न ॥

चतुर्वक्त्रः । पुं । ब्रह्मणि । वेधसि ॥

चतुर्वर्गः । पुं । धर्मार्थकाममोक्षेषु
मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विंशः । पुं । वासुदेवे । चतुर्वेदवे
त्तरि ॥

चतुर्विधशरीरम् । न । जरायुजाण्ड
जस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधश
रीराणि धृत्वा मुक्त्वा सहस्रशः ।
सुकृतान्मानवो भूत्वा ज्ञानी चेन्मो
क्षमाप्नुयात् ॥

चतुर्बीजम् । न । मेथिकादिचतुष्टये
॥ मेथिका चन्द्रसूरश्च कालाजाजी
यवानिका । एतच्चतुष्टयं युक्तं चतुर्बी
जमिति स्मृतम् ॥ तच्चूर्णं भक्षितं नि
त्यं निहन्ति पवनामयान् । अजीर्णं
शूलमाध्मानं पार्श्वशूलं कटिव्यथा
मिति भावप्रकाशः ॥

चतुर्व्यूहः । पुं । विष्णौ । नारायणे ॥

सृष्ट्यादिकार्यार्थं चत्वारो व्यूहा वि भागा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञा मूर्त्तयो यस्य सः। यथा। व्यूह्यात्मानं चतुर्द्धा वै वासुदेवादिमूर्त्तिभिः। सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्द्दन इति व्यासवचनम्॥ तथाच मार्कण्डेयपुराणे मूलकारकं वासुदेवाख्यं व्यूहमुक्तोक्तम्। द्वितीया पृथिवीमूर्द्ध्नि शेषाख्या धारयत्यधः। तामसी सा समाख्याता तिर्य्यक्त्वं समुपाश्रिता॥ तृतीया कर्म कुरुते प्रजापालनतत्परा। सत्त्वोद्रिक्ता तु सा ज्ञेया धर्म्मसंस्थानकारिणी॥ चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा। रजस्तस्या गुणः सर्गं सा करोति सदैवहीत्यादि॥ शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा यस्येति वा॥ न। साङ्ख्ययोगशास्त्रे॥ तत्र हि हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारो व्यूहाः प्रतिपाद्या भवन्ति। तत्र त्रिविधं दुःखं हेयम्। तदत्यन्तनिवृत्तिर्हानम्। प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः। विवेकख्यातिस्तु हानोपाय इति॥ चिकित्साशास्त्रे॥ तत्र च रोग आरोग्यं रोगनिदानं भैषज्यमि



ति चत्वारो व्यूहत्वेनोक्ताः॥

चतुर्हायणी। स्त्री। चतुर्वर्षीया गवि॥ चत्वारो हायना यस्याः। दामहायनेति ङीप्। त्रिचतुर्भ्यां हायनस्येति णत्वम्॥ त्रि। अन्यत्र॥

चतुष्कम्। न। चतुस्तम्भमण्डपे। चौखण्डा इति भाषा॥ चत्वरगतिविशेषे॥

चतुष्की। स्त्री। मशकहरीम्। मसहरी इति भाषा॥ पुष्करिणीविशेषे॥

चतुष्टयम्। त्रि। चतुरवयवसमुदाये॥ यथा चतुष्टयी शब्दानां प्रवृत्तिरिति। शब्दानामर्थेषु या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवती इत्यर्थः। प्रकारभेदश्च यथा। जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्दश्चेति॥ चत्वारोऽवयवा यस्य। सङ्ख्याया अवयवे तयप्। रेफस्य विसर्गस्तस्य चकारे कृत्वात् षत्वं तादावित्यादि॥ केन्द्रे॥

चतुष्पत्री। स्त्री। सुनिषण्णके। चौपत्ती शाक इति भाषा॥ चाङ्गेरीसदृशः पत्रैश्चतुर्दलइतिस्मृतः। शाकोत्तमा ऽन्विते देशे चतुष्पत्रीति चोच्यते॥ इति राजनिर्घण्टः॥

चतुष्पथ। पुं। ब्राह्मणे॥ न। चतुर्मार्गसङ्गमे। चौहाटे॥ चतुर्णां पथां

समाहारः। तद्धितार्थेतिसमासः। अक्पूरिति समासान्तः। द्रुदुमधस्येति षत्वम्। पथःसंख्येति क्लीवत्वम्। चत्वारः पन्थानो यत्र वा॥

चतुष्पद। पुं। गवादिपशौ॥ करणविशेषे॥ तदभ्यासफलं यथा॥ चतुष्पदभवो मर्त्यः सदाचारविवर्जितः। स्वल्पवित्तः क्षीणदेहश्चतुष्पदसमन्वितः॥ राशिविशेषे। मेषवृषसिंहेषु। धनुषोन्त्यार्द्धे। मकरस्य पूर्वार्द्धे॥ स्त्रीणां करणभेदे चेति हेमः॥ चत्वारि पदानि पादा अस्य॥

चतुष्पदी। स्त्री। पद्ये। चौपदी इति चौपई इति च भाषा॥ चत्वारः पादाः अस्याः। संख्यासुपूर्वस्येति पादस्यान्तलोपे पादोऽन्यतरस्यामिति ङीपि भत्वात् पादःपदिति पदादेशः॥

चतुष्पर्णी। स्त्री। क्षुद्राम्लिकायाम्॥

चतुष्पथा। स्त्री। नागबलायाम्॥

चतुष्पाठी। स्त्री। चौपाड़ इति भाषा प्रसिद्धे छात्राध्ययनस्थले॥ चतुर्णां वेदानां पाठो यस्याम्॥

चतुष्पाणिः। पुं। परमात्मनि। विष्णौ॥ चत्वारः पाणयो यस्य॥ त्रि। चतुर्हस्तान्विते॥

चतुष्पात्-द्। पुं। गवादिपशौ॥ चत्वारः पादा अस्य। संख्यासुपूर्वस्येति पादस्यान्तलोपः॥

चतुष्पुण्ड्रः। पुं। भिण्डातरौ॥

चतुस्समम्। न। चतुःसमे॥

चतुस्त्रिंशत्। स्त्री। चतुरधिकायां त्रिंशति। चौंतीस इति भाषा॥

चतुस्त्रिंशज्जातकः। पुं। बुद्धविशेषे॥

चतूराजी। स्त्री। चतुरङ्गक्रीडान्तर्गतक्रीडाविशेषे॥

चत्वरम्। न। स्थण्डिले। यागार्थसंस्कृतभूमौ॥ अङ्गने॥ नानाजनागमस्थानदेशे। चौतरा इति भाषा॥ यथा क्षेपे। चतसृणां रथ्यानां सम्बन्धे॥ गृहाद्बहिरङ्गने॥ चत्यते। चतेः। छित्वरछत्वरधीवरपीवरेत्यादिना ष्वरच्॥ चतन्त्यस्मिन्वा॥

चत्वारिंशत्। स्त्री। चालीस इति प्रसिद्धे संख्याविशेषे॥ संख्येये॥ चत्वारो दशतः परिमाणमस्य। पङ्क्तिविंशतित्रिंशच्चत्वारिंशदिति निपातनात् प्रकृतेश्चत्वारिन्भावः शत्प्रत्ययः॥

चत्वालः। पुं। होमकुण्डे॥ दर्भे॥ चतति। चतेः। स्थाचतिमजेरित्यालच्॥

चन। अ। असकृदर्थे॥ चनति। चनशब्दे। पचाद्यच्॥ अप्यर्थे॥

चनठ। न। भक्ते॥ चाय्यते। चायपूजानिशामनयोः। चायतेरन्ने ह्रस्वश्चेत्यसुन् प्रत्ययस्तुट्च॥

तःस्फुरखोवासुट्कमरामयचौरभया
य ॥ प्रालेयकुन्दकुमुदस्फटिकावदा
तो यतोदिवाद्रिसुतया परिष्वज्य च
न्द्रः । तस्वैः कृतो निशि भविष्यति
मे प्रियाय योदृश्यतेसमचिताजग
त.प्रियार्थं ॥ अथपचदृष्टे दानोधा
साम्येचशुभाशुभमाह । शुक्लेपक्षेस
म्यवृद्धेप्रवृद्धिं व्रजच्चयातिहर्षं प्रजा
श्च । हीनेच निस्तुल्यतातुल्यतायां क्र
योसवैंतत्फलं व्यत्ययेन ॥ यदिकु
मुदमृणालहारगौरः स्थितिनियमा
त्क्षयमेतिवर्द्धतेवा । अविकृतगति
मण्डलांशुयोगी भवतिन्नृपाणां विजया
य शीतरश्मिः ॥ ३२ ॥ इतिसारावल्यां
चतुर्थोध्यायः ॥ ४ ॥

चन्द्रदाराः । पुं । बहु० । अश्विन्यादिन
क्षत्रेषु ॥ चन्द्रस्यदाराः ॥

चन्द्रनामा । पुं । कर्पूरे ॥ चन्द्रस्यना-
मान्येव नामान्यस्य ॥

चन्द्रपुष्पा । स्त्री । श्वेतकण्टकार्याम् ॥

चन्द्रप्रभः । पुं । वृक्षविशेषे ॥

चन्द्रप्रभा । स्त्री । ज्योत्स्नायाम् ॥ च
न्द्रस्य प्रभा ॥ बाकुच्याम् ॥ औषध
विशेषे ॥ भगन्दरगुल्मरोगः । कृमिरि
पुदहनव्योषत्रिफलामरदारुचव्यभू
निम्बम् । मागधिमूलं मुस्तंसशटि
वचामाक्षिकञ्चैव ॥ लवणचारनि-
मायुगकुस्तुम्बुरुगजकणातिविषाः
॥ कर्षांशकान्येव समानि कुर्यात् पला
ष्टकञ्चाप्यजतो विदध्यात् । निष्पन्न
गुडस्यपुरस्य धीमान् पलद्वयं क्षोदर
जस्तथैव ॥ सिताचतुष्कं पलमत्रदे
यानिकुम्भकुम्भविसुन्धियुक्तम् । च
न्द्रप्रभेयं गुटिकाप्रयोज्या चाशौंसि
निर्णाशयतेयक्षेव ॥ भगन्दरं पाण्डुर
कामलाञ्चनिर्णोदयक्षे कुरुते चदी-
प्तिम् । हन्त्यामयान् पित्तकफानि
लोत्थान् नाडीगतेममंगतेमयोच्च ॥
पन्थवृद्धे विद्रधिराजयक्ष्मणोर्नेत्र
अगाख्ये प्रबलेचयोज्या । शुक्रचये
चाश्मरिमूत्रकृच्छ्रे शुक्रप्रमेहे प्रद-
रामयेच ॥ भक्तात्पूर्वं सततंमयो
ज्या तक्रानुपानं लवणम्बुपानम् । आ
नीरक्षीराद्गुडक्षीरावा पयो ऽथ-
वा शीतजलानुपानम् ॥ पक्षेमनाम
सुरगोत्रवेमदृष्टरासुपर्वंश्रवणेरा
द्यः ॥ वलीपलितनिर्मुक्तो वृद्धोपि
तरुणायते ॥ न पानभोज्येपरिहार्य
मस्ति न शीतवातातपमैथुनेषु । अ
मुं समभ्यर्च्य कृतप्रसादेनासावटी
चन्द्रमसःप्रसादादिति ॥ कर्पूरके ।
कपूर इति भाषा ॥

चन्द्रभस्म । न । कर्पूरे ॥

चन्द्रभागः । पुं । पर्वतविशेषे ॥ विभक्त

स्नायाम् ॥ चन्द्रशूरे ॥ अतिजगती संज्ञकेषयोदशाक्षराहत्तिविशेषे ॥ यथा । ननततगुरुभिश्चन्द्रिकाश्वर्त्तुभिः । यथा । शरदमलतरुचश्चन्द्रिकाक्षालिते दिनकरतनयातीरदेशे हरिः । विहरति रभसाहल्लवीभिः समं विहितयुवतिभिः कोऽपिदेवो यथा ॥ हरिश्चन्द्रपुरवासिन्यामम्बायाम् ॥

चन्द्रिकाम्बुजम् । न । सितोत्पले ॥

चन्द्रिकाद्रावः । पुं । चन्द्रकान्तमणौ ॥

चन्द्रिकापायी । पुं । चकोरपक्षिणि ॥

चन्द्री । स्त्री । वाकुच्याम् ॥

चन्द्रेष्टा । स्त्री । उत्पलिन्याम् ॥

चन्द्रोदयः । पुं । अग्निप्रकाशे ॥ उल्लोचे ॥ मकरध्वजाख्येरससिन्दूरे ॥ यथा ॥ पलं मृदुस्वर्णदलं रसेन्द्रं पलाष्टकं षोडशगन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथकुमारिकाद्भिः ॥ तत्काचकुम्भे निहितं सुगाढे मृत्कर्पटैस्तद्दिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रजः पल्लवरागरम्यम् ॥ निगृह्य चैतस्य पलं पलानि चत्वारिकर्पूररजस्तथैव । जातीफलं शोषणा मिन्द्रपुष्पं कस्तूरिकाया इहशाणएकः ॥ *॥ चन्द्रोदयोऽयंकथितस्तु माषो भुक्तो हि वल्लीदलमध्यवर्त्ती ॥ मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे ॥ घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥ ॥ वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्तगदखण्डनः प्रचुररोगपञ्चाननः । गृहेषु रसराजवद्भवति यस्य चन्द्रोदयः स पञ्चशरदर्पितो मृगदृशां भवेत् दुर्लभः ॥ इतिसारकौमुदी सुखबोधश्चेतिराधाकान्तः ॥ चन्द्रस्य चन्द्ररवस्य उदयो यस्य ॥

चन्द्रोदया । स्त्री । नेत्ररोगस्यौषधविशेषे ॥ यथा । हरीतकी वचा कुष्ठं पिप्पली मरिचानि च । विभीतकस्य मज्जा च शङ्खनाभिः मनः शिला ॥ सर्वमेतत्समं कृत्वा छागीक्षीरेण पेषयेत् । * । नाशयेत् तिमिरं कण्डुं पटलान्यर्बुदानि च ॥ अधिकानि च मांसानि यश्चरात्रौ न पश्यति । अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत ॥ वर्त्तिश्चन्द्रोदया नाम्ना तथा दृष्टि प्रसादनी ॥ इतिचक्रपाणिदत्तः ॥

चन्द्रोपलः । पुं । चन्द्रकान्तमणौ ॥

चपलः । पुं । पारदे ॥ मीने ॥ चोर

के ॥ प्रस्तरविशेषे ॥ चैवे ॥ राजमाषे ॥ चपनम् । चपसान्त्वने । घञन्तः स्त्रे च् चपंलाति । ला० । क. ॥ न । शीघ्रे ॥ क्रियाविशेषणत्वादद्रव्ये वर्त्तमानं क्लीबम् ॥ त्रि । तरले ॥ चले । चणिके ॥ विकले ॥ दुर्विनीते ॥ चपं रु । चप० । रुचा० कलः ॥ चेपति । चुपमन्दायां गतौ । चुपे रत्वोपधाया इति कलमत्ययः । दोपसन्निसिन्धयधव्यनादेः कर्त्तरि । चिकुरे ॥

चपला । स्त्री । कमलायाम् । श्रियि ॥ विद्युति ॥ पुंश्चल्याम् ॥ पिप्पल्याम् ॥ विजयायाम् ॥ मदिरायाम् ॥ जिह्वायाम् ॥ आर्याभेदे ॥ यथा । द्वयोः द्वितीयतुर्यौ गणौ जकारौ तु चपलास्या । यथा । चपलानचेत् कदाचि न्नृणाम वे द्रुक्तिभावना कृष्णे । धर्मार्थकाममोक्षा सदाकरस्थान सन्देहः ॥ चपलाट्टाप् ॥

चपेटः । पुं । विस्तृताङ्गुलिपाणौ । प्रतले । थाप् चपेटा इतिच भाषा ॥ चपति । चप० । अच् । एटति । इट गतौ । अच् । चपश्चासौ इटश्च ॥

चपेटा । स्त्री । चपेटे । प्रहस्ते ॥ खण्डिकोपाध्यायः शिष्याय चपेटां ददातीतिभाष्यम् ॥ टाप् ॥

चपेटिका । स्त्री । चपेटायाम् ॥ चपेटैव । स्वा० कः । प्रत्ययस्था दितीत्वम् ॥

चपेटी । स्त्री । भाद्रशुक्लषष्ठ्याम् ॥ भाद्रे चपेटीविख्यातेतिस्कन्दपुराणम् ॥

चमत्कारः । पुं । विस्मये । चित्तविस्तारूपे । डमरौ ॥ लोकातीतार्थोकथनेन किमेतदितिज्ञानधाराजमनेन चित्तस्य दीर्घमायत्वं चित्तविस्तार इत्यर्थः । दृष्टहेतुभ्यो ऽसम्भविकेज्ञानेन हेत्वन्तरानुसन्धाने मनोव्यापार एवचित्तविस्तार इत्यपरे ॥ अपामार्गे ॥ चमत् करणम् । कृ० । घञ् ॥

चमरः । पुं । मृगविशेषे । व्यजन्याम् ॥ यस्यश्वेतवालैर्देवराजादिव्यजनं क्रियते सचमरविषाकृतिर्भवति ॥ दैत्यविशेषे ॥ न । चामरे ॥ चमति चम्यते वा अनेन वा । चमुअदने । कर्णिकमिभ्रमिचमीत्यरस्थित् ॥

चमरपुच्छः । पुं । कोकखे ॥ न । चामरे ॥

चमरिकः । पुं । कोविदारवृक्षे । रक्तकाञ्चनारे ॥ चमरमस्यास्ति । ठन् ॥

चमरी । स्त्री । मञ्जर्याम् ॥ मृगीभेदे । दीर्घलतायाम् । गिरिमियायाम् ॥

चमसः । पुं । न । दारुजेयज्ञपात्रवि-

भेदे ॥ सोमपानपात्रे ॥ पुं । पर्पटे ॥ पिष्टविशेषे ॥ लड्डुके ॥ चमन्त्यस्मिन् । चम्यते भक्ष्यते सोमोऽस्मिन्वा । चमु० । अत्यविचमीत्यसच् ॥ चमसी । स्त्री । मुद्गमसूरादिपिष्टे ॥ चूर्णीयच्छुष्कमाषाणां चमसी साऽभिधीयते ॥ चम्यते । चमु० । अस । गौरादित्वान् ङीष् ॥ चमीकर । पुं । आकरविशेषे ॥ चमूः । स्त्री । सेनामात्रे ॥ सेनाविशेषे । तवरथा ७२९ । रथा ७२९ । अश्वा २१८७ । पदातयः ३६४५ । समस्तसङ्ख्यया ७२९०, नवत्यधिकमतद्वयाधिकसप्तसहस्रमेतत् ॥ -चमति भक्षयति परसैन्यानीषा । चमुऽदमे । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥ चमूचर । पु । सैनिके ॥ चरेष्ट ॥ चमूजघनम् । न । सेनापश्चाद्भागे ॥ चमूरः । पुं । मृगविशेषे ॥ चमति । चमु० । खर्जूरादित्वादूरः । पृ० अन्त उरच्च ॥ यद्वा । चमूस्तद्धृत्यस्य ॥ चम्प, । न । कोविदारवृक्षे ॥ चम्पक, । पुं । चम्पा इति प्रसिद्धे वृक्षे । हेमपुष्पके । दीपपुष्पे ॥ चम्पक कटुकस्तिक्त कषायो मधुरो हिमः ।



विषकृमिहरः कृच्छ्रकफवातास्रपित्तजित ॥ चम्पयति चम्प्यते वा । चपिगत्याम् । कुन् ॥ पनसकोषगर्भके ॥ न । चांपाकला, इति गौडभाषाप्रसिद्धे कदलीफले ॥ चम्पकं वातपित्तघ्नं गुरुवीर्यकरं तथा । अतिशीतं रसे पाके मधुरं कथितं बुधैरित्यस्यगुणाः ॥ चम्पकस्यपुष्पे ॥ सुहृत्प्राप्तिसिद्धौ ॥ सायथा । न्यायेन स्वर्णपरीक्षितमप्ययं तावन्नत्र हृषते यावन्नशिष्यसत्रह्मचारिभिः सह न सवाप्यते अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सासिद्धिस्तुर्षीचम्पकमुच्यते इति सांख्यविदः ॥ चम्पककलिका । स्त्री । चम्पककोरके । गन्धमेदिन्याम् ॥ चम्पकमाला । स्त्री । चम्पकपुष्पैर्निर्मितया मालायाम् ॥ चम्पकली इति प्रसिद्धे स्त्रीणां कण्ठाभरणे ॥ वर्णवृत्तेषु पङ्क्तिछन्दोविशेषे ॥ यथा । पादविराजन्नूपुरयुग्मा कुण्ठलशोभासद्धिसुवर्णा । शङ्खवतीशारदयपूर्णा चम्पकमालाभातिसुवर्णा ॥ यथा । आसितकुम्भप्रष्टाहसधन्या त्वाम्भवदुन्यारविकन्या । नन्दकुमारो निर्गतशङ्कः सम्प्रतिभावी कोपि-

कलङ्कः इति ॥

चम्पकचतुर्दशी । स्त्री । ज्येष्ठशुक्लचतुर्दश्याम् ॥

चम्पकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

चम्पकारण्यम् । न । तीर्थविशेषे ॥

चम्पकालुः । पुं । चांपकुला इति गौडे प्रसिद्धे मत्स्यविशेषे ॥

चम्पकोपः । पुं । पनसे ॥

चम्पा । स्त्री । कर्णराजस्य भार्यायाम् ॥ तल्लोमपुर्याम् । अधुना भागलपुर इति यस्य प्रसिद्धिरितिराधाकान्तः ॥ तीर्थविशेषे ॥

चम्पाधिपः । पुं । कर्णभूपे ॥

चम्पापुरी । स्त्री । चम्पायां नगर्याम् ॥

चम्पारण्यम् । न । विदेहदेशसमीपस्थे विपिने ॥

चम्पालुः । पुं । पनसे ॥

चम्पावती । स्त्री । कर्णपुर्याम् ॥

चम्पूः । स्त्री । काव्यविशेषे ॥ तल्लक्षणं यथा । गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते । इत्यलङ्कारसारः ॥

चम्पेशः । पुं । कर्णराजन्ये ॥

चम्पोपलक्षितः । पुं । अङ्गदेशे ॥ तद्देशस्य चम्पूस्थि ॥

चम्बेली । स्त्री । स्वनाम्ना प्रसिद्धे पुष्पविशेषे । सुमनायाम् ॥

चयः । पुं । समूहे ॥ वप्रे । प्राकारमूलतन्मने ॥ यदुपरि प्राकारो निरूप्यते प्राकाराधारवेदिकेतियावत् । तथा चार्थशास्त्रम् । खातमुद्धृतमृद्‌द्रावप्रं कारयेत् तस्योपरि प्राकारमिति । पगार इति गौडभाषा ॥ समाहृतौ ॥ परिखोद्धृतमृत्स्तूपे ॥ चीयते । चिञ्चयने । कर्मण्यच् ॥ प्राकारे ॥ पीठे ॥ इति हेमचन्द्रः ॥

चयनम् । न । चिनन्मारसिद्धाने रक्षाविशेषे । इष्टकादीनामूर्द्ध्वाधोदेशनिवेशने ॥ चिञ्चयने ल्युट् ॥

चरः । पुं । अचलमिन्नभेदे । भौमे ॥ जङ्गमे । चले ॥ चले ॥ चारे । गोपनेन राष्ट्रादे शुभाशुभादिज्ञानार्थं राज्ञा नियुक्तपुरुषे । परतत्त्वज्ञानार्थं अक्षयकर्त्तरि । यथार्थवर्णे । प्रणिधौ ॥ चरति । चरगतौ । पचाद्यच् ॥ कपर्दके ॥ मेषकर्कटतुलामकरराशिषु ॥ । भक्ष्यविशेषे । वातादितिथरिवीणि प्रकाश्य च रचक्रम् ॥

चरकः । पुं । चारे ॥ पर्पटे ॥ भक्षके । भिक्षौ ॥ मुनिग्रन्थविशेषयोः । वैद्यशास्त्रप्रवर्त्तके मुनौ ॥ तत्कृते आयुर्वेदे ग्रन्थे ॥ चरति । चर गति भक्षणयोरपूर्वस्यापीति वुन् ॥

चरटः । पुं । खञ्जनपक्षिणि ॥

चरणः । पुं । न । वृक्षपादे । वेदै कदेशे ॥ शाखाध्येतरि ॥ मूले ॥ गोत्रे ॥ पदे । पादे ॥ न । भ्रमण ॥ भक्षणे ॥ शीले । आचारे ॥ चरन्त्यनेन । चर० । करणेतिल्युट् ॥

चरणामृत. । त्रि । प्रशस्ते ॥

चरणग्रन्थि. । पुं । गुल्फे ॥

चरणयोधी । पुं । कुक्कुटे ॥

चरणव्यूहः । पुं । वेदव्यासकृते चतुर्वेदविषयकग्रन्थे ॥

चरणामृतम् । न । चरणोदके ॥ चरणानामामृतम् । गुरुस्य विधिना पाद्यं चरणस्तुप्रक्षेपितम् । चरणं वा तत्तत्त्वं रम्यं पित्तकरं गुरु ॥

चरणायुध । पुं । कुक्कुटे ॥ चरणमायुधमस्य ॥

चरमः । त्रि । पश्चे । अवसाने । प्रान्ते ॥ पश्चिमे ॥ चरति । चर० । चरेर्वेश्यमच् । प्रथमचरमेतिसर्वनामत्वात् पश्चेजस श्री । चरमे चरमाः ॥

चरमक्ष्माभृत् । पुं । अस्ताचले ॥ चरमश्चासौ क्ष्माभृच्च ॥

चरमतीर्थकृत् । पु । वर्द्धमानाख्यार्हद्भेदे ॥

चरमाचलः । पुं । अस्ताचले ॥ चरमश्चासावचलश्च ॥

चरमाद्रिः । पुं । अस्ताचले ॥

चराचरम् । न । विष्टपे । जगति ॥ त्रि । चले ॥ जङ्गमाजङ्गमे ॥ दृष्टे ॥ पुं । कपर्दके ॥ चरति । चर० । चरिचलीतिद्वित्वादि ॥

चरिः । पुं । पशौ ॥ चरति । चर० । खनिकष्यज्यसीत्यादिना इप्रत्ययः ॥

चरितम् । न । अनुष्ठिते ॥ चरित्रे ॥ सम्चारे ॥ व्रतकर्मणि ॥

चरितार्थ. । त्रि । प्राप्तप्रयोजने ॥

चरित्रम् । न । स्वभावे ॥ चेष्टिते ॥ चर्यतेऽनेन । चर० । अर्त्तिलूधूसूखनसहचरइत्रः ॥

चरिष्णु । त्रि । जङ्गमे ॥ चरणशीलः । चरगतौ । अलङ्कृञितीष्णुच् ॥

चरुः । पुं । हव्यान्ने । हव्यपाके ॥ टीकायामितिख्याते भाण्डे ॥ चर्यते भक्ष्यते देवैः । चरन्ति भक्षयन्ति देवा इममिति वा । चरगतौ भक्षणे च । भृमृशीतृचरीत्सरु ॥ अनवस्त्राविता न्तरूष्मपाक ओदनश्चरुरितियाज्ञिकाः ॥ मीमांसकैरपि निरूप्यवैधिकरणे ओदनपरत्वमेव चरुशब्दस्याभ्युपगतम् ॥ उमशादिभ्योयदितिसूत्रे केयटस्तु स्थालीवाची चरुशब्दः ता तस्थ्या दोदने माकदन्त्याह । त्रिप्रकाशेतु चरुर्भाण्डे चरव्यान्ने इत्यनेकार्थतोक्ता ॥

चक्रवाः । पुं । चित्रापूमे ॥

चर्चरी । स्त्री । गीतभेदे ॥ अन्तजुके श्रे ॥ चर्चरीगीतभेदे चकेशभित् करयब्दयोरितिरुद्रः ॥ हर्षक्रीडया मितिसुभूतिः । कापटिकानां सादरवचने नैार्यविकेपेत्यन्ये । वसन्तसमयक्रीडायामित्यन्ये ॥ चर्भ्याम् । साटोपवाक्ये ॥ वाद्यत्तविशेषे ॥ यथा । वारयुक्तसुवर्णकङ्कणाविश्चङ्कविराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता । शोभिता चलयेन पिङ्गलपन्नगाधिपवर्णिता चर्चरी तरुणीव चेतसि चाकरीतिमुसङ्गता ॥ यथा । कोकिलाकलकूजितं न शृणोसि सम्प्रतिसादरम् मन्यसे तिमिरापहारि सुधाकरं नसुधाकरम् । दूरमुज्झसि भूषणं विकसाति चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते इति ॥ चर्चते । चर्चपरिभाषणभर्त्सनयोः । वाहुलकात् अरन् । गौ० ङीष् ॥

चर्चरीकः । पुं । महाकाले ॥ केशविन्यासे ॥ शाके ॥ चर्चते चर्च अध्ययने । पर्फ० इकन् प्रत्ययान्तो निपातितः ॥

चर्चा । स्त्री । चिन्तायाम् ॥ विचारणायाम् ॥ स्थासके । चार्चिक्ये । चन्दनादिनादेहविलेपने । चर्चना इति भाषा ॥ चर्चिकायाम् । दुर्गायाम् ॥ चर्चयनम् । चर्च अध्ययने । चुरादिरयन्तान्नाने चिन्तिपूजिकथिकुम्बिचर्चश्चेत्यङ् । चर्चनं वा ॥

चर्चिका । स्त्री । दुर्गायाम् ॥ चर्चायाम् ॥ चर्चैव । स्वा० कः ॥

चर्चितः । त्रि । दिग्धे । लिप्ते । चन्दनादिनाकृतलेपने । चर्चा चर्चितया इतिच भाषा ॥ चर्चासञ्जाताऽस्य । तारकादित्वादितच् ॥

चर्पटः । पुं । चपेटे ॥ पर्पटे ॥ स्फारविपुले । चिपिटे । चिपटा इतिभाषा ॥

चर्प्पटा । स्त्री । भाद्रशुक्लषष्ठ्याम् । चपेट्याम् ॥

चर्प्पटी । स्त्री । पिष्टकविशेषे । पोल्याम् ॥

चर्भटः । पुं । इर्वारौ ॥

चर्भटी । स्त्री । चर्चर्याम् । हर्षक्रीडावाचि । साटोपवाक्ये ॥

चर्म्मकषा । स्त्री । गन्धद्रव्यविशेषे । सातलायाम् । भूरिफेनायाम् ॥ सा सरोद्भिरस्याम् ॥ इर्मकषः काया ॥

चर्म्मकारः । पुं । चमार इतिभाषाप्रसिद्धे कारावरे । पादूकृति । चण्डाल्यां तीवराज्जाते । इतिपराशरपद्धतिः ॥ चर्म करोति । डुकृञ्० ।

कर्मशय्या ॥

चर्म्मकारी । स्त्री । चर्मकषायामोषधौ ॥

चर्म्मकीलम् । न । अर्शः प्रभेदे ॥ व्याने गृहीत्वा श्लेष्माणं करोत्यर्श स्त्वचोवहिः । कीलोपमं स्थिरखरं चर्मकीलन्तु तद्विदुः ॥

चर्म्मकृत् । पुं । चर्मकारे ॥

चर्म्मचटका । स्त्री । अजिनपत्रायाम् । जतुकायाम् । चामचिरैया इति-भाषा ॥

चर्म्मचटी । स्त्री । चर्मचटिकायाम् । चर्मचटकायाम् ॥

चर्म्मचित्रकम् । न । श्वेतकुष्ठे ॥

चर्म्मजम् । न । रुधिरे ॥ रोमणि ॥

चर्म्मण्वती । स्त्री । चम्बल इतिभाषा प्रसिद्ध नदीविशेषे ॥ चर्माण्यस्याम् । मतुप् । आसन्दीवदिति चर्मणो

सिद्धे फलके ॥ अस्यलक्षणं यथा । शरीरावरकं शस्त्रं चर्मेत्यभिधीयते । तत् पुनर्द्विविधं काष्ठचर्मसम्भवभेदतः ॥ शरीरावरकत्वञ्च लघुता दृढता तथा । दुर्भेद्यतेतिकथितश्चर्मणां गुणसङ्ग्रहः ॥ स्वल्पता, गुरुता चैवसच्छुता सुखभेद्यता । विसदृशवर्णतापेति चर्मणां दोषसङ्ग्रहः ॥ सितोरक्तस्तथापीतः कृष्णश्चाभिश्रितः । ब्रह्मादिजातिभेदेन चर्मणां वर्णनिर्णयः ॥ चित्रवर्णस्तु सर्वेषां सर्वदैवोपपद्यते इतिभोजः ॥ चरति चर्यते वा ऽनेनवा ॥ चर० । मनिन् ॥

चर्म्मनालिका । स्त्री । ताडन्याम् ॥

चर्म्मपत्रा । स्त्री । चर्मचट्याम् ॥

चर्म्मपादुका । स्त्री । उपानहि ॥

चर्म्मपुटः । पुं । } इतिसंज्ञके चर्म

चर्म्ममुण्डिका । स्त्री । कात्यायन्याम् । चण्डिकायाम् ॥

चर्म्मयष्टिः । स्त्री । चर्म्मताडन्याम् । कशायाम् ॥ चर्म्मणो यष्टिः ॥

चर्म्मरङ्गा । स्त्री । आवर्त्तकीलतायाम् । विभाण्ड्याम् ॥

चर्म्मवः । पुं । चर्म्मकारे ॥ इति त्रिकाण्डशेषः ॥

चर्म्मसम्भवा । स्त्री । एलायाम् ॥

चर्म्मसारः । पुं । } रसे ॥ इति रा-
चर्म्माम्भः । न । } जनिर्घण्टः ॥

चर्म्मारः । पुं । चर्म्मकारे ॥ चर्म्मक्रियाम् ऋच्छति । ऋच्छेः कर्म्मण्यण् ॥ ऋषभभेदे ॥ चर्म्मारः शुक्लवर्णः स्यात् ॥

चर्म्मी । पुं । फलकपाणौ । ढालैत इति भाषा ॥ भूर्ज्जवृक्षे ॥ भृङ्गरीटे ॥ कदल्याम् ॥ चर्म्मास्यास्ति । व्रीहीनिः ॥

चर्य्या । स्त्री । ईर्य्यायाम् । नियमास्थाने । ध्यानमौनादिकस्याभिग्रहतस्थानुष्ठाने । ईर्य्यापथस्थितौ ॥ ईर्य्यते गुरोः शास्त्रोपासनया ज्ञायते इति ईर्य्या । ईर्य्यायाः पन्थाः । ऋक्पूरित्यः । ईर्य्यापथे ध्यानाद्युपाये परिव्राजकादीनां स्थितिः तस्यामित्यर्थः ॥ सा चरणे ॥ चरणम् । चर॰ । गदमदचरयमश्चानुपसर्गे इति यत् ॥ यथा । परिचर्य्या परिसर्य्येत्यत्र परीत्यस्या विषयत्वात् चर्य्येति साधुः ॥

चर्व्वणम् । न । दन्तैश्चूर्णने । चिवायना इति भाषा ॥ चर्व्व अदने । ल्युट् ॥

चर्व्वा । पुं । तलप्रहारे ॥

चर्व्वितः । त्रि । भक्षिते । कृतचर्व्वणे ॥ चर्व्वितेस्म । चर्व्व॰ क्तः ॥

चर्व्वितपात्रकम् । न । चर्व्वितताम्बूलादित्यागपात्रे । कटकोले । पतद्ग्रहे ॥

चर्व्यम् । त्रि । चर्व्वणीये ॥

चर्षणिः । पुं । जने ॥ कर्षति । कृष॰ । कृषेरादेश्च चः इत्यनिः ॥

चर्षणी । स्त्री । पुंश्चल्याम् ॥ कर्षति मनः । कृष विलेखने । कृषेरित्यनिः । कृदिकारादिति ङीष् ॥

चलः । पुं । कम्पे ॥ न । चञ्चले । लोले । तरले ॥ अस्थिरालपकालस्थायिनि । शरीरे जगति च ॥ प्रतिक्षणमन्यथाभावात् ॥ नयविशेषे । स्वाप्यादिष्वेषु तेष्वौरिश्चन्द्रश्चापि चरं चलम् ॥ त्रि । कम्पयुक्ते । चञ्चले ॥ चलति चलगतौ । पचाद्यच् ॥

चलचञ्चुः । पुं । } चकोरपक्षि-
चलच्चञ्चुः । पुं । } णि ॥

चलत्पूर्णिमा । स्त्री । चन्द्रकमत्स्ये ॥

चलद्दलः । पुं । } चेङ्गामाछ इ-
चलद्दलकः । पुं । } तीह भाषा प्रसिद्धे मत्स्ये ॥

चलद्दलः । पुं । अश्वत्थवृक्षे ॥ चलानि दलान्यस्य ॥

चलनः । पुं । पादे ॥ हरिणे ॥ न ॥ भ्रमणे ॥ कम्पे ॥ स्थिरत्वप्रच्युतौ ॥ देशान्तरप्राप्तिहेतुभूते क्रियाविशेषे ॥

चलनशीलम् । चल० चलनशब्दे । तिष्ठुच् ॥ त्रि । कम्पे । कम्पयुक्ते ॥

चलनकम् । न । चण्डातके ॥

चलनी । स्त्री । वारीभेदे । गजबन्धन्याम् ॥ बलघर्घरीम् । बलवेधिन्याम् ॥

चलपत्रः । पुं । पिप्पलवृक्षे ॥ चलानि पत्राण्यस्य ॥

चलसङ्क्रमः । पुं । ईश्वरेच्छालोकादृष्टवशात्तत्प्राण्यादिभागस्य सूर्ये तेजःसम्पर्के ॥

चला । स्त्री । लक्ष्म्याम् ॥ चञ्चलत्वात् । श्रद्धा त्वं वै सर्वथैव नसंशयः ॥ सिल्हके ॥ टाप् ॥

चलाचलः । त्रि । चञ्चले ॥ चलति । चल० । अरिचलीति द्वित्वादि. ॥ पुं । काके ॥

चलातङ्कः । पुं । वातरोगे ॥

चलाभासः । पुं । मायामयस्य रज्ज्वसर्पादिर्गमने ॥ चलमिवाभासते इति तथा ॥

चलितः । त्रि । कम्पिते ॥ उत्क्षिप्ते । तरङ्गिते ॥ प्रचले ॥ गते ॥ चल्यते स्म । चलकम्पने । क्तः ॥

चलुः । पुं । गण्डूषे ॥ इति हेमचन्द्रः ॥

चलुकः । पुं । प्रसृतौ ॥ भाण्डभेदे ॥

चवर्गः । पुं । चादिपञ्चवर्णेषु ॥

चवर्गीयः । पुं । चवर्गभवेवर्णे ॥ वर्गान्ताश्छेतिछः ॥

चवलः । पुं । राजमाषे । चौला इति भाषा ॥

चविः । स्त्री । चविकायाम् ॥

चविकम् । न । चव्ये ॥ चर्व्यते । चर्व० । क्वुन् । पृषोदरादिः ॥

चविका । स्त्री । चइ इति गौडभाषाप्रसिद्धे द्रव्ये । चव्ये ॥ चविकात्टाप् ॥

चव्यम् । न । चविकायाम् ॥ कणामूलभवं चव्यं विशेषाहुर्दजापदम् ॥ चर्व्यते । चर्व । यत् । पृ० ॥

चव्यकम् । न । चव्ये ॥

चव्यजा । स्त्री । } गजपिप्पल्याम् ॥
चव्यफलम् । न । }

चव्या । स्त्री । वचायाम् ॥ कार्पास्याम् ॥

चषकः । पुं न । सुरापानपात्रे । गल्वर्के । सरके ॥ अथ चषकोद्देशः । यत्पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः । काञ्चनं राजतं चैव स्फाटिकं काचमेव च ॥ वृत्तं स्वराष्टदिक्कोणं चतुर्थं पृथिवीभुजाम् । इत्यन्य

सम्मतं तेषां निर्णयःपाठसम्मतः ॥ स्वमुष्टिसम्मितं रत्नैश्चतुर्वर्णैः समन्वितम् । मार्त्तिकं वाऽथ फालवा । सर्वेषामुपयुज्यते ॥ काष्ठजं धातुजं शैलं आक्षादिसनीभुजाम् । यद्यशोयपानादिपात्रं पृथ्वीभुजां भवेत् ॥ एवंसर्वाणिनियमइतिभोजस्य निश्चयः ॥ * ॥ मधुनि । मद्ये ॥ मद्यभेदे ॥ मद्यभाजने ॥ चष्यतेऽनेन ॥ चषभक्षणे । क्रुन् ॥

चषतिः । पुं । भक्षणे ॥ वधे ॥

चषालः । पुं । यूपकटके ॥ यज्ञसमाप्तिसूचकं पशुबन्धनार्थं यज्ञभूमौ यत्काष्ठमारोप्यते सयूपः तच्छिरसि वलयाकृति कंकणाकृति वा यः काष्ठविकारः सचषालः । यूपमूलेविहितलौहवलयस्य ॥ चषति चष्यते वा । चष० । सानसिवर्णसिपर्णसीतिचषेरालः ॥

चाकचक्यम् । न । } उज्ज्वलतायाम् ॥ नहि खो
चाकचिक्यम् । न । } कश्चिद्दुःसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव । तथाहि । काचादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगादिदमाकाराचाकचक्याकाराच काचिदन्तःकरण वृत्तिरुदेतीतिवेदान्तपरिभाषा ॥

चाकचिक्या । स्त्री । स्तनवृक्षायाम् ॥

चाक्रायणः । पुं । उपस्त्याख्यर्षौ ॥ चक्रस्यगोत्रापत्यम् । अ० फक् ॥

चाक्रिकः । पुं । बहुभिर्मिलित्वास्तुतिकारे ॥ घाण्टिके ॥ चक्रेण समूहेन चरति । चरतीति ठक् ॥ शाकटिके ॥ तैलकारे ॥

चाक्षुषः । पुं । षष्ठमनौ ॥ न । रूपे ॥ चक्षुषा गृह्यते । अण् ॥ चक्षुरेव वा । स्वार्थिक प्रत्ययः ॥ प्रत्यक्षविशेषे ॥ तत्तु चक्षुरिन्द्रियजन्यज्ञानम् । द्रव्यचाक्षुषंप्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः । द्रव्यसमवेतसमवेतचाक्षुषंप्रति चक्षुःसंयुक्तसमवेतसमवायः । तथाच भा० प० । द्रव्याध्यक्षे संयोगात् संयुक्तसमवायतः । द्रव्येषु समवेतानां तथा तत्समवायतः ॥ तत्रापिसमवेतानां शब्दस्य समवायतः । तद्वृत्तीनांसमवेतसमवायेनतुग्रहः इति ॥ त्रि । चक्षुर्ग्राह्ये ॥

चाङ्कम् । न । दन्तपटुत्वे ॥

चाङ्गेरी । स्त्री । अम्ललोणिकायाम् ॥ चाङ्गेरीदीपनीरूक्षा लघूष्णाकफवातनुत् । पित्तलाम्लाग्रहण्यर्शः कुष्ठातीसारनाशिनी ॥ चाङ्गम् ईरयति

प्राकृतिभाषा ॥ यथा । सर्वसन्ताप
तिनमम्नु न चातकानामिति नाच
तानि स्वते । खलु ॥

चातकानन्दनः । पुं । वर्षाकाले ॥

चातुकः । पुं । शरवीजे ॥ चातुको म
धुरो रूक्षो रक्तपित्तकफापहः । शी
तो लघु रुच्यश्च कषायो वातको
पनः ॥

चातुरः । पुं । चक्रगण्डौ । त्रि । नेत्र
गोचरे ॥ चाटुकारे ॥ निपमरि ॥
चतुरएव । स्वार्थे ष्यञ् ॥ न । संकटे
॥ चतुर्भिर्वद्धासे । शेपरत्यञ् ॥

चातुरिकः । त्रि । चातुरार्थे ॥

चातुराश्रम्यम् । न । ब्रह्मचारिगृहस्थ
वानप्रस्थसंन्यासिषु ॥ चत्वार आश्र
माः एव । चतु० स्वार्थे ष्यञ् ॥ चतुर्णा
माश्रमाणां धर्मे ॥

चातुरी । स्त्री । दाक्ष्ये । चतुरतायाम्
॥ यातेऽश्वयसाधनीवनुभूतासा चा
तुरी चतुरी ॥ चतुरस्येयम् । तस्येद
मित्यण् । ङीप् ॥

चातुर्जातकम् । न । चतुर्जातके ॥
स्वार्थे अण् ॥

चातुर्द्दशिकः । त्रि । भूताध्ययनकर्त्तरि
॥ चतुर्दश्यामधीते । अध्यायिन्यदे
शकालादिति ठक् ॥

चातुर्भद्रम् । न । नागरातिविषामुस्ता
गुडूचीति चतुष्टये ॥

चातुर्मासी । स्त्री । पूर्णिमाविशेषे ॥
चतुर्षु मासेषु भवा । संज्ञायामित्य
ण् । ङीप् ॥

चातुर्मास्यम् । न । यागविशेषे ॥ चा
तुर्मास्ययागस्य चत्वारि पर्वाणि । वै
श्वदेवो वरुणप्रघासः शाकमेधः शु
नासीरीयश्चेति । चतुर्षु मासेषु भ
वन्ति चातुर्मास्यानि । चतु
र्मासाण्ण्यो यज्ञे इति ण्यः ॥ आषाढ
शुक्लद्वादश्यादिचतुर्मासकर्त्तव्ये व्रते
॥ यथा । आषाढशुक्लद्वादश्यां पौर्ण
मास्यामथापि वा । चातुर्मास्यव्रतारम्भं
कुर्य्यात् कर्कटसङ्क्रमे ॥ अभावे तु
तुलार्केऽपि मन्त्रेण नियमं व्रती । का
र्त्तिके शुक्लद्वादश्यां विधिवत् तत् स
मापयेत् ॥ चतुर्ष्वपि हि तच्चीर्णं चा
तुर्मास्यं व्रतं नरः । कार्त्तिक्यां शुक्ल
पक्षे तु द्वादश्यां तत् समापयेदिति
वाराहः ॥

चातुर्मास्यद्वितीया । स्त्री । आषाढफा
ल्गुनोर्जेषु या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति म
हर्षयः ॥

चातुर्वर्ण्यम् । न । यज्ञसाधनेषु ब्राह्मण
क्षत्रियविट्शूद्रेषु ॥ चत्वारो वर्णा एव ।
चतुर्वर्णादीनां स्वार्थे उपसंख्यान

मितिघ्यम् ॥ देवेषु चत्वारो बुधो
यथा । आदित्याः क्षत्रियास्तेषां वि
शश्च मरुतस्तथा । अश्विनौ च स्मृतौ
शूद्रौ तपस्युग्रे समास्थितौ ॥ स्मृता
स्त्वाङ्गिरसो देवा ब्राह्मणा इति निश्चय
इति ॥

चातुर्वैद्यः । पुं । चतुर्वेदे ॥ चतुरो वे
दानधीते वेत्ति वा चतुर्वेदः स एव चतुर्वेद
स्योभयपदवृद्धिश्चेति ब्राह्मणादिग
णे पाठात् ष्यञ् ॥

चात्वालः । पुं । याज्ञिकानां गर्त्तविशे
षे ॥ चत्वालस्य । स्वार्थे अण् ॥

चानूरः । पुं । कंसमल्ले । चाणूरे ॥

चानूरसूदनः । पुं । श्रीकृष्णे ॥ चानू
रं सूदितवान् सूदयति वा । सूदध
तोर्ल्युः ॥

चान्द्रः । पुं । चन्द्रकान्तमणौ ॥ शुक्ला
द्यमान्ते मासे ॥ कृष्णादिपूर्णिमान्ते
च मासे ॥ न । चान्द्रायणे ॥ चन्द्रस्या
यम् । अण् ॥

चान्द्रकम् । न । शुण्ठ्याम् ॥ इति राज
निर्घण्टः ॥

चान्द्रभागा । स्त्री । } चन्द्रभाग
चान्द्रभागी । स्त्री । } याम् ॥

चान्द्रमसः । पुं । इन्दुजे ॥ भारतवर्षीय
द्वीपविशेषे ॥ न । मृगशिरोनक्ष
त्रे ॥ त्रि । चन्द्रमससम्बन्धिनि ॥ च
न्द्रमसोऽपत्यम् इत्यर्थे । अण् ॥

चान्द्रमसायनः । पुं । बुधे । सौम्ये ॥

चान्द्रमासः । पुं । चन्द्रसम्बन्धिमासे ॥
स तु गौणमुख्यभेदेन द्विविधः ।
तत्राद्यः कृष्णप्रतिपदादिपौर्णमास्य
न्तः । द्वितीयः शुक्लप्रतिपदादिदर्शा
न्तः । चान्द्रोऽपि शुक्लपक्षादिः कृष्णा
दिर्वेति च द्विधेत्युक्तेः ॥ तत्र मुख्य
चान्द्रे कर्म्माणि । आह्निकश्राद्धादि
सपिण्डीकरणान्तश्राद्धानि चान्द्रायण
प्राजापत्यादिव्रतानि दानकर्म नि
त्यस्नानं गृहपुष्करिण्यादिप्रतिष्ठा
साधारणतिथिविहितकर्माणि चेति ॥
गौणचान्द्रे कर्म्माणि । अष्टकादिपार्व
णश्राद्धं वारुणीस्नानं जन्मतिथिकृत्यं
जन्माष्टम्युपवासो दुर्गोत्सवादि
तिथिनियतपूजा चेति ॥ चान्द्रप्रचा
रे मासतत्त्व ॥

चान्द्रव्रतम् । न । व्रतविशेषे ॥
यथा ॥ परिपूर्णं यथा चन्द्रं दृष्ट्वा हृ
ष्यन्ति मानवाः । तथा प्रकृतयो य
स्मिन् स चान्द्रव्रतिको नृपः ॥ इति मनुः ॥

चान्द्राख्यम् । न । आर्द्रके ॥

चान्द्रायणम् । न । व्रतविशेषे । इन्दुव्रते
॥ तच्चतुर्विधं भवति । पिपीलिका
मध्याख्यं यवमध्याख्यं यतिचान्द्रायण
शिशुचान्द्रायणभेदात् । तथाहि ।

एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ त्रिषवणं स्नानं कुर्वाणः पौर्णमास्यां पञ्चदशग्रासानश्नीयात् ततः कृष्णप्रतिपत्क्रमेण एकैकग्रासं ह्रासयेत् । तथा च चतुर्दश्यामेको ग्रासः सम्पद्यते । ततोऽमावास्यामुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकं वृद्धिं नयेत् एवं पौर्णमास्यां पञ्चदशग्रासाः सम्पद्यन्ते । एतत्पिपीलिकामध्याख्यं चान्द्रायणम् ॥ १ ॥ एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे । शुक्लपक्षादिनियतश्चरंश्चान्द्रायणव्रतम् ॥ एवमेव पिण्डह्रासवृद्धिविषयकृत्स्नेतिकर्तव्यताविधानं यवमध्याख्ये चान्द्रायणे शुक्लपक्षमादितः कृत्वा संयतेन्द्रियश्चान्द्रायणमनुतिष्ठन् आचरेत् । ततश्च शुक्लप्रतिपदमारभ्य एकैकं पिण्डं वर्द्धयेत् । यथा पौर्णमास्यां पञ्चदशग्रासाः सम्पद्यन्ते । ततः कृष्णप्रतिपदमारभ्य एकैकं पिण्डं ह्रासयेत् । यथा अमावास्यायामुपवासो भवति ॥ २ ॥ अष्टावष्टौ समश्नीयात् पिण्डान् मध्यंदिने स्थिते । नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥ ३ ॥ चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः । चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतमिति मनुः ॥ ४ ॥



चान्द्रायणिकः । पुं । तपस्विविशेषे ॥ चान्द्रायणं वर्त्तयति । पारायणतुरायणचान्द्रायणं वर्त्तयतीति ठञ् ॥

चान्द्री । स्त्री । श्वेतकण्टकार्याम् ॥ ज्योत्स्नायाम् ॥

चापः । पुं । धनुषि । शरासने ॥ धनूराशौ ॥ पर्व्वकालस्य ॥ ऽवृत्तीयप्रभेदे ॥ चापस्वर्णभेदस्य विकारः । अवयवो वा प्राग्दीव्यतीयोऽण् ॥

चापचटः । पुं । क्रियाखड्गे ॥

चापलम् । न । अनवस्थितौ ॥ तल्लक्षणं यथा । आसुरवेषरागादेश्चापल्यमनवस्थितिरिति ॥ अविनीतत्त्वे । भयेऽक्तं विनापि वाक्पारुष्याद्द्विनाश्चापल्यं । अविमृश्यकारित्वरूपे चपलकर्मणि ॥ सञ्चारिभावे ॥ अस्य लक्षणम् । अविवेकादिनीचेष्टारागादेश्चापल्यं तमिति भवात् ॥ चपलस्य कर्म भावो वा । युवादित्वादण् ॥

चापल्यम् । ■ । चपलतायाम् ॥ चापल्ये । चापले ॥ चपलस्य कर्म भावो वा । गुणवचनत्वात् प्राप्तस्य ष्यञो युवादिपाठप्राप्तेनाणा बाधप्रसङ्गेपि ष्यञ् ॥

चामरः । पुं । न । चमरीपुच्छनिर्मिते वालव्यजने ॥ प्रकीर्णके । चौर

चौंरी इतिच भाषा ॥ अस्मयो
जनप्रदर्शनार्थमाह । देवैः सम
र्यैः किल वाद्य हेतोः सृष्टा हिमक्ष्मा
धरकन्दरेषु । आपीतवर्णाश्चमयन्ति
तासां कृष्णास्तथाङ्गे सर्भवाः सिताश्च
॥ चमरीणां गुणसम्पदमाह । स्नेहो
मृदुत्वं बहुबालता च वैशद्यमल्पा-
स्थिनिबन्धनत्वम् । शौक्ल्यञ्च तासां
गुणसम्पदुक्ता हीना ऽ न्यथा सा न
शोभनानि ॥ चामरदण्डलक्षणमा
ह । अथार्द्ध हस्तप्रमितोऽस्य दण्डोऽर-
त्नोऽथवा ऽरत्निसमोऽथवान्यः काष्ठाच्छु
भात् काञ्चनरूप्यगुप्तात् वैश्यसर्व-
स्वहिताय राज्ञाम् ॥ वेशकमेकदण्ड
लक्षणं । यष्ट्यातपत्राङ्कुशवेत्रचापवि
तानकुन्तध्वजचामराणाम् । आपी
ततन्त्रीमधुकृष्णवर्णा वर्णक्रमेणैव हि
तायदण्डाः ॥ दण्डाद्रिः समपर्व्वणः फ
लमाह । मातृभूधनकुलक्षयावहा
रोगमृत्युजननाश्च पर्व्वभिः । द्व्यादि
भिर्द्विकविवर्द्धितैः क्रमाद्द्वादशान्तवि
रतैः समैः फलम् ॥ तेषामेकव्यादि
षु विषमेषु द्विकविवर्द्धितेषु फलम् ।
यात्राप्रसिद्धिर्द्विषतां विनाशो ला-
भाः प्रभूता वसुधागमश्च । वृद्धिः पशू
नामभिवाञ्छितासिः स्यादिष्वयु
ग्मेषु सदीश्वराणाम् ॥ इति वारा

ध्याः ७० ध्यायः ॥ विशेषोयुक्तिकल्प
तरोर्ज्ञेयः ॥ दण्डे ॥ अतिशर्करीसं
ज्ञकपञ्चदशाक्षरायां वृत्तौ प्रभेदे । य
था । आरक्तपयोधरं मृगेन्द्र ज्जुमु
न्दरं चामरध्वजद्वयेन भण्डितं चि
चामरम् । इत्तराजमेतदेवनागराज
भाषितं पठितां मनीषिनोदकारि
वाग्भाषितम् ॥ यथा । रासलास्य
गोपकामिनीजनेन खेलतां पुष्पपु
ञ्जमञ्जुकुञ्जमध्यगेन देवता । ताण्ड
वस्य मात्रिगोपशालिका विलासिना
माधवेन जायतां सुखाय मन्दहासिने
ति ॥ वृत्तरत्ने ॥

चामरपुष्पः ॥ पुं । गुवाके ॥ काशे ॥
आम्रे ॥ केतके ॥

चामरा ॥ स्त्री । चामरे ॥ दण्डे ॥ अ
जा० टाप् ॥

चामरी । पुं । घोटके । किङ्किनि ॥
इति त्रिकाण्डशेषः ॥

चामीकरम् । न । स्वर्ण । कनके ॥ च
मीकरे आकर विशेषे भवम् । तत्र
भवः इत्यण् ॥ यद्वा । चमनम् चम०
। इण् नादिभ्यः इतीण् । अनाचमे
रिति आको ऽ विवचितत्वाद्वृद्धिः ।
चामीकरोऽस्तिं कृष्णे हेस्त्वितिटः ॥

चामुण्डा । स्त्री । मातृकाभेदे । चर्म
मुण्डायाम् । भैरव्याम् ॥ दुर्गायाम्

चारित्रम् । न । स्वभावे । चरित्रे ॥ कुलक्रमागताचारे ॥ चरित्रमेव । स्वार्थे ऽण् ॥ चरन्ति तेन । चर० । चरेर्वृत्तः इति णित्रन् वा । स्वरभेदः ॥

चारित्रा । स्त्री । तिन्तिडीवृक्षे ॥

चारी । स्त्री । नृत्याङ्गविशेषे ॥ विचरयन्तुसलीलहासोहरे ॥

चारुः । पुं । बृहस्पतौ ॥ त्रि । शोभने । रम्ये । मनोज्ञे ॥ चरति चित्ते । चर० । दृसनिजनिचरिचटिभ्यो ञुण् ॥ न । कुङ्कुमे ॥

चारुकः । पुं । शरबीजे ॥

चारुकेशरा । स्त्री । तरणीपुष्पे ॥ नागरमुस्तायाम् ॥

चारुगर्भः । पुं । }
चारुगुप्तः । पुं । } श्रीकृष्णपुत्रे ॥

चारुदेष्णः । पुं । रुक्मिण्यां श्रीकृष्णतनये ॥

चारुधारा । स्त्री । इन्द्राण्याम् ॥ साहिंदाणी शतावरी चारुधारेति रभसः ॥

चारुनालकम् । न । रक्तपद्मे ॥

चारुपर्णी । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥

चारुफला । स्त्री । द्राक्षायाम् ॥ चारूणि फलान्यस्याः ॥

चारुमती । स्त्री । रुक्मिण्यां श्रीकृष्णकन्यायाम् ॥

चारुलोचनः । पुं । हरिणे ॥ त्रि । सुलोचने ॥

चारुवर्द्धना । स्त्री । नार्य्याम् ॥

चारुबाहुः । पुं । }
चारुविन्दः । पुं । } श्रीकृष्णात्मजे ॥

चारुव्रता । स्त्री । मासोपवासिन्याम् ॥

चारुशिला । स्त्री । मणौ ॥

चार्चिक्यः । त्रि । चर्चाभिज्ञे ॥ उक्थादिभ्यष्ठक् ॥

चार्चिक्यम् । न । अङ्गरागादिनादेहविलेपने । चर्चायाम् । स्नासके ॥ चर्चेत्यध्ययने । धात्वर्थनिर्देशे ण्वुल् । चर्चिकैव । स्वार्थे ष्यञ् ॥

चार्मः । पुं । चर्मावृतरथे ॥ चर्मणा परिवृतः । परिवृतो रथः इत्यण् ॥

चार्मिणम् । न । चर्मसमूहे ॥ चर्मिणां समूहः । भिक्षादिभ्यो ऽण् ॥

चार्वाकः । पुं । बौद्धैकदेशिनि । आकाशभिन्नभूतचतुष्टयवादिनि तार्किकविशेषे । नास्तिके । बार्हस्पत्ये । लौकायतिके ॥ तस्येदं मतम् । शरीरमेवात्मा । प्रज्वलितगृहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् - स्थूलोऽहं कृशोऽहमित्यनुभवाच्च ॥ प्रत्यक्षमेकं चार्वाकाः प्रमाणं मन्यन्ते ॥ अपि च । सर्वथा लोकायतमेव शा

क्रियाभिर्जायन्ते शरीरे धातवः स्वमाः । सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम् ॥ याश्चदोषान् प्रशमयति नान्यं व्याधिं करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥ अस्याः फलम् । क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः । कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ अस्या अङ्गानि यथा । रोगी दूतो भिषग् दीर्घमायुर्द्रव्यं सेवकाः सदौषधं चिकित्सायाश्चत्वार्यङ्गानि । गुध्य जगुरिति । गुप्तिर्निन्द्ये इति कितेर्थाः प्रतीकारे निग्रहे अपनयने नाशने संशये च सन् । चिकित्सनम् । अप्रत्ययात् ॥

चिकित्सितः । त्रि । प्रतिकृतामये । कृतप्रतीकारे ॥ न । चिकित्सायाम् । भेषजे ॥ चिकित्सा सञ्जाताऽस्य । तारकादित्वादितच् ॥

चिकित्स्यः । त्रि । रोगान्मोचयितव्ये ॥ चिकित्सितुं योग्य । रोगे ॥ यथा । आतमाच श्चिकित्स्यः स्यान्नोपेक्ष्योऽल्पतयागदः । वह्निशत्रुविषैस्तुल्यः स्वल्पोपि विकरोत्यसौ ॥ रोगमादौ परीक्षेत तदनन्तरमौषधम् । ततः कर्मभिषक्पश्चाद् ज्ञानपूर्वं समाचरे-



दिति ॥

चिक्किनः । त्रि । चिपिटे । चिक्के ॥ नासिकायां नतम् । इनच्पिटच् चिक चिन्चेति नेरिनच् प्रकृतेश्चिकादेशश्च । नतोगायां नासिका चिक्किना पुरुषश्चिक्किनः ॥

चिक्किरः । पुं । मक्षोर्चीकद्रुभिमापा ॥

चिकीर्षा । स्त्री । कर्त्तुमिच्छायाम् ॥ कृञ् । अप्रत्ययादित्यः । टाप् ॥

चिकीर्षितम् । न । अभिप्राये ॥ कर्त्तुमीप्सिते ॥

चिकीर्षुः । त्रि । कर्त्तुमिच्छौ ॥ करणेच्छाविशिष्टे ॥ कर्त्तुमिच्छति चिकीर्षति । सनाशंसभिक्ष उः ॥

चिकुरः । पुं । कुन्तले । बाले ॥ वृक्षप्रभेदे ॥ पक्षिविशेषे ॥ शैले । पर्वते ॥ गृहबभ्रौ ॥ सरीसृपे ॥ त्रि । तरले । चञ्चले ॥ चपले । दोषमनिश्चित्यवधबन्धनादेः कर्त्तरि ॥ साहसे ॥ यथा । तांवीक्ष्य लीलाचिकुरां सुतन्त्रुः स्वचापसौन्दर्यमदं मुमोचेति ॥ चिदूर्ध्वव्यक्तशब्दं कुरति । कुर शब्दे । इगुपधेति कः ॥

चिकुरपक्षः । पुं ।
चिकुरपाशः । पुं । } केशसमूहे ॥
चिकुरहस्तः । पुं ।

चिकूरः । पुं । चिकुरे ॥ इतिशब्दभेद

नोऽन्यस्त्वदिरहितः स्वशक्त्यैवामुष्मिन् प्रपञ्चे कर्त्तुं विहर्त्तुं तथा संहर्त्तुं प्रभवति नकोऽपीत्यर्थः । यदि चितिहितश्चापि त्वं शक्तिरूपा भवस्येव । एतादृशीं संसारकारणां मत्वा नीवेति भाव. । तदुक्तं दिव्यामृतसंहितायाम् । शक्त्या विना शिवेसूक्ष्मे नाम धाम न विद्यते इति ॥

चिञ्चा । स्त्री । अम्लिकायाम् ॥ चिमित्यव्यक्तं शब्दं चिनोति ॥ चिञ् । अन्येभ्योपीतिडः ॥ फले ॥ चिञ्चायाः फलम् । हरीतक्यादित्वात् फलप्रत्ययस्य लुप् ॥

चिञ्चाम्लम् । न । }
चिञ्चासारः । पुं । } अम्लशाके ॥

चिञ्चिका । स्त्री । अम्लिकायाम् । अमली इति हमली इति च भाषा ॥

चिञ्चिडः । पुं । सुदीर्घफले । चचैंडा इति भाषा ॥ चिञ्चडो वातपित्तघ्नो बल्य पथ्यो रुचिप्रदः । शोषघोतिचितः किञ्चिद्गुणैर्न्यून पटोलतः ॥

चिञ्चुकी । स्त्री । चञ्च्वाम् । दीर्घपत्रायाम् । चेञ्चू नाडीशाके ॥

चिञ्चोटकः । पुं । अङ्कोल्ले । चेचुको इतिचेचुड इतिच गौडप्रसिद्धे वृक्षे ॥

चित । अ । असाकल्ये । असकलार्थे ॥ यथा । किञ्चित् ॥ चेतति । चितीसंज्ञाने । क्विप् ॥

चित् । स्त्री । मतौ । बुद्धौ ॥ अजडे निर्विशेषस्फुरणमात्रे चेतने । स्वत एव प्रकाशमाने ब्रह्मणि ॥ निर्विकल्पकं सर्वावभासकं ज्ञानं प्रत्यगात्मस्वरूपं चिदितिव्याख्यातारः ॥ चिद्रास्मीतिचिन्मात्रमिदंचिन्मयमेवच । चित्त्वं चिदहमेतेच लोकाश्चिदिति भावयेत्युपदेशः ॥ चितीº । संº क्विप् ॥

चितः । त्रि । छन्ने ॥ चीयतेस्म । चिञ्º । क्तः ॥

चिता । स्त्री । चित्यायाम् । मृताद्दाहाय । प्रेतदाहार्थेऽग्न्याधाने ॥ शवदाहार्थं रचनायुक्तकाष्ठेषु ॥ संहतौ ॥ चीयतेस्म । चिञ् चयने । क्तः । टाप् ॥

चिताचूडकम् । न । चितायाम् ॥

चितिः । स्त्री । चितायाम् ॥ समूहे । वृन्दे ॥ निर्विषयकसंविदि ॥ बौधादिप्रसिद्धकासञ्चयनार्थाङ्गविशेषे ॥ अग्निस्थानविशेषे ॥ चीयते । चिञ्º । क्रिया मधिकरणेवा क्तिन् ॥

चितिका । स्त्री । कटिशृङ्खलायाम् ॥

चित्तम् । न । चेतसि । अनुसन्धानात्मिकायामन्तः करणवृत्तौ ॥ चित्तस्य वुद्यावन्तर्भाव. विषयपरिच्छित्ति

रूपत्वाविशेषात् । यद्वेद्यं पूर्वोविषयः चित्तस्य पूर्वानुभूत इतिविषयभेदात् चित्तस्य कश्चित् पृथङ्निर्देशोऽस्ति ॥ चैतन्ये ॥ यथा । एवं संज्ञायते चित्तमिति ॥ विज्ञानस्कन्धे ॥ चित्तं । भावे क्तः । श्वीदित इतीण्निषेधः ॥ चिन्तायाम् ॥ चित्ताकाशमठीत्यैवं चित्ताषुडकमिष्यते ॥ चित्तत्वेतिद्विकाण्डशेषात् ॥

चित्तकालः । पुं । चित्तपरिच्छेद्ये ॥ नान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो यस्य तथा ॥

चित्तजन्मा । पुं । कामदेवे ॥

चित्तदोषः । पुं । शून्यतायाम् ॥

चित्तनदी । स्त्री । उभयतोवाहिन्याम् ॥ इयं ह्युभयतो वहति कल्याणाय वहति पापाय च । तत्र या कैवल्यप्राग्भारा विवेकनिम्ना सा कल्याणवहा । या त्वविवेकनिम्ना संसारप्राग्भारा सा पापवहा ॥

चित्तप्रसन्नता । स्त्री । हर्षे ॥

चित्तबन्धनम् । न । चित्तबन्धकारिणि मूलस्थाने ॥ चित्तस्यबन्धनम् ॥

चित्तमज्जनम् । न । रूपक्रियानुसन्धानराहित्ये ॥

चित्तमोदकः । पुं । लड्डुकविशेषे ॥

चित्तलः । पुं । मृगविशेषे ॥ असितत्तिलोद्भवतैलविपक्वं लवणयुतं नवाङ्कुरसाढ्यम् । त्रिकटुकयुक्तनिशाद्रकमिश्रं बहुगुणचित्तलमांसमनर्घम् ॥ रसे पाके च मधुरं रक्तपित्तविनाशनम् ॥

चित्तविक्षेपः । पुं । योगप्रतिपक्षेषु व्याधिस्त्यानादिषु ॥ चित्तं विक्षिपन्ति योगादपनयन्तीति चित्तविक्षेपाः योगप्रतिपक्षाः । ते च नव योगसूत्रे प्रोक्ताः । यथा । व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तराया इति ३० । तत्र संशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधेः साक्षात्प्रतिपक्षौ । व्याध्यादयस्तु सत्तवृत्तिसहचरितत्वात् तत्प्रतिपक्षा भवन्ति ॥

चित्तवित् । पुं । विज्ञानात्मवादिनि बौद्धविशेषे ॥ चित्तमेव बाह्याकारशून्यं विज्ञानं तदेवात्मेति विज्ञानवादिनो भ्रान्तिरेव । सुषुप्ते व्यभिचारात् वेद्यस्य च घटादिव इतिरिक्तवेद्यत्वात् ॥

चित्तविप्लवः । पुं । उन्मादे ॥

चित्तविभ्रमः । पुं । उन्मादे ॥ चित्तस्य विभ्रमोऽनवस्थानम् ॥

तकसम्भूतम् ॥ चीता इतिभाषा प्र सिद्धे व्याघविशेषे । शूरे । रुगान्तके ॥ एरण्डवृक्षे ॥ न । तिलके ॥ चित्रयति । चित्र० । कुनुशिल्पिसंघयोः ॥ यद्वा । त्रिसंवृद्धिंबायरो । पेङ्० । कालात् स्वार्थेकन् ॥ चित्रं करोतिवा । अन्येभ्यो ऽपीतिडः ॥

चित्रकण्ठः । पुं । कपोते ॥ ॥

चित्रकम्बलः । पुं । गलीचाइतिदुली चा इतिचभाषा प्रसिद्धे कम्बल विशेषे ॥

चित्रकरः । पुं । शूद्रागर्भे विश्वकर्मणैर सजाते चितेरा इतिख्याते वर्णस ङ्करजातिविशेषे । चित्रकारे । र-ङ्गाजीवे ॥ इतिब्रह्मवैवर्त्त पुराणम्॥ चित्रंकरोति । डुकृञ्० । दिवाविभा-निशेति ट॰ ॥

चित्रकर्मा । पुं । तिनिशद्रुमे ॥ त्रि । वि विधाश्चर्य्यकर्मणि ॥

चित्रकायः । पुं । व्याघ्रे । बाघ इतिभा षाप्रसिद्धे ॥ चीता इतिभाषाप्रसि द्धे चित्रव्याघ्रे ॥ चित्रः कायोऽस्य ॥

चित्रकारः । पुं । चित्रकरे ॥ स्थपतेर पिगान्धिकर्यां चित्रकारो व्यजायते ति प०प० ॥ चित्रं करोति । डुकृञ्० कर्मण्यण् ॥

चित्रकूटः । पुं । स्वनाम प्रसिद्धे पर्व तविशेषे ॥

चित्रकृत् । पुं । तिनिशद्रुमे ॥ चित्रकारे ॥ चित्रंकरोति । क्विप् ॥

चित्रकोलः । पुं । बाह्मनीतिख्यातेज न्तौ । ज्येष्ठ्याम् । अञ्जने । हला हले ॥

चित्रगन्धम् । न । हरिताले ॥

चित्रगुप्तः । पुं । चतुर्दशयमान्तर्गतय मे ॥ यथा । एकोद्दिष्टविधायचित्र गुप्तायवैनमःइति॥प्रज्ञप्राङ्गले यम स्यलेखके॥ अस्येत्यस्यादिरात्रः निर्णयतन्त्वादवधार्यं ॥

चित्रजल्पः । पुं । वाक्यविशेषे ॥ यथा । प्रेष्ठस्यसुहृदालोके गूढरोषाभिजृ म्भितः । भूरिभावमयोऽजल्पोयस्ती व्रोत्कण्ठितान्तिमः ॥ चित्रजल्पोदृशा ङ्गोयंप्रजल्पपरिजल्पितम् । विजल्पो ज्जल्पसंजल्पावजल्पो ऽभिजल्पि तम् ॥ आजल्पः प्रतिजल्पश्च सुजल्प श्चेति कीर्त्तित इत्युज्ज्वलनील मणिः ॥

चित्रतण्डुला । स्त्री । विडङ्गे ॥ चित्राः तण्डुलाअस्याः ॥

चित्रत्वक् । पुं । भूर्जवृक्षे ॥

चित्रदण्डकः । पुं । श्रोलवृक्षे ॥

चित्रदर्शनम् । न । स्मारके ॥ स्मारकं चित्रदर्शनम् ॥

चित्रदेवी । स्त्री । महेन्द्रवारुण्याम् ॥

चित्रनेत्रा । स्त्री । सारिकाविहगे ॥

चित्रपक्षः । पुं । तित्तिरिपक्षिणि ॥ चित्तिरोगाख्यतिख्याते पाण्डुसंज्ञकेख- गे ॥ चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ॥

चित्रपटः । पुं । छींट इति प्रसिद्धे वस्त्रे ॥

चित्रपर्णिका । स्त्री । द्रोणपुष्प्याम् ॥ कपित्थपर्ण्याम् ॥

चित्रपर्णी । स्त्री । जलपिप्पल्याम् ॥

चित्रपदा । स्त्री । गोधापदीलतायाम् ॥ अनुष्टुप्संज्ञकाष्टाक्षरवृत्तिविशेषे ॥ यथा । चित्रपदं यदि भौगौ ॥ यथा । यामुनसैकतदेशे गोपवधूजनकेली । कंसरिपोर्गतिलीला चित्रपदाजगदव्यात् ॥ सवैया त्वगें तायामपि दृष्टो । यथा । सप्तपदा भगणाः परतो गुरुरन्त्यतो लघुकौ जितदेव चित्रपदेति तदा बुधि वि चिक्रमतो धृतवैरिधराधिपकेश । का- कथिता धिक्कमलपिङ्गलनागवरे- याद्याभिनिवेश नीलकुलोज्ज्वलधा रयधारय चेतसि, हेयभवन्तनरे- शेति ॥

चित्रपर्णिका । स्त्री । चित्रपर्णीप्रभेदे । त्रिपर्ण्याम् । दीर्घपत्रायाम् ॥

चित्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥ चि- त्रं पर्णमस्याः । पाककर्णेति ङीष् ॥ क विस्फोटालतायाम् ॥ जलपिप्पल्या म् ॥ द्रोणपुष्प्याम् ॥ मञ्जिष्ठायाम् ॥

चित्रपादा । स्त्री । सारिकापक्षिणि ॥

चित्रपिच्छकः । पुं । मयूरे ॥

चित्रपुङ्खः । पुं । शरे ॥

चित्रपुष्पी । स्त्री । अम्बष्ठायाम् ॥

चित्रपृष्ठः । पुं । कलविङ्के । चटके ॥

चित्रफलः । पुं । चितल इति गौडप्र सिद्धे मत्स्ये ॥

चित्रफला । स्त्री । चिर्भिटायाम् ॥ मृ गेर्वारौ ॥ लिङ्गिन्याम् ॥ वार्ताक्या म् ॥ कण्टकार्याम् ॥ फलकमाच इति गौड प्रसिद्धे मत्स्ये । राजग्रीवे । फलक्याम् ॥ बृहदिन्द्रवारुण्याम् ॥

चित्रभानुः । पुं । अग्नौ । वैश्वानरे ॥ सूर्ये । चित्रकवृक्षे ॥ भैरवे ॥ चित्रा भानवोऽस्य । शुभ्रादित्वात् पूर्वप दादितिमत्वम् ॥ सोऽष्टमेवत्सरे ॥ अश्वफलम् । यथाकामुग्रमायाश्च न्यूनाधिक्यं विपत्तिमिच्छे । सर्वार्थं जायते स र्वं चित्रभानौ वरानने ॥

चित्रभेषजा । स्त्री । काकोदुम्बरिका याम् ॥

चित्रमृगः । पुं । पृषताख्यमृगे ॥

चित्रमेखलः । पुं । मयूरे ॥

चित्रयोधी । पुं । अर्जुनवृक्षे ॥

चित्ररथः । पुं । सूर्ये ॥ गन्धर्वविशेषे ॥

था तथा । चिदाकाशस्य नैवास्ति नैवास्याभ प्रतिस्थितिः ॥ चित्ताकाशं चिदाकाश माकाशञ्च तृतीयकम् । द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥

चिदात्मकः । त्रि । निर्विशेषस्फुरणामात्रस्वरूपे चिद्देहे ॥ बाध्यते जाग्रत्स्वप्नः सुप्ते जाग्रच्च बाध्यते । चिद्देहस्तु न कापि बाध्यते वास्तवस्थितः ॥ चितो न बाधकं देहं चित्प्रसादेन भासनात् । अबाध्यत्वाद्धास्तवत्वं चिद्देहस्य सुस्थितम् ॥

चिदाभासः । पुं । शुद्धात्मप्रतिबिम्बे ॥ जीवे ॥ योऽहि चराचरात्मकेषु शरीरजातेषु नित्यसन्निहितः । चिदाभासस्तेषः ॥

चिद्‌घनपूर्णः । त्रि । स्फुरत्सुखपूरिते ॥

चिद्रूपः । त्रि । ज्ञानमये ॥ हृदयालौ ॥

चिन्तनम् । न । कर्त्तव्याकर्त्तव्यचिन्तायाम् ॥ विचारे ॥ चिन्तिस्मृत्याम् । ल्युट् । अन् ॥ स्मरणे ॥

चिन्तयन् । त्रि । ध्यायति ॥

चिन्ता । स्त्री । आध्याने । चिन्तने । स्मृत्याम् ॥ आत्मीययोगक्षेमापायालोचनात्मिकायांबुद्धौ ॥ दर्शनसम्भोगयोः प्रकारभावनायाम् ॥ चिन्ताचिन्तादृयोर्मध्ये चिन्तानामगरी यसि । चिता दहति निर्जीवं सजीवो दह्यतेऽनया ॥ चिन्तनम् । चिति० । चितिपूजीत्यङ् ॥ चिन्त्यतेऽनया वा ॥ कुतश्चागच्छघटते विघ्नमुक्तं परातिव । इति चिन्ता न कर्त्तव्या धनस्य धनस्य च ॥

चिन्तामणिः । पुं । वाञ्छितप्रदे मणिविशेषे ॥ तस्मिन् यद्यच्चिन्त्यते तत्तच्चिन्तोपाधिकमेवावभासते न स्वरूपतस्तथा ॥ स्पर्शमणौ ॥ यथाचिन्तामणिं स्पृष्ट्वा लोहं काञ्चनतां भजेत् ॥ ब्रह्मणि ॥ आयुरारोग्यमर्थश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां नित्यं सर्वकामप्रदो हरिः ॥ मन्त्रविशेषे ॥ यात्रायोगान्तरे ॥ सहजस्थानगो भौमो भाग्यस्थश्च बृहस्पतिः । चिन्तामणि समाख्योऽयं यातुः सङ्कल्पपूरकः ॥ बुद्धविशेषे ॥

चिन्तावेश्म । न । मन्त्रणागृहे । दार्भटे ॥

चिन्तितः । त्रि । कृतचिन्तने । मनसा विचारिते ॥ यथा-। यच्चिन्तितं तदिहदूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहंव्रजामि विपिने जटिलस्तपस्वीति ॥

चिन्तिया । स्त्री । चिन्तायाम् ॥

चिन्तोक्तिः । स्त्री । चिन्तावचने ॥

चिन्त्यः । त्रि । निरूपणीये । चिन्तितुं शक्य । विचारणीये ॥

चिन्त्यमान । त्रि । विचार्यमाणे ॥

चिन्नः । पुं । चीणाइतिख्याते ऽन्नविशेषे ॥ इतिशब्दचन्द्रिका ॥

चिन्मयः । त्रि । चैतन्यरूपे ॥ चिन्मयस्याद्वितीयस्यनिष्कलस्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणोरूपकल्पना । रूपस्थानां देवतानां स्त्री पुंसाद्विककल्पना ॥

चिपिटः । पुं । चिवड़ा इति प्रसिद्धे-धान्यभेदे । पृथुके । धान्यचमसे ॥ शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः । कुट्टिता श्चिपिटाःप्रोक्तास्तेस्मृताःपृथुकाअपि ॥ शालयोयावनालाश्चापिचिपिटाः पुष्टिवर्द्धनाः इतिच ॥ भक्ष्याभक्ष्यविधिनिषेधौ यथा । द्विः स्विन्नमन्नं पृथुकं गुडं देशविशेषके । नाश्यन्तिशस्तं विप्राणां भक्ष्ये च निवेदने ॥ अभक्ष्यं तद्यतीनाञ्च विधवाब्रह्मचारिणामिति ब्रह्मवैवर्त्तपुराणम् ॥ आर्द्रसद्यर्थ्योषे ॥ त्रि । पिट्टितविस्तृते ॥ चिपटे ॥ नासिकायानते ॥ इनच्पिटच् चिकचिचेति पिटच् प्रत्ययः प्रकृतेश्चिरादेशः ॥

चिपिटकः । पुं । चिपिटे । पृथुके ॥ चिपिटमिव । संज्ञायाम् इवेतिवा कन् ॥

चिपिटा । स्त्री । गुण्डासिनीतृणे ॥

चिप्पः । पुं । चुद्ररोगविशेषे ॥ यथा । नखमांस मधिष्ठाय वातःपित्तश्च देहिनाम् । करोति दाहपाकौचतं व्याधिं चिप्प मादिशेदिति ॥

चिमिः । पुं । शुकखगे ॥ पट्टवृक्षे ॥

चिमिकः । पुं । शुकपक्षिणि ॥

चिमिचिमः । पुं । अधैर्मोव्ययाविशेषे ॥ कण्डूविशेषे । स्पर्शमियतायाम् ॥

चिरम् । न । अव्यादि (।ऽ)चिरकाले ॥ दीर्घकाले । त्रि । तद्वति ॥

चिरकारी । त्रि । चिरक्रिये ॥

चिरकालः । पुं । दीर्घकाले । दीर्घरात्रे ॥

चिरक्रियः । त्रि । दीर्घसूत्रे । अतिविलम्बेन क्रियासम्पादके ॥ चिराक्रिया यस्य ॥

चिरजीवकः । पुं । जीवकद्रुमे ॥

चिरजीवी । पुं । काके ॥ विष्णौ ॥ जीवकवृक्षे ॥ शाल्मलितरौ ॥ अश्वत्थामादिषु ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ त्रि । बहुकालजीविनि ॥

चिरञ्जीवी । पुं । विष्णौ ॥ काके ॥ जी

वक ह० ॥ माल्लमचिर० ॥ त्रि । चिरजीविनि ॥

चिरयुः । पुं । यौवने ॥

चिरयुटी । स्त्री । प्राप्तयौवनायांपितृगेहस्थायाम् । सुवासिन्याम् ॥ चिरेण अटति पितृगेहात्पतृगेहम् । अट गतौ । अच् । पृषोदरादिः । वयस्थ चर्मद्युतिर्ङीष् ॥ तरुण्याम् । द्वितीयवयःस्थायाम् ॥

चिरतिक्तः । पुं । चिरायता इतिप्रसिद्धे । भूनिम्बे । किराततिक्ते ॥

चिरत्नः । त्रि । पुरातने । चिरन्तने ॥ चिरेभवः । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ॥

चिरन्तनः । त्रि । पुरातने ॥ चिरेभवः । सायंचिरमितिट्युट्युलौ । निपातनान्मान्तत्वम् ॥

चिरपाकी । पुं । कपित्थे ॥

चिरपुष्पः । पुं । बकुलाऽगमे ॥

चिरप्रसूता । स्त्री । बष्कयिण्याम् ॥ चिरंप्रसूता । सुप्सुपेतिसमासः ॥

चिरम् । अ । बहुकालार्थे । चिराय ॥

चिरमेही । पुं । गर्दभे ॥

चिरम्मयः । पुं । चिल्ले ॥

चिररात्रम् । न । दीर्घकाले ॥

चिररात्राय । अ । दीर्घकाले ॥ चिरा राचय. । अचप्रत्यन्यतेत्यचाचिति



योगविभागादच् । चिररात्रम्अयते । अय० । कर्मण्यण् ॥

चिरलोकपितरः । पुं भूम्नि । अग्निष्वात्तादिषु ॥ अग्निष्वात्तादयोलोकेपितरश्चिरवासिनः ॥

चिरविल्वः । पुं । करञ्जवृक्षे ॥ चिरं विल्वति । बिलभेदने । बाहुलकाद्घः ॥

चिरसूता । स्त्री । बष्कयिण्याम् ॥

चिरसूतिका । स्त्री । बष्कयिण्याम् ॥

चिरस्य । अ । दीर्घकाले ॥ चिरमस्यति । अस्तु० । यञ्त् । संज्ञापूर्वकत्वान्वृध्यभावः । ग० ॥

चिरा । स्त्री । बहुकालसाध्यायाम् ॥

चिराटिका । स्त्री । श्वेतपुनर्नवायाम् ॥ पातांडी इतिगौडभाषाप्रसिद्धचटिकायाम् ॥

चिरात् । अ । दीर्घकाले ॥

चिरात् । पुं । गरुडे ॥

चिरातिक्तः । पुं । चिरतिक्ते ॥

चिराय । अ । दीर्घकाले ॥ चिरमयते । अय० । कर्मण्यण् ॥

चिरायुः । पुं । विबुधे । देवतायाम् ॥ त्रि । चिरजीविनि ॥ चिरमायुर्यस्य ॥ भवति यदि मनुष्यो गुर्वधीनश्चिरायुरिच्छागमः ॥

चिराश्रयः । पुं । षष्ठ्यादि(ऽ) त्रिकले ॥

चिरिः । पुं । तोता इतिप्रसिद्धे शुकपक्षिणि ॥

चिरेण । अ । चिरमित्यर्थे ॥

चिर्भटी । स्त्री । कर्कट्याम् ॥

चिर्भिटः । पुं । न । कर्कटी सदृशे । पेहसेंध इतिसेंधकचरी इतिच भाषा प्रसिद्धायां लुचिनायाम् ॥ चिर्भिटंम धुरं रूक्षंगुरुपित्तकफापहम्। अनुष्णं ग्राहि विष्टम्भि पक्वंतूष्णंचपित्तलम् ॥

चिर्भिटा । स्त्री । चिभड इति भाषा प्रसिद्धे चिर्भिटे ॥

चिलमिलिका । स्त्री । कण्ठीभेदे ॥ खद्योते ॥ विद्युति ॥

चिलमीलिका । स्त्री । चिलमिलिकायाम् ॥

चिलिचिमः । पुं । चालियागडक इति गौडभाषाप्रसिद्धे मत्स्ये । नलमीने ॥ चिलविलसने । इगुपधात् कि दिति कः । वीप्सायांद्वित्वम् । चिलिचिलिंविलासं मिमीते । माङ्मा ने । आतइतिक । पृषोदरादिः ॥ चिलिं विलासंचिनोतिवा । चिञ्० । बाहुलकान् मक् ॥ चेङ्गो इतिगौडप्रसिद्धे मत्स्ये ॥

चिलिचिलिः । पुं । चिलचिमे ॥

चिलिचीमः । पुं । } चालियागडक इतिगौडप्रसि-
चिलिचीमिः । पुं । } द्धे चिलिचिमे ॥

चिलिमिलिका । स्त्री । चिलमिलिकार्थे ॥

चिलिमीनकः । पुं । चिलिचिमेमत्स्ये ॥

चिलिमीलिका । स्त्री । चिलमिलि-कार्थे ॥

चिलीचिमः । पुं । } नलमीने । चि-
चिलीचिमिः । पुं । } लिचिमे ॥
चिलीमः । पुं । }

चिल्लः । पुं । आततायिनि । खभ्रान्तौ । चील इति भाषा ॥ चिल्लति । चिल्ल शैथिल्ये भावकरणेच । अच् ॥ क्लि न्ननेत्रे ॥ नि । क्लिन्ननेत्रमस्ति ॥ क्लि न्नेचक्षुषी अस्य । क्लिन्नस्य चिल्पि ल् चश्चास्य चक्षुषीति चिलादेशो लच्च प्रत्ययः । चक्षुर्गतःक्लेदरोगः चिल्लशब्दवाच्यः । तद्योगाच्चक्षुस्तद्यो गात् पुरुषोपीतिव्याख्यातारः ॥

चिल्लकः । पुं । लोभे ॥

चिल्लभक्ष्या । स्त्री । दूत्कविलासिन्याम् ॥

चिल्लाभः । पुं । प्रसह्यचौरे । गांठकटा लुटेरा पिंडार। जुवाचोर इत्यादि भाषा ॥

चिल्लिः । पुं । भ्रूमध्ये ॥

चिल्ली । स्त्री । क्षुद्रवास्तुकशाके । गौ डवास्तुके । बथुआ इति प्रसिद्धे शा के ॥ लोध्रे ॥ झिल्ल्याम् ॥ चिल्लति । चिल्लशैथिल्ये । अच् । गौ० ङीष् ॥

चिविल्लिका । स्त्री । क्षुद्रक्षुपविशेषे । रक्तदलायाम् ॥
चिवुः । पुं । चिवुके । ओष्ठाधोभागे । ठोडि इति भाषा ॥ चीवति । चीव्यते वा । चीवृ आदानसंवरणयोः । मृगय्वादित्वात् कुः ॥ चिनोतिशोभां वा । प्राग्वत् ॥
चिवुकम् । न । चिवौ ॥ स्वार्थेकन् ॥ पुं । मुचुकुन्दवृक्षे ॥
चिह्नम् । न । लाञ्छने । लक्ष्मणि ॥ पताकायाम् ॥ चह्यतेऽनेन । चह परिकल्कने । चाऽन्नक् उपधाया इत्वञ्च ॥ खञ्जादि (।ऽ) विकल्पे ॥
चिह्नकारी । त्रि । घोरदर्शने ॥ त्रिषु । तिनि ॥
चिह्नधारिणी स्त्री । श्यामालतायाम् ॥
चिह्नितः । त्रि । अङ्किते । चिह्नविशिष्टे ॥
चिह्नः । पुं । } गंधारी इति पर्वत-
चिह्नकः । पुं । } प्रसिद्धे वृक्षे ॥ चिह्नकोषातकि ... श्लेष्मोघातुष्टिकृत् । आग्नेयो विषवदास्यफलं मत्स्यनिषूदनम् ॥
चीडा । स्त्री । चीडागन्ध इति गौड प्रसिद्धे गन्धद्रव्ये । दारुगन्धायाम् ॥
चीत्कारः । पुं । भयध्वनौ ॥
चीनः । पुं । देशविशेषे ॥ यथा । कामरूपात्पश्चिमे । मेटान्तदेशोदेशेऽपि मानसेशाद्दक्षिणे ॥ मानसेशाच्चपूर्वे चीनदेशः प्रकीर्तितः इति तन्त्रशास्त्रम् ॥ तद्देशजे मनुष्ये । चीनदेशोद्भवे पूर्वं क्षत्रिये परन्त्वविहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ आगमोक्ते सम्प्रदायविशेषे ॥ अंशुकविशेषे । मखमल इत्याधुनिक भाषाप्रसिद्धे बहुविधाङ्गवस्त्रे ॥ चीणा इतिप्रसिद्धे व्रीहि विशेषे ॥ चीनकः कङ्गु भेदोऽस्ति सज्ञेयः कङ्गुवद्गुणैः ॥ तन्तौ ॥ मृगविशेषे ॥ न । पताकायाम् ॥ सीसके ॥ चिनोति । चिञ् । बाहुलकान्नक् दीर्घश्च ॥



चीनकः । पुं । चीणा इति प्रसिद्धधान्ये । काककङ्गौ ॥ कङ्गुन्याम् ॥ चीनकर्पूरे ॥
चीनकर्पूरः । पुं । चीनाकपूर इति भाषाप्रसिद्धे कर्पूरविशेषे । कृत्रिमे । मेघसारे । धवले ॥
चीनजम् । न । तीक्ष्णलौहे ॥
चीनपिष्टम् । न । सिन्दूरे ॥ चीनपिष्टम् ॥ सीसके ॥
चीनवङ्गम् । न । सीसके ॥
चीनाकः । पुं । चीनियाकपूर इति प्रसिद्धे कर्पूरविशेषे ॥ चीनाकसंभवः

कर्पूरः कफक्षयकरः स्मृतः । कुष्ठकण्डूविषघ्नश्च स्वादुतिक्तरसस्मृतः ॥

चीनाकर्कटी । स्त्री । चित्रकूटदेशप्रसिद्धायां कर्कव्याम् । राजकर्कव्याम् ॥

चीरम् । न । गोस्तने । वस्त्रविशेषे ॥ रेखाभेदे । लेखनभेदे । चूडायाम् । सीसके । जीर्णवस्त्रखण्डे ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैव भोगवसनम् ॥ इत्यमरः ॥ चि । चिनोति । चिञ् । शुसिचिमीनां दीर्घश्चेति क्रन् ॥

चीरकः । पुं । विक्रियालेखे । विकारलेखने ॥

चीरपत्रिका । स्त्री । चञ्चुशाके ॥

चीरपर्णः । पुं । शालवृक्षे ॥

चीरभृत् । पुं । तापसे ॥

चीरि । स्त्री । नेत्रांशुके ॥ इति शब्दरत्नावली ॥

चीरिका । स्त्री । झिल्ल्याम् । कच्छायाम् ॥

चीरितच्छदा । स्त्री । पालङ्क्यशाके ॥

चीरी । स्त्री । झिल्ल्याम् ॥ कच्छाटिकायाम् ॥ नेत्रांशुके ॥ गौ० ङीष् ॥

चीरुकम् । न । चेउर इति गौड प्रसिद्धे फले ॥

चीरुका । स्त्री । झिल्ल्याम् ॥ चीति रौति । रुशब्दे । बाहुलकात् कक ॥



चीर्णः । त्रि । चीर्णिते ॥ सञ्चिते ॥

चीर्णपर्णः । पुं । निम्बागमे ॥ खर्जूरीभूरुहे ॥

चीलिका । स्त्री । झिल्ल्याम् । चीर्याम् । चीरिकायाम् । चील्याम् ॥

चीवरम् । न । भिक्षोर्वस्त्रे ॥ चिनोति । चिञ् चयने । छित्वरच्छत्वरधीवरेत्यादिना ष्वरच् धातोर्दीर्घश्च ॥

चीवरी । पुं । बुद्धभिक्षुके ॥ मस्करी यतिः ॥

चुक्कारः । पुं । सिंहनादे ॥

चुक्रः । पुं । अम्ले ॥ अम्लवेतसे ॥ म । चूक इति प्रसिद्धे । अम्लद्रव्यविशेषे । तिन्तडीके । वृक्षाम्ले ॥ चूका इति प्रसिद्धे पत्रशाके । अम्लवास्तुके । इत्याम्ले ॥ चुक्रं संच्यवनं सुपाच्यं दीपनं पाचनं परम् । शूलगुल्मविबन्धामवातश्लेष्महरम् परम् ॥ वमिहृच्यावैरस्यहृत् पीडावह्निमान्द्यहृत् ॥ काञ्जिकप्रभेदे ॥ रसाम्ले । सन्धानभेदे ॥ सन्धानविशेषे ॥ यथा । यन्मस्त्वादिशुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ त्रिगुणं गुडमध्वारनालमस्तुक्रमादिहेति परिभाषा ॥ चकते ऽनेन चक्यते वा । चक तृप्तौ प्रतिघाते च । चक्रिरम्योरुच्चो

क्लीं धरणीमवलोक्य कल्याद्दहृदय स्तस्था भारमवतारयितुं रामकृष्ण स्वरूपेणांशतो यदुवंशे अवततारे ति ॥ पुं । आमलकविशेषे ॥

चूर्णकारः । पुं । चूनरी इति गौडभाषाप्रसिद्धे नटकन्यायांपुण्ड्रकाज्जाते वर्णसंकरजातिविशेषे ॥

चूर्णकुन्तलः । पुं । शिरस्थे क्षुद्रकुन्तले । अलके ॥ चूर्णसकर्पूरादिचोदस्य कुन्तलः ॥

चूर्णखण्डः । पुं । न । कर्करे । कङ्करइतिकांकर इतिभाषा ॥

चूर्णदासी । स्त्री । पिष्टकारिण्याम् । पिसनहारी इतिभाषा ॥

चूर्णपारदः । पुं । हिङ्गुले ॥

चूर्णशाकाङ्कः । पुं । गौरसुवर्णशाके ॥

चूर्णा । स्त्री । वासयोगे । पटवासादि चोदे । निवासयुक्तिषु । सुगन्धिचूर्णे ॥ चूर्ण्यते । चूर्ण० ॥ घञ् ॥

चूर्णिः । स्त्री । भाष्यकृते महाभाष्ये ॥ कपर्दके ॥ शतसङ्ख्यककपर्दकेषु ॥ चूर्णस्यकरणम् । तत्करोतीतिणिच् नारद्यदः ॥ यद्वा । चरणंचारणंवा । पृषोदरादित्वात् सिद्धम् ॥ द्वितिसाधुः ॥

चूर्णिका । स्त्री । सक्तुषु ॥

चूर्णितः । त्रि । संदलिते ॥ कृतचूर्णे ॥

चूर्णी । स्त्री । महाभाष्ये ॥ कपर्दीक यते ॥ कृदिकारादिति ङीषेत्यपि ॥

चूर्णीकृत् । पुं । महाभाष्यकारे । पतञ्जलौ ॥

चूर्णीकृतः । पुं । गन्धविशेषे ॥ यथा । गन्धचूर्णं गन्धपर्णं चूर्णं सुमनसां तथा । प्रशस्तगन्धयुक्तानां पत्रचूर्णान्नियानिच ॥ तानि गन्धाख्यानिस्युः सुगन्धः प्रथमःस्मृत इति ॥ त्रि । कृतचूर्णे ॥

चूलः । पुं । कपाटाधो भागान्तरे ॥

चूलकः । पुं । केशे ॥

चूला । स्त्री । गृहोपरिगृहे । चन्द्रशालायाम् ॥ चूडायाम् ॥

चूलिकम् । न । घृतभृष्टसमितायाम् ॥

चूलिका । स्त्री । हस्तिकर्णमूले ॥ चूल्यते ऽनया । चूलसमच्छायं तं भावामिति गुणः ॥ नाटकाङ्गे ॥

चूषा । स्त्री । कच्चायाम् । गजमध्यबन्धनरज्ज्वाम् ॥ चूष्यते पीयते पृष्ठमांसेनाहृष्यतां नीयते । चूषपाने । कर्मणिघञर्थे कः ॥

चेकितानः । पुं । नृपविशेषे ॥

चेटः । पुं । दासे ॥ चेटति । चिटपरप्रेष्ये । अच् ॥

चेटकः । पुं । दासे । भृत्ये ॥ चेट्यते । चिट० । कृञादिभ्योवुन् ॥ उपपतिनायकविशेषे । सन्धानचतुरे ॥

चेटिः । स्त्री । दासाम् ॥ चेटति । चि
टं० । इन् ॥

चेटिका । स्त्री । दासाम् ॥ स्वार्थेकः ॥
करणाम् ॥

चेटी । स्त्री । दासाम् ॥ चेटति । चि
ट० । सर्वधातुभ्यइन् । कृदिकारादि
सिपक्षे ङीप् ॥ करणाम् ॥

चेडिका । स्त्री । } चेटिकायाम् । दा
चेडी । स्त्री । } साम् ॥

चेत् । अ । यद्यर्थे । पक्षान्तरे ॥ अस
न्देहे ऽपिसन्देहवचने ॥ यथा । सख्य
म्चेत्तुषाक्यमेय पितरो देवाश्चचे
योगिनी प्रीताश्चेत् परदेवताचय
दिष्वे चेदाप्रमाणश्चेत् ॥ माक्षी
यं यदि दर्शनं भवति चेदाप्नोत्यमो
घाक्षिश्चेत् स्वातन्त्र्या धपिकौशिका
श्च यदिश्चेत् स्याम्मे नमः सर्वदेति ॥
चेतति । चिती संज्ञाने । विच् ॥

चेतकः । त्रि । चेतनकर्त्तरि ॥ चेतय
ति । चिती० । ण्वुल् ॥

चेतकी । स्त्री । हरीतक्याम् ॥ चिरे
खा चेतकीत्येतितस्यालक्षणम् ॥
चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा
च वर्णतः । षडङ्गुलायता शुक्ला कृ
ष्णात्वेकाङ्गुलामृता ॥ काचिदास्वा
दमात्रेण काचिद्गन्धेनभेदयेत् । का
चित्स्पर्शेन दृष्ट्या ऽन्या चतुर्धाभे
दयेच्छिवा ॥ चेतकीपादपच्छाया
मुपसर्पन्ति ये नराः । भिद्यन्ते तत्
क्षणादेव पशुपक्षिमृगादयः ॥ चेत
कीतु धृता हस्ते यावत्तिष्ठति देहि
नः । तावद्भिद्येतवेगैस्तु प्रभावान्ना
त्रसंशयः ॥ नृपादिसुकुमाराणां कृ
शानां भेषजद्विषाम् । चेतकी पर
मा शस्ता हिता सुखविरेचिनी ॥
गौरादित्वान् ङीष् ॥

चेतनः । त्रि । प्राणिनि ॥ पुं । मनुष्ये
॥ आत्मनि । प्राणादिमवर्गके ॥ र
थादौ नियताचेष्टा चेतनेनाऽनधि
ष्ठिते । नदृष्टा चेतनस्तेन प्राणादी
नां प्रवर्त्तकः ॥ चेतति । चिती० ।
नं० ल्युः ॥

चेतनकी । स्त्री । हरीतक्याम् ॥

चेतना । स्त्री । संविदि ॥ धियि ॥ बु
द्धौ ॥ स्वरूपभानव्यञ्जिकायां प्रमा
णासाधारणकारणिकायां चित्तवृ
त्तौ ज्ञानाख्यायाम् भगवतो विभूतौ
॥ चेतयतेऽनया । चितसञ्चेतने ।
चु० । ण्यासश्रन्थो युच् । टाप् ॥ जी
वनाख्याम् ॥ चेतनाना मधिष्ठानं म
नोदेहश्चसेन्द्रियः । केशलोमनखा
ग्रान्त मलंद्रवगुणैर्विना ॥

चेतनास्थानम् । न । सर्वशरीरे ॥ हृ
दये ॥

चेतनीया । स्त्री । ऋद्धिनामौषधौ ॥

चेतः ॥ न । चित्ते ॥ चितीॱ । असुन् ॥ पुं । चैतन्य ॥ साक्षीचेता इति-श्रुतेः ॥

चेतोंशुः । पुं । जीवे ॥ चेतसश्चैतन्य स्य अंशुरिव ॥

चेतोमुखः । पुं । चैतन्यप्रीत्यानन्दत्तिमयधाने प्राज्ञे ॥ स्वप्नादिप्रतिबोधं चेतः प्रतिद्वारीभूतत्वात् । स्वप्नोवा गरितस्वेति । प्रतिबोधश्चित्तं चेतस्तत् प्रतिद्वारभूतत्वं द्वारभावेन स्थित स्वम् नहिस्वप्नस्य जागरितस्य वा सुषुप्तद्वारमन्तरेण सम्भवोऽस्ति तयोस्तत्कार्यत्वात् अतःसुषुप्ताभिमानी प्राज्ञः स्थानदर्शकारणत्वात् चेतो मुखव्यपदेशभागित्यर्थः ॥

चेदिः । पुं । देशविशेषे । चेपुरे । श्वा दिले । पुंभूम्नि । तद्देशस्थे । चेदयः ॥

चेदिपतिः । पुं । उपरिचरवसौ ॥ चेदि राजे ॥ चेदीनां देशविशेषाणां पतिः ॥

चेदिराट् । पुं । शिशुपाले ॥ चेदिपुराट् यस्य । सं॰ क्विप् ॥ यद्वा । चेदीनां राट् । अन्येष्वपि । इतिकेचित् । वस्तुतस्तु सत्सूद्विषेति क्विप् ॥

चेदिराजः । पुं । शिशुपाले ॥ चेदीनां देशविशेषाणां राजा । टच् ॥ उपरिचरवसौ ॥

चेवी । स्त्री । रागिणीविशेषे ॥ इतिह लायुधः ॥

चेयम् । त्रि । चेतव्यमात्रे ॥ चेतुं योग्यम् । चिञ् । अर्हकृत्यतृचश्चेति योग्यतायां मर्थोयत् ॥

चेलम् । न । वस्त्रे ॥ त्रि । अधमे ॥ चिलति चिल्यते वा । चिलवसने । चेलति चेल्यते वा । चेलृगतौ । अच् । घञ्वा ॥

चेलकम् । न । चेलशब्दार्थे ॥ स्वार्थे कः ॥

चेलानः । पुं । चेलना इति गौडप्रसिद्धे फलवल्लीविशेषे । अल्पप्रमाणके ॥

चेलाळः । पुं । फलवल्लीविशेषे । चिपकले । त्रापनसे । सुखाशे ॥

चेलिका । स्त्री । चेयली इति प्रसिद्धे पट्टवस्त्रे ॥ यथा । सेयं कृष्णास्य वनिता पीतशाटीपरिच्छदा । रक्तचेलिकयाच्छन्ना शातकुम्भघनस्तनी । इति पाद्मोत्तरखण्डम् ॥

चेली । स्त्री । अधमायाम् ॥ गौरादित्वात् ङीप् ॥ चेलडितिपचाद्यटित्वात्ङीपवा ॥

चेलीमः । पुं । वालियारस्मीने ॥

चेलुकः । पुं । बुद्धभिक्षुशिष्ये । श्रामणेरे ॥

चेष्टकः । पुं । रतिबन्धविशेषे ॥ यथा । पादमेकं हृदि न्यस्य द्वितीयं चैव चेष्टयेत् । कान्तः क्रोडे स्थितां नारीं बन्धो यं चेष्टको मतः ॥ त्रि । चेष्टाकर्त्तरि ॥

चेष्टा । स्त्री । कायपरिस्पन्दनादिरूपायां क्रियायाम् । प्राणधर्मे ॥

चेष्टानाशः । पुं । प्रलये ॥

चेष्टितम् । न । गतौ ॥ चेष्टायाम् ॥ चरित्रे ॥ त्रि । चेष्टान्विते ॥

चैकितानः । पुं । चिकितानस्यर्षेरपत्ये ॥

चैकितानेयः । पुं । यज्ञदत्ताख्येऽपि ऋषिविशेषे ॥ चिकितानस्यापत्यं चैकितानः तदपत्यं युवा चैकितानेयः ॥

चैकितायनः । पुं । दल्भ्यगोत्रापत्यस्य दाल्भ्ये ऋषिविशेषे ॥ चिकितायनस्यापत्यम् । अण् ॥

चैतन्यम् । न । चेतनायाम् ॥ ब्रह्मणि । सर्वभूतात्मिकप्रपञ्चाधिष्ठानप्रकाशे ॥ चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते । ज्ञानक्रिये जगत्कर्त्री दृश्येते चेतनाश्रये ॥ नेष्यते वैशेषिकैः साङ्ख्यैश्चेति शेषः ॥ प्रकृतौ ॥ भावे स्वार्थे वा ष्यञ् ॥

चैत्तः । पुं । विज्ञानस्कन्धातिरिक्तस्कन्धाभावे ॥

चैत्यः । पुं । उद्देश्यपादपे । ग्रामादिप्रसिद्धिहेतौ महावृक्षे । देवतरौ । देवावासे ॥ जिनबिम्बे ॥ जिनसभातरौ ॥ बुद्धे । न । आयतने ॥ चिताचिह्ने ॥ बुद्धवेश्मे ॥ जिनसभायाम् ॥ यज्ञस्थाने ॥ जनानां विश्रामस्थाने ॥ देवस्थाने ॥ चित्यायामिति चित्येचेतिसाधुः । चित्याया इदम् । तस्येदमित्यण् ॥

चैत्यगृहम् । न । वसुप्रथमखण्डे ॥

चैत्यद्रुः । पुं । अश्वत्थागमे ॥ प्रख्यातवृक्षे ॥

चैत्यद्रुमः । पुं । अश्वत्थवृक्षे ॥ प्रसिद्धद्रुमे ॥ ग्रामादिसमीपे ख्यातवृक्षे ॥

चैत्यमुखः । पुं । कमण्डलौ ॥

चैत्यवृक्षः । पुं । चैत्यद्रुमे ॥

चैत्योपरागः । पुं । कर्त्तृत्वादिसर्वप्रपञ्चसम्बन्धे ॥ चैत्ये उपरागः ॥

चैत्रः । पुं । मासविशेषे । चैत्रिके । मधौ ॥ अत्र जातस्य फलम् ॥ सत्यसंभाषी विनयी सुवेषो भोगी सुखी स्यान्मधुराम्लभोजी । सत्सङ्गयुक्तो द्विजदेवभक्तो भवेन्मनुष्यो मधुमासजन्मा ॥ चैत्री पौर्णमास्यस्मिन् । विभाषाफाल्गुनीत्यादिना पक्षेऽण् ॥ अद्रिविशेषे ॥ चित्रागर्भजे बुधपुत्रे सप्तद्वीपाधिपतौ सुरथराजस्य पितामहे ॥ बुद्धभिक्षुके ॥ न ।

मृते ॥ देवकुले । देवखं इति गौडभाषा ॥ श्मशानचैत्ये ॥

चैत्रकः । पुं । मधुमासि ॥ न । चित्रकर्षशाकादौ ॥

चैत्ररथम् । न । कुबेरस्योद्याने ॥ मेरोः प्राच्यांयोविष्कम्भशैलस्तत्समूलोद्याने ॥ चित्ररथेन गन्धर्वेण निर्वृत्तम् । तेन निर्वृत्तमित्यण् ॥

चैत्रावली । स्त्री । चैत्र्यां पूर्णिमायाम् । मधूत्सवे । सुवसन्ते ॥

चैत्रिकः । पुं । चैत्रे । मधुमासि ॥ चैत्रीपौर्णमास्यस्मिन् । विभाषा फाल्गुनी श्रवणा कार्त्तिकी चैत्रीभ्य इति चेट् ठक् । ठस्येकः ॥

चैत्री । स्त्री । चैत्रपूर्णिमायाम् ॥ चित्रायुक्ता पौर्णमासी । नक्षत्रेण युक्तः कालइत्यण् । ततो ङीप् ॥

चैद्यः । पुं । दमघोषात्मजे । शिशुपाले ॥ चेदीनां जनपदानामयम् । वृद्धेत्कोसलाजादाञ्ञ्यङ् इति ञ्यङ् ॥ पुंभूम्नि । चेदिदेशोद्भवे । चेदिषु ॥

चैलम् । न । मृदुवस्त्रे ॥ चेलति चेलयते वा । चेलृ गतौ । अच् घञ्वा । ततः प्रज्ञाद्यण् ॥

चोक्षम् । न । हेमाह्वायामूले ॥

चोक्षः । पुं । गीते ॥ त्रि । शुचौ ॥ स्वभावशुचौ वरस्त्र्यादिदेशे ॥ दक्षे ॥ अभीक्ष्णे ॥ मनोज्ञे ॥ चोखा इति भाषा ॥

चोचम् । न । वल्के ॥ चर्मणि ॥ गुडत्वचि ॥ त्वक्पत्रे । तेजपात इति भाषा ॥ प्रशस्तं चोचमस्त्यस्य । अर्शआद्यच् ॥

चोटी । स्त्री । शाट्याम् ॥ इति हे० ॥

चोडः । पुं । प्रावरणे ॥ कञ्चुके ॥ पुंभूम्नि । देशविशेषे । चोडाः ॥

चोदकः । त्रि । प्रेरके ॥ चोदयति । चुद प्रेरणे । हेतुमण्ण्यन्तात् कर्त्तरि ण्वुल् ॥

चोदनम् । न । प्रेरणे ॥

चोदना । स्त्री । विधौ ॥ चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः इति भट्टोक्तिः ॥ विधिवाक्ये । क्रियायाः प्रवर्त्तके वचने ॥ चोदना नाम लिङ्लोट्तव्यप्रत्ययादिशब्दव्यवस्थापितविधिनिषेधरूपयजनादिक्रियाप्रवर्त्तकं वचनमभिधीयते ॥ तर्जनायाम् ॥ प्रवर्त्तनायाम् ॥ प्रेरणायाम् ॥ शब्दभावनायाम् ॥ चोद्यते प्रवर्त्त्यतेऽनयेति । युच् ॥

चोदनागुडः । पुं । कन्दुके ॥

चोदितः । त्रि । प्रेरिते ॥

चोद्यम् । न । अद्भुते ॥ प्रश्ने ॥ पूर्वपक्षे ॥ चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया । अद्वैतभाषया चोद्यं

मास्ति नापितदुस्तरम् ॥ त्रि । चोदनार्हे । प्रेर्य्ये । प्रेरणायोग्ये ॥ चोदितुं योग्यः । अर्हे कृत्यतृचश्चेति यत् ॥

चोपनम् । न । मन्दगमने ॥ मौने ॥ चुपेर्ल्युट् ॥

चोरः । पुं । स्तेयकर्त्तरि । तस्करे । दस्यौ । प्रच्छन्नापहारिणि ॥ गन्धद्रव्यविशेषे ॥ कृष्णायाम् ॥ चोरयति । चुरस्तेये । पचाद्यच् ॥

चोरकः । पुं । पृक्कायाम् । ग्रन्थिपर्णभेदे । भंटिउर इति नैपालभाषा ॥

चोरघातः । पुं । राशावलिविशेषे ॥

चोरहन्ति । त्रि० । कृत्यल्युटोबहुलमित्यण् ॥

चोरपुष्पिका । स्त्री । शङ्खिन्याम् ॥ चोरपुष्प्येव । स्वार्थे कन् ॥

चोरपुष्पी । स्त्री । शङ्खिन्याम् । केशिन्याम् । सांखाहुली इति भाषा ॥ चोरइवपुष्पमस्याः, शार्ङ्गिविकादिभ्यस्त्वात् । पाककर्णेति ङीप् ॥

चोरस्नायुः । स्त्री । काकनासिकायाम् ॥

चोरा । स्त्री । चोरपुष्प्याम् ॥

चोरिका । स्त्री । चौर्य्ये ॥

चोरितः । त्रि । मुषिते ॥ चौर्यतेस्म । चुर० । क्तः ॥

चोलः । पुं । कूर्पासके । स्त्रीणां कञ्चुलिकाख्ये आमपदीनकञ्चुके ॥ चोल्यते ऽनेनवा । चुलसमुच्छ्राये । घञ् घोवा ॥ चोला इति प्रसिद्धे पुंसो वस्त्रविशेषे ॥ अधुना ताञ्जोर इति प्रसिद्धे देशे । द्रविडतैलङ्गयोर्मध्ये चोलदेशः प्रकीर्त्तितः । खञ्जकर्णी भवते प्रोक्ता सर्वदेशान्तरे भवेत् ॥ चीनदेशस्थह्रदविशेषे ॥ उपरुधारिणि वेदयागानधिकारिणि म्लेच्छविशेषे ॥ पूर्वमयं क्षत्रिय आसीत् सगरोराजास्य धर्मनाशं वेषान्यत्वञ्च चकार ॥ न । वसने ॥

चोलकः । पुं । वाणवारके । कवचे ॥ न । वल्कले ॥

चोलकी । पुं । करीरे । नारङ्गे ॥ किष्कुपर्वणि ॥

चोलण्डुकः । पुं । शिरोवेष्टे ॥

चोलम् । न । नागरङ्गे ॥ किष्कुपर्वणि ॥ करीरे ॥

चोलह्रदः । पुं । चीनदेशीयसरोविशेषे ॥

चोली । स्त्री । कूर्पासके । अंगिया इति भाषा ॥ अल्पश्चोलः गौरादित्वान् ङीष् ॥

चोलोण्डुकः । पुं । शिरोवेष्टे । उष्णीषे ॥

चोषः । पुं । दाहविशेषे । पार्श्वस्थिता

ग्निनेवसन्तापे ॥ चूषणेनेवपीडायाम् ॥

चोष्यः । त्रि । इक्षुदण्डादौ । यद्दन्तैर्निष्पीड्य रसांशं निगीर्याऽवशिष्टं त्यज्यते तच्चोष्यमुच्यते ॥

चोक्षः । पुं । सिन्धुवारे । हयोत्तमे ॥

चौडम् । न । चूडाकरणकर्मणि ॥ चूडायोजनमस्य । चूडादिभ्य उपसंख्यानमित्यण् ॥

चौक्षम् । न । जलाशयविशेषे ॥ तत्र वे ॥ शिलाकीर्णे स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लतावितानसञ्छन्नं चौक्ष्यमित्यभिधीयते ॥ चौक्ष्यं बलकरं नीरं रूक्षं कफहरं लघु । मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥

चौपैया । स्त्री । मात्रावृत्तविशेषे ॥ यथा । चौपैयावृत्तं निगदन्ति कवयः तिपिङ्गलभणितम् कुवलयतुरङ्गमतिहृद्यङ्गमनगेगुरुमुपनीतम् । यदि दशवसुरविभिश्छन्दोविज्ञ क्रियते यतिरभिरामम् सपदि स्तवसमये न्यपति. कवये वितरति संसदि कामम् ॥ यथा । कालियकुलभञ्जन दुरितविभञ्जनसज्जनरञ्जनकारी गोवर्द्धनधारी गोपविहारी वृन्दावनसञ्चारी । रुतदुर्जयदानवपालि



तमालयमुदिताखण्डलपाली सङ्गतगोपालीनिधुवनशाली भवतुमुदे वनमालीति ॥

चौरः । पुं । पाटच्चरे । तस्करे ॥ चोरपुष्प्योषधौ ॥ सुगन्धे ॥ चोरणम् । चुरस्तेये । अस्माच्ययात् । तथापूर्वकत्वान्नगुणः । चुरादीत्यस्य । छत्रादिभ्योणः ॥ चोरएवथ । स्वार्थिकः प्रत्ययः ॥

चौरा । स्त्री । चोरपुष्पिकायाम् ॥

चौरिका । स्त्री । चौर्य्ये ॥ चोरस्य भावः कर्म्म वा । मनोज्ञादित्वाद् वुञ् ॥

चौर्य्यम् । न । चौरिकायाम् । स्तैन्ये ॥ चोरस्य कर्म्मभावो वा । ब्राह्मणादित्वात् ष्यञ् ॥

चौलम् । न । मुण्डनकर्म्मणि । चूडाकरणे ॥

चौलुक्यः । पुं । राजर्षिविशेषे ॥ चुलुकस्य गोत्रापत्यम् । गर्गादित्वात् यञ् ॥ त्रि । चुलुकेन कृते ॥

च्यवन । पुं । भार्गवे ऋषिविशेषे ॥ [illegible] । पतने ॥

च्युतः । त्रि । च्यविते । गलिते ॥ च्युतेस्म । च्युङ्गतौ । क्त ॥ गत्यर्थाकर्म्मकेति कर्त्तरि क्तो वा ॥ चुटिते ।

च्युताचार । त्रि । स्खलितव्रते ॥

च्युति । स्त्री । चरणे ॥ यथा । धैर्यच्यु

छगला

ति: ॥ भगे । योनौ ॥ गुदद्वारे ॥
च्युतोपल: । पुं । भ्रंशरत्ने ॥ अल्पपापे । ॥
च्युप: । पुं । वक्त्रे । मुखे ॥ च्यवन्ते भा
ष्यन्तेऽनेन । च्युङ् अनेकार्थत्वा
ज्ञापणे । च्युप: किश्चेतिप: ॥
च्योतत् । त्रि । क्षरोतति ॥
च्योत्न: । पुं । गन्तरि ॥ अधंडजे ॥ चौ
र्यापुरुषे । च्यवते च्युङ् जनिदे
ष्यादिना त्नस् ॥

## छ:

छ: । पुं । छकारे ॥ छेदने ॥ त्रि । नि
र्मले ॥ तरले ॥ न । गृहे ॥
छग: । पुं । छागे । अजे ॥
छगण: । पुं । न । करीषे ॥ छाणा इ
ति भाषा ॥ इतिहेमचन्द्र: ॥
छगल: । पुं । छागे ॥ न । नीलवस्त्रे ॥
छायते । छोछेदने । छोगुगूह्रस्वश्चे
तिकलच् ॥
छगलक: । पुं । छागे ॥ स्वार्थे क: ॥
छगलण्ड: । पुं । दक्षिणदेशे समुद्रसन्नि
धौ प्रचण्डदेव्या: स्थाने ॥
छगला । स्त्री । वृद्धदारकवृक्षे ॥
छगलान्त्रिका । स्त्री । वृद्धदारकभेष
जे ॥ छगलस्येवान्त्रमस्या: गौरादि
त्वान्ङीप् । कन् ह्रस्व: ॥

छत्रम्

छगलान्त्री । स्त्री । वृद्धदारकवृक्षे ॥
वृके ॥ छगलस्येवान्त्रमस्या: । गौरा
दित्वान्ङीप् ॥
छगली । स्त्री । वृद्धदारकभेषजे ॥ छा
गमातरि ॥
छच्छिका । स्त्री । छाछ इतिप्रसिद्धे त
क्रभेदे ॥ छच्छिका सरचीनं स्याद
च्छा प्रचुरवारिका ॥ छच्छिका ग्री
ष्मा लघ्वी पित्तश्रमतृषापहरी ।
वातनुत् कफकृत् सातु दीपनीलव
णान्विता ॥ सरचीनम् दधि इति
सम्बन्ध: ॥
छटा । स्त्री ॥ दीप्तौ ॥ परम्परायाम् ॥
छटाफल: । पुं । गुवाकवृक्षे ॥
छटाभा । स्त्री । विद्युति ॥
छत्र: । पुं । अतिच्छत्रे । मलेनपचेत्राच
मत्ताकारेवृक्षे । छातारियाविष छा
तनाविष खरविष इतिच गौडभा
षा ॥ भूतृणे ॥
छत्रम् । न । आतपत्रे । छाता इति
छत्री इतिचभाषा ॥ अथास्य लक्षणम्
। निचितन्तु हंसपक्षै: कृकवाकुमयू
रसारसानांवा । दौकूलेन नवेनतु
समन्ततश्छादितं शुक्लम् । मुक्ताफ
लै रुपचितं प्रलम्बमालाविलं स्फटि
कमूलम् ॥ षड्हस्तशुद्धहैमं नवपर्वन
गै कदण्डन्तु ॥ दण्डार्द्धविस्तृतं तत्

छर्दिमे ॥

छर्दिमः । पुं । अरिष्टे । निम्बे । मारके ॥

छर्दिः । स्त्री । वमौ । वमने ॥ छर्दति । छर्दी सन्दीपने । अर्चिशुचीत्यादिना इसिः ॥

छर्दी । स्त्री । वमने ॥ आमाशयोत्क्लेशभवाहि सर्वा स्छर्द्यो मतो बहुममेवतस्मात् । विधीयते मारुतजां विनात् संशोधनं या कफपित्तहारी तिवैरेचकम् ॥ छर्दिकारोऽस्त्रिमनि इति हिन्दी ॥

छलम् । न । स्खलिते । कूटयुद्धादिना युद्धमर्यादायाश्चलने ॥ छद्मनि । शाठ्ये । व्याजे । स्वरूपाच्छादने ॥ तात्पर्यान्तरेण प्रयुक्तस्य शब्दस्याऽर्थान्तरेणाकयने ॥ तथाचाक्षपाद प्रणीतं सूत्रम् । वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । ५० ॥ अर्थस्याभिमतस्य योविकल्पोविरुद्धः कल्पोऽर्थान्तरकल्पनेतियावत्, तदुपपत्त्या युक्तिविशेषेण योवचनस्य वाक्यस्य विघातो दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्याऽविषयार्थकल्पनेन दूषणाभिधानमिति फलितम् । तात्पर्याविषयत्वम् विशेष्ये विशेषणे संसर्गे वा ॥ यथा । नेपालादागतोयं नवकम्बलवत्त्वादित्यत्र नेव संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं धर्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् ॥ तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्च ॥ ५१ ॥ छानम् । छो छेदने । ल्युडादिस्वात्सर्वः ॥

छमंडा ॥ स्त्री । परमतारयायाम् ॥

छलितः । पुं । स्खलिते । छले ॥

छल्ली । स्त्री । विवधि ॥ सन्ताने ॥ वल्कले । छाल इति भाषा ॥ कुसुमविशेषे ॥

छविः । स्त्री । शोभायाम् ॥ त्विषि ॥ छ्यति असारम् । छो० । कृविघ्नविस्ववीत्यादिना क्विबन्तो निपातितः ॥ छिनत्ति तमो वा । छिदिरद्वैधीकरणे ॥

छाः । पुं । शावके ॥ इत्येकाक्षरः ॥

छा । स्त्री । छादने ॥

छागः । पुं । पशौ । छागलके । अजे । बर्करे । बकरा इति भाषा ॥ तत्परीक्षोक्ता युक्तिकल्पतरौ भोजराजेन । नखवर्णा विभेदेन मतानां तु गणत्रयम् । तेषां शुभाश निर्दिष्टं पशुवस्तुनयं बलैः ॥ येकृष्णाः शुचयश्छागाः पशवोऽन्ये तथैव च ॥ द्विजातिभिरुत्त

, मुखडाश्च ये ताम्रविलोचनाख्यं । ते पूजिता वेश्मनि मानवानां सौख्या नि कुर्वन्ति यशःश्रियश्चेति ॥ पुरो डाशे ॥ न । छागीदुग्धे ॥ छ्यति । छो० छायते छिद्यते वा । छायुस्र छिद्यः किदित्ति गन् ॥ चि । छाग च्छा -ग्यो:सम्बन्धिनि ॥ सत्यविशेषे ॥ यथा श्वेतं सुपाकं समदीर्घवृत्तं नि. य- लक्मं,छागलकं वदन्ति । गलोदिक वद्धःकिलतद्भुष्टे कण्टःसुपथ्यो वचि , दोषप्रद इति ॥

छागवः । पुं । करीषाग्नौ । गोठेकी आग इतिभाषा ॥

छागभोजी । पुं । वृके ॥ चि ॥ छागभ क्षके ॥

छागरथः । पुं । अग्नौ ॥ छागोरथोऽस्य ॥

छागल । पुं । छागे ॥ छागस्य प्रज्ञा । अण् ॥ कॅचिये च्छ विविशेषे ॥ छग लस्या पत्यम् । विकर्णशुभ्रच्छगला दिस्यञ् ॥

छागलकः । पुं । अजे । स्तुभे । वर्करे । छा गे ॥ स्वार्थे कः ॥

छागलाद्यम् । न । भैषज्यरत्नावल्युक्ते भिषजाम्प्रतविशेषे ॥

छागलान्त्रिका । स्त्री । वृद्धदारकवृक्षे ॥

छागलान्त्री । स्त्री । वृके ॥

छागवाहन । पुं । अग्नौ ॥

छागिका । स्त्री । छाग्याम् ॥ स्वार्थे कः । केव इति ह्रस्वः ॥

छागी । स्त्री । अजायाम् । छागमात रि ॥ छागात् जातेरितिङीष् ॥

छागीदुग्धम् । न । अजाक्षीरे ॥ छागं क षायं मधुरं शीतं ग्राहि पयो लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरा पहम् ॥ अजानामङ्गलाघवात्कटुतिक्ता द्रव्यनिषेवणात् । नात्यम्बुपानाद् व्यायामात् सर्वव्याधिहरं पयः ॥

छात । चि । छिन्ने ॥ दुर्बले ॥ छायते स्म । छो० क्तः । अतिस्वता । गत्य र्थेतिक्तः । शाकोरन्यतरस्यामिती त्वा भावः ॥

छात्र । पुं । अन्तेवासिनि ॥ शिष्ये ॥ गुरुदोषाच्छादनं छत्रम् । तच्छील मस्य । छत्रादिभ्योणः ॥ न । मधुप्र भेदे ॥ सरटाः कपिला पीताः प्रा योहिमवतोवने । कुर्वन्ति छत्रकाका रं तज्ज्ञं छात्रंमधु स्मृतम् ॥ छात्रं कपि- लपीतं स्यात् पिच्छिलं शीतलं गुरु । स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेह जित् ॥ भ्रमतृष्णामोहविषहृत्तर्पण गुणाधिकम् ॥

छात्रकम् । न । छात्रमधुनि ॥ यथा । छत्राकारम्पटलं सरघाः पीतपिङ्ग ला । वा कुर्वन्तितदुत्पन्नंमधुच्छा

गर्भः सरितिं ॥ स्थालीपथे ॥ छाया पथेनाम ज्योतिश्चक्रमध्यवर्त्ती कश्चित्तिर्य्यग्गेऽवकाशइतिमल्लिनाथः॥

छायापुत्रः । पुं । मन्दे । शनौ ॥

छायापुरुषः । पुं । आकाशे दृश्ये निजच्छायारूपे पुरुषे ॥ तद्दर्शनविधिर्योगप्रदीपिकायां द्रष्टव्यः ॥

छायाभृत् । पुं । चन्द्रे ॥

छायामित्रम् । न । आतपत्रे ॥ छत्रे ॥

छायामृगधरः । पुं । विधौ । चन्द्रे ॥

छायावृक्षः । पुं । छायाप्रधाने वृक्षे ॥ शाकपार्थिवादिः ॥

छायासुतः । पुं । शनौ ॥

छिः । पुं । गर्हायाम् ॥ इत्येकाक्षरकोषः ॥

छिक्कनी । स्त्री । यस्याः कृते नकछिक्कनी तिश्रुतौ षधौ ॥ छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् । वातरक्तहरी कुष्ठकृमिवातकफापहा ॥

छिक्करः । पुं । मृगविशेषे ॥ मांसं छिक्करजं कृत्स्नाज्ये तप्ते सुभृष्टकम् । दधिसैन्धवसिद्धाक्तं सुधूपेनातिधूपितम् ॥ कषायं मधुरं स्वादु कफपित्तानिलापहम् । विपाके कटुकं प्रोक्तं विशेषेणाग्निवर्द्धनम् ॥

छिक्का । स्त्री । क्षुते ॥ छींकइतिभाषा ॥

छिक्किका । स्त्री । छिक्कन्याम् ॥



छितः । त्रि । लूने ॥ छ्यतेस्म । छो० । क्तः । शाछासोरन्यतरस्यामितीत्वं वा ॥

छित्तिः । स्त्री । छेदे ॥ छिदे ॥ छिद्यते छेदनं वा । छिदिर्० । स्त्रियांक्तिन् ॥ पुं । करज वृक्षे ॥

छित्वरः । त्रि । धूर्त्ते ॥ वैरिणि ॥ न । छेदनद्रव्ये ॥ छिनत्ति । छिदिर्० । छित्वरछत्वरेत्यादिनाष्वरच् निपातनादकारस्योत्कारोगुणाभावश्च ॥

छिद् । त्रि । छेदनकर्त्तरि ॥ छिनत्ति । छिदिर्० । क्विप् ॥

छिदकम् । न । वज्रे ॥

छिदा । स्त्री । छेदने । द्वैधीकरणे ॥ छिदिर्० । षिद्भिदादिभ्योऽङ् । टाप् ॥

छिदिः । स्त्री । कुठारे ॥ शस्त्रे ॥ छिनत्ति । छिदिर्० । इन् ॥ कृगॄशॄपृकुटी त्यादिनाइः किच्च ॥

छिदिरः । पुं । पावके ॥ रज्जौ ॥ करवाले ॥ परश्वधे ॥ छिनत्ति । छिदिर्० । इषिमदिमुदिखिदिच्छिदी त्यादिनाकिरच् ॥

छिदुरः । त्रि । वैरिणि ॥ धूर्त्ते ॥ न । छेदनद्रव्ये ॥ छेदके ॥ छिनत्ति तच्छीलः । छिदिर्० । विदिभिदिच्छिदेःकुरच् ॥

छिद्रम् । न । दूषणे ॥ रन्ध्रे ॥ नित्यं

छिद्रानुसार्यैरेः ॥ अवकाशे ॥ गर्त्ते ॥ अष्टमभवने ॥ छिद्र्यते । छिद्रभेदने । घञ् । यद्वा । छिद्यते । छिदिर्० । स्फायितञ्चीतिरक् ॥

छिद्रवैदेही । स्त्री । गजपिप्पल्याम् ॥

छिद्रान्तः । पुं । नले । पोटगले ॥

छिद्राफलम् । न । मायाफले ॥

छिद्रितः । त्रि । विद्धे । कृतच्छिद्रे । वेधिते । बींधा इति भाषा ॥ छिद्रमस्य । छिद्र० अदन्तः । क्तः ॥

छिन्नः । त्रि । कृत्ते । छाते । लूने । कृतच्छेदने । काटा चीरा फाडा इति भाषा ॥ छिद्यते स्म । छिदिर्० । क्तः ॥

छिन्नग्रन्थिनिका । स्त्री । त्रिपर्णिकायाम् ॥

छिन्नद्वैधः । त्रि । व्यवधानादिपरिपाकेण निवृत्तसर्वसंशये ॥

छिन्नपत्री । स्त्री । अम्बष्ठायाम् ॥

छिन्नमस्ता । स्त्री । महाविद्याभेदे । प्रचण्डचण्डिकायाम् ॥ छिन्नं मस्तं यस्याः ॥ त्रि । छिन्नमस्तके ॥

छिन्नरुहः । पुं । तिलकवृक्षे ॥

छिन्नरुहा । स्त्री । अमृतायाम् । गुडूच्याम् ॥ छिन्ना रोहति । रुह० । इगुपधेति कः । ङ्यापोरिति ह्रस्वः ॥ शल्लक्याम् ॥ स्वर्णकेतक्याम् ॥

छिन्नवेशिका । स्त्री । पाठायाम् ॥

छिन्ना । स्त्री । छिन्नमस्तायां देव्याम् ॥ गुडूच्याम् ॥ इत्वर्याम् । पुंश्चल्याम् ॥ क्तान्ताच्छिदेष्टाप् ॥

छिन्नोद्भवा । स्त्री । गुडूच्याम् । गिलोय इति विख्यातायाम् ॥

छिलिहिण्टः । पुं । पातालगरुड्यामोषधौ ॥ छिलिहिण्टः परं वृष्यः कफघ्नः पवनापहः ॥ छिलिहिण्डोपि ॥

छुच्छुका । स्त्री । छुच्छुन्दर्याम् ॥

छुच्छुन्दरी । स्त्री । गन्धमुख्याम् । छुछूंदर इतिभाषा ॥

छुद्रम् । न । प्रतीकरणे ॥ रश्मौ ॥

छुपः । पुं । क्षुपे ॥ स्पर्शने ॥

छुरणम् । न । विलेपने ॥

छुरा । स्त्री । सुधायाम् । चूर्णे । लेपनद्रव्ये । चुना इति भाषा ॥

छुरिका । स्त्री । शस्त्रविशेषे । असिपुत्र्याम् ॥ छुरति । छुरच्छेदने । क्वुन् ॥ इगुपधेति के कन् वा । ह्रस्वम् ॥

छुरितः । त्रि । खचिते ॥ रञ्जिते ॥ रूषिते ॥

छुरी । स्त्री । छुरिकायाम् ॥

छुरिकापत्री । स्त्री । श्वेतायाम् ॥

छूरी । स्त्री । छुरिकायाम् ॥ इति भरतः ॥

छेकः । त्रि । गृह्यके । गृहाश्रिते मृगे पक्षिणि च ॥ नागरे । विदग्धे ॥ [illegible]

ति छायते वा। छो॰। वा॰ डेकन्॥

छेका। स्त्री। मत्तायाम्॥

छेकानुप्रासः। पुं। अलङ्कारविशेषे॥ सोनेकस्य सकृत् पूर्वः। अनेकस्य अर्थाद्व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः। उदाहरणं यथा। ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी। दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥

छेकोक्तिः। स्त्री। वक्रोक्तौ॥ छेकाया उक्तिः॥

छेत्ता। त्रि। छेदनकर्त्तरि॥ छिनत्ति। छिदिर्॰। तृच्॥

छेदः। पुं। खण्डे॥ छेदने॥ छेदनम्। छिद्यते वा। छिदिर्॰। घञ्॥

छेदनम्। न। भिदि॥ कर्त्तने। वर्द्धने। कर्त्तने। अस्त्रेण द्विधाकरणे। छांगना काटना इति भाषा॥ छिदिर्॰। ल्युट्॥

छेदनीयः। पुं। कतकवृक्षे॥ त्रि। छेद्ये॥ छेदितुं योग्यः। अर्हे कृत्यतृचश्चेति अनीयर्॥

छेदवत्। त्रि। विच्छेदयुक्ते॥

छेदिः। त्रि। छेत्तरि॥ छिनत्ति। छिदिर्॰। कृपिभिदिच्छिदिविदिच्छिदिकीर्तिभ्यश्चेति इन्॥

छेदितः। त्रि। छिन्ने॥

छेद्यः। त्रि। छेदनीये॥ परिच्छेद्ये॥ छेत्तुं शक्यः। शकिसहोश्चेति यत्॥ क्यार्थेऽयं प्रत्ययः॥

छेमण्डः। पुं। पितृहीने। छोंडा छोरा इत्यादि भाषा॥ इत्युणादिकोषः॥

छेलकः। पुं। छागे॥

छेलिका। स्त्री। छागायाम्। छाग्याम्॥

छवुः। पुं। सोमराज्याम्॥

छैदिकः। पुं। वेतसे॥ छिन्नप्ररूढत्वात् छेदं नित्यमर्हतीति छेदादिभ्यो नित्यमिति ठञ्॥

छोटिका। स्त्री। तर्जन्यङ्गुष्ठसंयोगध्वनौ। अङ्गुलिध्वनौ॥

छोटी। पुं। कैवर्त्ते। नाविके॥

छोरणम्। न। परित्यागे। छोड़ना इति भाषा॥ इति त्रिकाण्डशेषः॥

छोलङ्गः। पुं। मातुलुङ्गे। टाबानेबु इति गौड़ भाषा॥

छोहारा। स्त्री। द्वीपान्तरखर्जूरिकायाम्॥ खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्यते॥

---

जः

जः। पुं। जकारे॥ मृत्युञ्जये॥ जन्मा

म् ॥ तालमाने ॥ जनार्द्दने ॥ वेगे ॥ मुक्तौ ॥ शिवे ॥ गुरुमध्यगे (ऽ।ऽ) ॥ त्रि । वेगिते ॥ जेतरि ॥ जायते । अनीः । अन्येभ्योऽपि दृश्यत इति डः ॥

जक्कुटः । पुं । मलयाचले ॥ शुनि ॥ न । वार्त्ताकुपुष्पे ॥

जक्षणम् । न ॥ भक्षणे ॥

जक्षिः । स्त्री । भोजने ॥

जगच्चक्षुः । पुं । सूर्ये ॥

जगत् । पुं । वायौ ॥ त्रि । जङ्गमे ॥ न । विश्वस्मिन् । लोके । सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरसहिते मायामये जगत्पदार्थे ॥ यथा । न निरूपयितुं शक्या विस्पष्टं भासते यथा । सा मायेतीन्द्रजालं द्रौ लोकाः सम्प्रतिपेदिरे ॥ स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् । मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ यथा । यदुपतेः क्व गता मथुरापुरी रघुपतेः क्व गतोत्तरकोशला । इति विचिन्त्य कुरुष्व मनः स्थिरं न सदिदं जगदित्यवधारयेति रूपसनातनगोस्वामिनौ ॥ गच्छति । गम्लृ गतौ । द्युतिगमिजुहोतीनां द्वे चेति क्विपि द्वित्वे गमः क्वावितिमलोपे तुकि जगत् जगतौ । यद्वा तु वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति व्युत्पादते तदा उगिदचामिति नुमि जगन् जगन्तौ इत्यादिर्बोध्यम् ॥ साम विशेषे ॥

जगती । स्त्री । भुवने । लोके । जगति ॥ छायायाम् ॥ जने ॥ जम्बूवप्रे ॥ वास्तुविशेषे ॥ छन्दोविशेषे । द्वादशाक्षरायांघ्रसौ ॥ गच्छति । गम्लृ० । वर्त्तमाने पृषदिति साधुः । शत्रवच्चाद् उगितश्चेति ङीप् ॥ यद्वा । द्युतिगमिजुहोतीनां द्वे चेति क्विप् । गमः क्वावितिमलोपे तुक् ॥

जगतीधरः । पुं । भूधरे ॥ जगत्याः धरः ॥

जगत्कर्त्ता । पुं । ब्रह्मणि ॥ जगतः कर्त्ता ॥

जगत्पतिः । पुं । परमेश्वरे । स्थितास्थितीय देयकयेदमस्येत्वेन सर्वस्य जगतः पालयितरि ॥ जगतां पतिः ॥

जगत्प्रभुः । पुं । नारायणे ॥ जगत् जङ्गमाजङ्गमम् तस्य प्रभुः स्वामी ॥ बुद्धे ॥

जगत्प्राणः । पुं । समीरणे । वायौ ॥ जगतां प्राणः ॥

जगत्साक्षी । पुं । सूर्ये ॥ जगतां साक्षी ॥

जगदम्बा । स्त्री । जगज्जनन्याम् । गौर्य्याम् । पार्वत्याम् ॥ जगताम् अम्बा ॥

जगदम्बिका । स्त्री । दुर्गायाम् ॥

जगद्धात्री । स्त्री । दुर्गाप्रभेदे ॥

जगदाधारः । पुं । वायौ ॥ काले ॥ त्रि । जगतामाश्रये ॥ जगताम् आधारः ॥

जगदीशः । पुं । विष्णौ ॥ जगतामीशः ॥

जगद्गौरी । स्त्री । मनसादेव्याम् ॥

जगद्बलः । पुं । वायौ ॥ जगतो बलं येन ॥

जगद्योनिः । पुं । सदाशिवे ॥ विधातरि ॥ विष्णौ ॥ स्त्री । प्रकृतौ ॥ भूमौ ॥ जगतो योनिः ॥

जगद्रूपम् । न । नामरूपात्मके विश्वस्मिन् ॥ अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

जगद्वहा । स्त्री । धरित्र्याम् ॥

जगद्विनाशः । युगान्ते ॥ जगतां विनाशो यस्मिन् जगत्याः विनाशः ॥

जगनुः । पु । जन्तौ ॥ वैश्वानरे ॥

जगन्नाथः । पुं । विष्णौ ॥ पुरुषोत्तमक्षेत्रे । उड्यानपीठस्थे भैरवे ॥ उड्यानेविमलाक्षेत्रे जगन्नाथस्तु भैरवः ॥ स्यागमशास्त्रम् ॥ श्राद्धग्रामे हरेर्लिंगं जगन्नाथश्च भारतम् । कलौ देश सहस्राणीयये त्यक्ताः हरेः पदमिति ब्रह्मवैवर्त्तम् ॥ वैशाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः । कृता प्रतिष्ठाभोविमा. शोभने गुरुवासरे ॥ कृता प्रतिष्ठाविशेषः ॥ महापवित्रं क्षिहरे निवेदितं नियोजयेद् यः पितृदेवकर्मसु । तृप्यन्ति तस्यै पितरः सुराश्च प्रयान्तिलोकं मधुसूदनस्येति महाप्रसादमाहात्म्यस्य वचनम् ॥

जगन्निवासः । पुं । जगतामाधारे सर्वाश्रये परात्मनि ॥ जगतां निवासः ॥

जगन्नुः । पुं । जगन्नर्थे ॥

जगरः । पुं । कवचे । सन्नाहे ॥ जगता गृह्यते । प्रातिपदिकाद्धात्वर्थे इति । क्विप् । बाहुलकादरः । जागर्त्ति । अच् । पृषोदरादित्वात् ॥

जगलः । पुं । मदनद्रुमे ॥ मेदके । सुराकल्के ॥ पिष्टमद्ये ॥ त्रि । धूर्त्ते । कितवे ॥ भृशं गलति गल्यते वा । गलअदने । यङ्लुगन्तात् अच् । संप्रसारणपूर्वकत्वाद्दीर्घोऽकित इति न दीर्घः ॥

जग्धम् । त्रि । भुक्ते । भक्षिते ॥ अद्यते स्म । अद्° । क्तः । अदोजग्धिर्ल्यप्ति किति इति जग्धिः । इकार उच्चारणार्थः । धत्वम् । झरो झरि सवर्णे ॥

जग्धतृणः । त्रि । भक्षिततृणे ॥ जग्धं तृणमनेन ॥

जग्धिः । स्त्री । विघसे । भोजने । जेमने ॥ अदनम् । अद्° । स्त्रियां क्तिन् । अदोजग्धिर्ल्यप्तिकिति ॥

जघनम् । न । स्त्रियः श्रोणिपुरोभागे

मंगलादृतिख्याते ॥ इतिजटाधरः ॥

जङ्गलम् । क्ली । विषे ॥ इतित्रिकाण्डशेषः ॥

जङ्गम्यमानः । त्रि । अतिशयेन गम्यमाने । भृशंपीड्यमाने ॥

जङ्घा । स्त्री । प्रसृतायाम् ॥ गुल्फोर्द्ध्वजान्वधोभागे । टङ्गायाम् । टाँग इति भाषा ॥ जायन्ते रोमाण्यस्याम् । जनी । अच् । तस्य जङ्घ च ॥ यद्वा । जङ्घन्यते कुटिलं गच्छति । हन्तेर्यङ्लुगन्तात् अन्येभ्योपीति-डः । टाप् ॥

जङ्घाकरिकः । त्रि । धावके । जाङ्घिके । जङ्घाजीविनि ॥ जङ्घासाध्यत्वादुपचारात् गतिर्जङ्घा । सैवकरो राजदेयो भागः आकरः स्वेष्टोऽस्य । जङ्घाकरोऽस्यास्ति । अतइनिठनाविति ठन् ॥ जङ्घैव करोहस्ती यस्येति वा । कप् ॥

जङ्घात्राणम् । न । जङ्घात्राहे । मञ्जुले ॥

जङ्घालः । त्रि । वेगिनि । अतिजवे ॥ अतिशयिता जङ्घाऽस्य ॥ सिध्मादित्वाल्लच् ॥ पशुविशेषाङ्गगसे ॥ हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः । राजीवोपिच मुण्डीचेत्याद्या जङ्घालसंज्ञकाः ॥ हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः । कुरङ्गईषत्ताम्रः स्याद्धरिणाकृतिर्महान् ॥ ऋष्यो नीलाङ्कको लोके स रोझ इतिकीर्त्तितः । पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किञ्चिदल्पकः । न्यङ्कुर्बहुविषाणोथ शम्बरोगवयान् महान् । राजीवस्तु मृगो ज्ञेयो राजीभिः परिलक्षितः ॥ योमृगः शृङ्गहीनः स्यात् समुण्डीति निगद्यते ॥ जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः ॥ किञ्चिद्वातकरास्तापि लघवो बलवर्द्धनाः ॥

जङ्घिलः । त्रि । जङ्घाले ॥ अतिशयिते जङ्घे अस्य । पिच्छादित्वात् इलच् ॥

जजः । पुं । योधे ॥ जजति । जज युद्धे । पचाद्यच् ॥

जञ्जपूकः । त्रि । वाचाले ॥ पुनःपुनर्भृशंवा गर्हितं जपति तच्छीलः । यजजपदशांयङ इत्यूकः ॥

जञ्जभ्यमानः । त्रि । गात्रविनामेन विदारितमुखे पुरुषे ॥ इति कर्म्ममीमांसा ॥

जटा । स्त्री । केशविकारे । लग्नकचे । व्रतिनः शिखायाम् । सटायाम् ॥ जायते जन्यते वा । जनेष्टन्लोपश्चेति टन् धातोरन्त्यस्य लोपश्च ॥ मूले । शिफायाम् । जड इति भाषा ॥ मांस्याम् ॥ वेदपाठविशेषे ॥ सामगा-

नोपकरणे ॥ रुद्रजटायाम् ॥ शतावर्याम् ॥ जटति । जटसङ्घाते । अच् । टाप् ॥ जटा अस्त्यस्याः । अर्श आद्यच् ॥

जटाजूटः । पुं । जटासमूहे ॥ जटा नां-जूटोबन्धः ॥

जटाज्वालः । पुं । प्रदीपे ॥

जटाटङ्कः । पुं । शिवे ॥ जटायां टङ्को-ऽस्य ॥

जटाटीरः । महादेवे । शिवे ॥

जटाधरः । पुं । महेश्वरे ॥ बुद्धभेदे ॥ धरति । धृञ्० । पचाद्यच् । जटानां धरः ॥ त्रि । जटाधारिणि ॥ जटाधरः सन् जुहुधीह पावकम् ॥

जटामांसी । स्त्री । नलदे । मांस्याम् । सुगन्धिद्रव्यविशेषे ॥

जटायुः । पुं । अरुणपुत्रे सम्पातेः कनीयसि दशरथसखे गृध्रविशेषे ॥ जटां याति प्राप्नोति । या० । उ० कुः ॥ गुग्गुलौ ॥

जटायुधः । पुं । गुग्गुलौ ॥

जटायुः । पुं । जटायै ॥ गुग्गुलौ ॥ जटाया आयुरस्य ॥

जटालः । पुं । कर्चूरे ॥ गुग्गुलौ ॥ मुष्कके ॥ वटे ॥ त्रि । जटाधरे । जटावति ॥ जटाऽस्त्यस्य । प्राणिस्थादा-तोलजन्यतरस्याम् ॥

जटाला । स्त्री । जटामांस्याम् ॥ टाप् ॥



जटावान् । त्रि । जटिले ॥

जटावती । स्त्री । जटामांस्याम् ॥

जटावल्ली । स्त्री । गन्धमांस्याम् ॥ रुद्रजटायाम् ॥

जटिः । पुं । प्लक्षवृक्षे ॥ जटायाम् ॥ समूहे ॥ जटति । जट० । सर्वधातुभ्य इन् ॥

जटितः । त्रि । खचिते ॥

जटी । पुं । प्लक्षभेदे । पाकरि इति भाषा ॥ सर्पविशेषे ॥ त्रि । जटायुक्ते ॥ मत्वर्थे व्री० इनिः ॥

जटिलः । पुं । जटावति ब्रह्मचारिभेदे ॥ सिंहे । केशरिणि ॥ त्रि । जटायुक्ते ॥ यथा । यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गमितं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहं व्रजामि विपिने-जटिलस्तपस्वीति ॥ जटाऽस्त्यस्य । पि० इलच् ॥

जटिला । स्त्री । जटामांस्याम् ॥ पिप्पल्याम् ॥ वचायाम् ॥ दमनकवृक्षे ॥ राधिकाश्वश्र्वाम् ॥ टाप् ॥

जटी । स्त्री । प्लक्षवृक्षे ॥ जटामांस्याम् ॥ कृदिकारादिति ङीष् ॥

जटुलः । पुं । पिप्लौ । देहस्थे कृष्णलक्ष्मणि । लसन इति भाषा ॥ जटति । जट० । बाहुलकादुलच् ॥

जठरः । पुं । न । कुक्षौ ॥ वि । वृद्धे ॥ कर्कशे । कठिने ॥ जायतेऽस्मिन् जन्तुर्मलो वा । जनेररष्ठश्चान्तः । पृषोदरादिः ॥

जठरनुत् । पुं । आरग्वधे ॥

जठरामयः । पुं । जलोदररोगे ॥

जडः । पुं । स्वनाम्ना प्रसिद्धे पुरुषे ॥ यथा । दृष्ट्वाऽनिष्टं वा सुखदुःखं वा नवेत्ति यो मोहात् । परवशगः समवेदिह नानाजडसंज्ञकः पुरुषदति ॥ वेदग्रहणासमर्थे । मूर्खे । न । वारिणि ॥ स्त्री । सक्ते ॥ वि । हिमग्रस्ते ॥ मूके ॥ अप्रज्ञे । बुद्धिविकले ॥ अविद्यासंघटादीनां यत्स्वरूपं जडं हितत् ॥ जलति घनीभवति । अच् । डलयोरैक्यम् ॥

जडक्रियः । वि । चिरक्रिये । दीर्घसूत्रिणि ॥ जडाक्रियायस्य ॥

जडता । स्त्री । जाड्ये । सैनिकाँ । अपाटवे ॥ विरहदुःखेनजीवमभावस्थितौ ॥

जडभरतः । पुं । ऋषभपुत्रे । राजि ॥ यन्नामेदं भारतं वर्षमभूत् ॥

जडा । स्त्री । शूकशिम्ब्याम् ॥ भूम्यामलक्याम् । अजायाम् ॥ जडयति । तत्करोतीतिणिजन्तात् अच् । टाप् ॥

जडिमा । पुं । जडतायाम् ॥ यथा । इष्टाऽनिष्टापरिज्ञानं यत्र प्रश्ने प्यनुत्तरम् । दर्शनश्रवणाभावो जडिमा सोऽभिधीयते ॥ जडस्य भावः । इमनिच् ॥

जडुलः । पुं । जटुले ॥ जलति । जल । बा० उलच् । डलयोरैक्यम् ॥

जतु । न । अलक्ते । लाक्षायाम् ॥ जायते । जनी० । फणिपाटीस्थु तोऽन्तादेशश्च ॥

जतुकम् । न । हिङ्गुनि ॥ लाक्षायाम् ॥ जटुले ॥ अस्थिय । इवेप्रतिकृतावितिकन् ॥

जतुका । स्त्री । अजिनपत्रायाम् । चर्मचटिकायाम् ॥ गन्धद्रव्यविशेषे । जन्याम् ॥ पर्पट्याम् ॥ मालवदेशप्रसिद्धे लताविशेषे । तिर्यक्फलायाम् । निशान्धायाम् । जनेष्टायाम् ॥ कन्नन्तात् टाप् ॥

जतुकारी । स्त्री । जतुकालतायाम् ॥

जतुकृत् । स्त्री । जन्याम् । चक्रवर्त्तिन्याम् । गन्धद्रव्यविशेषे । चक्रपत् इति भाषा ॥ जतुकरोति । क्विप् ॥

जतुकृष्णा । स्त्री । पर्पट्याम् ॥

जतुनी । स्त्री । चर्मचटिकायाम् ॥

जतुपुत्रक । पुं । नये । द्यूतोपकरणविशेषे । पाशकसुटिकायाम् ॥

जतुमणिः । पुं । क्षुद्ररोगविशेषे ॥ यथा ॥ सममुत्सन्नमरुजं मण्डलं कफर क्तजम् । सहजं लक्ष्मचैकेषां लक्ष्यो जतुमणिश्चसः ॥ इतिनिदानम् ॥

जतुरसः । पुं । अलक्तके ॥

जतूका । स्त्री । अजिनपत्रायाम् ॥ जनीवृक्षे । चकवत इतिभाषाप्रसिद्धे ॥ जायते आरोग्यमनया ॥ जनी० ॥ उलूकादयश्चेति निपातनात् कपि द्विकिञ्चिस्यपिमलोपः ॥

जत्रु । न । स्कन्धकक्षयोः सन्धौ ॥ कण्ठस्याधोभागे स्थितयोरस्थ्नोः ॥ कक्ष योर्वक्षःसन्धी जनुषी समुदाहृते ॥ जायते वा हुरस्मात् । जनी० । च भ्वादित्वात् रप्रत्ययोनकारस्या कारश्च ॥

जत्रुग्रकम् । न । शिखामुनि ॥

जनः । पुं । लोके ॥ पृथग्जने । पामरे ॥ आत्मीयविवेकहीने ॥ महर्लोकोर्द्ध लोके ॥ जनो ऽष्टकोष्ठचक्रस्थः पि तृजस्तुजनाश्रयः ॥ जननं जनः जन्म ॥ भावेघञ् । जनिवध्योश्चेतिनवृद्धिः ॥ संमुद्रस्य दैत्यविशेषेषु ॥ शाकरा च्ये मुनौ ॥

जनकः । पुं । पितरि ॥ मिथिलाधिपे विदेहे ॥ कारणे ॥ जनयति । जनी प्रादुर्भावे । ण्वुल् । जनिवृद्ध्योश्चेतिन वृद्धिः ॥ चि । उत्पादयितरि ॥

जनकतनया । स्त्री । } सीतायाम् ॥
जनकनन्दिनी । स्त्री । }

जनकराजकूपः । पुं । तीर्थविशेषे ॥

जनकसुता । स्त्री । जानक्याम् ॥

जनकात्मजा । स्त्री । श्रीरामपत्न्याम् सीतायाम् ॥ जनकस्य आत्मजा ॥

जनकारी । पुं । अलक्तके ॥ मान्तोऽयम् ॥ इतिराजनिर्घण्टः ॥

जनङ्गमः । पुं । चण्डाले ॥ अधार्मिकान् जनान् गच्छति । जनेभ्यो गच्छतिवा । गमश्चेति खच् मुमागमः ॥

जनता । स्त्री । जनानां समूहे ॥ ग्रामजनबन्धुभ्यस्तल् । तलन्तः स्त्रियाम् ॥ जनत्वे ॥ भावेतल् ॥

जननम् । न । वंशे ॥ जन्मनि ॥ जन्यते जनी० । जनजनने वा । घटादेः । कर्मण्यल्युट् ॥ दीर्घयाम्नरेव जमानस्य जन्मनि ॥ पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति ये दीक्षयन्तीत्यादिश्रुतेः । मातुरग्रे ऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादितिमनुस्मृतेश्च ॥

जननिः । स्त्री । जनीनामगन्धद्रव्ये ॥

जननी । स्त्री । मातरि । मस्याम् ॥ दयायाम् ॥ कटुकायाम् ॥ मञ्जिष्ठायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

जनीनामगन्धद्रव्ये ॥ जनयति । ज नीण कृत्यल्युटो बहुलमितिल्युट् । टित्त्वात् ङीप् ॥

जनपदः । पुं । देशे । नीदृति ॥ जनः पद्यं गच्छत्यत्र ॥ जने ॥

जनपदी । पुं । जनपदस्वामिनि ॥

जनप्रवादः । पुं । कौलीने । वर्णनीयतायाम् । लोकापवादे ॥

जनप्रियः । पुं । धान्यके ॥ शोभाञ्जने ॥ त्रि । जनानां प्रीतिविषये ॥

जनमेजयः । पुं । परीक्षितराजस्य पुत्रे । पारीक्षिते ॥ पुरुराजपुत्रे ॥ जनमेजयति । खश्प्रत्ययादेशे. कर्त्तरिखश् । जनस्यमुमागमः ॥

जनयिता । पुं । तातेः । पितरि । जनयतीति । जनी । तृच् ॥

जनयित्री । स्त्री । जनन्याम् । मातरि ॥ तृजन्तात् । ऋन्नेभ्योङीप् ॥

जनरवः । पुं । लोकवादे ॥ यथा परीवादः सत्यो भवति वितथो वापि स पतां तथा प्युच्चैर्धाम्नां हरति महिमानं जनरवः । तुलोत्तीर्णस्यापि प्रकटनिहताशेषतमसो रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः ॥ इति सुभाषितेन ॥

जनलोकः । पुं । महर्लोको परिभुवने । महर्लोकः स्थितेरूर्ध्वं मेरुकोटिप्रमाणतः । कोटिद्वयेन संख्यातो जनो भूर्लोकतो जनैः ॥ निवसन्त्यमला यत्र मानसा ब्रह्मणः सुताः । सनन्दनाद्या योगीन्द्राः सर्वे ते ऊर्ध्वरेतसः इति काशीखण्डम् ॥

जनवल्लभः । पुं । श्वेतरोहितवृक्षे ॥ त्रि । लोकप्रिये ॥

जनवादः । पुं । जनप्रवादे ॥

जनवार्त्ता । स्त्री । लोकानां किंवदन्त्याम् ॥

जनश्रुतिः । स्त्री । सत्यानृतसाधारण्या लोकप्रसिद्धेः ॥ किंवदन्त्याम् ॥ जनेभ्यः श्रूयते । श्रुश्रवणे । क्तिन् ॥

जनस्थानम् । न । दण्डकारण्ये ॥ दण्डकारण्यस्थाश्रमविशेषे ॥

जनातिगः । त्रि । लोकातिशयिनि ॥ जनमतिगच्छति । गम० । अन्यत्रापीति डः ॥

जनान्तः । पुं । देशे । जिला इति पारस्य भाषा ॥ इति अनञ्जयः ॥

जनान्तिकम् । न । अप्रकाशे । अगोचरे ॥ त्रिपताकाकरेणाऽन्यानपवार्य्यान्तरे कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥

जनार्दनः । पुं । नारायणे । विष्णौ ॥ सर्वैः साधुभिर्जनैः स्वाभिलषिताभ्युदयनिःश्रेयससिद्धये अर्द्यते याच्यते

जनी

इति व्युत्पत्तौ । अर्दतेर्याञ्चार्थात् ॥ ल्यल्युटौ बहुलमिति कर्मणि ल्युट् ॥ यद्वा । जननं जनः जन्म । तमर्दयतीति इति जनार्दनः । अर्देहिंसायाम् । नन्द्यादित्वाल्ल्युः ॥ जनाःसमुद्रस्थादैत्यभेदाः तेषामर्दन इतिवा ॥ जनान् दुर्जनान् अर्दयति हिनस्तीतिवा ॥

जनायनः । पुं । दृके ॥

जनाश्रयः । पुं ॥ मण्डपे ॥ जनानांलोकानां आश्रयः ॥

जनिः । स्त्री । उत्पत्तौ । अभूतप्रादुर्भावे ॥ नाऽसतो जन्मनायोगः सतः सत्त्वात्तदपेक्ष्यते । कूटस्थे विक्रिया नास्ति तस्मात् सामततोजनिः ॥ जननम् । जनी० । जनिघसिभ्यामिण् ॥ जनिवध्योश्चेति वृद्धिनिषेधः ॥

जनित । त्रि । उत्पादिते ॥

जनित्रः । पुं । पितरि ॥ जायतेऽस्मात् । जनी० । जनिदेर्यादिना जनेरित्रन् । जनित्रौ मातापितरौ ॥

जनित्री । स्त्री । मातरि ॥ टाप् ॥

जनिनीलिका । स्त्री । महानीलाख्याम् ॥

जनिमा । पुं । जन्मनि ॥ जायते । जनी० । जनिसर्ह् स्याभिमनिच् ॥

जनी । स्त्री । सीमन्तिन्याम् ॥ वध्वाम् । सुषायाम् ॥ जायते गर्भो यस्यां वा ऽस्याम् ॥ उत्पत्तौ ॥ औषधीभेदे । जतुकायाम् ॥ जायते आरोग्यमनया । जनी० । जनिघसिभ्यमितीण् । जनिवध्योश्चेति नवृद्धिः । कृदिकारादिति ङीष् ॥

जनुः । न । जन्मनि ॥ जननम् । जनी० । जनेरुसिः ॥

जनूः । स्त्री । जनने । जन्मनि ॥

जनेष्ट । पुं । मुद्गरवृक्षे ॥

जनेष्टा । स्त्री । जतुकायाम् ॥ जातीपुष्पे । वृद्धिनामौषधौ । हरिद्रायाम् ॥

जनेहिरण्यम् । न । यशसि ॥

जन्तः । पुं । जनरंचके ॥ जनान् अवति । अव० । क्वोरिष्टदृ । वृद्धिः । क्लीबम् ॥

जन्तुः । पुं । प्राणिनि । जननशीले ॥ अविद्यादि हृदयग्रन्थिभियुते संसारिणि । वस्तुस्वरूपादर्शिनि ब्रह्मादिस्तम्बपर्यन्ते प्राणिजाते ॥ जायते । जनी० । कमिमनिजनीति तुः ॥

जन्तुकम्बुः । पुं । क्रमिशङ्खे ॥

जन्तुका । स्त्री । नाडीहिङ्गुनि । रोमव्याम् ॥ लाचायाम् ॥

जन्तुम । पुं । बीजपूरे ॥ न । विडङ्गे । हिङ्गुनि ॥ त्रि । जन्तुघातिनि ॥

जन्तुभी । स्त्री । विडङ्गे ॥

जन्तुनाशनम् । न । हिङ्गुनि ॥ विडङ्गे ॥

जन्तुपादपः । पुं । कोषाम्रवृक्षे ॥
जन्तुफलः । पुं । उदुम्बरे ॥ जन्तवः फलेऽस्य
जन्तुमारी । स्त्री । निम्बूके ॥
जन्तुला । स्त्री । काशतृणे ॥
जन्तुहन्त्री । स्त्री । विडङ्गे ॥
जन्म । पुं । न । जननि ॥ जननम् । इ-
ष्युयुधीति बाहुलकात् जनेर्मन् ॥
जन्मकीलः । पुं । हरौ ॥
जन्मदः । पुं । पितरि ॥
जन्मदा । स्त्री । मातरि ॥
जन्म । न । आद्यक्षणसम्बन्धे । उत्पत्तौ
। जनने । शुभाशुभकर्मवशात् पौनः-
पुन्येनतत्तद्विविधयोनिषूद्भवे । गर्भ-
वासयोनिद्वारनिःसरणरूपे । विग्रह-
भेदग्रहणे ॥ वासना कर्म विद्याचर्यं
जन्मप्रयोजकम् ॥ तत्तत्त्व सारक
कार्यम् । गर्भात् कोटिगुणं दुःखं
योनियन्त्रनिपीडने । संमूर्च्छितस्य
जठराज्जायमानस्यदेहिनः ॥ जाय-
मानः पुरीषासृङ्मूत्रशुक्राविलान-
नः । प्राजापत्येन वातेन पीड्यमाना-
स्थिबन्धनः ॥ अधोमुखो वैक्रियतेप्र-
बलैः सूतिमारुतैः । क्लेशान्निष्क्रा-
न्तिमाप्नोति जठरान्मातुरातुर इति
॥ प्रेत्यभावे ॥ स च अपूर्वदेहेन्द्रि-
यादिसम्बन्धः । निकायविशिष्टाभिर-
पूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धि-
वेदनाभिः पुरुषस्याभिसम्बन्धो जन्म
। ननु पुरुषस्य परिणामः तस्यापरि-
णामित्वात् । अन्यथा नासतः सत्त्वं
किन्तु देहेन संयुतिः । प्रादुर्भावो
जनेरर्थः ससएवसयुज्यते इत्युक्तः ॥
प्रथमतारायाम् ॥ जननम् जायते-
ऽस्मा । जनी० । मनिन् ॥
जन्मबन्धविनिर्मुक्तः । त्रि । जन्मात्मके
न बन्धेन विशेषेणात्यन्तिकत्वसम्बन्धे
न निरवशेषतोमुक्ते ॥
जन्ममासः । पुं । जन्मनोमासे ॥ आर-
भ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवे-
त् । जन्ममासः स विज्ञेयो वर्जितः
सर्वकर्मसु ॥
जन्मर्क्षम् । न । जन्मनो नक्षत्रे ॥
जन्मवर्त्म । न । योनौ । भगे ॥ जन्म-
नोवर्त्म ॥
जन्मान्तरम् । न । परलोके । भवान्त-
रे । प्रभृत ॥
जन्माष्टमी । स्त्री । श्रीकृष्णस्य जन्मति-
थौ ॥ सा तु मुख्यचान्द्रेण श्रावणस्य
कृष्णाष्टमी । गौणचान्द्रेण भाद्रस्य कृ-
ष्णाष्टमी ॥ अथ भाद्रपदे मासि कृ-
ष्णाष्टम्यां कलौ युगे । अष्टाविंशति-
मे जातः कृष्णोऽसौ देवकीसुतः ॥
जन्मी । पुं । प्राणिनि ॥ जन्मो ऽस्या-
स्ति । अतइनि ॥ जन्माऽस्यास्तिवा ॥

जन्यु.

ज्रौ० इति. ॥

जन्मेजय. । पुं । जनमेजये राज्ञि ॥ जन्मनैवातिशुद्धेन शत्रूनेजितवान् यत. । एजृकम्पनेधातोर्हि जनृमेज यइत्सिमुनइतिनिरुक्तिः॥ शकंध्वादि त्वात् पररूपम् ॥

जन्यः । पुं । जनके ॥ न । हट्टे ॥ परी वादे । कौलीने ॥ युधि । सङ्ग्रामे ॥ त्रि । उत्पाद्ये ॥ जनकस्य स्वभावो- ह्रि जन्येतिष्ठति निश्चितम् । यथा श्रीकृष्णपादाङ्क कालीयवंशमस्तके ॥ नवोढाज्ञातिभिवभृत्येषु ॥ नव वरस्यज्ञातिभिवभृत्येषु ॥ वरस्निग्धे । जामातृवत्सले ॥ देहे ॥ जननम् । जनेर्यक् ॥ जायते वा॰ भव्यगेये तिसाधु ॥ यद्वा । जायते जनयति वा । अचोयत् तकिशसिचतियति जनिभ्योयद्वाच्य । जनेर्यद्विधि स्वरा र्थः । चाहलोर्ण्यदिति ण्यताविरूप सिद्धेः । नयइट्टियतङ्क अनिश्चयोर्स्ति तिनिषेधात् ॥ जनसजनत्य जनखन इत्यादिवियत् ॥ यद्वा । जनींवधूं व इति प्रापयति । संज्ञायामितिसाधु ॥

जन्या । स्त्री । मातृवयस्यायाम् ॥ मुदि । प्रीतौ ॥ जायते ऽस्याम् । जनयति वा । यत्प्रत्ययात् यदन्ताद्वा टाप् ॥

जन्यु । पुं । प्राणिनि ॥ अग्नौ ॥ धात रि । परमेष्टिनि ॥ जायते । जनी० । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥

जपः । पुं । श्रुतिमन्त्राद्यावृत्तौ ॥ जप स्त्वक्षरणं ध्येयसम्मुखीकरणं मुने । मानसस्त्रान्त. सन्नसस्वरूपस्य उपांशु संघकरयच स्वसंवेद्यलघुध्वने र्भाष्य स्यच. श्रूयमाणस्यमन्त्रस्य ध्येयसम्मु खीकरणायावर्त्तने ॥ मन्त्रार्थाज्ञाने जपस्य फलाजनकत्वमुक्तं तन्त्रशास्त्रे । यथा । यथापशुर्भारवाही न तस्य भजते फलम् । तथैवार्थानभिज्ञो न जपस्यफलमश्नुत इति ॥ स्वाध्याये ॥ जपनम् जप्यतेवा । जपजल्पसेच । व्यधजपोरनुपसर्गे इत्यप् ॥

जपनम् । न । जपे ॥

जपपरायण । पुं । जपनशीले । जपा सक्ते ॥

जपा । स्त्री । जपावृक्षे ॥ जपाकुसुमाद्रि षी केशवा त्रिसन्ध्याकमलाशतजित् ॥ जपति । जप० । पचाद्यच् । टाप् ॥

जप्यम् । त्रि । अघमर्षणादौ ॥ जप्यते । जप० । पोरदुपधादितियत् ॥

जप्येश्वर । पु । सिद्धस्थानविशेषे ॥ य था । जप्येश्वरे महास्थानेशङ्करीच त्रिशूलिनी । त्रिशूलीशङ्करस्तत्रदर्श पापक्षिसिःपक इति ॥

जवाला । स्त्री । सत्यकामस्यर्षेर्मातरि ॥

जमजः । त्रि । यमजे ॥

जमदग्नि । पु । परशुरामपितरि । ऋचीकमुनिपुत्रे भृगुवंशजे यमदग्नि मुनौ ॥

जमनम् । न । भोजने ॥ जमु अदने । ल्युट् ॥

जम्पती । पुं । सहोक्त्या जायापत्योः ॥ जाया च पतिश्च राजदन्तादिगणे पाठात् जायाशब्दस्य जमभावो निपात्यते ॥ नित्यं द्विवचनान्तः ॥

जम्बालः । पुं । शैवाले ॥ पङ्के ॥ जमति । जमु० । बाहुलकादालन् ॥ यद्वा । जम्ब अदने इति धातुः । भावे घञ् । जम्बं लाति । आदाने । आतोनुपे तिक । पृ० ॥

जम्बालिनी । स्त्री । नद्याम् । शैवलिन्याम् ॥

जम्बीरः । पुं । जंभीरी इति कमट इति च पर्वतीय भाषा प्रसिद्धे दन्तशठे । जम्भीरे । जम्भले ॥ जम्बीरं सुरसं गुर्वम्लं वातश्लेष्मविबन्धनुत् । शूलकासकफक्लेशच्छर्दितृष्णामदोषजित् ॥ आस्यवैरस्यहृत् पीडा वह्निमान्द्यकृमीन् हरेत् । स्वल्पजम्बीरिकातद्वत् तृष्णाछर्दिनिवारिणी ॥ प्रस्थपुष्पे । मरुवा इति ख्याते ॥ अर्जके ॥ सितार्जके ॥ जम्यते । जमु० । गम्भीरा

दयश्चेति ईरन्नन्त साधुः ॥ यद्वा । जम्यते । णिच् । वीरयति । वीर विक्रान्तौ । अच् । जम् चासौ वीरश्च ॥

जम्बुः । स्त्री । जामन इति प्रसिद्धे वृक्षे । सुरभिपत्रायाम् । नीलफलायाम् ॥ मेरुसरिति ॥ जम्बुद्वीपे ॥ जम्बुद्वीपं स्थितेनाभिरूढ़त्वं श्रयोजनम् । क्षाराब्धिना परिवृतं परिवृत्तेन संस्थितम् ॥ न । जम्बूफले । जाम्बवे ॥ जमति । जमु० । अन्दूदृन्भूजम्बू इत्यादिना कू प्रत्ययो बुगागमश्च निपातितः । बाहुलकात् ह्रस्वः ॥ फले तु जम्ब्वाः फलम् । जम्ब्वा वेत्यस्योऽभावे औरञ् । फले लुक् । क्लीवत्वं नपुंसके ॥

जम्बुकः । पुं । जम्बूकार्थेषु ॥ गोलाम जाम इति गौडभाषाप्रसिद्धे वृक्षे ॥ श्योनाकप्रभेदे ॥ जमति । जमु० । मृगय्वादयश्चेति साधुः ॥ शृगाले ॥

जम्बुद्वीपः । पुं । न । भूमेः सप्तद्वीपान्तर्गते द्वीपविशेषे । जम्बूद्वीपे ॥

जम्बुमार्गः । पुं । तीर्थविशेषे ॥

जम्बुलः । पुं । जम्बूले ॥

जम्बुपनसम् । न । श्वेतजवापुष्पे ॥

जम्बूः । स्त्री । मेषशृङ्गिकायाम् ॥ नागदमन्याम् ॥ जामन इति प्रसिद्धे वृक्षे । राजफलायाम् । सुरभिपत्राया

म् ॥ सा बृहत्क्षुद्रभेदेन द्विविधा । तत्र बृहत्या: पर्यायाः । महाजम्बूः महाफला राजजम्बूः बृहत्फला फलेन्द्रः नन्दः महाफला सुरभिपत्रा चेत्र ॥ विष्टम्भित्वं रोचनत्वं गुरुत्वं च फलेगुणाः ॥ क्षुद्रायाः पर्यायाः । ह्रस्वजम्बूः क्षुद्रफला दीर्घपत्रा मध्यमा ॥ अथ वनजम्बूपर्यायाः । भूमिजम्बूः काकजम्बूः नादेयी शीतपल्लवा ह्रस्वपत्रा जलजम्बुका ॥ फलगुणाः । जम्बूः सङ्ग्राहिणी रूक्षा कफपित्तास्रदाहनुत् ॥ । जम्ब्वाः फले । जम्बु नि । जाम्बवे ॥ जम्बूद्वीपे ॥ जमति । जमु० जम्बूः जम्बू जम्बूकेति ऊकञ्जम्बूदिधिपूरित्युणादि सूत्रेण ऊप्रत्ययो बुगागमश्च निपातितः ॥ आयते वा । जनेर्डो तौ तेनैव निपातितौ ॥ फलेतु जम्ब्वाः फलम् । जम्ब्वा वेत्ययोः ऽभावपक्षे ऽोरञ् । तस्य लुप्वेतिलुप् । लुपियुक्तवत् ॥ जम्बुद्वीपे ॥

जम्बूकः । पुं । फेरवे । शृगाले ॥ नीचे ॥ पश्चिमाशापतौ । वरुणे ॥ गुलाबजामनइति प्रसिद्धे फलवृक्षे ॥ श्योनाकभेदे । जमति । जमु० । उलूकादित्वात् साधुः ॥

जम्बूका । स्त्री । काकलीद्राक्षायाम् । निर्बीजायाम् । रसाधिकायाम् ॥

जम्बूद्वीपम् । न । पुं । भूमेःसप्तद्वीपान्तर्गते द्वीपविशेषे ॥ यथा । भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्ययाम्ये क्षारक्षीराद्यम्बुधीनांनिवेशः ॥ इतिसिद्धान्तशिरोमणिः ॥ पुराणमतेनतु । जम्बूद्वीपः पद्मकोषमध्यवर्तिको लक्षयोजनविस्तीर्णः पद्मपत्रसंस्थानः लक्षयोजनविस्तृतलवणसमुद्रेण वेष्टितः । यस्मिन् प्रत्येकं नवसहस्रयोजनायामानि नववर्षाणि तेषां वर्षाणामष्टौ सीमापर्वताःसन्तीति ॥

जम्बूलः । पुं । जम्बूविटपे ॥ केतकीवृक्षे । क्रकचच्छदे ॥ न । वरपक्षीयस्त्रीणांपरिहासवचने ॥

जम्बूलमालिका । स्त्री । कन्यावरयोर्मुखचन्द्रिकायाम् ॥ जम्बूलानांवरपक्षीयस्त्री परिहासवचनानांमालिका श्रेणी ॥ इतिहरिवंशटीकायां नीलकण्ठः ॥

जम्भः । पुं । दैत्यविशेषे ॥ दन्ते ॥ जम्बीरे ॥ भक्षणे ॥ अंशे ॥ तूणे ॥ हनौ ॥ जम्भयति । जभीगात्रविनामे । पचाद्यच् । रधिजभोरचीति नुम् ॥

जम्भकः। पुं। जम्भार्थेषु॥ जम्भी। गवु ल्तृचाविति गवुल्। नुम्॥ स्वार्थे कोवा॥

जम्भका। स्त्री। जृम्भायाम्॥

जम्भगः। पुं। राक्षसविशेषे॥

जम्भद्विट्। पुं। इन्द्रे॥

जम्भभेदी। पुं। हरितये। इन्द्रे॥ जम्भमसुरंभेत्तुं शीलमस्य। सुप्यजा तावितिणिनिः॥

जम्भरः। पुं। जम्बीरे॥

जम्भलः। पुं। जम्बीरे॥ बुद्धदेवता विशेषे॥ जम्भयति। जभीः। इषा दिप्वाल्लच्, रधिजभोरितिनुम्॥

जम्भला। स्त्री। राक्षसीविशेषे॥ यथा समुद्रस्यो त्तरेतीरे जम्भला नाम राक्षसी। तस्याःस्मरणमात्रेण विश ल्यागर्भिणी भवेदिति॥

जम्भा। स्त्री। जृम्भायाम्॥ इतिराज निर्घण्टः॥

जम्भारिः। पुं। इन्द्रे॥ वह्नौ॥ वज्रे॥ जम्भस्यारिः॥

जम्भी। पुं। जम्बीरे॥ इतिशब्दच न्द्रिका॥

जम्भीरः। पुं। जंभीरी इति ख्याते जम्बीरद्रुमे॥ जम्भयति। जभिंग मीरादित्वात् ईरन्। रधिजभो रितिनुम्॥



जयः। पुं। अभिमन्ये॥ जयन्ते॥ युधि ष्ठिरे॥ शत्रुपराभवस्वीकारणे। विज ये। उत्कर्षमाप्तौ। पराजितामेच्यो त्कर्षलक्षणे॥ जीत इति भाषा॥ जयोरव्ध प्रहारिणाम्॥ वीररसे॥ नारायणस्य पार्षदविशेषे॥ इ न्द्राक्षयंगजे विजयनन्दनराजे॥ इ न्द्रिवाहारगृहे॥ अष्टाविंशतितमे वत्सरे॥ चत्वियास्य तथा वैश्याः शूद्राश्चनटनर्तकाः। पीडितास्ते व रारोहे जये सर्वे नसंशयः॥ जयन म्। जीयते ऽनेनवा। जि। एरच्॥ जयति वा। पचाद्यच्॥ शास्त्रविशे षे॥ यथोक्तं ब्रह्मचारिकाण्डे भवि ष्यपुराणे। अष्टादशपुराणानि राम स्यचरितं तथा। विष्णुधर्मादिशा स्त्राणिशिवधर्मोश्चभारत॥ कार्ष्णं चपञ्चमोवेदो यन्महाभारतंस्मृत म्। सौराश्चधर्माराजेन्द्रमानवोक्ता महीपते॥ जयेतिनाम एतेषांप्रव दन्तिमनीषिण इति॥

जयकोलाहलः। पुं। पाशकभेदे॥ जयस्य कोलाहलो यस्मिन्नस्॥ -जयध्वनौ॥

जयढक्का। स्त्री। जीतकाडङ्का इति भाषा प्रसिद्धे वाद्यविशेषे॥

जयदत्तः। पुं। इन्द्रपुत्रे। पाकशासनौ॥

जयद्रथः । पुं । सिन्धुराजे ॥

जेयनम् । न । तुरङ्गादिसन्नाहे ॥ जये ॥ जिजये । ल्युट् ॥

जयनी । स्त्री । इन्द्रसुतायाम् ॥

जयन्तः । पुं । इन्द्रपुत्रे ॥ पाकशासनौ ॥ भीमे ॥ चन्द्रे ॥ शिवे । शम्भौ ॥ कृष्णानुजे ॥ ध्रुवकविशेषे ॥ तल्लक्षणं यथा । आदितालो जयन्तःस्यात् शृङ्गाररससंयुतः । कन्दसंख्याक्षरपद आयुर्वृद्धिकरः परः इतिदामोदरः ॥ जयति । जि० तृभूवहिवसीत्यादि नाझच् । झोन्तः ॥ तीर्थविशेषे ॥

जयन्तिका । स्त्री । हरिद्रायाम् ॥ जायसी रत्नगिरिति प्रसिद्धेद्रव्ये ॥

जयन्ती । स्त्री । जयायाम् । तर्कार्याम् ॥ नादेय्याम् ॥ अस्यागुणाः । मदगन्धयुक्तत्वम् । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । कृमिभूतनाशित्वम् । कफवातविशोधनत्वम् । तत्कृष्णारसायनी । इतिराजनिर्घण्टः ॥ उमायाम् । गौर्याम् ॥ इन्द्रपुत्र्याम् ॥ पताकायाम् ॥ जीवन्त्याम् ॥ योगविशेषे ॥ यथा । जयं पुण्यञ्चकुरुते जयन्तीमिति तांविदुः । रोहिण्यां सहिताकृष्णा मासिच श्रावणेऽष्टमी ॥ अर्द्धरात्रादधश्चोर्द्ध्वंकलयापियदाभवेत् । जयन्तीनामसा प्रोक्ता सर्वपापप्रणाशिनी ॥ यात्रायोगविशेषे ॥ यथा । यच स्योच्चगतश्चन्द्रो लग्नादेकादशे स्थितः । जयन्तानामयोगोयं शत्रुपक्षविनाशकृत् ॥ जयति । जि० । तृभूवहिवसि भासि साधि गडि मण्डि जिनन्दिभ्यश्चेति झच् सच षित् । झोन्तः । षित्वात् ङीष् ॥

जयपत्रम् । न । डिक्री इति डिगरी इति च इङ्ग्रेजभाषा प्रसिद्धे विजयपत्रे । विवादविषयकजययोधकलिपौ ॥ यथा । यद्वृत्तं व्यवहारात्तु पूर्वपक्षोत्तरादिकम् । क्रियाऽवधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥ पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः । प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते इति ॥ अश्वमेधीययज्ञघोटकमस्तकबद्धायां लिपौ ॥ यथा । त्रैलोक्यविजयीरामो रावणान्तकरः प्रभुः । सदीक्षितो वाजिमेधे तस्यायं मोक्षितः पशुः ॥ पालितो लक्ष्मणेनैव सुलक्षणविलक्षितः । सम्पूज्यचपरित्याज्यः सर्वैरितिचसंस्कृताम् ॥ इतिवाल्मीकिरामायणम् ॥

जयपालः । पु । दन्तीबीजे । सारके । जमालगोटा इति भाषा ॥ विधातरि ॥ विष्णौ ॥ नृपे ॥ इतिशब्दरत्नावली ॥

जयपुत्रकः । पुं । पाशकविशेषे ॥

जयमङ्गलः । पुं । ज्वरघ्ने औषधविशेषे ॥ राजवाह्ये हस्तिनि ॥ ध्रुवकविशेषे ॥ यथा । चतुर्विंशतिवर्णाङ्घ्रिः कथितो जयमङ्गलः । शृङ्गारवीरयोरेव तालो चाचपुटे सदेति ॥

जयवाहिनी । स्त्री । शच्याम् । इन्द्राण्याम् ॥ चारुधारा महेन्द्राणी चेन्द्राणी जयवाहिनीतिरत्नः । जयवादिनीति पाठान्तरम् ॥ मात्रियोम् ॥ जयसैन्ये ॥ जयस्य वाहिनी ॥

जयशेखरः । पुं । स्वर्णभूमिचिकीर्षोच्च स्थानगेयदिगीप्सिते । जयशेखरयोगोयं नानाविधफलप्रदः । इति विवर्णिते यात्रायोगे ॥

जया । स्त्री । जयन्त्याम् ॥ तिथिविशेषे । नन्दा भद्रा जयाचैव तृतीया च जया स्मृता ॥ पथ्यायाम् । हरीतक्याम् ॥ उमायाम् । दुर्गायाम् ॥ अनुस्वस्ति यथा । जयः कल्याणवचनो ह्याकारो दातृवाचकः । जयंददातियानित्यं साजयापरिकीर्तितेति ब्रह्मवैवर्त्तपुराणम् ॥ दुर्गायाः सख्याम् ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ अग्निकारिकायाम् । अग्निमन्थवृक्षे ॥ विजयायाम् । भङ्गायाम् ॥ पताकाविशेषे ॥ नीलदूर्वायाम् ॥ शान्ताछन्दे ॥ जयति । जि० । पचाद्यच् । टाप् ॥

जयारवः । पुं । वन्दिनांजयजयेतिशब्दे ॥

जयावहा । स्त्री । भद्रदन्तीवृक्षे ॥

जयाश्रया । स्त्री । जरडीतृणे ॥

जयाह्वा । स्त्री । भद्रदन्तीवृक्षे ॥

जयी । त्रि । जययुक्ते । विजयिनि ॥ जेतुंशीलमस्य । प्रजोरिनिरित्यधिकारे जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्चेति इनिः ॥

जय्यः । त्रि । जेतुंशक्ये ॥ विजये जिः अभिभवेता । क्षय्यजय्यौ शक्यार्थे इति यान्तादेशः ॥

जरठः । त्रि । कर्कशे ॥ पाण्डौ ॥ कठिने ॥ जीर्णे ॥ जीर्यति । जृष् वयोहानौ । बाहुलकाद् अठः ॥ पुं । जराया मितिविश्वः ॥

जरडी । स्त्री । तृणविशेषे । गण्डालिकायाम् । सुनालायाम् ॥

जरणः । पुं । न । जीरके ॥ कलाज्याम् । कृष्णजीरके ॥ हिङ्गुनि ॥ सौवर्चले ॥ कुष्ठौषधे ॥ पुं । कासमर्दे ॥ जरयति । जृष् । नंद्यादित्वात् ल्युः

जरणद्रुमः । पुं । अश्वकर्णवृक्षे ॥

जरणा । स्त्री । कृष्णजीरके ॥

जरन् । त्रि । जरातुरे । वृद्धे ॥ पुरातन

। तःस्मृतः ॥

जरासन्धजित् । पुं । भीमसेने ॥

जरी । त्रि । वृद्धे ॥ इतिहेमचन्द्रः ॥

जल्यम् । न । मांसे ॥ शुष्कमांसे ॥ जीर्यति । जॄष् । जॄदृभ्यां मूथम् ॥ पुं । असुरविशेषइतिवेदभाष्यम् ॥

जर्जरम् । न । शैवले ॥ शक्रध्वजे ॥ त्रि । जरातुरे ॥ जीर्णे ॥ जर्जति । जर्ज परिभाषणभर्त्सनयोः । बाहुलकात् अरः ॥

जर्जरीकः । त्रि । बहुच्छिद्रद्रव्ये ॥ जरातुरे ॥ जर्जति । जर्ज० । पर्फरीकादयश्चेति साधुः ॥

जर्णः । पुं । चन्द्रे ॥ वृक्षे ॥ जीर्यति । जॄष० । छन्दसीतिनन् ॥ त्रि । जीर्णे ॥

जर्त्तिकः । पुं । जट्ट इतिप्रसिद्धे वाहीकदेशस्थेशूद्रे ॥ यथा ॥ वाहीकं नाम नगरं तत्रापगामनिम्नगा । जर्त्तिका नामवाहीकास्तेषांवृत्तं सुनिन्दितमितिभारतेकर्णपर्व ॥

जर्त्तिलः । पुं । अरण्यतिले ॥ जर्त्तिलः कथ्यतेसद्भिररण्यप्रभवस्तिलः ॥

जर्त्तुः । पुं । योनौ ॥ मतङ्गजे ॥ जायते । जनी० । जनेस्तुरन्त्च । तु इत्यविभक्तिकोनिर्देशः । तुप्रत्ययोरेफश्चान्तादेशः ॥

जल. । त्रि । जडे ॥ न । गोकलने ॥



ह्रीवेरे ॥ नीरे । अम्बुनि । तोये ॥ ॥ पञ्चभूतान्तर्गतभूतविशेषएतस्य ॥ अस्योत्पत्त्यादयो निरूप्यन्ते ॥ रूपमात्रादि कुर्वाणात् तेजसोदैवचोदितात् । रसमात्रमभूत् तस्मादम्भो जिह्वारसग्रहः ॥ अयेःशुक्लोरसस्पर्शौ अत्रेमधुरशीतलौ । खेदस्तन्द्रशमस्त्व सुतासिद्धिकमुदाहृतम् ॥ नित्यता दिप्रथमवत् किन्तु देहमयोजिजम् । इन्द्रियंरसनंसिन्धुहिमादिर्विषयोमत इतिकारिकावली ॥ जलं चतुर्विधं प्राहु रसरीयोद्भवं बुधाः । धाराजं कारकञ्चैव तौषारं हैममित्यपि ॥ हेमन्ते सारसं तोयं ताडागं वाहितं स्मृतम् । हेमन्तविहितं तोयं शिशिरेपिप्रशस्यते ॥ वसन्तग्रीष्मयोःकौपं वाप्यं वानैर्झरंजलम् । नदेयं वारिमादेयं वसन्तग्रीष्मयो बुधैः । विषवदनरस्याश्च पथार्थं दूषितं यतः ॥ औद्भिदं वान्तरीक्षं वा कौपं वा प्रावृषिस्मृतम् । अथ शरदि नादेयं नीरं मंशूदकंपरम् ॥ दिवा रविकरैर्जुष्टं निशिशीतकरांशुभिः । ज्ञेयमंशूदकंनाम स्निग्धंदोषत्रयापहम् ॥ अनभिष्यन्दि निर्दोषमान्तरीक्षजलोपमम् । बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥ अन्यच्च

शरदि स्वच्छमुदयादगस्त्यस्याखिलं
हितम् ॥ वृद्धसुश्रुतस्तु । पौषे वारि
सरोजातं माघे तत्तु तडागजम् । फा
ल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितं म
तम् ॥ वैशाखे नैर्झरं नीरं ज्यैष्ठेभ
क्तं तथौद्भिदम् । आषाढे शस्यते कौ
पं श्रावणे दिव्यमेव च ॥ भाद्रे कौपं
पयः शस्तं आश्विने चौण्ड्यमेव च ।
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रश
स्यते ॥ पानविधिस्तु । अत्यम्बुपाना
न्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दो
षः । तस्मान्नरो वह्निविवर्द्धना
य मुहुर्मुहुर्वारि पिबेदभूरि ॥
अत्यम्बुपानविषयस्तु । अरोचके
प्रतिश्याये प्रसेके श्वयथौ क्षये
। मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्व
रे ॥ व्रणे च मधुमेहे च पिबेत् पानी
यमल्पकम् ॥ पानावश्यकन्तु । जी
वनं जीविनां जीवो जगत् सर्वन्तु तन्म
यम् । अतोऽत्यन्तनिषेधेऽपि न कचि
द्वारि वारयेत् ॥ अन्नेनापि विना जन्तुः
प्राणान् धारयते चिरम् । तोयाभा
वे पिपासार्त्तः क्षणात् प्राणैर्विमुच्य
ते ॥ हारीतोऽप्याह । तृष्णा गरीय
सी घोरा सद्यः प्राणविनाशिनी । त
स्माद्देयं तृषार्त्ताय पानीयं प्राणधा
रणम् ॥ तृषितो मोहमायाति मो



हात् प्राणान् विमुञ्चति । अतः सर्वा
स्ववस्थासु न क्वचिद्वारि वारयेत् ॥ प्र
शस्तजलन्तु । अगन्धमव्यक्तरसं सु
शीतं तर्षनाशनम् । अच्छं लघु च हृ
द्यञ्च तोयं गुणवदुच्यते ॥ निन्द्यजल
म् । पिच्छिलं कृमिलं क्लिन्नं पर्णशै
वालकर्दमैः । विवर्णं विरसं सान्द्रं
दुर्गन्धं न हितं जलम् ॥ अतिनिन्द्यं
जलम् । कलुषं छन्नमम्भोजपर्णनी
लीतृणादिभिः । दुर्दर्शमसंस्पृष्टं
सौरचान्द्रमसांशुभिः ॥ अनार्त्तवं
वार्षिकमपि प्रथमं तच्च भूमिगम् ।
व्यापन्नं परिवर्ज्यं तत्सर्वदोषप्रकोपन
म् ॥ तत् कुर्यात् स्नानपानाभ्यां तृ
ष्णाध्मानोदरज्वरान् । कासाग्निमा
न्द्याभिष्यन्दकण्डूगण्डादिकांस्तथा ॥
दुष्टोदकविशोधनोपायस्तु । नि
न्दितञ्चापि पानीयं क्वथितं सूर्यतापि
तम् । सुवर्णरजतलोहं पाषाणं सि
कतां सदन् ॥ भृशं सन्ताप्य निर्वाप्य
सप्तधा साधितं तथा । कर्पूरजातीपु
न्नागपाटलादिसुवासितम् ॥ शुचि
सान्द्रपटस्राव्यैः क्षुद्रजन्तुविवर्जितम्
। स्वच्छं कनकमुक्ताद्यैः शुद्धं स्याद्दोष
वर्जितम् ॥ पर्णमूलबिसग्रन्थिमुक्ता
कनकशैवलैः । गोमेदेन च वस्त्रेण कु
र्यादम्बुप्रसादनम् ॥ जलस्य पाकाव

धिस्तु । आमंजलजीवेति श्यामसा
र्धं तदर्द्धमार्धं शृतशीतलञ्च । तदर्द्ध
मात्रन्तुशृतंकदुष्णं पयः प्रपाकेनयथ
वकाचाः ॥ विशेषः पानीये द्रष्टव्यः
॥ पूर्वाषाढाख्ये नक्षत्रे ॥ जलंति । ज
लञ्च पश्चाद्धे । पश्चाच्च ॥ ईशाने चा
पिपूर्वस्मिन् पश्चिमेचतयोस्सरे । शि
विरस्थजलं सद्मन्यत्राशुभमेवच ॥
जलकण्टक । पुं । शृङ्गाटके ॥ कुम्भीरे ॥
जलकपि । पुं । शिशुमारे ॥
जलकपोतः । पुं । जलपारावते ॥
जलकरङ्कः । पुं । नारिकेलफले ॥ अम्बु
जे ॥ शङ्खे ॥ जलचतायाम् ॥ मेघे ॥
जलकल्कः । पुं । अम्बाले ॥
जलकाकः । पुं । जलकौवा इति प्रसि
द्धे दात्यूहे पक्षिणि । पानीकौडि
इतिगौडभाषा ॥ स्निग्धंगुरुस्थिमंस्र
ष्यंमांसंजलपक्षिणाम्नुवातहरम् ॥
जलकाङ्क । पुं । हस्तिनि ॥
जलकाङ्क्षी । पुं । हस्तिनि ॥ त्रि । जला
ऽभिलाषिणि ॥
जलकान्तार. । पुं । वरुणे ॥
जलकामुक. । पुं । कुटुम्बिनीवृक्षे ॥
जलकिराटः । पुं । ग्राहे ॥
जलकुक्कुट. । पुं । कारण्डवखगे । मद्गौ ॥
जलकुक्कुटी । स्त्री । गङ्गाचिल्याम् ॥
जलकुक्कुभ. । पुं । कोयष्टिखगे । कोडा,
पाखी इति गौडभाषा ॥
जलकुन्तलः । पुं । शैवाले ॥
जलकुब्जकः । पुं । पङ्कारे ॥
जलकूपी । स्त्री । कूपगर्त्ते ॥ पुष्करि
ण्याम् ॥
जलकूर्मः । पुं । शिशुमारे ॥
जलकेश । पुं । शैवाले ॥
जलक्रीडा । स्त्री । नद्यादौवयस्यादि
भिः सहजलेन सेचनादिरूपायां खे
लायाम् । व्याख्यत्याम् । करपत्रि
कायाम् ॥ परितापिषु वासरेषु म
ध्यं स्फटलेखास्थितमात्तसौख्यकम्
। सुविशोधितनक्रमीनजालं व्यवगा
ह्येत जलं सुहृत्समेतः ॥
जलगुल्मः । पुं । जलावर्त्ते ॥ कच्छपे ।
कमठे ॥ जलचत्वरे ॥
जलजः । पुं । ओषधिविशेषे । महा
काले ॥
जलचत्वरम् । न । चतुरस्रतिख्याते ज
लगुल्मे । चातरजल इति, गौड
भाषा ॥
जलचरः । पुं । ग्राहादियादस्सु ॥ जले
चरति । चर॰ । चरेष्टः ॥
जलचारी । पुं । मत्स्ये ॥ त्रि । जलच
रमात्रे ॥
जलजः । पुं । द्विजलहस्ते ॥ शैवले ॥
वानीरवृक्षे ॥ शङ्खे ॥ कुपीलौ ॥ क

किंमीनैातु जलजार्वन्याहुँ । मकर
स्येति ॥ सिंदूरोशिंपु । ॥ मतस्य ॥
न । पद्मे ॥ शङ्खे ॥ चारविशेषे । खो
वारे ॥ त्रि । जलवाते ॥ जलेजातः
। जनी° । डः ॥

जलजन्तुः । पुं । यादसि ॥ जलानां
जन्तुः ॥

जलजन्तुका । स्त्री । जलौकायाम् ॥
जलजन्म । न । पद्मे ॥ जले जन्मास्य ॥
जलजम्बूका । स्त्री । वृहज्जम्ब्वाम् । भु
जिजामन वनजामन इतिभाषा ॥

जलजिह्वः । पुं । नक्रे ॥

जलडिम्बः । पुं । शम्बूके संबुला इति
भाषा ॥

जलतण्डुलीयः । पुं । कञ्चटे ॥

जलतापिक. । पुं । इल्लीशमत्स्ये ॥ का
कचीमत्स्ये ॥

जलतापी । पुं । जलतापिके ॥

जलताल. । पुं । इल्लीशे ॥

जलतिक्तिका । स्त्री । शल्लकीवृक्षे ॥

जलत्रा । स्त्री । छत्रे । वक्रमकुल्याम् ॥

जलदः । पुं । मुस्तके ॥ मेघे ॥ त्रि । ज
लदानकर्त्तरि ॥ जलंददाति । द
दाञ्° । आतोनुपेतिक. ॥

जलदागमः । पुं वर्षाकाले ॥

जलदाशनः । पुं । शालवृक्षे ॥

जलदुर्गम् । न । जलदुर्गे ॥



जलद्राची । स्त्री । शालिमूल्याम् ॥

जलद्रोणी । स्त्री । नौकायाः सेकभाज
ने । अवग्राहे ॥

जलधरः । पुं । मेघे ॥ मुस्तके ॥ तिनि
। शवृक्षे ॥ समुद्रे ॥ त्रि । जलधारिणि
॥ जलस्यधरः ॥

जलधरमाला । स्त्री । मेघपङ्क्तौ ॥ जग
तीसंज्ञकद्वादशाक्षरावृत्तभेदे । मो
भश्मौचेज्जलधरमालाब्ध्यङ्कैः ॥ या
भक्तानां कलिदुरितोत्तप्तानां ताप
च्छेदेजलधरमालानव्या । भव्याका-
रादिनकरपुत्रीकूले केलीलोलाह-
रिस्तनुताशात् सावः ॥

जलधरमालावाहः । पुं । वर्षाकाले ॥

जलधिः । पुं । समुद्रे ॥ रसमात्राया
अविशेषात् क्षारोदादिसप्त ॥
तेच । क्षारोदेक्षुरसोदसुरोदघृतो
दक्षीरोददधिमण्डोदशुद्धोदाः सप्त
द्वीपपरिखा इवाभ्यन्तरद्वीपसमाना
ऐकैकश्येन यथानुपूर्वं सप्तस्वपिब
हिर्द्वीपेषु पृथक् परितउपकल्पिताः
॥ जलानिधीयन्तेऽत्र । डुधाञ्° । कर्म
ण्यधिकरणेचेतिकिः । आकारलोपः
॥ दशशङ्खसङ्ख्यायाम् । अतश्च
कोटिषु १००००००००००००००००॥

जलधिगा । स्त्री । नद्याम् । सरिति ॥
जलधिं गच्छति । गमलृ° । डः ॥

माधुर्य्येकेदर्शीत्समानिसारे सारमार्गणम् । यः करोति स वैमूढोम्बुबुद्बुदसन्निभे ॥

जलरङ्की । स्त्री । क्लिमोच्याम् ॥

जलभूः । पुं । मेघे ॥ जलपिप्पल्याम् ॥

जलमक्षिका । स्त्री । वारिकूर्मे ॥

जलमद्गुः । पुं । मत्स्यरङ्कविहङ्गमे ॥

जलमधूकः । पुं । जलमहुआ इतिख्याते मधूकवृक्षभेदे । दीर्घपत्रे । मत्स्ये ॥

जलमसिः । पुं । मेघे ॥ इतिहारावली ॥

जलमार्गः । पुं । प्रणालके । प्रणाल्याम् । पनाला पनारा इतिच ख्याते ॥

जलमार्जारः । पुं । जलनकुले ॥

जलमुक्-ग् । पुं । धूमयोनौ । मेघे ॥ जलं मुञ्चति । मुच्लृमोचने । क्विप् ॥

जलमूर्त्तिः । पुं । शिवे ॥ जलं मूर्त्तिर्यस्य ॥ स्त्री । करकायाम् ॥ जलस्य मूर्त्तिः ॥

जलमोदम् । न । उशीरे ॥

जलयन्त्रम् । न । फुहारा इतिख्याते धारायन्त्रे ॥

जलयन्त्रगृहम् । न । जलमध्यकृतगृहे । जलभवने । जलमहल इति भाषा ॥ समुद्रगृहे । फुहारेकाघर इतिभाषा ॥

जलयन्त्रनिकेतनम् । न । जलयन्त्रगृहे ॥



जलयन्त्रमन्दिरम् । न । समुद्रगृहे । फुहारेकाघर इतिभाषा ॥

जलरङ्कः । पुं ।
जलरङ्कुः । पुं । } दात्यूहपक्षिणि ॥
जलरण्डः । पुं ।

जलरण्डः । पुं । जलकणे ॥ इतिहेमः ॥

जलरसः । पुं । लवणे ॥

जलरुण्डः । पुं । जलावर्त्ते ॥ पर्य्यायरेणौ ॥ भुजङ्गमे ॥ इतिमेदिनी ॥

जलरुट्-ह् । पुं । पद्मे ॥

जलरुहम् । न । पद्मे ॥ जले रोहति । रुह० । इगुपधेतिकः ॥

जलरूपः । पुं । मकरे ॥ इतित्रिकाण्डशेषः ॥

जललता । स्त्री । तरङ्गे ॥ इतिहारावली ॥

जलवरण्टः । पुं । जलवसन्ताख्यरोगे ॥ पानीबसन्त इतिगौडभाषा ॥

जलवल्कलः । पुं । कुम्भिकायाम् ॥

जलवल्ली । स्त्री । शृङ्गाटके ॥

जलवानीरः । पुं । अम्बुवेतसे ॥ जले जातोवानीरः । शाकपार्थिवादिः ॥

जलवायसः । पुं । मद्गुपक्षिणि ॥

जलवालकः । पुं । विन्ध्यपर्वते ॥

जलवालिका । स्त्री । विद्युति ॥

जलवासः । पुं । विष्णुकन्दे ॥ न । उशीरे ॥

जलवाहः । पुं । मेघे ॥ जलं वहति । वहेः कर्मण्यण् ॥
जलवाहकः । पुं । मक्षिषे ॥ सुचामे ॥ जलस्य वाहकः ॥
जलविडालः । पुं । जलनकुले ॥
जलविन्दुजा । स्त्री । यावनालीशर्करायाम् ॥
जलविल्वः । पुं । कर्कटे ॥ पञ्चाङ्ग ॥ जलचत्वरे । पातरजक इति गौड भाषा । चहर इति भाषा ॥
जलविषुवम् । न । आश्विनचिक्रते । तुलासङ्क्रान्तौ ॥ ज्योतिर्विदां चक्र विशेषे ॥
जलविहङ्गमः । पुं । सलिलकुक्कुटकारण्डवकलहंसादिषु ॥
जलवृश्चिकः । पुं । चिङ्गटमत्स्ये ॥
जलवेतसः । पुं । परिव्याधे । वानीरवृक्षे ॥ जले जातो वेतसः । शाकपार्थिवादिः । जलजो वेतसः शीतः सङ्ग्राही वातकोपनः ॥
जलव्यधः । पुं । कङ्कत्रोटमत्स्ये ॥
जलव्यालः । पुं । अलगर्द्दसर्पे । अलाध इति भाषा ॥ जलस्थो व्यालः ॥ क्रूरकर्म्मणि जलजन्तौ ॥
जलशयः । पुं । विष्णौ ॥ शेतेऽस्मिन् । पुंसीति संज्ञायां घः । जले शयः शय्या अस्य ॥



जलशयनः । पुं । विष्णौ ॥ जले शयनं यस्य ॥
जलशायी । पुं । नारायणे ॥
जलशुक्तिः । स्त्री । शम्बूके ॥
जलशूकम् । न । शैवाले ॥
जलशूकरः । पुं । कुम्भीरे ॥
जलसर्पिणी । स्त्री । जलौकायाम् ॥
जलसूचिः । पुं । कङ्कत्रोटमत्स्ये ॥ शृङ्गाटके ॥ शिशुमारे ॥ काके ॥ स्त्री । जलौकायाम् ॥
जलस्तम्भनम् । न । मन्त्रादिना जलगतिवारणे ॥
जलस्था । स्त्री । गण्डदूर्वायाम् ॥
जलहम् । न । स्वल्पजलयन्त्रगृहे ॥
जलहरणम् । न । मात्रावृत्तप्रभेदे ॥ यथा । लघुगुरुकनियमगत मिह फणिपतिमत मयगत मतिसुखनिगदपदम् इयमसुभुवने यति रिह यदि भवतिहि रसिकजन हृदयविहितम दम् । वसुविमलचतुष्कलगणकृत गुणिगणसरणिविरामहितसगणाम्- क्वचिदपि गुरुसहित भवति कवि हितं छन्दः सुन्दरि जलहरणम् ॥ यथा ॥ उपगम्य निभृततर मभिनवजलधर सुभगसुदर्शनचक्रधरम्- सखिकमयहृद्यकल सुरगराजभुज ममलकमलदलनयनधरम् । भाति

जलाश्रयः । पुं । वृत्तगुण्डतृणे ॥

जलाश्रया । स्त्री । शूलीतृणे ॥ जलौ- कायाम् ॥

जलालोका । स्त्री । पुष्करिण्याम् ॥

जलाह्वयम् । न । उत्पले ॥

जलूका । स्त्री । जलौकायाम् ॥

जलेचरः । पुं । हंसमद्गुवकादिजलचरपक्षिणि ॥ जले चरति । चरेष्टः । तत्पुरुषे कृतीत्यलुक् ॥

जलेच्छया । स्त्री । हस्तिशुण्डावृक्षे ॥

जलेजातम् । न । पद्मे ॥

जलेन्द्रः । पुं । वरुणे ॥ जम्भले । पूर्वबुद्धे ॥ महोदधौ ॥ जलानामिन्द्रः ॥

जलेन्धनः । पुं । वाडवाग्नौ ॥ न । सौरविद्युदादितेजसि ॥

जलेरुणा । स्त्री । कुटुम्बिनीवृक्षे ॥

जलेवाहः । पुं । डुबा इति गोताखोर इति च ख्याते नाविकविशेषे ॥ यथा । जलेवाहा मयाहूय यद्दृष्टं न्यवेदयत् । तत्कृष्यापरमं यत्र साधु रामरम्यं न तत् । इति पाद्मे पातालखण्डम् ॥

जलेशयः । पुं । मत्स्ये ॥ जले शेते । शीङ् । अधिकरणेशेतेरिति अच् । शयवासेष्वलुक् ॥

जलेश्वरः । पुं । वरुणे ॥ समुद्रे ॥ जलानामीश्वरः ॥

जलोका । स्त्री । जलौकायाम् ॥

जलोच्छ्वासः । पुं । परीवाहे । प्रवृद्धजलस्य निर्गममार्गे । समधिकजलस्य सर्वतो वहने वा । समधिकजलस्योपायैर्निष्कासने वा ॥ जलानि उच्छ्वसन्त्येभिः । श्वसप्राणने । हलश्चेति घञ् ॥ जलानामुच्छ्वसनं वा । भावे घञ् ॥

जलोदरम् । न । जठरामये ॥ तन्निदानादि यथा ॥ यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥ स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत् तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च ॥ यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् । जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् । बलिनं तदजाताम्बु यत्नसाध्यं नवोत्थितमिति ॥

जलोद्धतगतिः । स्त्री । द्वादशाक्षरायाः जगत्याः प्रभेदे ॥ यथा । जसौ जसयुतौ जलोद्धतगतिः । यथा । यदीयहलतो विलोक्य विपदं कलिन्दतनया जलोद्धतगतिः । विलासविपिनं विवेश सहसा करोतु कुशलं हली स जगताम् ॥

जलोद्भवा । स्त्री । लघुब्राह्म्याम् ॥
जलोद्भूता । स्त्री । गुण्डालाख्ये ॥
जलोरगी । स्त्री । जलौकायाम् ॥
जलौकाः । स्त्री । जलौकायाम् ॥ जल मोकः स्थानं यस्याः । ओकस् सान्तम् प्रसिद्धम् ॥
जलौकस. । स्त्री । भूम्नि । रक्तपायाम् । जलमोकः स्थानमासाम् । सान्तोऽयं बहुवचनान्त इत्यमरः ॥ जलोरगी जलौका तु जलौका च जलौकसीति संसारावर्त्ते बहुवचनं प्रायिकमिति वदन्ति ॥
जलौकस. । पुं । रक्तपायाम् ॥ जलमोकोऽस्यास्ति । अर्श आद्यच् । जलौकसेनेव रक्ताकृष्टि निपुणेन वेश्याजनेनेति वासवदत्ता ॥
जलौका । स्त्री । जलोरग्याम् । रक्तपायाम् ॥ * ॥ अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥ * ॥ नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः । तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं, शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्व्वाणि सर्व्वैर्वा ॥ * ॥ भवन्ति चात्र ॥ उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् । तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ शीताधिवासा मधुरा जलौका वारिसम्भवा तस्मात् पित्तोपसृष्टे तु हिता सात्ववसेचने ॥ अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् । तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ * ॥ तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात् । सान्तर्दीपयाऽलाब्वा ॥ * ॥ अथ जलायुका वक्ष्यन्ते । जलमासामायुरिति जलायुकाः जलमासामोक इति जलौकसः । ता द्वादश तासां सविषाः षट् । तावत्य एव निर्विषाः । तत्र सविषाः कृष्णा कर्बुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा । रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमि

जलौका

ति चिह्नानि भवन्ति । तत्र महागदः पानालेपननस्यकर्मादिषूपयोज्यः । इन्द्रायुधादृष्टं मसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः ॥ * ॥ अथ निर्विषाः । कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति ॥ * ॥ तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धा मुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया पिङ्गा ऽऽशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृतिवर्णा ऽनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यमुखी पुण्डरीकमुखी । स्निग्धपद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे ॥ इत्यविषा व्याख्याताः ॥ तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥ तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः । पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥ * ॥ भवति चात्र ॥ क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु । न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥ * ॥ तासां ग्रहणमार्द्रचर्मणा न्यैर्वा प्रयोगैर्गृह्णीयात् । अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थं चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य निदध्यात् । स्वापार्थं तृणमौदकानि च पत्राणि । त्र्यहात् त्र्यहाच्चाभ्यो ऽन्यज्जलं भक्ष्यं च दद्यात् सप्तरात्रात् सप्तरात्राच्च घटमन्यं सङ्क्रामयेत् ॥ * ॥ भवति चात्र ॥ स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः । अग्राहिण्यो ऽल्पपायिन्यः सविषाश्च न पूजिताः ॥ अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलशरावमध्ये मुहूर्तं स्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात् । अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात् शस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृ

ह्लातीति गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां धारयेत्सेचयेच्च । दंशे तोदकण्डू-प्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति शुद्धमादददानामपनयेत् । अथ शोणितगन्धेन न मुञ्चेन्मुखं मस्याः सैन्धवचूर्णेनावकिरेत् ॥ अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैलल-वणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोमं मनुमार्जयेत् तां मुखादावमयेत् यावत्सम्यग्वान्तलिङ्गानीति । सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत् । या सीदति न चेष्टते सा दुर्वान्ता तां पुनः सम्यग्वामयेत् । दुर्वान्तायाव्याधिरसाध्यइन्द्रमदोनाम गदो भवति । अथ सुवान्तां तां पूर्ववत् सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेत् बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति । अथ तिष्ठन्ति । चेन्नाशि ग्रहणं जालीपेपयासावचारणं । जलौकासाध्ये या वेक्ति तत्साध्यान्स जयेद्गदान् ॥ इति सुश्रुते सूत्रस्थाने १३ ऽध्यायः ॥ जलमोकोऽस्याः । ओकउचःके इति निपातनादोकोऽन्तः । टाप् ॥

जल्पः । पुं । विजिगीषुवचने । स्वपक्षस्थापनपरपक्षदूषणवत्यां विजिगीषुकथायाम् ॥ यथोक्तोपपन्नश्छल-जातिनिग्रहस्थानसाधनोपालम्भोजल्पः । न्यायसूत्रम् १ । ४२ ॥ यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः । मध्यमपदलोपीसमासः ॥ भाषणे ॥ वादे ॥ जल्पनम् । जल्पव्यक्तायां वाचि । घञ् ॥

जल्पकः । त्रि । बहुभाषिणि ॥ जल्पति । जल्पभिक्षेत्यादिना षाकन् ॥

जल्पन् । त्रि । व्याहरति ॥

जल्पनम् । न । कथने ॥ किं मिथ्याप्रलापजल्पनेन सततं रेवक्क रामंवद ॥ त्रि । बहुभाषिणि ॥ जल्पति । जल्प० । नंद्यादित्वाल्ल्यु ॥

जल्पाकः । त्रि । वाचाले । बहुकुत्सितभाषिणि ॥ जल्पति । जल्प० । सञ्जीव । जल्पभिक्षेतिषाकन् । षित्वात् स्त्रियां जल्पाकी ॥

जल्पितः । त्रि । उक्ते । कथिते ॥ जल्प्यते स्म । जल्प० । क्त ॥ न । कथने ॥

जव । पु । वेगे ॥ त्रि । वेगवति ॥ जु इति सौत्रोधातु । जवनम् । ऋदोरप् ॥ न । सवेगगतिवचने ॥ वेगाख्यगुणे ॥

जवनः । पुं । वेगिहये ॥ जवनोऽस्य । जु इति सौत्रो गतौ वेगे च । जुचङ्क्रम्येति युच् ॥ इतिनाम्ना इति जनप्रसिद्धे देशे ॥ म्लेच्छजातिविशेषे ॥ यवनदेशोद्भवे प्रथमतः क्षत्रिये पश्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ सगरोऽस्य सर्वशिरोमुण्डनं सर्वधर्मबहिष्कृतत्वञ्च चकार ॥ श्रीकालीखण्डे ॥ घोटके ॥ न । वेगे स्यदे ॥ त्रि । वेगिनि ॥

जवनालम् । नं । जुन्हरी जुवार इति भाषाप्रसिद्धे धान्ये ॥

जवनिका । स्त्री । कनात्, चिक, चिरकी इत्यादिभाषाप्रसिद्धे व्यवधायकवस्त्रादौ । प्रतिसीरायाम् । तिरस्करिण्याम् । व्यवधानपट्याम् ॥ जवन्याम् । जु° । ल्युट् । कन् ॥

जवनी । स्त्री । जवन्याम् ॥ ओषधीभेदे ॥

जवसम् । न । घासे ॥ इतिशब्दरत्नावली ॥

जवा । स्त्री । ओड्रपुष्पे ॥ ओड्रवृक्षे ॥ जवति । जु° अच् । टाप् ॥ सकलप्रसिद्धे पुष्पवृक्षविशेषे ॥

जवादि । न । सुगन्धिद्रव्यविशेषे । गन्धराजे । कृत्रिमे मृगधर्मजे ॥ जवादि नीरसं स्निग्धं मोषत्पिङ्गं सुगन्धदम् । आतपेषद्द्रुतामोदं राज्ञां योग्यञ्च तन्मतमिति वचनात् ॥



जवाधिकः । पुं । जवने । वेगाधिकहये ॥ जवेन अधिकः ॥ त्रि ॥ अतिशयवेगवति ॥

जवापुष्पम् । न । ओड्रपुष्पे । जवायाः पुष्पम् ॥

जवी । त्रि । वेगवति ॥ जवोऽस्यास्ति । इनिः ॥ उष्ट्रे ॥ घोटके ॥

जविष्ठः । त्रि । अतिवेगवति ॥ अतिशयेन जववान् ॥ अतिशायने इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् ॥

जवीयान् । त्रि । जववत्तरे ॥ जववत्+ईयसुनि मतुपो लुक् ॥

जसुरिः । पुं । वज्रे ॥ जस्यति । जसु मोक्षणे । जसिसहोरुरिन् । जसुरये आप्ताय जसुरिं बुधितः क्षितिवेदभाष्यम् ॥

जहकः । पुं । काले ॥ त्वचि ॥ निर्मोहे ॥ निर्मोके ॥ जहाति । ओहाक् ॰ । शौरेर्देचेति क्वुन् ॥ त्रि । त्यागिनि ॥

जहदजहल्लक्षणा । स्त्री । संज्ञान्तरप्रसिद्धायां भागत्यागलक्षणायाम् । वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तौ ॥ यथा । सोऽयं देवदत्तः इतिवाक्ये तच्छब्दायंशब्दयोः तदर्थयोर्वा विरुद्धतत्काले तत्कालविशिष्टत्वपरित्यागेन अविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभाव

सम्बन्धेऽर्थइति ॥

जहल्लक्षणा । स्त्री । वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धियर्थान्तरेप्रवृत्तिरूपायां लक्षणायाम् ॥ यथा । गङ्गायां घोषः प्रतिवसतीति वाक्ये । गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतोविरुद्धत्वात् वाच्यार्थमशेषं परित्यज्य तत्सम्बन्धीतीरलक्षणायुक्तत्वात् जहल्लक्षणात्वं प्रकल्प्यते ॥

जहत्स्वार्था । स्त्री । जहल्लक्षणायाम् ॥ जहत्स्वार्थातु तत्रैव यत्रस्वार्थोविरोधिनी वृत्तिः ॥

जहा । स्त्री । मुण्डितिकायाम् ॥

जहानक । पुं । प्रलये ॥ इतिहेमचन्द्रः ॥

जहुः । पुं । अपत्ये ॥ यथा । खगजहुना खगापत्येनेति श्रीधरस्वामी ॥

जह्नुः । पुं । चन्द्रवंशोद्भवैकनृपविशेषे ॥ गङ्गाऽऽगमनकाले येन गङ्गा पीता पुनर्भगीरथप्रार्थनया ऊरुं भित्वा बहिर्निर्गमिता तेनसाजाह्नवीति ख्याति मागता ॥ विष्णौ ॥ जनान् संहारसमये ऽपह्नुतेऽपनयति । ह्नुङ् अपनयने । क्विप् ॥ जहात्यपि दुष्टभक्तान् नयति परमिति वा ॥ यद्वा । जहाति । ओहाक् त्यागे । जहातेर्द्वे ऽल्लोपश्चेतिनुः ॥

जह्नुतनया । स्त्री । गङ्गायाम् ॥ जाह्नवी जह्नुतनया ॥

जह्नुसप्तमी । स्त्री । वैशाखसितसप्तम्याम् ॥ शुक्लपक्षस्य सप्तम्यां वैशाखे जह्नुपुत्रिकाम् । संपूजयेत् सुखार्थाय स्वर्गमोक्षफलायवै श्युत्तरकामाख्यातन्त्रे ११ पटलः ॥

जह्नुसुता । स्त्री । गङ्गायाम् ॥

जाँ । स्त्री । यामरि । भर्तुर्भ्रातृभार्यायाम् ॥ इत्येकाक्षरकोषः ॥

जागतः । पुं । मगाद्यविशेषे ॥ जगत्यादित्यः । सोऽस्यादिरितिच्छन्दसः प्रगाथेष्विष्यण् ॥ न । जगतीछन्दसि ॥ स्वार्थे ऽण् ॥

जागरः । पुं । जागरणे ॥ कर्मः कारणस्य कृतसन्धिकाये ॥ जागृनिद्राक्षये । भावे घञ् ॥ जागेविगुणवृत्तिगुणः ॥

जागरणम् । न । जागरे । निद्राभावे ॥ प्रमितिर्जागरेजाग्रद्भ्रमःस्वप्नोऽस्य मूढता । पानादिजन्यासुप्तिः स्यादेवं जागरणं त्रिधा ॥ जागृ० । ल्युट् ॥

जागरा । स्त्री । जागर्यायाम् ॥ जागरणम् ॥ स्त्रियामधिकारे जागर्तेरकारो वा । जागोविचिण्णल्ङित्स्विति गुणः ॥

जागरितम् । न । इन्द्रियैरर्थोपलब्धौ ॥ स्वप्नदर्शनहेतुकर्मक्षये जागरित

जागर्त्तीन् स्वोपाध्यन्तःकरणेन्द्रिय-
सचिवः सन्निन्द्रियविषयाननुमेयां
स्थूलान् व्यावहारिकान् पदार्थान्
अनुभवति तदिदमस्य जागरितमि
त्युक्तम् ॥ जागृ° । क्तः ॥

जागरितस्थानः । पुं । व्यष्ट्युपहित
चैतन्ये विश्वशब्दवाच्ये ॥ जागरितं
स्थानमस्य ॥

जागरितान्तम् । न । जागरितमध्ये जा
गरितविषये ॥

जागरिता । त्रि । सजागरे । जागरूके
॥ जागरणशीलः । जागृ° । तृन् ॥

जागरी । त्रि । जागरूके ॥ जागरमस्या
स्ति । इनिः ॥

जागरूकः । त्रि । अप्रमत्ते । सजागरे ।
जागरितरि । जागरणशीले ॥ जाग
र्त्तितच्छीलः ॥ जागृ° । जागरूक इ
ति जागर्त्तेरूकः ॥

जागर्त्तिः । स्त्री । जागरणे ॥ स्त्रियां
क्तिन् ॥

जागर्या । स्त्री । जागरे ॥ जागरणम् ।
जागर्त्तेरकारो वेति पक्षे शः । यक् ।
जाग्रोऽविचिण्णल्ङित्सु गुणः ॥

जागुडम् । न । कुङ्कुमे ॥ पुं । देशवि
शेषे ॥ तत्रत्यं कुङ्कुममत्यत्यभवति ॥

जागृत् । पुं । जागरणे ॥ जागृ° । क्वि
प्तुकौ ॥

जागृवान् । त्रि । जागरूके ॥

जागृविः । पुं । अग्नौ ॥ नृपे ॥ जागर्त्ति
। जागृ° । जॄशॄस्तॄजागृभ्यः क्विन् ॥

जाग्रत् । त्रि । जागरणविशिष्टे ॥ स्त्री ।
जागरितावस्थायाम् ॥ यथा । श्रो
त्रादिज्ञानेन्द्रियैः शब्दादिविषयं य
दवगम्यते सा जाग्रदवस्था । सा च त्रि
धा । यथा । प्रमितिर्जागरे तत्र
भ्रमः स्वप्नो ऽर्थमूढता । यानादिज
न्या सुप्तिः स्यादेवं जागरणं त्रिधा ॥
जाग्रत्ति । जागृ° । शतृ ॥

जाग्रिया । स्त्री । जागरणे ॥ जागरणम् ।
जागृ° । जागर्त्तेरकारो वेति पक्षे शः ।
यक् । गुणात् परत्वेन रिङादेश इति
धातुपारायणम् ॥

जाघनी । स्त्री । करौ ॥ इति त्रिकाण्ड
शेषः ॥

जाङ्गलः । पुं । कपिञ्जले पक्षिणि ॥
स्वनामख्याते निर्जलदेशे ॥ आ-
काशशुभ्र उच्चश्च स्वल्पपानीयपाद
पः । शमीकरीरबिल्वार्कपीलुकर्क
न्धुसङ्कुलः ॥ हरिणैणर्ष्यपृषतगोक
र्णखरसङ्कुलः । सुस्वादुफलवान् दे
शो वातलो जाङ्गलः स्मृतः ॥ * ॥ मां
सवर्गे ऽत्र जङ्घाला बिलस्थाश्च गुहा
शयाः । तथा पर्णमृगा ज्ञेया विष्कि
राः प्रतुदा अपि ॥ प्रसहा अप्युपग्रा

म्या अष्टौजाङ्गलजातयः ॥ जाङ्गला मधुराऽरूक्षा सुवरा लघवस्तथा । वल्यास्तबंहणा हृष्या दीपना दोषहारिणः ॥ मूकतो मिन्नवच्वक्र दहत्यादिते तथा । वाधिर्यं मर्दितं यहिं प्रमेहं मुखरोगान् गदान् । स्त्री पदं गलगण्डञ्च नाशयन्त्यनिलामयान् ॥ जङ्गलेभवः । तत्रभवइत्यण् न । पललं । मांसे ॥ कं ॥ पानीयवि शेषे ॥ यथा । अल्पोदकोल्पवृक्षश्च पित्तरक्तामयान्वितः । ज्ञातव्योजाङ्गलो देशः तत्रत्यं जाङ्गलंजलम् ॥ जाङ्गलंसलिलंरूक्षं लवणं लघुपित्तनुत् । वह्निकृत् कफहृत् पथ्यं विकाराम् हरतेबहून् ॥ जालिनीफले ॥ चि । जङ्गलोत्पन्ने ॥

जाङ्गलदेशः । पुं । कुरुदेशसमीपस्थदेशे ॥ यथा । अल्पोदकतृणोयस्तुप्रवातः मधुरावः । ससंज्ञो जाङ्गलोदेशो बहुधान्यादिसंयुत इति ॥ जाङ्गलश्चासौदेशश्च ॥

जाङ्गलिः । पुं । विषवैद्ये ॥

जाङ्गली । स्त्री । शूकशिम्ब्याम् । जाङ्गुली इति पर्वतीयभाषा ॥ विषविद्यायाम् ॥

जाङ्गुलम् । न । जालिनीफले ॥

जाङ्गुलिकः । पु । विषवैद्ये ॥ जाङ्गु



ली विषविद्या तामधीते वेदवा । वसन्तादिभ्यष्ठक् ॥ जाङ्गुल्याइष्यति वा । तेनदीव्यतीतिठक् ॥ परीक्षितं समन्त्रोयात् जाङ्गुलीभिर्भिषग्वृतः ॥

जाङ्गुली । स्त्री । विषविद्यायाम् ॥ जाङ्गुलीविषघ्नोमन्त्र इति कश्चित् ॥

जाङ्घिकः । पुं । उष्ट्रे ॥ श्रीकारीहरिणे ॥ जङ्घाजीविनि । धावके ॥ जङ्घाकारिके ॥ जङ्घाभ्यांजीवति । वेतनादिभ्यो जीवतीतिठञ् ॥

जाजी । त्रि । योधिनि ॥ जजति । जज युद्धे । ताच्छील्येणिनिः ॥

जाज्वल्यमानः । त्रि । देदीप्यमाने ॥ भृशंज्वलति । ज्वलदीप्तौ । धातोरेकाच इति यङ् । ततोलटःशान आदेशः ॥

जाटलिः । पुं । स्त्री । वृक्षविशेषे ॥ जटनम् । जटसङ्घाते । घञ् । जाटं जाति । ददाति । बाहुलकात् क्रिः ॥

जाठरः । पुं । उदरस्थेऽग्नौ ॥ जठरे भवः । तत्रभवइत्यण् ॥

जाडारः । पुं । जडात्मजे ॥ जडस्यापत्यम् । आरगुदीचामित्यारक् ॥

जाड्यम् । न । वक्तुतायाम् । स्तम्भे ॥ जडस्यभावः । ष्यञ् ॥

जाड्यारिः । पुं । जम्बीरे ॥

जातः । त्रि । उत्पन्ने । स्वकृतधर्माधर्मादि

कारणाभावकल्पनात् गोपदस्य गो-
त्वविशिष्टे शक्तिरेवेत्यादिति ॥ नि-
त्यत्वे सत्यनेकसमवेतत्वं जाति-
त्व मिति न्यायसिद्धान्तमुक्तावलिः-
॥ * ॥ गोत्वादौ तस्य लक्षणं यथा
। आकृतिग्रहणा जाति लिङ्गानां च न
सर्वभाक् । सकृदाख्यातनिर्ग्राह्या
गोत्रं च चरणैः सह ॥ अस्यार्थः । आ
क्रियते व्यज्यते ऽनयेति आकृतिः सं
स्थानम् । गृह्यते ऽनेनेति ग्रहणं ज्ञा
नम् । आकृत्या ग्रहणं यस्याः सा आ
कृतिग्रहणा । जातिराकृतिग्रहणा भ-
वति । संस्थानव्यङ्ग्येत्यर्थः । तेन
मनुष्यगोमृगहंसादीनां पृथक् पृथ
क् संस्थानैर्व्यज्यमाना मनुष्यत्वगो
त्वमृगत्वहंसत्वादि जातिः ॥ एवं
ब्राह्मणक्षत्रियवैश्यशूद्राणां पृथक्-
संस्थानाभावात् ब्राह्मणत्वादेर्जाति-
त्वं नायातमिति लक्षणान्तरमाह ।
लिङ्गानां च न सर्वभागिति । या
सर्वाणि लिङ्गानि न भजते सा च जा
तिरित्यर्थः । स्त्रीपुंसयोरपत्यान्ता
द्विचतुःषट्पदोरगाः । जाति भेदाः
पुमाख्याश्चे त्यमरसिंहे जाति भेदा
नां स्त्रीपुंसयोरेवेति नियमे ब्राह्मणा
दीनां सर्वलिङ्गभाजित्वा भावा-
ज्जातित्वम् । किन्तु यथा न हंसस्य



जनकं हंसं दृष्टवतोपि तस्य सं-
स्थानेन हंसत्वं व्यञ्जितुं न शक्यते इ-
ति हंसस्यापि जातित्वं नायातमिति
पूर्वलक्षणस्य दोषः । एवं देवदत्ता
दिसंज्ञाशब्दस्यापि सर्वलिङ्गभाजित्वा
भावाज्जातित्वापत्तिरिति द्वितीय-
लक्षणस्य दोषः । इति दोषद्वयं परिहरन्
तु नयोर्लक्षणयोर्विशेषणमाह । स
कृदाख्यातनिर्ग्राह्येति । सकृदेकवारे
णाख्यातेन उपदेशेन निर् निश्चये
न ग्राह्या ग्रहीतुं शक्या इत्यर्थः ।
तेन हंसयोर्हंसइत्युपदेशो हंस
वत्तस्य संस्थानेन हंसत्वं [illegible] ॥
व्यक्तयेति पूर्वलक्षणी । धातो
। एवं देवदत्तादि [illegible] मान
त्विपदेशेपि [illegible]
भावात् [illegible]
[illegible]
गार्गी [illegible] बाहुल्यात्
वैलिङ्गभाजित्वात् [illegible]
त्वाभावाच्च गार्ग्यादीनां जातित्वा
नुपपत्तौ तृतीयलक्षणमाह । गो
त्रं चेति । पुत्रपौत्रप्रभृतिकमपत्यं
गोत्रमिति पूर्वाचार्यपरिभाषितं गो
त्रमिह गृह्यते गार्गी वात्सीत्यादि ।
चतुर्थलक्षणमाह । चरणैः सहेति
। चरणत्वजातिरित्यर्थः । चरणश्च

जातिस्मरः । पुं । तीर्थविशेषे ॥ त्रि । पूर्वजन्मजातिस्मरणवति ॥

जाती । स्त्री । सुमनायाम् । सुमनसि । मालत्याम् । चमेली इतिभाषा ॥ तत्पुष्पे ॥ क्तिन्नन्तात् क्तिन्नन्ताद्वा ङीप् ॥ जात्याः पुष्पम् । पुष्पमूलेषु बहुलमित्यनुदात्तादेरञोऽस्य लुक् ॥

जातीकोषम् । न । जायफल इतिप्रसिद्धे जातीफले ॥

जातीपत्री । स्त्री । सुमनःपत्रिकायाम् । जावित्री इतिभाषा ॥ जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाकृमिविषापहा ॥

जातीफलम् । न । जातीकोषे ॥ जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु । कटुकं दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् ॥ निहन्ति मुखवैरस्यमलदौर्गन्ध्यकृष्णताः । कृमिकासवमिश्वासशोषपीनसहृद्रुजः ॥ जात्यं फलम् । जातीलतायाः फलं वा ॥

जातीयः । त्रि । जातौभवे ॥ वृद्धाच्छः ॥ प्रकारार्थबोधके तद्धितप्रत्ययविशेषे ॥ यथा । तार्किकप्रकारः । तार्किकजातीयः । प्रकारवचने जातीयर् ॥

जातीरसम् । न । बोले ॥

जातु । अ । कदाचिदर्थे ॥ यथा । जातु जनो नैति सुखं कर्मबाहुल्यात् कर्मैर्गात्रैर्याति सुखं ज्ञानपुरस्तात् । ज्ञानरसं ब्रह्मरसं येन निपीतं दारभयं मारभयं तेन विनीतमिति ॥ शब्दे ॥ विगर्हणे ॥ अविकल्पे ॥ निषेधे ॥ आयति । जैघये । बाहुलकात् तुन् ॥

जातुकम् । न । हिङ्गुनि ॥ इतिशब्दचन्द्रिका ॥

जातुधानः । पुं । राक्षसे ॥ जातु कदाचित् रन्ध्रं प्राप्य धानं सन्निधानमस्य ॥

जातुषम् । त्रि । लाक्षानिर्मिते ॥ जतुनो विकारः । त्रपुजतुनोः षुक् ॥

जातूकर्णः । पुं । ऋषिविशेषे ॥ वैद्यशास्त्रप्रवर्त्तके मुनिविशेषे ॥

जातेष्टिः । स्त्री । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात इति जातकर्मणि विहितायामिष्ट्याम् ॥

जातोक्षः । पुं । दम्यवत्से । युवरूपे ॥ जातश्चासावुक्षा च । अचतुरेति साधुः ॥ उत्पन्नश्चासौ जातोक्षश्च इत्यमरः ॥ अचिरोत्पन्नो दृष्टदम्यभावः-प्राप्तबलीवर्दभावो वार्थः ॥

जात्यः । त्रि । श्रेष्ठे । कुलीने ॥ कान्ते

॥ कर्मणीर्भजादिभ्यहतीप् चेति-स्वामी ॥

जामिता । स्त्री । आलस्ये ॥

जाम्ब । स्त्री । कुलयोषायाम् ॥ स्वसरि ॥ क्लीब् ॥

जाम्बेयः । पुं । भागिनेये ॥ जाम्याम्बन्वयम् । स्त्री भ्योलक् ॥

जाम्बवम् । न । जम्बूफले ॥ जम्ब्वा फलम् । जम्बूविल्वयत् । तत्तविधानाच्च लुक् ॥ सुवर्णे ॥ कपिविशेषे ॥ भगर विशेषे ॥

जाम्बवान् । पुं । ब्रह्मणः पुत्रे । रामाय द्याद्रिप्रसिद्धमृक्षेमे ऋक्षराजे ॥

जाम्बवती । स्त्री । जाम्बवतोदुहितरि श्रीकृष्णपत्न्याम् ॥ नागदमन्याम् ॥

जाम्बवी । स्त्री । नागदमन्याम् ॥

जाम्बुवान् । पुं । जाम्बवति ॥

जाम्बूनदम् । न । स्वर्णे ॥ धुस्तूरे ॥ का ञ्चनविशेषे ॥ यथा जाम्बूनदेनाम्ब सदृशं सोऽपमंक्तिषेत् । तथा चक्षुधर्मे समयोऽन्यः समोभवेदिति ॥ समयः आचारः ॥ जम्बूरसस्य नद्यां भवम् । तन्मवद्र्त्या ॥ तीरस्य स्संप्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥ तद्रसं जम्बूरसम् ॥ यथा मेरु मन्दरपर्वतस्य जम्बूफलाना मस्युच्च निपातविशीर्णाना मनस्थिप्रायाणा मिभकायनिमानां रसेन जम्बूनाम नदी इत्याघृतं वहति ॥ तस्या उभ-योःकूलयो र्मृत्तिका जम्बूरसेनानु विध्यमाना वाय्वर्कसंयोगविपाके-न सदामरलोकाभरणं जाम्बूनदं-नाम स्वर्णं भवति ॥ इति श्रीभागवतम् ॥

जाम्बूनदेश्वरी । स्त्री । देवीविशेषे ॥ तत्स्थाने ॥

जायकम् । न । कालीयके । पीतवर्णे सुगन्धिकाष्ठप्रभेदे । कालिया इति गौडभाषा ॥ जयति गन्धान्तरम् । जिरभिभवे । ण्वुल् ॥

जायमानः । पुं । उपनीते ॥

जाया । स्त्री । विधिनाविवाहितायां स्त्रियाम् । पत्न्याम् । द्वितीयायाम् ॥ जायते ऽस्याम् । जनी० । जनेर्यक् । येविभाषेत्यात्वम् । पतिर्भार्यां संप्रविश्य गर्भोभूत्वेह जायते । जायाया स्तद्धि जायात्वं यदस्यां जायते पुनः ॥ लग्नात् सप्तमभवने ॥

जायाघ्नः । त्रि । तिलकालकादि चिह्न- ॥ जायांहन्ति । हन० । अमनुष्यकर्तृके चेतिटक् ॥ ङीपि जायाघ्नी ॥

जायाजीवः । पुं । नटे ॥ जायया जीवति । जीव० । इगुपधेतिकः ॥

जायानुजीवी । पुं । नटे ॥ बकपक्षिणि ॥ वेश्यापतौ ॥ दुःखे ॥
जायापती । पुं । द्विवचनान्तः । सहोक्त्या भार्याभर्तारौ ॥ जाया च पतिश्च । राजदन्तादिषु निर्मातत्वात्पूर्वनिपातः ॥
जायुः । पुं । औषधे ॥ जयति रोगान् । जिकृवापाजिमिस्वदिसाध्यशूभ्य उण् इत्युण् ॥
जारः । पुं । उपपतौ ॥ जरयति । जृष् । दारजारौकर्तरिणिलुक्चेति घञ् । जीर्यते ऽनेनेति करणे वा घञ् ॥
जारजः । त्रि । त्रिजन्मनि । अनियुक्तासुते ॥ जारात् जातः । जनी । डः ॥
जारणी । स्त्री । स्थूलजीरके ॥
जारद्गवी । स्त्री । कार्यमणमार्गे नक्षत्रविशेषाणां संचारविशेषे ॥ यथा । ज्येष्ठामूलाषाढाश्रवणावीथी जारद्गवी मता । एतासु वीथ्यर्कशशी मध्यमो मार्ग उच्यत इति ॥
जारित । त्रि । शोषिते ॥
जारी । स्त्री । औषधीभेदे । जाडी इति गौडभाषा ॥
जारुत्यः । पुं । त्रिगुणदक्षिणाकयज्ञे ॥
जालः । पुं । नीपवृक्षे ॥ न । गवाक्षे ॥ जाली इति भाषा ॥ आनाये । सूत्रादिनिर्मिते मत्स्यादिबन्धनोपायवस्तुनि ॥ क्षारके । पक्ष्यादिधारणार्थे पाशे ॥ दम्भे ॥ वृन्दे ॥ गर्वे ॥ इन्द्रजाले ॥ जलेचिपयते । शेषस्य ष्णः । जलघातिनी भवति ॥ जलघातने । ज्वलितीतिवः ॥ यद्वा । जालयति । जलसंवरणे । चुः । पचाद्यच् ॥
जालकः । पुं । गवाक्षे ॥ न । कोरके ॥ दम्भे ॥ कुलाये ॥ आनाये ॥ न । स्त्री । मोचकफले ॥ नवकलिकावृन्दे । क्षारके । समूहे ॥
जालकारः । त्रि । जालकर्तरि ॥
जालकारकः । पुं । मर्कटके ॥ लूताया म् ॥ त्रि । जालकर्तरि ॥ जालस्य कारकः ॥
जालकिनी । स्त्री । मेष्याम् ॥
जालगर्दभः । पुं । रोगविशेषे ॥ तस्य लक्षणं यथा । विसर्पवत् सर्पति यः शोथस्तनुरपाकवान् । दाहज्वरकरः पित्तात् सज्ञेयोजालगर्दभः इति ॥
जालगोणिका । स्त्री । मन्थनीयाम् ॥
जालजीवी । पुं । धीवरे ॥
जालन्धरः । पुं । पीठविशेषे ॥ त्रिगर्तदेशे ॥ पुंभूम्नि । जालन्धराः ॥ तद्देशस्थेषु । त्रिगर्तेषु ॥
जालपात् । पुं । हंसे ॥
जालपादः । पुं । शशारिप्रभृतिपक्षिविशेषेषु ॥ जालाकारपादत्वादेषाम् ॥
जालप्राया । स्त्री । योद्धॄणां लोहमय्या

जिगत्नुः । पुं । प्राणेषु । जिगंसति । ग [illegible] गमेः सन्वच्चेति क्नुः । अनुदात्तोपदेशे त्यादिना अल्लोपः ॥ [illegible]

जिगमिषा । स्त्री । गमनेच्छायाम् ॥ गन्तुमिच्छायाम् ॥ [illegible]

जिगमिषुः । त्रि । गन्तुमिच्छौ ॥ [illegible]

जिगीषा । स्त्री । जेतुमिच्छायाम् ॥ उत्कृष्टतायाम् ॥ जेतुमिच्छति जिगीषति । जिगीषतीति जिगीषा । अप्रत्ययात् । टाप् ॥ व्यवसाये ॥ [illegible]

जिगीषुः । त्रि । जयेच्छौ । जेतुमिच्छौ ॥ नित्योत्साहवति ॥ [illegible]

जिघत्सा । स्त्री । क्षुधायाम् । बुभुक्षायाम् ॥ अत्तुमिच्छा अत्तुमिच्छा वा । अदेः सन्नन्तादप्रत्ययः । लुङ्सनो र्घस्लृ इति घस्लादेशः ॥ [illegible]

जिघत्सुः । त्रि । क्षुधार्ते । बुभुक्षिते ॥ अत्तुमिच्छुः । अदेः सनि लुङ्सनोर्घस्लृ । ततः सनाशंसभिक्ष उः ॥

जिघांसकः । त्रि । हननेच्छुके ॥

जिघांसा । स्त्री । हननेच्छायाम् ॥ हन्तुमिच्छेत्यर्थः ॥

जिघांसुः । पुं । शत्रौ ॥ त्रि । हन्तुमिच्छौ ॥ हन्तेः सन्नन्तादुप्रत्ययः । अभ्यासाच्चेति कुत्वम् । अज्झनगमां सनीति दीर्घः ॥

जिघृक्षा । स्त्री । ग्रहीतुमिच्छायाम् ॥

जिघृक्षुः । त्रि । ग्रहीतुमिच्छौ । ग्रहेः सन्नन्तादुः ॥ [illegible]

जिघ्रः । त्रि । घ्राणकर्त्तरि ॥ [illegible]

जिङ्गिनी । स्त्री । वृक्षविशेषे । प्रसिद्धे [illegible] न्यामे । झिङ्गिन्याम् ॥ जिङ्गीमधुरा सोष्णा कषाया योनिशोधिनी । [illegible] व्रणहृद्रोगवातातीसारहृत् [illegible] ॥ [illegible]

जिङ्गी । स्त्री । मञ्जिष्ठायाम् ॥ जिङ्गति [illegible] जिगिगतौ । पचाद्यच् । गौरादित्वात् ङीष् ॥ [illegible]

जिजीविषा । स्त्री । जीवितुमिच्छायाम् ॥ [illegible]

जिजीविषुः । त्रि । जीवितुमिच्छौ ॥

जिज्ञासनीयः । त्रि । जिज्ञासितव्ये । जिज्ञास्ये ॥ [illegible]

जिज्ञासा । स्त्री । ज्ञातुमिच्छायाम् ॥

जिज्ञासितम् । त्रि । ज्ञातुमिष्टे ॥ विचारिते ॥ कृतजिज्ञासे ॥ [illegible]

जिज्ञासुः । त्रि । मुमुक्षौ । आत्मज्ञानार्थिनि ॥ ज्ञातुमिच्छौ ॥ बहुश्रुतः स्वल्पभाषी जिज्ञासुश्चानवानपीति तन्त्रम् ॥ [illegible]

जितः । त्रि । प्राप्तपराजये । परिभूते । पराजिते ॥ यथा । नहि जिते जेतु रग्रे स्थातुमुचितम् ॥ भजने विट्

अमधिकेन जितं तदनुप्रवेश अथ वा कुशलः ॥ स्वीये । स्वाधीनीकृते । वशीकृते ॥ पुं । अर्हदुपासकविशेषे ॥

जितकामः । त्रि । सदाशिवे ॥ जितः कामो येन ॥

जितकाशिः । त्रि । दृढमुष्टौ ॥ इतिम[illegible] ॥

जितकाशी । त्रि । जितश्रमे । जयिनि ॥ जितेनजयेन काशते प्रकाशते । काशृदीप्तौ । शीले णिनिः ॥

जितक्रोधः । पुं । शिवे ॥ विष्णौ ॥ त्रि । जितः क्रोधो येन ॥ जितक्रोधः कथं तर्हि संदारीन् हन्ति माधवः । विद्मार्गस्थापनार्थं ननु कोपवशात् प्रभुः ॥ भृगुपादहतो तेनापि क्रोधमत्यक्तः ॥ त्रि । जितामर्षे ॥

जितनेमिः । पुं । आश्वत्थे । अश्वत्थनिर्मिते दण्डे ॥ त्रि । जितनेमिके ॥

जितशत्रुः । पुं । हताहितपितरि ॥ त्रि । कृतशत्रुपराजये ॥

जितसङ्गदोषः । त्रि । प्रियाप्रियसन्निधावपि रागद्वेषविवर्जिते ॥ जिताः सङ्गजनिता दोषा येन ॥

जितात्मा । त्रि । जितेन्द्रिये ॥ जित आत्मा येन ॥

जितामित्रः । पुं । हरौ ॥ जिता अमित्रा बाह्या आभ्यन्तराश्च येन ॥ त्रि ॥ कृतशत्रुपराजये ॥

जितारिः । पुं । बुद्धे ॥ श्रुतार्हत्पितरि ॥ त्रि । जितशत्रौ ॥ जिता अरयो येन ॥

जिताष्टमी । स्त्री । जीमूताष्टम्याम् ॥

जिताश्वः । पुं । जितकाशिनि ॥

जितुमः । पुं । मिथुनराशौ ॥

जितेन्द्रियः । त्रि । स्ववशीकृतसर्वेन्द्रिये । शान्ते ॥ यथा । श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ जितानि वशीकृतानि इन्द्रियाणि श्रोत्रादीनि येन ॥ दान्ते ॥ पुं । कामवृक्षाख्ये क्षुपविशेषे ॥

जितेन्द्रियाह्वः । पुं । कामवृक्षे ॥

जित्तमः । त्रि । जयशीलानामध्ये उत्तमे ॥

जित्यः । पुं । हलौ । हलदण्डे ॥ कृष्टसमीकरणार्थं स्थूलकाष्ठे ॥ विपूयविनीयजित्या मुञ्जकल्कहलिषु इति निपातनात् क्यप् ॥

जित्वा । पुं । जयिनि ॥ जयति । जि० । श्रीङ्कुशीरित्यादिना क्वनिप् ॥

जित्वरः । त्रि । जेतरि ॥ जयशीलः । इण्नशजिसर्त्तिभ्यः क्वरप् ॥

जित्वरी । स्त्री । काशिकापुर्याम् ॥ टिड्ढेति ङीप् ॥ जयशीलायाम् ॥

जिनः । पुं । अर्हति ॥ बुद्धे ॥ विष्णौ ॥

रोगघ्नश्चिकारिस्त्वचेति राजवल्लभः ॥

जिह्वापः । पुं । शुनि ॥ मार्जारे ॥ व्याघ्रे ॥ द्वीपिनि । चित्रव्याघ्रे ॥ भल्लूके ॥ सिंहे ॥ जिह्वया पिबति । पा० । कः ॥

जिह्वामलम् । नं । कुष्ठे ॥

जिह्वामूलीयः । पुं । कखाभ्यां प्रागर्द्धविसर्गसदृशे (ᳵ) विसर्गभेदे ॥ जिह्वामूले भवः । जिह्वामूलाङ्गुलेश्छः ॥

जिह्वारदः । पुं । खगे ॥

जिह्वालिट् । पुं । कुक्कुरे ॥ मार्जारे ॥ जिह्वया लेढि । लिह० । क्विप् ॥

जिह्वाशल्यः । पुं । खदिरवृक्षे ॥

जिह्वास्वादः । पुं । लेहने ॥ आस्वादनकर्म । स्वद० । घञ् । जिह्वया आस्वादः ॥

जीनः । त्रि । वृद्धे ॥ जिनाति स्म । ज्या० । क्तः । ग्रहिज्येति सम्प्रसारणम् ॥ हलः इति दीर्घः । ल्वादिभ्य इति नत्वम् ॥ चर्मपुटे ॥

जीमूतः । पुं । अद्रौ ॥ भृतिकरे इति मेदिनी ॥ भृतिकरे इति हेमः ॥ देवताडे ॥ जीमूतवत् ॥ पयोधरे ॥ वासवे ॥ घोषके ॥ मुस्तके ॥ जयति नभः जीयतेऽनिलेन वा । जि० । जेर्मूट् चोदात्त इति क्त । जेर्दीर्घश्च ॥ जीवस्योदकस्य मूतः पटबन्धो यस्मिन्निति वा । पृ० ॥ जीवनं जलं मूतं बद्धमनेन । मूङ् बन्धने । कर्मणि क्तः । पृषोदरादित्वात् वनशब्दलोपः ॥ ज्यानं जीः । ज्या० । सं० । क्विप् । जियायते हान्यामूतो बद्ध इति वा ॥ जीवनं मुञ्चति वा । पृ० ॥

जीमूतकः । पुं । देवदाल्याम् ॥

जीमूतकूटः । पुं । पर्वते ॥

जीमूतमूलकम् । नं । शट्याम् ॥

जीमूतवाहनः । पुं । इन्द्रे ॥ जीमूता वाहनमस्य ॥ धर्मरत्नप्रकरणकृति तद्ग्रन्थकर्तरि ॥

जीमूतवाही । पुं । धूमे ॥

जीमूताष्टमी । स्त्री । आश्विनकृष्णाष्टम्याम् ॥

जीरः । पुं । जीरके ॥ खड्गे ॥ अणौ ॥ जुवति । जु । वेगे । जोरीचेति रक् ॥ जिनाति वा । ज्या० । ज्यश्चेति रक् वा ॥

जीरकः । पुं । अजाज्याम् । जीरा इति भाषा ॥ जीरात् संज्ञायामिति कन् ॥ अस्य गुणा यथा । जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ॥ ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम् । चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृदिति भावप्रकाशः ॥

जीरणः । पुं । जीरके ॥

जीरिका । स्त्री । वंशपत्रीतृणे ॥

जीर्णः । पुं । जीरके ॥ नं । शैलजे ॥ त्रि ।

हस्ते । जरति ॥ पुरातने ॥ परिपक्के ॥ जीर्य्यतिस्म । जॄष॰ । गत्यर्थेति क्तः । ऋल्वादि । निष्ठानत्वम् ॥

जीर्णज्वरः । पुं । पुरातनज्वरे ॥ अस्य सामान्यलक्षणं यथा । यो द्वादशभ्यो दिवसेभ्य ऊर्द्धं दोषत्रयं स्यद्दिगुणे भ्य ऊर्द्धम् । त्वग्यां ततो तिष्ठति मन्द वेगो भिषग्भिरुक्तो ज्वर एष जीर्ण- इति ॥

जीर्णदारु । न । विधारा इति प्रसिद्धे वृद्धदारकभेदे । सुपुष्पिकायाम् ॥

जीर्णपत्रः । पुं । पट्टिकालोध्रे ॥

जीर्णपत्रिका । स्त्री । वंशपत्रीतृणे ॥

जीर्णपर्णः । पुं । कदम्बे ॥ न । पुरातन पर्णे ॥ त्रि । तद्दति ॥

जीर्णफञ्जी । स्त्री । जीर्णदारुणि ॥

जीर्णवज्रम् । न । वैक्रान्तमणौ ॥

जीर्णवस्त्रम् । न । पटच्चरे । मलवस्त्रे ॥ जीर्णञ्च तद्दस्त्रञ्च ॥ त्रि । तद्युक्ते ॥

जीर्णबुध्नः । पुं । पट्टिकालोध्रे ॥ कैवर्त्तीमुस्तके ॥

जीर्णबुध्नकम् । न । परिपेले ॥

जीर्णा । स्त्री । स्थूलजीरके ॥

जीर्णास्थिमृत्तिका । स्त्री । अर्कोद्यर्थं कृत्रिमस्थिविशेषे ॥ यथा । अथ वच्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये । शि लातलस्थले कुर्य्याद्दीर्घं गर्त्तं म नोहरम् ॥ निःक्षिपेत् तत्र मानास्थि सञ्चयं विचतुष्पदाम् । सर्जिक्षारं म हाक्षारं समक्षारं लवणानि च ॥ ग न्धकोष्णजलं चैव नानामूत्राणि च । एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम् ॥ कृत्वास्य्यूर्द्ध्वं त दूर्द्ध्वन्तु कुर्य्याद्दहीष्टकां शुभाम् । त्रि वर्षाज्जायते सर्वमेकीभूतं द्दषत्स मम् ॥ ततोऽभिस्थाप्य तच्चूर्णं कृत्वा पात्राणि निर्म्मिमेत् । प्रशस्तं भोजनं तत्र सूपयेद् दस्तदूषणम् ॥ भक्षाविषस्य संयोगात् तस्य भङ्गः प्रजायते । दूषीविषादिसंयोगात् पात्रे स्फो टाभवन्तिहि ॥ तत्र चिरं शुद्धविष पात्रं शून्यं प्रजायते । यत्नात्त्वा त न्न दद्यान्नकदाचित्तपाद्दिकमितिरा वणः ॥

जीर्णिः । स्त्री । ज्यानौ । जीर्णत्वे ॥ ज रणम् । जॄष वयोहानौ । क्तिन् । ऋ ल्वादिभ्यः क्तिन्निष्ठावत् । इत्यभि तिनत्वम् ॥

जीर्णोद्धारः । पुं । भग्नमन्दिरादेः सं स्कारे ॥

जीर्य्यन् । त्रि । वयोहानिंप्राप्नुवति ॥

जीर्व्विः । पुं । कुठारे । परशौ ॥ जॄष॰ । जॄशस्तृ जागृभ्यः क्विन् ॥

जीवः । पुं । प्राणिनि ॥ हस्तौ ॥ वृष

भेदे ॥ बृहस्पतौ ॥ असुधारणे ॥ कर्णे ॥ मनुष्यादिकीटपर्य्यन्ते प्राणिमात्रे । कार्य्यकरणसङ्घाते ॥ अनेकान्तवादिनां जीवास्तिकायसंज्ञया परिभाषिते जीवपदार्थे ॥ त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात् । अनादिसिद्धोऽर्हन् जीवास्तिकायाख्यः । अपेतमोहादिबन्धो मुक्तः । मोहाद्याक्रान्तस्तु बद्ध इति ॥*॥ उपाधिप्रविष्टे ब्रह्मणि । यद्वा प्राणकरणग्रामानुप्रविष्टे । घटावच्छिन्नाकाशवत् शरीरचित्तयावच्छिन्ने चैतन्ये ॥ दर्पणस्थमुखप्रतिबिम्बवत् बुद्धिस्थचैतन्यप्रतिबिम्बे ॥ साभासाहङ्कारे । चित्प्रतिबिम्बे ॥ प्राणादिकलापस्य धारयितरि ॥ प्राणान् पञ्चरूपेण धारयन् जीव उच्यते ॥ लिङ्गदेहे ॥ एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते ॥ इति श्रीभागवतम् ॥ पञ्चविधं पञ्चतन्मात्रात्मकम् । त्रिवृत् त्रिगुणम् । षोडशविकारात्मना विस्तृतमित्यर्थः ॥*॥ विज्ञानमयकोषावच्छिन्नचिदात्मा कर्त्तृत्वभोक्तृत्वाद्यभिमानित्वेन इहलोकपरलोकगामी व्यावहारिको जीव उच्यते ॥ वाचस्पतिभागस्य मत-

धा कल्पितस्य । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥*॥ जीवो नाम देहादिव्यतिरिक्तस्तत्साक्षी त्वम्पदार्थो योऽयं विज्ञानमयः योऽयं संसरति योऽयं संसारी न तु देहादिर्जीवः तस्य दृश्यत्वादृष्टत्वानुपपत्तेः ॥*॥ अस्ति देवि परब्रह्मस्वरूपी निष्कलः शिवः । सर्व्वज्ञः सर्व्वकर्त्ता च सर्व्वेशो निर्म्मलोऽद्वयः ॥ स्वयंज्योतिरनाद्यन्तो निर्व्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्म्मभिरनादिभिः ॥ सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्म्मजम् ॥ प्रतिजन्म प्रपद्यन्ते तेषामपरं पुनः । सूक्ष्मं लिङ्गशरीरं तदामोक्षादक्षयं प्रिये ॥ इति कुलार्णवे १ उल्लासः ॥ पुं । न । जीविते ॥ जीवनम् । जीव० । भावे इति घञ् ॥ जीवति वा । इगुपधलक्षणः कः ॥ जीवयति वा । अच् । स तत्सञ्जीवनमन्त्रत्वात् ॥

जीवकः । पुं । प्राणके द्रुमे ॥ पीतसाले । विजयसार इति ख्याते ॥ क्षपणे ॥ सेवके ॥ अष्टवर्गान्तर्गतौषधविशेष

कूर्च्चशीर्षे । ह्रस्वाङ्गे ॥ अस्य स्वरूप पर्य्यायगुणाः । यथा । जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसो- नकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्र कौ ॥ जीवकः कूर्च्चकाकार ऋषभो वृषशृङ्गवत् ॥ जीवको मधुरः शृङ्गो ह्रस्वाङ्गः कूर्च्चशीर्षकः । ऋषभो वृ षभो धीरो विषाणी न्द्राक्ष इत्यपि ॥ जीवकर्षभकौ बल्यौ शीतौ शु क्रकफप्रदौ । मधुरौ पित्तदाहाघ्नौ कार्श्यवातक्षयापहाविति ॥ त्रि । से वके । सेविनि ॥ वृद्धाशिनि ॥ जी विनि ॥ आहितुण्डिके ॥ जीवयति । जीव० । ण्वुल् ॥ जीवसात् कार्षि पिचेतिवृन् ॥

जीवघनः । पुं । हिरण्यगर्भे ॥ घनोमू र्त्तिः । जीवश्चासौ घनः जीवघनः सैन्धवखिल्यवत् ॥

जीवजीवः । पुं । चकोरे ॥

जीवञ्जीवः । पुं । चकोरे ॥ जीवं जी- वयति । तद्दर्शनेन विषनाशात् । कृ त्यल्युटो बहुलमिति बाहुलकात् खच् ॥ खगान्तरे ॥ द्रुमभेदे ॥

जीवत्तोका । स्त्री । जीवत्तोकायाम् । जीवन्त्याम् ॥ इति हेमः ॥

जीवत्वम् । न । कूटस्थादीनां चतुर्णां समूहे ॥ तथाहि । कूटस्थश्च ब्रह्म-

कारणम् अन्तःकरणाश्रयाऽविद्या चि दाभासश्चेति चतुष्टयमिलितं सञ्जी वत्वमिति नीलकण्ठश्चैवः ॥

जीवत्पतिः । स्त्री । सधवायाम् ॥

जीवत्पितृकः । त्रि । विद्यमानपितृके ॥ यथा । अमावास्यां गयाश्राद्धं दक्षि णामुखभोजनम् । न जीवत्पितृकः कुर्य्यात् कृतेपि पितृघाभवेदिति रघुनन्दनः ॥

जीवथः । पुं । कूर्म्मे ॥ प्राणे ॥ मयूरे ॥ मेघे ॥ त्रि । चिरायुषि ॥ धार्म्मिके ॥ जीवति । जीव० । शीङ्शपिरुगमि वञ्चिजीविप्राणिभ्योऽथः ॥

जीवदः । पुं । वैद्ये ॥ रिपौ ॥ शत्रौ ॥ ॥ ग्रन्थिपर्णे ॥ त्रि । जीवनदातरि ॥ जीवं ददाति । डुदाञ्० । कः ॥

जीवदात्री । स्त्री । ऋद्धिनामौषधौ ॥

जीवधनम् । न । गवादिपशुषु ॥

जीवनम् । न । वर्त्तने । जीविकायाम् ॥ जीवन्त्यनेन । जीव० । ल्युट् ॥ नीरे । जले ॥ प्राणधारणे । आयु षि । जन्मसम्बन्धोपलक्षिकाले ॥ हीन जीवनाद जीवनं वरम् ॥ मज्जनि ॥ हैयङ्गवीने ॥ पुं । वृक्षे । जीवको षधे ॥ वाते ॥ क्षुद्रफलकवृक्षे ॥ जी व्यतेऽनेन । जीव० । करणाऽधिकर णयोश्चेति करणे ल्युट् ॥

जीवनकर्म । न । जले ॥

जीवनयोनिः । स्त्री । यत्नविशेषे ॥ स तु । अतीन्द्रियः शरीरे प्राणसञ्चार कारणम् । इतिभाषापरिच्छेदः ॥

जीवनहेतुः । पुं । वर्त्तनोपाये ॥ भिक्षा शिलंभृतिःसेवागोरक्षं विपणिःकृषिः । इतिमे चं कुसीदञ्च दश जीवनहेतवः ॥

जीवना । स्त्री । मेदौषधे ॥

जीवनाघातम् । न । विषे ॥

जीवनावासः । पुं । वरुणे ॥ जीवनमावासो यस्य ॥

जीवनिका । स्त्री । हरीतक्याम् ॥

जीवनी । स्त्री । गुर्जरदेशे डोडी इति प्रसिद्धायां जीवन्त्याम् । मधुस्रवायाम् । काकोल्याम् ॥ डोड्याम् ॥ मेदायाम् ॥ महामेदायाम् ॥ यूथ्याम् ॥ जीव्यतेऽनया । जीव० करणेल्युट् ॥

जीवनीयकम् । न । } जीवनीयकम् । न । } जले । वारिणि ॥ जीवनाय हितम् । छः ॥ जीवनीयगणे ॥

जीवनीयगणः । पुं । औषधविशेषे ॥ यथा । अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका । माषपर्णी गणोऽयन्तु जीवनीय इतिस्मृत. ॥ जीवनो मधुरश्चापि नाम्ना सपरिकीर्त्तितः ॥ जीवनीयगणःप्रोक्तः शुक्रकृद् बृंहणो हिमः ॥ गुरुर्गर्भप्रदः स्तन्यः कफकृत् पित्तरक्तहृत् । तृष्णां शोषं ज्वरं दाहं भ्रमं मूर्च्छां व्यपोहति ॥ अपिच । अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकस्तथा । जीवनीयगणःप्रोक्तो जीवन स्तु पुन स्तथेतिवैद्यक परिभाषा ॥

जीवनीया । स्त्री । जीवन्त्याम् । गुर्जरे डोडी इति प्रसिद्धायाम् ॥ जीवनाय हिता । तस्मै हितमिति छः ॥

जीवनेत्री । स्त्री । सैंहल्याम् ॥

जीवनौषधम् । न । जीवातौ । मृतस्य जीवनौषधे ॥ येनम्रियमाणो जीवति । जीवनस्य चौषधम् ॥

जीवन्तः । पुं । प्राणे ॥ औषधे ॥ जीवशाके ॥ त्रि । आयुष्मति ॥ जीव्यात् । जीव० इच्छिनन्दि जीविप्राणिभ्यःषि द्वाशिषीतिझच् । भोन्तः ॥

जीवन्तिका । स्त्री । गुडूच्याम् ॥ जीवशाके ॥ वन्दायाम् ॥ हरीतक्याम् । जीवति । जीव० इच्छिनन्दीति झचःषित्त्वात् ङीष् । कन् ॥

जीवन्ती । स्त्री । जीवन्याम् । मधुस्रवायाम् ॥ जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ॥ रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ॥ शाकप्रकारस्तु जीवन्त्याः कोमलं

पत्रं स्विन्नं तक्रसुभर्जितम्। हिङ्गुना संयुते तैले तक्र चिञ्चा प्रलेहयेत् ॥ डोडी इति गुर्जरे ऽस्याः प्रसिद्धिः॥ ग्रन्थ्याम् ॥ गुडूच्याम् ॥ वन्ध्यायाम् ॥ डोड्याम् ॥ हरीतक्याम् ॥ जीवन्ती स्वर्णवर्णिमीति लक्षणाम् ॥ जीवति जीवयति वा । जीव॰। भटःशतुव गित्वात् ङीप् ॥

जीवन्मुक्तः। त्रि। आत्मविदि। जीवन्नेव मुक्तसंसारे ॥ जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनां मपिबाधितत्वात् दखिलबन्धरहितो ब्रह्मनिष्ठ इति ॥*॥ ननुजीवन्मुक्तो व्यवहरतिन वा। आद्ये तस्य ब्रह्मविच्छलता। द्वितीये देहस्यानुपयोगात् सद्यः पातप्रसङ्ग इत्यतआह। अयन्तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादि भाजनेन शरीरेण आन्ध्यमान्द्यपटुत्वादि भाजनेनेन्द्रियग्रामेण अशनायापिपासाशोकमोहादिभाजनेनचान्तःकरणेन पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धान्यारब्धफलानिच पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यतीति। दृष्टान्तेनोक्तमर्थं स्पष्टयति। यथेन्द्रजालमिति ज्ञानवान् तदिदमिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति। उक्तञ्च। सुषुप्तिवज्जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपिचाऽद्वयत्वतः। तथाच कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः इति ॥ वेदविद्यारतं ज्ञानं देशिकस्य मुखात् स्वयम्। गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः। प्रारब्धक्षयपर्यन्तं जीवन्मुक्ताभवन्ति ते॥ अष्टोत्तरशत मुपनिषदाम् ॥ कौलिके ॥ यथा। धन्या माहेश्वराः स्वीयं प्रत्यभिज्ञानशालिनः। स्वपरिज्ञानमात्रेण जीवन्मुक्ता भवन्तिहि ॥ महामन्त्रप्रभावेण कुलाचारप्रभावतः। स्वेच्छाचारा निर्विकल्पा जीवन्मुक्ताहि कौलिकाः ॥ योऽन्तर्व्योमवदस्वच्छः स जीवन्मुक्त उच्यते ॥ जीवन्नेव मुक्तः ॥

जीवन्मुक्तिः। स्त्री। जीवतो बन्धनिवृत्तौ ॥ जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षण श्चित्तधर्मः क्लेशरूपत्वाद्बन्धोभवति तन्निरस्तिस्वरूपाजीवन्मुक्तिः ॥

जीवन्मुक्त्युपायः। पुं। कुलमार्गे ॥ स्त्री

वन्मुक्ते स्पायेस्तु कुत्समार्गविनापर इति सिद्धाभिवोक्तः ॥

जीवपुत्रः । पुं ।
जीवपुत्रकः । पुं । } जीयापोताइति प्रसिद्धे पुत्रजीव द्रुमे ॥

जीवपुष्पा । स्त्री । दृहज्जीवन्त्याम् ॥

जीवप्रिया । स्त्री । हरीतक्याम् ॥

जीवभद्रा । स्त्री । जीवन्तीलतायाम् ॥ द्विनामौषधे ॥

जीवभूतः । त्रि । प्राणधारणोपाधिना कर्त्ता भोक्ता संसारीति स्वपेव प्रसिद्धिमुपगते ॥

जीवमन्दिरम् । न । शरीरे ॥

जीवला । स्त्री । सैंहल्याम् ॥

जीवलोकः । पुं । संसारे ॥ यथा । माता पिता गुरुजनः स्वजनो ममेति मायोपमे जगति कस्य भवेत् प्रतिज्ञा । एको यतो व्रजति कर्मपुरः सरोऽयं विश्रामवृक्षसदृशः खलु जीवलोकः ॥ सायंसायं वासवृक्षं समेताः प्रातः प्रातस्तेनतेन प्रयान्ति । त्यक्त्वान्योन्यं तञ्च वृक्षं विहङ्गा यद्वत् तद्वत् ज्ञातयोऽज्ञातयश्चेति ॥ जीवानां लोकः ॥

जीववल्ली । स्त्री । क्षीरकाकोल्याम् ॥

जीवशाकः । पुं । शाकप्रसिद्धे शाकविशेषे । जीवन्ते । रक्तनाले । साम



वर्षे ॥

जीवशुक्ला । स्त्री । क्षीरकाकोल्याम् ॥

जीवश्रेष्ठा । स्त्री । ऋद्धिनामौषधे ॥

जीवसंज्ञः । पुं । कामवृद्धिवृक्षे ॥

जीवसाधनम् । न । धान्ये ॥

जीवसूः । स्त्री । जीवद्वत्सायाम् । जीवत्तोकायाम् ॥

जीवस्थानम् । न । मर्मणि ॥

जीवा । स्त्री । जीवन्तिकायाम् । मधुस्रवायाम् । डोडी इति गुर्जरभाषा ॥ मौर्व्याम् । धनुर्गुणे ॥ वचायाम् ॥ शिञ्जिते ॥ भूमौ ॥ इस्तौ ॥ जीवति । जीव० । पचाद्यच् । टाप् ॥

जीवातुः । पुं । न । अन्ने । भक्ते ॥ जीविते ॥ जीवनौषधे । मृतस्य जीवनौषधे ॥ जीवयति जीवत्यनेन वा । जीव० । जीवेरातुः ॥

जीवात्मा । पुं । देहिनि । जीवे । पुनर्भविनि ॥

जीवाधारः । पुं । चेते ॥ हृदये ॥

जीवान्तकः । पुं । जीवनार्थं पक्ष्यादीनां घातके । शाकुनिके ॥ त्रि । जीवनाशके ॥ जीवानां अन्तकः ॥

जीवाह्वा । स्त्री । सैंहल्याम् ॥

जीवास्तिकायः । पुं । अनेकान्तवादिनां जीवपदार्थे ॥

जीविका । स्त्री । आजीवे । जीवनो-

पाये ॥ जीवन्त्याम् ॥ जीव्यते ऽन्या । जीव० । गुरोश्चहलश्चः । सं प्रायां कन् । कन्या ॥

जीवितम् । न । प्राणने । जीवने ॥ त्रि । जीवनान्विते ॥ ब्रह्मादीनामपि जीवितं स्वल्पमेव ॥ यथा । ये समर्था जगत्यस्मिन् सृष्टिस्थित्यन्तकारिणः । तेपि काले प्रलीयन्ते कालो हि बलवत्तरः इति स्मृतेः ॥

जीवितकालः । पुं । जीवनावच्छिन्नकाले । आयुषि ॥ जीवितस्य कालः ॥

जीवितज्ञा । स्त्री । नाड्याम् ॥ श०रा० ॥

जीविताशा । स्त्री । जीवनलोभे ॥ जीवेति जीवेत इत्याशा । जीर्णेऽपि जीर्यतः । जीविताशा धनाशा च जीर्यतोऽपि न जीर्यति ॥

जीवितेशः । पुं । यमे । पितृपतौ ॥ प्राणनाथे ॥ चन्द्रे ॥ सूर्ये ॥ त्रि । जीवितेश्वरे ॥ प्रिये ॥ जीवितस्वामिनि ॥ औयातौ ॥

जीवी । पुं । प्राणिनि ॥ जीविनां द्वावेतौ रोगः कर्मभोगः शुभाशुभः । भक्तो वैद्यस्तं निहन्ति कृष्णभक्तिरसायनात् ॥

जीवेष्टिः । स्त्री । एकसप्ततिसने ॥

जीवोत्पत्तिवादः । पुं । पाञ्चरात्राणां वादे ॥ तथथा । ब्रह्मणो वासुदेवाख्यात् जीवः सङ्कर्षणाभिधः । जायते च मन स्तस्मात् प्रद्युम्नाख्यं ततः पुनः ॥ अहङ्कारोऽनिरुद्धाख्य स्तस्यैते विश्वरूपकाः । वासुदेवाराधना यै गाय सेवनाद्मोच मिति ॥

जीवोपाधिः । पुं । सुषुप्त्यादिषु ॥ चयो जीवोपाधयः । तथाहि । सुषुप्तौ सुखादिसंस्कारोपरक्षित मज्ञानमात्र मुपाधिः । स्वप्ने जाग्रद्वासनामयं लिङ्गशरीर मुपाधिः । जाग्रदवस्थायां तु सूक्ष्मशरीरसंसृष्टं स्थूलशरीरमुपाधिरिति ॥

जीव्या । स्त्री । गोयुग्दुग्धायाम् ॥ जीवन्त्याम् ॥ हरीतक्याम् ॥

जु । स्त्री । त्वरागमने ॥ सामान्यगमने ॥

जुगुप्सनम् । न । निन्दने ॥ त्रि । जुगुप्साशीले ॥ जुगुप्सते तच्छीलः । गुपेरनुदात्तेतश्चेतियुच् ॥

जुगुप्सा । स्त्री । निन्दायाम् ॥ घृणायाम् । घिन् इतिभाषा ॥ जुगुप्सनम् । गुपगोपनकुत्सनयोः । गुप्तेर्निन्दायांसन् । अप्रत्ययादिति भावेस्त्रियामः । टाप् ॥

जुगुप्सितः । त्रि । निन्द्ये ॥

जुङ्गः । पुं । वृद्धदारके ॥ जुङ्गति । जुङ्गवर्जने । अच् ॥ जुङ्ग्यते वा । घञ् ॥

जुङ्गकः । पुं । वृद्धदारकवृक्षे ॥ स्वार्थ

कन् ॥

जुटकम् । न । जटायाम् ॥ इति शब्द रत्नावली ॥

जुटिका । स्त्री । शिखायाम् । चोटी इति भाषा ॥ संहतकेशेषु ॥ जूडा जटी इति भाषा ॥

जुषन् । त्रि । सेवमाने ॥

जुषमाणः । त्रि । प्रीयमाणे ॥ सेवमाने ॥

जुष्ककः । पुं । मुद्गयूषे ॥

जुष्टम् । न । उच्छिष्टे । झूठ झूंठ इति च भाषा ॥ त्रि । सेविते ॥ प्रीते । जुष्यते स्म । जुषी प्रीतिसेवनयोः । क्तः ॥

जुष्यः । त्रि । सेव्ये ॥

जुहुराणः । त्रि । कुटिले ॥ चन्द्रे ॥ जुहूर्षति । हुर्च्छा कौटिल्ये ॥ हुर्च्छेः सनो लुक् छलोपश्चेत्यानच् ॥ जुहुराणं कौटिल्यकारि इति भाष्यम् ॥

जुहुवान् । पुं । अनले ॥

जुहुवाणः । पुं । अध्वर्यौ ॥ जातवेदसि ॥ चन्द्रे ॥

जुहूः । स्त्री । स्रुग्भेदे । पलाशकाष्ठनिर्मिते ऽर्द्धचन्द्राकृतिरूपे यज्ञपात्रे ॥ पर्णमये यज्ञपात्रविशेषे ॥ जुहोति अनया वा । हुदानादनयोः । द्युति गमि जुहोतीनां द्वे चेति क्विप् जुहोतेर्दीर्घश्च ॥ त्रैलोक्यात्मनः कोषस्य प्राग्भागे ॥ जुह्वस्यसां दिशि कर्मि-णः प्राङ्मुखाः सन्तः इति ॥

जूः । स्त्री । आकाशे ॥ सरस्वत्याम् ॥ पिशाच्याम् ॥ जवने ॥ जुः सौत्रो गतौ ॥ भाज भासेति क्विप् दीर्घश्च । जूः जुवौ जुवः ॥ क्विब्वचिप्रच्छीत्यादिना क्विब्दीर्घौ वा ॥

जूटः । पुं । जटायाम् । जूडा इति भाषा ॥ बन्धे ॥

जूटकः । पुं । न । केशबन्धे । जटायाम् ॥

जूतिः । स्त्री । जवने । वेगे ॥ जुः सौत्रो वेगे । क्तिन् । ऊतियूतीत्यादिना निपातनाद्दीर्घः ॥

जूतिका । स्त्री । कर्पूरविशेषे ॥

जूर्णः । पुं । उलपे ॥

जूर्णाख्यः । पुं । उलू इति गौडप्रसिद्धे तृणविशेषे । खरच्छदे । स्तूपघ्ने ॥

जूर्णाह्वयः । पुं । देवधान्ये । जुवार इति भाषा ॥ इति हेमचन्द्रः ॥

जूर्णिः । स्त्री । वेगे ॥ आधिक्ये ॥ ज्वरति । ज्वररोगे । वीज्याज्वरिभ्यो निः ॥

जूर्तिः । स्त्री । ज्वरे ॥ ज्वरणम् । ज्वरं॰ । क्तिन् । ज्वरत्वरेत्यूठ् ॥

जूषः । पुं । न । यूषे ॥

जूषणम् । न । धातुपुष्प्याम् । धाइका फूल इति भाषा ॥

जृम्भः । त्रि । मुखादिविकाशे । जृम्भायाम् ॥ जृम्भाच्यर्थं समीरणाम् ॥

पीत्वैकं श्वास मनिलः पुन स्त्यजति वेगवान्। आलस्यनिद्रायुक्तस्य सजृम्भ इतिकथ्यते॥ अस्यचिकित्सा। यथा। शुण्ठी पिप्पलीचूर्णं दीप्यक स्य सिन्धुमूतं चेति सर्वं पृथग्वा। मे रूपं वा सूक्ष्मचूर्णीकृतं वा जृम्भाभ ऋ स्तत्कृत.श्चासहैव॥ जृम्भावेगे समुत्पन्ने योऽन्नेनाद्यनेतरम्। स्वाप येत् तेन नियमाज्जृम्भावेगःप्रशाम्य ति॥ जृम्भावेगः क्षयं याति कटुतै लेन मर्द्दनात्। भोजनात् स्वादुभोज्यानां तथा ताम्बूलभक्षणादिति॥

जृम्भणम्। जृम्भि॰। घञ्॥

जृम्भणम्। न। जृम्भे॥ जृम्भिगात्रवि-नामे॥ भावेल्युट्॥

जृम्भमाण। त्रि। जृम्भांकुर्वाणे॥ वि वर्द्धमाने॥

जृम्भा। स्त्री। विकाशे॥मुखविदारणे। जृम्भे॥ जृम्भि॰गुरोश्चेत्यः। टाप्॥

जृम्भिका। स्त्री। जृम्भे॥

जृम्भितम्। न। स्त्रीणांकरणे॥ ईहा याम्। विचेष्टिते॥ प्रवृद्धे॥ जृम्भे॥ स्फुटिते। प्राप्तविकाशे॥ जृम्भः स-ञ्जातोऽस्य। तारकादित्वादितच्॥

जृम्भिणी। स्त्री। एलापर्णीतम्॥

जेतुम्। अ। वशीकर्तुमित्यर्थे॥

जेता। त्रि। जिष्णरे। जेते॥ जयनशी लः। तृन्। तृच्या॥ विजितोऽक्षपो जेतुत्कर्षी भवति॥ पुं। मधुच्छन्दसःपुत्रे ऋषिविशेषे॥

जेन्ताक। पु। चरकोक्ते स्वेदविशेषे॥

जेमनम्। न। भोजने। जीमना इतिभाषा॥ जमुअदने। ल्युट्॥

जेयः। त्रि। जेतव्यमात्रके॥ जेतुंयोग्यः। अर्हेकृत्यतृचश्चेति योग्यतायामचोयत्॥

जैत्रः। पुं। पारदे॥न। औषधे॥ त्रि। जेतरि॥ जेतैव। प्र॰ अण्। जैवस्तु जेताऽयोर्गच्छत्यर्क विद्विषतःप्रति॥

जैत्ररथः। त्रि। जयशीले॥ इतिहला युधः॥

जैत्री। स्त्री। जयशीलायां॥

जैनः। पुं। जिनमतावलम्बिनि। बौद्धे॥ जिनस्यायम्। अण्॥

जैपालः। पु। जयपालवृक्षे॥

जैमिनि। पुं। पूर्वमीमांसाकार्ये ऋषिविशेषे॥ अयं सामवेदधरो वेदव्यासशिष्योऽभ्यवाचक॥ यथा। मुनेःकल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात्। विद्युदग्निभयं नास्ति पठितेच गृहोदरेइति॥

जैवम्। त्रि। जीवसम्बन्धिनि। जीवस्येदम्। अण्॥

जैवलिः। पुं। प्रवाहणे॥ जीवलस्यारा

जोऽपत्यम् । इञ् ॥

जैवातृकः । पुं । म्लावि । सोमे ॥ भेषजे ॥ कर्पूरे ॥ त्रि । आयुष्मति । दीर्घायुषि ॥ कृशे ॥ जीवति जीवयति वा । जीव० । जीवेरित्यनुवृत्तौ आतृकन् वृद्धिश्चेतिसाधुः ॥

जैह्माशिनेयः । पुं । जिह्माशिनोऽपत्ये ॥ शुभ्रादित्वाड्ढक् । दाण्डिनायने तिटिलोपाभावः ॥

जैह्म्यम् । न । कुटिलत्वे ॥

जोङ्गकम् । न । अगुरुणि ॥ जुङ्गति जुङ्ग्यते वा ॥ जुगिवर्जने । वुन् । पृषोदरादिः ॥

जोङ्गटः । पुं । गर्भिण्यभिलाषे । दोहदे ॥ इति हारावली ॥

जोटिङ्गः । पुं । महादेवे ॥ महाव्रतिनि ॥

जोडः । पुं । जोडने ॥ जोडनम् । जुड बन्धने । घञ् ॥

जोडनम् । न । बन्धने ॥

जोन्नालः । पुं । }
जोन्नाला । स्त्री । } देवधान्ये ॥

जोषणम् । न । सेवने ॥

जोषम् । अ । सुखे ॥ प्रशंसायाम् ॥ तूष्णीमर्थे ॥ जङ्घने ॥ जुषते । जुषदसौ । बाहुलकादम् ॥

जोषा । स्त्री । योषिति ॥ जुषते जुष्यते वा । जुषी प्रीतिसेवनयोः । अच् घञ्वा ॥

जोषिका । स्त्री । आलिकायाम् ॥

जोषित् । स्त्री । योषिति ॥ हृषविलुषिभ्य इतिपाठे जुषेरितिः ॥

जोषिता । स्त्री । स्त्रियाम् ॥ जोष्यते स्म । णिजन्तात्कर्मणि क्तः ॥

जोष्यः । त्रि । प्रियेविषये ॥ जोष्यान् षि सुषतः काशः संप्रासोऽभिक्ष-लोमम ॥

जोहलम् । न । }
जोहलकम् । न । } पञ्चमात्रस्य द्वितीये (ऽ।ऽ) पर्याये ॥

ज्ञः । पुं । ब्रह्मणि । स्वप्रकाशे ॥ चान्द्रमसायने । बुधग्रहे ॥ विचक्षणे । विदुषि ॥ पद्मासने । चतुरानने ॥ भौमे ॥ जानाति । ज्ञा अवबोधने । इगुपधेतिकः । आतोलोपइटिचेत्याल्लोपः ॥

ज्ञपितः । त्रि । ज्ञप्ते ॥ ज्ञप्यतेस्म । ज्ञा मारणादौ मित् । ण्यन्तः क्तः । वादान्तशान्तेतिसाधुः ॥

ज्ञप्तः । त्रि । ज्ञपिते ॥ ज्ञप्यतेस्म । ज्ञा अवबोधने मारणादौ च वर्तते । मारणादौ मित् । ण्यन्तः । क्तः । वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः इतिसाधुः ॥

ज्ञप्तिः । स्त्री । बुद्धौ । मनीषायाम् ॥

ज्ञपयति । ज्ञपमित्व । अयं ज्ञाने ज्ञापने मारणतोषणनिशामनेषु च वर्त्तते । चुरादिः । तत्र ज्ञानार्थकात् अपेक्षितत्वात् प्राप्तं युधं बाधित्वा आप्लुतकात् क्तिन् ॥ ज्ञाते ॥ ज्ञप्ते स्तु कार्य्यं रोम मिथ्यप्रयोगेकेषस्था ॥

ज्ञातः । त्रि । ज्ञानेन विषयीकृते । प्रती ते । बुद्धे । प्रमिते ॥ ज्ञा० क्तः ॥

ज्ञातनन्दनः । पुं । षड्मासमासे विशेषे ॥

ज्ञातव्यः । त्रि । अवगन्तव्ये । बोध्ये ॥ मन्तव्ये ॥

ज्ञातसिद्धान्तः । पुं । तान्त्रिके । शाश्वत सत्त्वे । तत्त्वार्थज्ञातरि ॥ ज्ञाताः सि द्धान्ता येन ॥ आगमभाषया सर्वसि द्धान्तोपरि विराजमाने कौले ॥ यथा । सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्ण वं परम् । वैष्णवादुत्तमं शैवं शैवाद्दक्षि णमुत्तमम् ॥ दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् । सिद्धा न्तादुत्तमं कौलं कौलात् परतरं न हीति ॥

ज्ञातिः । पुं । ताते । पितरि ॥ पितृभ्रा त्रादिपितृपक्षे । सगोत्रे । सपिण्डसहोद रादौ । स्वजने ॥ सचतुर्विधः । स प्तमपुरुषपर्यन्तं सपिण्डः । ततस्त्रि पुरुषपर्यन्तं सकुल्यः । ततश्चतुर्थपुरु षपर्यन्तं समानोदकः । जन्मनामस्मृ



तिपर्यन्तमपि समानोदकः । ततःप रं गोत्रजः ॥ ज्ञातिद्रोहे दोषोयथा । यानि कानि च पापानि ब्रह्महत्या दिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम् ॥ जानाति । ज्ञा० । क्तिच् ॥ ज्ञायते वा । क्तिन् ॥

ज्ञाता । त्रि । ज्ञानशीले । विदुरे । ज्ञा निनि ॥ ज्ञानाश्रये । अहङ्कारादि प्रकाशकत्वेन चेतने ॥ जानाति । ज्ञा० । तृच् ॥ इसिद्धारा विषयज्ञा नवति ॥

ज्ञातेयम् । न । ज्ञातित्वे ॥ ज्ञातेर्भावः कर्म वा । कपिज्ञात्योर्ढक् ॥

ज्ञानः । पुं । जीवे ॥ ज्ञश्चासावनश्च । *विषयान् जानाति मा जिघ्रति चेष्टयन् ॥*

ज्ञानम् । न । विशेषेण सामान्येन वाव बोधे ॥ पदार्थग्राहिकायां वृत्तौ ॥ यथा । ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु संज्ञा दिद्योतकत्वादनेकधा ॥ संशयसं शयभ्रान्तिस्मृतिसादृश्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथान्येऽनुभ वा अपि ॥ इत्यादिभेदेनानेकवि धाभवन्तीत्यर्थः ॥ सम्यगवबोधे ॥ न्यायमते । अप्रमा च प्रमा चेति ज्ञा नं द्विविधमुच्यते । तच्छून्ये तन्मति र्याऽप्रमा सा निरूपिता ॥ तत् प्र

ज्ञानम्

पञ्चो विपर्यासः संशयोपि प्रकीर्त्तितः। आद्यो देहात्मबुद्धिः शङ्खादौ पीततामतिः॥ अनेकनिश्चयरूपासा संशयोऽथ प्रदर्श्यते। किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः॥ तदभावाऽप्रकारा धीस्तत्प्रकारा तु निश्चयः॥ स संशयो भवेद्धीरेकत्राभावभावयोः। साधारणादिधर्मस्य ज्ञानं संशयकारणम्॥ दोषोऽप्रमाजनकः प्रमायास्तु गुणो भवेत्। पित्तदूरत्वादिरूपो दोषो नानाविधो मतः॥ गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा। अथवा तत्प्रकारं यत् ज्ञानं तद्वद्विशेष्यकम्॥ ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते। तत् प्रमा नाऽप्रमा नापि ज्ञानं यन्निर्विकल्पकम्॥ प्रकारतादिशून्यं हि सम्बन्धानवगाहनात्॥ इति भाषापरिच्छेदः॥ * ॥ योगे तु। एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्व्वशः। आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम्॥ इति मोक्षधर्मः॥ एकत्वं बुद्धिमनसोरास्थानम् वृत्तिवृत्तिनिरोध इति यावत्॥ देवताध्यानादौ॥ विवेकविज्ञाने। शास्त्राचार्य्योपदेशजे परमात्मविषये साक्षान्मोक्षफले आत्मनिश्चये॥ तत्त्वज्ञाने॥ मोक्षे॥ मोक्षफलिकायां धियि॥ जीवेश्वरजगदेकमाधिष्ठानभूते निष्प्रपञ्चे सच्चिदानन्दरूपाद्वितीये परमार्थसत्ये॥ आत्मानात्मसर्व्वपदार्थावबोधे॥ विवेकसामर्थ्ये॥ अवग्रहोपासने॥ शब्दयुक्तिभ्यामात्मनिश्चये॥ अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्। आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः॥ इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥ सात्त्विकादिभेदात् तत् त्रिविधम्। यथा। सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥ सात्त्विकं सर्व्वसंसारोच्छित्तिकारणम्॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्। वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्॥ यत्तु कृत्स्नवदेकस्मिन् कार्य्ये स-

त्रेभिचौ ॥ ज्ञानदग्धशरीरस्य पुनर्देहो नास्तीत्यशौचकः । सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चापि सर्वं तेनैव कारयेत् ॥

ज्ञानदर्पणः । पुं । पूर्वजिने । मञ्जुघोषे ॥

ज्ञानदा । स्त्री । शारदायाम् ॥ ज्ञानं ददाति । दुदाञ्० । आतश्चोपसर्गे कः ॥ त्रि । ज्ञानप्रदातरि ॥

ज्ञानदाता । पुं । तत्त्वोपदेष्टरि श्रीगुरौ ॥ पितुर्दशगुणा माता गौरवेणेति निश्चितम् । मातुः शतगुणः पूज्यो ज्ञानदाता गुरुः प्रभो ॥ ज्ञानस्य दाता ॥

ज्ञानदीपः । पुं । दीपसदृशे ज्ञाने ॥ स्वप्रकाशचैतन्यानन्दाद्वितीयब्रह्म आत्मा स एव सविषयान्तःकरणपरिणामरूपो दीप उच्यते ॥ ज्ञानं दीप इव ॥

ज्ञानदीपितः । त्रि । ज्ञानेनप्रकाशिते ॥ यावत्पूर्वकसमाधौ ॥ ज्ञानं वेदान्तवाक्यजन्यो ब्रह्मात्मैक्यसाक्षात्कारः तेन अविद्यातत्कार्यनाशद्वारा दीपितः प्रत्यक्तोद्भासित ॥

ज्ञाननिर्धूतकल्मषः । त्रि । अवधूते । परमहंसे ॥ ज्ञानेन निर्धूतं सम्यक् क्षिप्तं पुनर्देहसम्बन्धकारणं कल्मषं पुण्यपापात्मकं कर्म यस्य ॥



ज्ञाननिष्ठः । त्रि । ज्ञानिनि ॥ ज्ञाने निष्ठाऽस्य ॥

ज्ञानप्लवः । पुं । ज्ञानपोते ॥

ज्ञानमयः । पुं । शिवे ॥ त्रि । अखण्डब्रह्माकारे प्रकाशस्वरूपे ॥ ज्ञानं तत्त्वसमस्तपदार्थावबोधस्तदात्मकः ॥

ज्ञानयज्ञः । पुं । न्यायेन वेदार्थनिश्चयपरे ॥ ब्रह्मार्पणमपरे यज्ञं यज्ञेनैवोपजुह्वति । ब्रह्माग्नौ सत्यज्ञानानन्दरूपं निरस्तसमस्तविशेषं ब्रह्म तत्पदार्थः तस्मिन्नग्नौ यज्ञं प्रत्यगात्मानं त्वं पदार्थम् यज्ञेनैव यज्ञशब्दः आत्मनामसु यास्कनपठितः इत्यभूतलक्षणे तृतीया एवकारो भेदाभेदव्यावृत्त्यर्थः त्वम्पदार्थाभेदेनैवोपजुह्वति तत्स्वरूपतया पश्यन्तीत्यर्थः । अपरे पूर्वस्मात् कर्मयोगिनो विलक्षणास्तत्त्वदर्शननिष्ठाः सन्न्यासिन इत्यर्थः ॥ * ॥ महापापवतां नृणां ज्ञानयज्ञो न रोचते । प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः ॥ भोगसारस्य विभ्रान्त्या ज्ञाने भोगी घृणातिनि । प्रद्वेषो ॥ शुद्धचित्तस्य

। महापापवशोभवेत् ॥

**ज्ञानयोगः** । पुं । निष्ठाविशेषे । ज्ञानमेव ब्रह्मणा युज्यते इति ज्ञानयोगः । निष्ठायाम् ॥ ब्रह्मज्ञानप्राप्त्युपाये ॥

**ज्ञानयोगव्यवस्थितिः** । स्त्री । जीवन्मुक्तौ ॥ आत्मसाक्षात्कारमनोनाश-वासनाक्षयानुकूलपुरुषप्रयत्नाभ्यां विशिष्टसंसारविलक्षणावस्थितिः ॥

**ज्ञानलक्षणा** । स्त्री । त्रिविधालौकिकसन्निकर्षान्तर्गतसन्निकर्षे ॥ तल्लक्षणं यथा । विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षण इति । अस्यार्थः । तद्विषयव्यापकतद्विषयज्ञानम् । यथा पूर्वं घटादिज्ञाने सति पश्चात् घटादिज्ञानम् ॥

**ज्ञानवान्** । त्रि । ज्ञानिनि । ब्रह्मविदि ॥ ज्ञानमस्त्यस्य । मतुप् ॥

**ज्ञानवापी** । स्त्री । काश्यन्तर्गततीर्थविशेषे । ज्ञानोदतीर्थे ॥

**ज्ञानसाधनम्** । न । इन्द्रिये ॥

**ज्ञानसिद्धिः** । स्त्री । ब्रह्मात्मैक्यबोधे ॥

**ज्ञानस्कन्धः** । पुं । निर्विकल्पके ॥

**ज्ञानस्वरूप** । पुं । जीवे ॥ ज्ञश्चासावनश्च । विषयान् जानाति प्राणिति च । तादृशस्वरूपो जीवः ॥

**ज्ञानाग्निदग्धकर्म्मा** । त्रि । पण्डिते ॥ कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निः तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य सः ॥

**ज्ञानापोहः** । पुं । विस्मरणे ॥

**ज्ञानाभ्यासः** । पुं । श्रवणाद्यावृत्तौ ॥ तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधाः ॥ सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत् सदा । इदं जगदहं चेति बोधाभ्यासं विदुः परम् ॥

**ज्ञानावस्थितचेताः** । पुं । स्थितप्रज्ञे ॥ निर्विकल्पकब्रह्मात्मैक्यबोधेनावस्थितं चेतो यस्य सः ॥

**ज्ञानासिः** । पुं । आत्मविषयकनिश्चयखड्गे ॥

**ज्ञानी** । त्रि । पदवाक्यन्यायादिज्ञाननिपुणे । तत्त्वदर्शिनि । कृतसाक्षात्कारे ॥ परोक्षज्ञानवति ॥ स्वतोऽपरोक्षं ज्ञानमसम्भावनादिप्रतिबन्धेन फलमजनयत् परोक्षमित्युपचर्यते ॥ भगवत्तत्त्वसाक्षात्कारो ज्ञानं तेन नित्ययुक्ते ॥ तीर्णमाये । निवृत्तसर्वकामे । निष्कामभक्ते । तत्त्वज्ञानवति ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरीति देवीगीता ॥ पुं । दैवज्ञे ॥ ज्ञानमस्यास्ति । अतइनिठनाविति इनिः ॥

**ज्ञानेन्द्रियम्** । न । धीन्द्रिये । श्रोत

ज्ये इत्यत्र । संज्ञापूर्वकत्वान्न वृद्धिः ॥

ज्योतिषी । स्त्री । तारायाम् ॥

ज्योतिष्कः । पुं । चित्रकवृक्षे ॥ मेथिकाबीजे ॥ गणिकारिकावृक्षे ॥ पुंभूम्नि । ज्योतिष्काः । चन्द्रार्कग्रहनक्षत्रतारकासु ॥ न । मेरोः शृङ्गान्तरे ॥ तदीयभागे तस्याः शृङ्गमादित्यसन्निभम् । यत्तज्ज्योतिष्कमित्युक्तं सदा पशुपतेः प्रियम् ॥ तस्यैव पूर्वा ईशानभागे ॥

ज्योतिष्टोमः । पुं । षोडशर्त्विक्साध्ये यज्ञविशेषे ॥ अस्मादग्निष्टोमादयो भवन्ति ॥ ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोमः ॥ ज्योतिरायुषः स्तोम इति षत्वम् । सलोपः ॥

ज्योतिष्मान् । पुं । सूर्ये ॥ प्लक्षद्वीपस्थे गिरिविशेषे ॥ त्रि । दीप्तियुक्ते ॥ ज्योतिरस्त्यस्य मतुप् ॥

ज्योतिष्मती । स्त्री । पारावताङ्घ्र्याम् । कटभ्याम् ॥ मालकांगनी इति भाषा ॥ ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् । अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा ॥ रात्रौ ॥ उगित्वान् ङीप् ॥

ज्योतिः । पुं । अग्नौ ॥ दिवाकरे ॥ मेथिकायाम् ॥ न । दृष्टौ ॥ नेत्रकनीनिकामध्ये ॥ नक्षत्रे ॥ प्रकाशे ॥ सर्वात्मनि ब्रह्मणि चैतन्ये ॥ आदित्यादीनां वह्न्यादीनां च बाह्यानामान्तराणामपि बुद्ध्यादीनां ज्योतिषां चैतन्यं ज्योतिः ॥ अवभासकत्वोपपत्तेः ॥ विज्ञाने ॥ द्योतते द्योतनं वाऽनेन वा । द्युतेरिसिन्नादेश्च जः ॥

ज्योतीरथः । पुं । ध्रुवे ॥ औत्तानपादे ॥

ज्योत्स्ना । स्त्री । चन्द्रातपे ॥ ज्योतिःसंयुक्तनिशि ॥ कौमुद्याम् ॥ पर्यायाम् ॥ ज्योतिरस्त्यस्याः । ज्योत्स्नातमिस्रेत्यादिना ज्योतिष उपधालोपो मत्वर्थे निपात्यते ॥

ज्योत्स्नाप्रियः । पुं । चकोरे ॥

ज्योत्स्नावृक्षः । पुं । दीपाधारविशेषे ॥

ज्योत्स्नी । स्त्री । पटोलिकायाम् ॥ चिचिण्डा इति प्रसिद्धे दीर्घफले ॥ चन्द्रिकायुक्तायां रात्रौ ॥ चांदनी रात इति भाषा ॥ रेणुकानामगन्धद्रव्ये ॥ ज्योत्स्नाऽस्त्यस्याः । ज्योत्स्नादिभ्य उपसंख्यानमित्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । ङीप् ॥

ज्यौतिषिकः । पुं । दैवज्ञे ॥ ज्योतिषं वेत्ति अधीते वा । ज्योतिषमधीते वेद वा । क्रतूक्थादीति ठक् ॥

ज्यौत्स्नः । पुं । शुक्लपक्षे ॥ ज्योत्स्नाऽस्मिन्नस्ति । ज्योत्स्नादित्वादण् ॥ त्रि । दीप्ते । ज्योत्स्नायुक्ते ॥

ज्योत्स्निका ॥ स्त्री । चन्द्रिकायुक्तायां रात्रौ ॥ पटोल्याम् ॥

ज्यौत्स्नी । स्त्री । ज्योत्स्नया युक्तायां रात्रौ ॥ ज्योत्स्न्याम् ॥ अणन्तत्वान्ङीप् ॥

ज्वरः । पुं । स्वनामख्याते प्रसिद्धे रोगे । रोगश्रेष्ठे ॥ यथागदे ॥ तस्योत्पत्तिः संख्या चोक्ता भिषग्भिः । दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः । ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ तथाहि । वातिकः पैत्तिकश्चैव कफजो वातपित्तजः । श्लेष्मप्रभूतश्च पित्तश्लेष्मोद्भवस्तथा ॥ संघातागन्तुजो चेयं ज्वरोऽष्टविधउच्यते इति ॥ अपिच ॥ जनकः सर्वरोगाणां दुर्वारो दारुणो ज्वरः । शिवभक्तश्च योगी च सएव विकृताकृतिः ॥ भीमस्त्रिपाद्स्त्रिशिराः षड्भुजो नवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ मन्दाग्निस्तस्य जनको मान्द्येऽनेकाश्रयः । पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥ इत्यादि चैद्यमाकरो विशेषोऽवगन्तव्यः ॥ ज्वरयम् । ज्वररोगे । घञ् । संज्ञापूर्वकत्वात् वृद्ध्यभावः ॥ ज्वरति । कस् वा ॥ सन्तापहेतुत्वात्ज्वरोके ॥ ज्वरमुक्तस्य लक्षणं यथा । स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च । क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥

ज्वरघ्नः । पुं । गुडूच्याम् ॥ वास्तूके ॥ त्रि । ज्वरनाशके ॥

ज्वरघ्नी । स्त्री ।

ज्वरहन्त्री । स्त्री । मञ्जिष्ठायाम् ॥

ज्वराग्निः ॥ पुं । आधिमन्थे ॥ ज्वररूपाग्नौ ॥

ज्वराङ्की । स्त्री । भद्रदन्तिकायाम् ॥

ज्वरान्तकः । पुं । नेपालनिम्बे ॥ आरग्वधे ॥ औषधविशेषे ॥ त्रि । ज्वरनाशके ॥

ज्वरापहा । स्त्री । बिल्वपुष्प्याम् । बिल्वपत्र्याम् ॥ त्रि । ज्वरनाशके ॥

ज्वरारिः । पुं । ज्वरौषधविशेषे ॥

ज्वरितः । त्रि । ज्वरिणि ॥ ज्वरः सञ्जातोऽस्य । तारकादित्वादितच् ॥

ज्वरी । त्रि । ज्वरयुक्ते ॥ गुर्वभिष्यन्द्यकाले वा ज्वरी नाद्यात् कथञ्चन ॥

ज्वलः । पुं । ज्वाले । दीप्तौ ॥ त्रि । दीप्तिविशिष्टे ॥ ज्वलति । ज्वल दीप्तौ । अच् ॥

ज्वलका । स्त्री । अग्निशिखायाम् ॥ इति हेमचन्द्रः ॥

ज्वलत् । त्रि । दीप्तिमति ॥

ज्वलनः । पुं । अग्नौ ॥ चित्रकवृक्षे ॥ न । दहने ॥ ज्वलति । ज्वल ण जुच

ङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषप- तपदः ॥ इति ताच्छील्यादिषु युच् ॥

ज्वलनाश्मा । पुं । सूर्यकान्तमणौ ॥

ज्वलितः । त्रि । दग्धे ॥ उज्ज्वले । भास्वरे ॥ उज्ज्वलिते ॥ ज्वल० । क्तः ॥

ज्वलिनी । स्त्री । मूर्वालतायाम् ॥

ज्वालः । पुं । अग्निशिखायाम् ॥ त्रि । दीप्तिविशिष्टे ॥ ज्वलति । ज्वल० । ज्वलितकसन्तेभ्यो णः ॥

ज्वाला । स्त्री । अग्निशिखायाम् । टाप् ॥

ज्वालागर्दभकः । पुं । आलगर्दभरोगे ॥

ज्वालाजिह्वः । पुं । अग्नौ ॥

ज्वालामरिचम् । न । रक्तमरिचे ॥ मिपची लालमरिच इत्यादि भाषा ॥

ज्वालामुखी । स्त्री । जालन्धरपीठान्तर्गतपीठस्थानविशेषे ॥ तत्र भगवत्या जिह्वा पतिता । तत्राम्बिका देवी । उन्मत्तनामको भैरवश्च ॥ तथाहि । ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्नी स्तनं जालन्धरे मम ॥ इति तन्त्रचूडामणिः ॥ देश्यन्तरे ॥ ज्वालामुखयशाः ॥

ज्वालिका । स्त्री । ज्वालायाम् । झाल इति भाषा ॥

झः

झः । पुं । झञ्झानिले ॥ सुरगुरौ ॥ दैत्यराजे ॥ ध्वनौ ॥ झञ्झावाते झंखड इति ख्याते प्रचण्डानिले ॥ नष्टे ॥ त्रि । नष्टवस्तुनि ॥

झगझगायमानः । त्रि । चाकचिक्ययुक्ते ॥

झगिति । अ । शैघ्र्ये ॥

झङ्कारः । पुं । भ्रमरादिसमूहशब्दे ॥

झङ्कृतिः । पुं । कांस्यतालादिध्वनौ ॥

झञ्झा । स्त्री । वाते ॥ तारवातौ ॥ नष्टे ॥ ध्वनिविशेषे ॥ अम्बुकर्षवर्षेच ॥

झञ्झानिलः । पुं । सवृष्टिकवायौ ॥

झञ्झावातः । पुं । झञ्झानिले ॥

झटा । स्त्री । भूम्यामलक्याम् ॥ पितृलकौषधौ ॥ झटति । झट संघाते । घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥

झटिः । पुं । क्षुद्रवृक्षे ॥ झट० । इन् ॥

झटिति । अ । शीघ्रार्थे ॥ तत्पर्यायार्थे ॥ झट० । सम्पदादित्वात् क्विप् । झटमेति । इण्० । क्विच् ॥

झणत्कारः । पुं । } कङ्कणादिध्वने र-
झनत्कारः । पुं । } नुकरणशब्दे ॥

झम्पः । पुं । सम्पातपतने । लम्फे ॥ स्वेच्छाधीनपतने ॥

झम्पाकः । पुं । वानरे ॥

झम्पाशी । पुं । मत्स्यरङ्गविहङ्गमे ॥

झम्पी । पुं । वानरे ॥

झरः । पुं । निर्झरे ॥ उत्सान्निर्गते गिरिवारिप्रवाहे ॥ झरणम् । कृषृव योश्चानौ । कर्त्तरि ॥

झरा । स्त्री । झरे निर्झरे ॥ षित्वा दङ् ॥

झरिः । स्त्री । झरे ॥ झरणम् । कृष्° । अचः ॥

झरी । स्त्री । गिरिवारिप्रवाहे ॥ कृदिकारादिति ङीष् ॥

झर्झरः । पुं । कलियुगे ॥ वाद्यभाण्डविशेषे । वडीझाँज इतिभाषा ॥ गौडास्तु चर्मपुटाच्छादितकाष्ठस्थाने इति करड इतिख्यातेच । डिण्डिमोथ झर्झरी प्रोक्तो झर्झरः पटहः स्मृतः । इति तत्पर्यायाः । झल्लकी झल्ली झलरी झर्झरी इतिशब्दरत्नावल्यामाहुः ॥ नेपालभाषया झ्यालीति प्रसिद्धे कांस्यवाद्ये ॥ नदविशेषे ॥ झज्झर इति प्रसिद्धे जलपात्रविशेषे ॥ झरचा झर्ल इतिच ख्याते पाकसाधने लौहद्रव्ये ॥ झर्झ इति शब्दं राति । आतोनुपेतिकः ॥ यद्वा । झर्झति । झर्झ परिभाषणभर्त्सनयोः । बाहुलकादरः ॥

झर्झरकः । पुं । कलियुगे ॥ अल्पार्थे बोधकेषु झर्झरशब्दार्थेषु । कः ॥



झर्झरा । स्त्री । वेश्यायाम् ॥

झर्झरिका । स्त्री । रोटिकाविशेषे ॥ यथा । घृमसीरचिता रोटी प्रोक्ता झर्झरिकाबुधैः । झर्झरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृतेति ॥

झर्झरी । स्त्री । झर्झरवाद्ये ॥ जर्जरी इति ख्याते स्वल्पेशारिपात्रे ॥ घृमसी रोटिकायाम् ॥

झर्झरीकः । पुं । न । शरीरे ॥ झर्झति । झर्झ परिभाषणभर्त्सनयोः । पर्फरीकादित्वात् साधुः ॥

झलञ्झला । स्त्री । हस्तिकर्णास्फालने ॥

झल्लरी । स्त्री । हुडुक्के ॥ झर्झरवाद्ये ॥ बालकुन्तले । केशचक्रे ॥

झला । स्त्री । आतपशोभौ ॥ कन्यायाम् ॥

झल्लः । पुं । व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्ने वर्णसङ्करजातिविशेषे ॥ करणे । मल्ले ॥ भाँड इति ख्याते मद्यासके ॥

झल्लकम् । न । कांस्यनिष्पन्ने करताले ॥ यथा । शिवागारे झल्लकञ्च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत् ॥

झल्लकण्ठः । पुं । कपोते ॥

झल्लरी । स्त्री । हुडुक्कवाद्ये ॥ वक्रकेशेषु ॥ झर्झते । झर्झ° । बाहुलकादरन् । पृषोदरादिः । गौरादित्वात्

डाम् ॥ शुद्दे ॥ क्लेदे ॥

जज्झिका । स्त्री । उद्दर्तनमले । झिल्ली इति भाषा ॥ दोते ॥ दीप्तौ । आतपवचे ॥

जर्झी । स्त्री । जर्जरवाद्ये ॥

जह्लोबिः । पुं । तर्कुलासके । चरखा इति भाषा ॥

जषः । पुं । मत्स्ये । मीने ॥ मीनराशौ ॥ तापे ॥ अटव्याम् ॥ नं । खिले ॥ जषति । जषहिंसार्थः । पचाद्यच् ॥ यद्वा । जष्यते । खनोपचे सिघः ॥

जषकेतनः । पुं । कामदेवे । मदने ॥ जषोमकरः केतनकेतुर्वा यस्य ॥

जषकेतुः । पुं ।

जषा । स्त्री । नागवलायाम् ॥ टाप् ॥

जषाङ्कः । पुं । अनिरुद्धे । कन्दर्पे ॥

जषाशन । पुं । शिशुमारे ॥ त्रि । मत्स्यादे ॥

जषोदरी । स्त्री । व्यासमातरि ॥

जाङ्कितम् । नं । चरणालङ्कारविशेषे ॥

जाटः । पुं । निकुञ्जे ॥ कान्तारे ॥ अन्याटीनामार्जने ॥ नं । सङ्घाते ॥ जटनम् । जट० । घञ् ॥

जाटलः । पुं । घण्टापाटलौ । लोध्रविशेषे ॥ जाटं सङ्घातं लाति । ला० । आतोनुपसर्गे कः ॥

जाटलिः । पुं । स्त्री । जाटलिवृक्षे ॥

जाटा । स्त्री । भूम्यामलक्याम् ॥ यूथीवृक्षे ॥ जट्यते । जटसङ्घाते । घञ् ॥

जाटामला । स्त्री ।
जाटिका । स्त्री । } भूम्यामलक्याम् ॥
जाटी । स्त्री ।

जार्लकम् । नं । इष्टकाविशेषे । जामाइति ओर्वा इतिच भाषा ॥

जामरः । पुं । तर्कुशाये । तकुवेकीसा इतिभाषा ॥

जार्झरः । त्रि । जार्झरिके । जर्झरवाद्यकर्त्तरि ॥ जर्झरवादनं शिल्पं यस्य । मड्डुकजर्झरादन्यतरस्यामित्यण् ॥

जार्झरिकः । त्रि । जार्झरे ॥ जर्झरवादने शिल्प यस्य । पचेठक् ॥

जाबिः । स्त्री । पानकविशेषे ॥ यथा । आम्रमामफलं पिष्टं राजिकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं जाबिरुच्यते ॥ जाबि सैरतिजिह्वायाः कृताव्यं कण्ठशोधिनी । मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी ॥

जाबुः । पुं । जाउ इतिख्याते पिचलवृक्षे ॥ जाबिरिति शब्दं नेति गच्छति । वीगत्यादिषु । मित०डुः ॥

जाबुकः । पुं । पिचुले । जाउ इतिभाषा ॥ संज्ञायांकन् ॥

झिल्लिका — झोडः

झिङ्गाकम् । न । फलविशेषे ॥

झिङ्गिनी । स्त्री । उल्कायाम् ॥ झिङ्गिनीवृक्षे ॥

झिङ्गी । स्त्री । झिङ्गिनीवृक्षे ॥

झिञ्झिमः । पुं । दावाग्नौ ॥

झिञ्झिरिष्टा । स्त्री । झिञ्झिरी इति गौडप्रसिद्धे क्षुपविशेषे । मोरपुष्पायाम् । रोमाञ्चफलायाम् ॥

झिञ्झी । स्त्री । झिल्ल्याम् ॥ यथा ।

" झिञ्झावाऽव्यक्तमधुरा कूजन्ती मधुराकृतिरित्यागमः ॥

झिण्टिका । स्त्री । झिण्ट्याम् ॥ कन् ॥

झिण्टी । स्त्री । सैरीयके ॥ झिमिति रटति । रट० । बहु० । पृषोदरादिः । गौरादित्वान्ङीष् ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोषनाशित्वञ्चेति राजनिर्घण्टः ॥ कुन्दरूपं ॥

झिरिका । स्त्री ।
झिरी । स्त्री ।
झिरीका । स्त्री ।
} झिल्ल्याम् । झीँगुर इ० झीँगर इतिभाषा ॥

झिल्लि । स्त्री । वाद्यविशेषे ॥ यथा ।
घण्टा मड्डु स्तथा भेरीसदृशौ झिल्लिरेव च । पञ्चानां ग्रसते वाद्यं देवर । धनेषुचेतिगूढार्थदीपिका ॥

झिल्लिका । स्त्री । झिल्लीकायाम् । चीराम् ॥ उद्वर्त्तनांशुके ॥ आतपस्य त्विषि ॥ विलेपनसमले ॥ स्वार्थे कन् ॥

झिल्ली । स्त्री । कीटविशेषे । झीँगर इति भाषाप्रसिद्धे । झिरिकायाम् । चीरीयाम् ॥ आतपरुचि ॥ वर्त्यांम् ॥ उद्वर्त्तनांशुके ॥ स्थालीलग्नदग्धान्ने ॥ झिल्लति । झिल्लशौचित्ये । अच् । पृषोदरादित्वात् साधुः । गौरादित्वात् ङीष् ॥

झिल्लीकण्ठः । पुं । गृहकपोते ॥

झिल्लीका । स्त्री । झिल्लिकार्थेषु ॥

झीरुका । स्त्री । झिल्ल्याम् । झीँगुर इति भाषा । झीतिरौति । रुशब्दे । बाहुलकात् कक् ॥

झुण्टः । पुं । अप्रकाण्डद्रुमे । स्तम्बे । गुल्मे । झाड इति भाषा ॥

झुमरि । स्त्री । रागिणी विशेषे ॥ यथा ।
प्राय शृङ्गार बहुला माध्वीकमधुरा मृदुः । एकैव झुमरि र्लोके वर्णादिनियमोज्झिता ॥ यतो गायन्ति तत्सा नोदाहारि विशेषतः । इदञ्च शार्ङ्ग सूत्रं प्रसिद्धं त्वपरञ्जनम् ॥ इति सङ्गीतदामोदरः ॥

झूर्षिः । स्त्री । क्रमुकभेदे ॥ दुष्टदेवसुतो ॥

झोडः । पुं । गुवाकवृक्षे ॥ इतिभूरिप्रयोगः ॥

ञः । पुं । ञकारे ॥ बलीवर्द्दे ॥ शुक्रे ॥ वाममतौ ॥ गायने ॥ घर्घरध्वनौ ॥ *॥*॥ इत्याद्रिगौडकुलोत्पन्नोडी चवाखमघ्याेपनामसुखारामसिश्रात्मजश्रीधर्मपतिमिश्रापरनाम्ना तस्यात्मीसहुवक्कुखावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्राह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ चवर्गः समाप्तिमितः ॥ १ ॥

तत् सत्

---

## टः

टः । पुं । टकारे ॥ वामने ॥ पादे ॥ निस्वने ॥ न । करङ्के ॥ टङ्कारे ॥ टगणे ॥

टक्कदेशीयः । पु । वास्तूकशाके ॥ इति त्रिकाण्डशेषः ॥

टक्कनामानः । पुभूम्नि । देशविशेषे । वाहीकेषु ॥ वाहीकाष्टक्कनामान इति हेमचन्द्रः ॥

टगणः । पुं । पञ्चदशभेदभिन्नेषु मात्रिके । यथा (ऽऽऽ शिवः १) (॥ऽऽ शशि. २) (।ऽ।ऽ दिनपतिः ३) (ऽ॥ऽ सुरपति. ४) (॥॥ऽ शेषः ५) (।ऽऽ। अहि. ६) (ऽ।ऽ। सरोजम् ७) (॥ऽ। धाता ८) (ऽऽ॥ कलिः ९) (॥ऽ॥ चन्द्रः १०) (।ऽ॥ ध्रुवः ११) (ऽ॥॥ धर्मः १२) (॥॥॥ शालिकर. १३) इति पञ्चभावे त्रयोदशभेदाः ॥

टगरः । पुं । टङ्कणक्षारे ॥ हेलाविभ्रमगोचरे ॥ त्रि । केकराक्षे ॥

टङ्कः । पुं । कोपे ॥ असिकोशे ॥ खड्गे ॥ शावदारणे । टाँकी इति भाषा ॥ चतुर्माषकस्वरूपेमाने । चतुर्थिंशतिरक्तिकारूपे वा ॥ दर्पे ॥ परशौ ॥ रानाशे ॥ पुं न । नीलकपित्थे ॥ खनित्रे ॥ टङ्कने ॥ टङ्कयति । टकि बन्धे । चुरादिः । अच् ॥ टम् इति शब्दम् कायति वा । कै० । आतो ऽनुपेतिकः सुधीति वा ॥

टङ्ककः । पुं । रजतमुद्रायाम् । रूप्या इति भाषा इत्यमरटीका सारसुन्दरी ॥

टङ्कपतिः । पुं । रूप्याध्यक्षे ॥

टङ्कशाला । स्त्री । रजतमुद्रागृहे । टकशाल इति भाषा ॥ इत्यमरटीका सारसुन्दरी ॥

टङ्कटीकः । पुं । शिवे ॥ इतित्रिकाण्ड शेषः ॥

टङ्कणः । पुं । न । रसशोधने । मालती तीरजे । लोहद्रावणि । सुहागाइति प्रसिद्धे क्षारे ॥ टङ्कणं वज्रिकं द्रूतं कफघ्नं क्षारदीप्तिकृत् ॥ टङ्कयतेस्युंट् । पृषोदरादिः ॥

टङ्कनम् । न । टङ्कणे ॥

टङ्का । स्त्री । जङ्घायाम् । टांग इति भाषा इतिमेदिनी ॥

टङ्कानकः । पुं । श्यामाकवृक्षे ॥

टङ्कारः । पुं । विस्मये । प्रसिद्धौ । ज्याध्वनौ ॥ टमितिशब्दं करोति कृ । अण् ॥

टङ्कारी । स्त्री । टेंकारी इति गौड प्रसिद्धे क्षुपविशेषे ॥ टङ्कारी वातजित् तिक्ता श्लेष्मघ्नी दीपनी लघुः । शोथोदरव्ययकृन्नी हिता प्लीह विसर्पिणाम् ॥

टङ्कः । पुं । न । खनित्रे ॥ खड्ग विशेषे । असौ ॥ जङ्घायाम् । टांगइतिभाषा ॥

टङ्कणः । पुं । न । टङ्कणे ॥ इति ।

टङ्कनः । पुं । न । राजवल्लभः ॥

टङ्किनी । स्त्री । पाठायाम् । अम्बष्ठायाम् । आकनादी इति गौडभाषा ॥

टङ्गी । स्त्री । जीवन्त्याम् । छिरहटी इतिविख्याता इतिभाषा ॥

टट्टरी । स्त्री । अनृतवाक्ये । भेरी वाद्ये । टरटर इति भाषा ॥ लम्पटे ॥ पटहवाद्ये ॥

टट्टरः । पुं । भेरीरावे ॥

टलनम् । न । विक्लवे ॥

टवर्गः । पुं । टादिपञ्चवर्णेषु ॥

टवर्गीयः । पुं । टवर्गस्येवर्णे । वर्गान्तत्वात् छः ॥

टा । स्त्री । पृथिव्याम् ॥

टाङ्कनम् । न । मद्यभेदे ॥

टाङ्करः । पुं । नागवीटे ॥

टारः । पुं । रङ्के ॥ तुरङ्गे ॥ षण्ढे ॥

टिटिभः । पुं ।
टिटिभकः । पुं । } टिट्टिभे ॥

टिट्टिभः । पुं । टटीहरी इति भाषा प्रसिद्धे कोयष्टिखगे । टीठि इति गौड भाषा ॥ टिट्टि शब्दं भाषते । टिट्टि शब्देन भाति वा । अन्ये शोपीतिडः ॥ दानवविशेषे ॥

टिट्टिभकः । पुं । कोयष्टिके । टिट्टिभे ॥ स्वार्थे कन् ॥

टिण्टिणिका । स्त्री । अम्बुशिरीषिकायाम् ॥

टिण्डिशः । पुं । डिंडसी इतिटिण्डाइति च भाषायांप्रसिद्धे फलशाकविशेषे मुनिनिर्मिते । रोमशफले । डिण्डिशे ॥

डङ्गारी। स्त्री। डङ्गरीफले ॥

डण्ड.॥ पुं। डंडारीतिख्याते मत्स्ये ॥ डण्डमत्स्यो रसे तिक्तः पित्तं रक्तं कफं हरेत्। वातसाधारणः मोक्तःगुरुः मतो बलवर्द्धनः॥

डमः। पुं। चाण्डाल्यां लेटाख्याते डोम इति मसिद्धेऽन्त्यजे ॥

डमरः। पुं। अशङ्कनकलहे। विप्लवे। धाकाहुलुगटनादि। डाका इतिभाषा इतिचभाषा॥ परचक्रादिभये॥न। भीषयापक्वायने। मृगालिकायाम्॥ डम इतिशब्दस्य दानम्। दा०। वा हुलकात् घञर्थेकः॥

डमरुः। पुं। वाद्यभेदे। कापालिक योगिवाद्य॥ चमत्कारे॥ डमिति शब्द मियर्त्ति। मृगव्यादित्वादुः कुः। गणपाठादेवगुणः॥

डयनम्। न। पुष्पकाख्यविमाने यानविशेषे। कर्णीरथे। चौडोल इतिख्याते॥ डीयते ऽनेन। डीङ् विहाय सागतौ। ल्युट्। नभोगतौ॥

डल्लकम्। न। वंशादिरचितेपात्र विशेषे। डगरा डाला छबरा छाबी इतिभाषा॥ नियतञ्च पणैश्चाधिकं डल्लकं वस्त्रसंयुतम्। समोज्यं सोपवीतञ्च सोपहारं मनोहर मितिब्रह्म वैवर्त्तप्रकृतिखण्डम्॥

डवित्थः। पुं। काष्ठमये मृगे॥ डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगइति सुमर्दव्याकरणोक्तेः॥

डहुः। पुं। लकुचे। लिकुचे। बडहल इतिमसिद्धेवृक्षे॥ दहति तोयङ्गि वा। दहभस्मी करणे। मुचिर्दिर्न वा। मृगव्वादिषु निपातितः॥

डा। स्त्री। डाकिन्याम्॥

डाकिनी। स्त्री। कालीगणविशेषे॥ डाकानांसमूहे। खलादित्वादिनिः॥

डाङ्गरी। स्त्री। डङ्गरीफले॥

डामरः। पुं। चमत्कारे। शिवोक्तषड्विधे ग्रन्थविशेषे॥ तेषांनामानि श्लोकसङ्ख्याश्चोक्तावाराहीतन्त्रे। यथा। डामरः षड्विधोज्ञेयः प्रथमो योगडामरः। श्लोकास्तत्र त्रयस्त्रिंशत् तथापञ्चशतानि च। त्रिविंशतिसहस्राणि श्लोकानिचैवसङ्ख्यया॥ १॥ एकादशसहस्राणि सङ्ख्याताः शिवडामरे। श्लोकाः सप्तैवनिर्दिष्टाः ईश्वरेणैवभाषिताः॥ २॥ तावच्छ्लोकसहस्राणि पञ्चश्लोकशतानि च। गुणोत्तराणि दुर्गाया डामरे कथितानि च॥ ३॥ नवश्लोकसहस्राणि नवश्लोकशतानि च। सारस्वते तथा श्लोकाः पञ्चैवपरिकीर्त्तिताः॥ ४॥ स्वरसङ्ख्यासहस्राणि श्लोका

नो ब्रह्मयामले । पञ्चोत्तरशतान्यत्र सङ्ख्यातानि शिवेन तु ॥ ५ ॥ षष्टिः श्लोकसहस्राणि गान्धर्वडामरोत्तमे । श्लोकाश्चयष्टिसङ्ख्याता ब्रह्म ॥ यामलयोर्मिलेति ॥ तथाहि । योगडामरः २३५३३ । शिवडामरः ११००७ । दुर्गाडामरः ११५०२ । सारस्वतडामरः ९९०५ । ब्रह्मडामरः ७१०५ । गन्धर्वडामरः ६००६० ॥ इति ॥ भूतडामराद्योऽप्यस्ति ॥ भूतानां डामरश्चमत्कारोऽत्रेति निर्वचनात् ॥ चमरे ॥

डाहलः । पुं । चैद्य । चेदिदेशे ॥

डाहुकः । पुं । दात्यूहखगे ॥

डिङ्करी । स्त्री । दिक्कर्योम् ॥

डिङ्गरः । पुं । डङ्गरे ॥ क्षेपे ॥ खले ॥ धूर्ते ॥ सेवके ॥

डिण्डिमभाण्डम् । नं । वाद्यविशेषे ॥ पटहमृदङ्गकरटाः समेता यत्र वाद्यन्ते तानि डिण्डिमभाण्डानीति व्याख्यानात् ॥

डिण्डिमः । पुं । ढोंडी इतिख्याते वाद्यभेदे ॥ यथा । श्लोकार्द्धेन च यत्प्रोक्तं तदुक्तं ग्रन्थकोटिभिः ॥ ब्रह्म सत्यं जगन्मिथ्येत्येष वेदान्तडिण्डिमः ॥ गजघण्टानादे ॥ यथा । मतिरेव बला द्गरीयसी तदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ पामीवामलके ॥ डिण्डि इति शब्दं मिनोति प्रकाशयति । डुमिञ् ० । डः ॥

डिण्डिरः । पुं । समुद्रफेने ॥

डिण्डिशः । पुं । डिंडसी ढेंडस टिण्डा इत्यादि भाषाप्रसिद्धे मुनिनिर्मिते । रोमशफले ॥ डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः । सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥ * ॥ निष्कोषबीजं स्वतिमृष्टखण्डं सहिङ्गुकं प्रोज्झितचण्डगन्धम् । स्नेहे प्रतप्तं चणकैर्विदग्धं रुचिप्रदं डिण्डिशकं सपिण्डम् ॥

डिण्डीरः । पुं । अब्धिकफे । समुद्रफेने ॥ डिण्डि इति शब्दम् ईरयति । ईरगतौ कम्पने च । अच् । अण्वा ॥

डिण्डीरमोदकम् । नं । गृञ्जने ॥

डित्थः । पुं । काष्ठमये गजे ॥ डित्थः काष्ठमये हस्ती डवित्थस्तन्मये मृगः इति सुपद्मव्याकरणोक्तेः ॥ विशेषलक्षणयुक्तपुरुषे ॥ यथा । श्यामरूपो युवा विद्वान् सुन्दरः प्रियदर्शनः । सर्वशास्त्रार्थवेत्ता च डित्थ इत्यभिधीयते इति कलापटीका ॥

डिमः । पुं । नाटकस्य रूपकविशेषे ॥

डिम्बः । पुं । भयध्वनौ ॥ अण्डे ॥ पु-

फुसे ॥ प्रीहनि ॥ विप्रवे । समरे । प्रायस्त कलहे ॥ एरण्डे ॥ भये ॥ डिम्बनम् । डिविनोदे । घञ् ॥

डिम्बाहवः । पुं । भूभृताशून्ये युद्धे ॥

डिम्बिका । स्त्री । जलविम्बे ॥ शोणके वृक्षे ॥ कामुकस्त्रियाम् ॥

डिम्भः । त्रि । बालिशे । वैधेये ॥ बाले । शिशौ ॥ डिम्भयति । डिभिसंघाते । चुरादिः । पचाद्यच् ॥ डिम्भ्यते वा घञ् ॥ बलाहृपामारे डिम्भो पीतिति हैमपर्कोषः ॥

डिम्भकः । पुं । डिम्भे ॥ स्वार्थे कः ॥

डिम्भचक्रम् । न । स्वरोदयोक्ते नराणां शुभाशुभनिर्णायके चक्र वि० ॥ यथा । डिम्भचक्रे न्यसेद्भानि भानुभादिविलग्नके । मुखेपीशि ऋयंस्कन्धे चैकैकं बाहुहस्तयोः ॥ हृदिपञ्च नाभिगुह्ये चैकैकं षट् च जानुनोः । चरणाभ्यां तथैकैकं जन्मर्क्षं पतनात् फलम् ॥ शीर्षे क्षेत्रलाभः स्यात् वक्त्रे मिष्टान्नभोजनम् । स्कन्धे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥ पाणिभ्यां तस्करो लक्ष्मीर्हृदयायुश्च नाभितः । गुह्ये कामी भ्रमो जान्वोः अल्पजीवी च पादयोरिति स्वरोदयः ॥

डिम्भा । स्त्री । स्तनपायाम् ॥ टाप् ॥

डीनम् । न । पक्षिगतिप्रभेदे पतनमात्रे ॥ आर्षपर्वविशेषोऽस्याष्टधा ॥ आगमशास्त्रविशेषे । यथा । डामरे । डमरं डीनं श्रुतं कालीविलासकम् । सप्तकोटि महायन्त्रा संभवन्त्यादि निर्गताः ॥ इति मुण्डमालातन्त्रम् ॥ डयनम् । डीङ् विहायसागतौ । नपुंसके भावे क्तः । स्वादय ओदितः । ओदितश्चेति निष्ठातस्य नः ॥

डीनडीनकम् । न । खगानां गतिक्रियाविशेषे ॥ तेषां पतनं निर्विशेषकं कुत्सितञ्च डीनडीनकपदवाच्यम् ॥

डीनावडीनम् । न । पक्षिणां गतिविशेषे ॥ तत्तु एकस्यां गतौ गत्यन्तरमिश्रणम् ॥ अधःकुत्सितगमनञ्च ॥

डीयमानः । त्रि । आकाशं प्रत्युत्पतति ॥

डुण्डुः । पुं । डुण्डुभसर्पे ॥

डुण्डुभः । पुं । राजिलसर्पे ॥ डुण्डुरित्यनुकरणशब्दः । तम् भषति तेन भातीति वा । अन्येभ्योपीति डः ॥ यद्वा । डल्यते । डलविलासे । घञ् । डलयोरेकत्वम् । डभति । डभपूरणे । इगुपधेतिकः । डण्डश्चासावुभश्च । पृषोदरादिः ॥ द्विमुखो डुण्डुभः स्मृतः ॥

डुण्डुलः । पुं । क्षुद्रोलूके । पिङ्गले । इत्यमरः ॥

डुलिः । स्त्री । कमठ्याम् ॥ डोलयति । डुल उत्क्षेपे । इगुपधादिति किः ॥

डुलिका । स्त्री । खञ्जनाकृतिपक्षि-विशेषे ॥

डुली । स्त्री । चिल्लीशाके ॥

डोडिका । स्त्री । सुमपुष्प्याम् । करेल्ला इति प्रसिद्धे फलशाकविशेषे ॥ डोडिकापुष्टिदा वृष्या वच्या वह्निप्रदा लघुः । हन्ति पित्तकफार्शांसि कृमिगुल्मविषामयान् ॥ * ॥ बालं डोडीफलं सविकलं स्विन्नमीषच्च तोये स्नेहे हिङ्गुप्रचयिमिलिते चेत्सवारेण सिद्धम् ॥ गव्यं तस्मै कथित-मिह ये साधितं रामठेन खादन् खादन् निभृतसमतं निन्दितभोक्तृभिः कैः ॥ * ॥ सन्धूकशुष्कतरणेःप्रतापात् प्रतप्त माल्ये नवडोडिशाकम् । सचैन्धवं रामठयुक्तमत्त खादन्नरो निन्दति व्यञ्जनानि ॥ डोडिका वातला रूक्षा शीता गुर्वी विपाकता । सुस्विन्ना रोचनी हृद्या अस्विन्ना कण्ठकर्त्तरी ॥

डोडी । स्त्री । डोडिकायाम् ॥ क्षुपविशेषे । जीवन्त्याम् । सुखालुकायाम् ॥

डोमः । पुं । स्वनामख्याते ऽस्पृश्यजातौ ॥ यथा । चण्डालश्चैव डोमश्च । प्लानकस्तथा इति । दण्डीरश्चैव भण्डीरो मूषुण्डश्च इयाम्बमी ॥ ह-यामुण्डी लिङ्गधारीसेमापते यश्च स्त्रिनि । स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेदिति मत्स्यसूक्ततन्त्रे ३९ पटलः ॥

डोरम् । न । } हस्तादिबन्धनसूत्रे ॥
डोरकम् । न । }

डोरडी । स्त्री । वृहत्याम् ॥ इति राजनिर्घण्टः ॥

ढः

ढः । पुं । ढकारे ॥ ढक्कायाम् ॥ शुनि ॥ श्वलाङ्गूले ॥ निर्गुणे ॥ ध्वनौ ॥ ढगणे ॥

ढक्का । स्त्री । यशःपटहे ॥ ढगिलिका इति । कैशब्दे । भाषाइति च ॥

ढक्कारी । स्त्री । तारिणीदेव्याम् ॥

ढगणः । पुं । भेदत्रयविशिष्टे त्रिमात्रिके ॥ यथा । (ıs ध्वज. १) (ऽıलाभः २) (ııı तातडवम् ३) इति ॥

ढालम् । न फलके ॥

ढाली । त्रि । चर्म्मिणि ॥

ढामरा । स्त्री । हंस्याम् ॥

ढुण्ढिः । पु । श्रीगणेशविशेषे ॥ यथा । अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः

सर्वार्थढुण्ढिसतया भवढुण्ढिनामा । काशीप्रवेशमपि कोऽलभतेऽत्र देही तोषं विना तव विनायक ढुण्ढिराज ॥ इति काशीखण्डगणेशं प्रति शिववाक्यम् ॥

ढोल: । पुं । स्वनामख्यातवाद्यविशेषे ॥

णः

णः । पुं । णकारे ॥ बुद्धदेवताविशेषे । बिन्दुदेवे ॥ भूषणे ॥ गुणवर्जिते ॥ पानीयनिलये ॥ निर्णये ॥ ज्ञाने ॥

ण्यः । पुं । ब्रह्मलोकस्थे समुद्रोपमे सरोविशेषे ॥

* ॥ * ॥ इत्यादिगौडकुलोत्पन्नोदीच्यज्ञातिप्रधानोपनामतुलारामविमिश्रात्मजश्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकृष्णावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण मान्धावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ टवर्गः समाप्तः ॥ १ ॥ * ॥ * ॥ * ॥ * ॥ * ॥



तत् सत्

तः

तः । पुं । तकारः ॥ चौरे ॥ अन्तर्हे ॥ पुच्छे ॥ क्रोडे ॥ म्लेच्छे ॥ रत्ने ॥ सुगते ॥ योधे ॥ गौरविवर्जितपुच्छे ॥ क्रोडपुच्छे ॥ स्त्री । न । तरणे ॥ पुण्ये ॥ तटति । तट उच्छ्राये । डः ॥

तकिलः । त्रि । धूर्ते ॥

तकिला । स्त्री । औषधे ॥

तक्रम् । न । चतुर्थांशजलसंयुक्ते दधिनि । गोरसजे । दण्डाहते । मथिते ॥ तत्पञ्चविधम् ॥ यथा । ससरं निर्जलं घोलं मथितं त्वसरोदकम् । तक्रं पादजलं प्रोक्तं मुदश्विच्चार्द्धवारिकम् ॥ छच्छिकासारहीनाच्छा दच्छाप्रचुरवारिका ॥ * ॥ तुर्यांशेन जलेन संयुतमतिस्थूलं सदर्शं दधि मायो माहिषमंशुकेन विमले सद्भाजने गालयेत् । भृष्टं हिङ्गु च जीरकञ्च लवणं राजी च किञ्चिन्मितां पिष्ट्वा तत्र विमिश्रयेद्भवति सत् तक्रं नकस्यप्रियम् ॥ अस्य गुणा यथा । तक्रं रुचिकरं वह्निदीपनं पाचनं परम् । उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ॥ अपि च । तक्रं ह्यम्लकषायाम्लं स्वादु

पाकरसं लघु । वीर्योष्णं दीपनं ह-
द्यं प्रीणनं वातनाशनम् ॥ ग्रहण्या-
दिमतां पथ्यं भवेत् संग्राहिलाघवा-
त् ॥ * ॥ किञ्चित् स्वादुविपाकित्वाच्च
पित्तप्रकोपनम् । कषायोष्णविका-
शित्वाद्रौक्ष्याच्चापि कफापहम् ॥ न
तक्रसेवी व्यथते कदाचित् न तक्रदग्धाः
प्रभवन्ति रोगाः । यथा सुराणाममृ-
तं सुखाय तथा नराणां भुवि तक्रमा-
हुः ॥ समुद्धृतघृतं तक्रं पथ्यं लघु विशे-
षतः । स्तोकोद्धृतघृतं तस्माद् गुरु वृ-
ष्यं कफापहम् ॥ अनुद्धृतघृतं सा-
न्द्रं गुरु पुष्टिकफप्रदम् ॥ * ॥ वाते
ऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् ।
पित्ते स्वादु सितायुक्तं सव्योषं स-
र्जिकं कफे ॥ * ॥ हिङ्गुजीरयुतं घोलं सै-
न्धवेन सुसंयुतम् । भवेदतीव वातघ्न-
मर्शोऽतीसारहृत् परम् ॥ रुच्यं पुष्टि-
दं बल्यं वस्तिशूलविनाशनम् । मूत्र-
कृच्छ्रे तु सगुडं पाण्डुरोगे सचित्र-
कम् ॥ शीतकालेऽग्निमान्द्ये च तथा
वातामयेषु च । अरुचौ स्रोतसां रो-
धे तक्रं स्यादमृतोपमम् ॥ तत्तु ह-
न्ति गरच्छर्द्दिप्रसेकविषमज्वरान् ।
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्द-
रान् ॥ मेहं गुल्ममतीसारं शूल-
प्लीहोदरारुचीः । श्वित्रकोष्ठगतव्या-



धीन् कुष्ठशोथतृषाकृमीन् ॥ नैव त-
क्रं क्षते दद्यान्नोष्णकाले न दुर्बले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्त-
पैत्तिके ॥ * ॥ यान्युक्तानि दधीन्य-
ष्टौ तद्गुणं तक्रमादिशेत् ॥ यथाग्नि-
जातकीरवाः । तक्रमासंकर्ष कोष्ठे ह-
न्ति कण्ठे करोति च । पीनसश्वासका-
सादौ पक्वमेव प्रयुज्यते ॥ तक्यति
तक्यते वा । तक हसने । स्फायितञ्ची-
तिरक् । व्याघ्रादिः ॥

तक्रकूर्चिका । स्त्री । छाना इति गौड-
भाषाप्रसिद्धे दुग्धविकृतौ ॥ उष्ण-
दुग्धे तक्रयोगात् जाता स्यात् तक्र-
कूर्चिका ॥ तक्रेण सह पक्वे क्षीरे ॥
तक्रेणापक्वं यत् क्षीरं तामेव तक्र-
कूर्चिकेति ॥

तक्रपिण्डः । पुं । क्षीरविकृतौ ॥ दध्ना
तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ।
द्रवभागेन हीनं यत् तक्रपिण्डः स-
उच्यते ॥

तक्रमांसम् । न । मांसप्रकारविशेषे ॥
यथा । पाकपात्रे घृतं दत्त्वा हरिद्रा-
हिङ्गुभर्जयेत् । छागादेः सकलाप्या-
ऽपिखण्डान्यष्टौ च भर्जयेत् ॥ सिद्धि-
योग्यं जलं दत्त्वा पचेन्मृदुतरं य-
था । राजिकादियुते तक्रे मांसखण्डा-
न्निधापयेत् ॥ तक्रमांसन्तु भारतं स

कृमृस्फुटितनिताडिभ्यउलच् । तण्डस्यादेशः ॥ विडङ्गे ॥ अल्पमारिषे ॥

तण्डुलपरीक्षा । स्त्री । नवविधदिव्यान्तर्गतदिव्यविशेषे ॥

तण्डुला । स्त्री । यवासमञ्ज्ञायाम् ॥ विडङ्गे ॥

तण्डुलाम्बु । न । तण्डुलाम्बुनि । तण्डुलोदके ॥

तण्डुलिकाश्रमः । पुं । तीर्थविशेषे ॥

तण्डुली । स्त्री । यवतिक्ताख्यलतायाम् ॥ ग्रामाखुस्याम् ॥ तण्डुलीयशाके ॥

तण्डुलीकः । पुं । अल्पमारिषे ॥

तण्डुलीयः । पुं । मेघनादे । अल्पमारिषे । तण्डुलीये । सुशाके । चौलाइ इतिभाषा ॥ तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित् । सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः ॥ तण्डुलायहितः । विभाषाच विरूपादिभ्य इति छः ॥ विडङ्गतरौ ॥ ताप्ये ॥

तण्डुलीयकः । पुं । तण्डुलीयशाके ॥ विडङ्गे ॥ स्वार्थे कन् ॥

तण्डुलीयिका । स्त्री । } विडङ्गे ॥
तण्डुलुः । पुं । }

तण्डुलेयः । पुं । } तण्डुलीयशाके ॥
तण्डुलेरः । पुं । }

तण्डुलोत्थम् । न । तण्डुलाम्बुनि ॥

तण्डुलोदकम् । न । तण्डुलाम्बुनि ॥ यथा । जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्मणीति वैद्यकपरिभाषा ॥

तण्डुलौघः । पुं । वेटवंशे ॥ तण्डुलसमूहे ॥

तण्डुल्यः । पुं । तण्डुलीयशाके ॥ तण्डुलायहितः । विभाषाहविरपूपादिभ्य इति यत् ॥

तण्डुवीक्षः । पुं । कीटभावे ॥ न । तण्डुलोदके ॥ त्रि । अर्बुदे ॥ इति मेदिनिकरः ॥

तत् । अ । ग्लैतौ ॥ तनोति । तनु विस्तारे । क्विप् ॥ गमादीनामिति अनुनासिकलोपे तुक् ॥

ततम् । न । वीणादिवाद्ये ॥ पुं । वायौ ॥ त्रि । व्याप्ते ॥ विस्तृते । पृथौ ॥ तन्यते । तन् । तनिमृङ्भ्यां किच्चेति तनोतेरसुन् ॥ बन्धसंज्ञा वा । तनु । क्त । अनुदात्तोपदेशेति नलोपः ॥

ततपत्री । स्त्री । कदलीवृक्षे ॥

ततमः । त्रि । बहुषु मध्ये एकस्मिन् ॥

ततरः । त्रि । द्वयोर्मध्ये एकस्मिन् ॥

ततवत् । त्रि । विस्तारयुक्ते ॥

ततः । अ । आदौ ॥ परिप्रश्ने ॥ मान

ऽकृञ्जुटितमितादिभ्यउच् । तण्ड- लादेश. ॥ विडङ्गे ॥ अल्पमारिषे ॥

तण्डुलपरीक्षा । स्त्री । नवविधदिव्यान्तर्गतदिव्यविशेषे ॥

तण्डुला । स्त्री । अप्रभासमङ्गायाम् ॥ विडङ्गे ॥

तण्डुलाम्बु । न । धौताम्बुनि । तण्डुलोदके ॥

तण्डुलिकाश्रमः । पुं । तीर्थविशेषे ॥

तण्डुली । स्त्री । यवतिक्ताख्यलतायाम् । ॥ ग्रेयाण्डुल्याम् ॥ तण्डुलीयशाके ॥

तण्डुलीकः । पुं । अल्पमारिषे ॥

तण्डुलीयः । पुं । मेघनादे । अल्पमारिषे । तण्डुलीये । शाके । चौंलाई इति भाषा ॥ तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित् । सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः ॥ तण्डुलाय हितः । विभाषाह विरूपादिभ्य इति छः ॥ विडङ्गत दौ ॥ तार्प्ये ॥

तण्डुलीयकः । पुं । तण्डुलीयशाके ॥ विडङ्गे ॥ स्वार्थे कन् ॥

तण्डुलीबिका । स्त्री । }
तण्डुलुः । पुं । } विडङ्गे ॥

तण्डुलेयः । पुं । }
तण्डुलेरः । पुं । } तण्डुलीयशाके ॥

तण्डुलोत्यम् । न । तण्डुलाम्बुनि ॥

तण्डुलोदकम् । न । तण्डुलाम्बुनि ॥ यथा । कर्षमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्मणीति वैद्यकपरिभाषा ॥

तण्डुलौघः । पुं । वेणुवंशे ॥ तण्डुलसमूहे ॥

तण्डुल्यः । पुं । तण्डुलीयशाके ॥ तण्डुलाय हितः । विभाषाहविरपूपादिभ्य इति यत् ॥

तण्डुमीक्षा । पुं । कीटभावे ॥ न । तण्डुलोदके ॥ त्रि । बर्बरे ॥ इति मेदिनीकरः ॥

तत् । च । हेतौ ॥ तनोति । तनुविस्तारे । क्विप् । गमादीनामिति वक्तव्ये अनुनासिकलोपे तुक् ॥

ततम् । न । वीणादिवाद्ये ॥ पुं । वायौ ॥ त्रि । व्याप्ते ॥ विस्तृते । वृषौ ॥ तन्यते । तनु० । तनिमृङ्भ्यां किच्चेति तनोतेःक्तन् ॥ तन्यतेऽस्मै वा । तनु० । क्तः । अनुदात्तोपदेशेति नलोपः ॥

ततपत्री । स्त्री । कदलीवृक्षे ॥

ततमः । त्रि । बहुषु मध्ये एकस्मिन् ॥

ततरः । त्रि । द्वयोर्मध्ये एकस्मिन् ॥

ततवत् । त्रि । विस्तारयुक्ते ॥

ततः । अ । आदौ ॥ परिणामे ॥ आन

प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनि-
र्णयवादजल्पवितण्डाहेत्वाभासच्छ-
लजातिनिग्रहस्थानानां तत्त्वज्ञा-
नान्निःश्रेयसाधिगमः । इति गौतमः ॥
अनारोपितवस्तुप्रत्यये ॥ इदं सर्वं दे-
हजातमहमिति यच्चिदानन्दात्मनि मा-
ययाकल्पितं तत्सर्वं मृषैव आत्मैव क-
परमार्थसत्यः सच्चिदानन्दोऽहमेव
अस्मीति परिज्ञाने ॥ तत्त्वज्ञानम् ॥

तत्त्वज्ञानार्थदर्शनम् । क्ली । तत्त्वज्ञाना-
र्थस्यालोचने ॥ तत्त्वज्ञानस्य ब्रह्मा-
स्मीति साक्षात्कारस्य वेदान्तवाक्य क-
रणकस्य आमानित्वादिसर्वसाधनप-
रिपाकफलस्य अर्थः प्रयोजनमविद्या
तत्कार्यात्मकनिखिलदुःखनिवृत्तिरू-
पः परमानन्दावाप्तिरूपश्च मोक्षः
तस्य दर्शनम् आलोचनम् । तत्त्वज्ञा-
नफलालोचनेहि तत्साधने प्रवृत्तिः
स्यात् ॥

तत्त्वतः । अ । यथावदर्थे ॥

तत्त्वदर्शी । त्रि । वस्तुयाथात्म्यदर्शनशी-
ले ब्रह्मविदि कृतसाक्षात्कारे ॥ त-
त्त्वं वस्तुनो याथात्म्यम् तद्द्रष्टुं शीलं य-
स्य । णिनिः ॥

तत्त्वभावः । पुं । नेतिनेतीत्यादिश्रुति-
निर्दिष्टे विदिताविदिताभ्यामन्यस्मि-
न्नद्वयस्वभावे ॥



तत्त्वविचारः । पुं । भूतार्थचिन्तायाम् ॥

तत्त्वविद् । त्रि । स्वरूपविदि । याथात्म्य-
विदि । ब्रह्मविदि ॥ शैवे ॥ शैवोहि
आत्मविद्याशिवा इति सम्प्रेषणश्रु-
चितत्त्वानि सर्वं जगत्प्रपञ्चकारणी-
तिमन्यते ॥ तत्त्वं स्वरूपं सकलसंसा-
रधर्मविवर्जितं सच्चित्सुखरूपं ब्रह्माह-
मस्मीति वेत्ति जानातीति तत्त्ववित् ॥

तत्पत्नी । स्त्री । तस्य पत्न्याम् ॥

तत्पदलक्ष्यार्थः । त्रि । अज्ञानादिसम-
ष्ट्युपाध्युपहिताधारभूतेऽनुपहित-
चैतन्ये । चिदेकरसरूपिणि ॥

तत्पदवाच्यः । त्रि । तत्पदाभिधेये ॥

तत्पदवाच्यार्थः । त्रि । अज्ञानादिसम-
ष्टिः एतदुपहितसर्वज्ञत्वादिविशि-
ष्टचैतन्यम् एतदनुपहितचैतन्यञ्च
तत्त्रयं तप्तायःपिण्डवदेकत्वेनावभा-
समानं तत्पदवाच्यार्थो भवतीत्यु-
क्तत्वादित्यर्थः ॥

तत्पदाभिधः । त्रि । तत्पदवाच्ये ॥ मा-
योपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्ष-
णः । पारोक्ष्यशबलः सत्याद्यात्मक-
स्तत्पदाभिधस्त्वाहुः ॥

तत्पदार्थः । पुं । जगत्कारणे परमात्म-
नि ॥ यज्जगत्कारणं तत्त्वं तत्पदार्थः
स उच्यते ॥ तदिति पदस्य अर्थः ॥

तत्परः । त्रि । तद्रते ॥ आसक्ते ॥ तत्

परमुत्तमं यस्य । तेनपूर्यते वा । पू पालनपूरणयोः । कर्त्तरि अप् ॥
तत्परायणः । त्रि । तदासक्ते ॥
तत्पुरुषः । पुं । प्रायउत्तरपदार्थप्रधाने समासविशेषे ॥ स च द्वेधा । व्यधिकरणपदः समानाधिकरणपदः तत्पुरुषः पूर्वपदस्येति ॥
तत्फलः । पुं । कुवलये ॥ कुष्ठाख्यौषधौ ॥ चोरनामसुगन्धिद्रव्ये ॥
तत्र । अ । तस्मिन् । तत्समये ॥ सप्तम्याद्वित्तल् ॥ तस्यामवस्थायाम् ॥
तत्रत्यः । त्रि । तत्रभवे ॥ अव्ययात् त्यप् ॥
तत्रभवान् । त्रि । श्लाघ्ये । पूज्ये ॥ इतराभ्योऽपिदृश्यन्त इतिप्राग्दीव्यतीयः प्रथमार्थेत्रल् । सुप्सुपेतिसमासः ॥
तथा । अ । साम्ये ॥ अभ्युपगमे ॥ पृष्टप्रतिवाक्ये ॥ समुच्चये ॥ निश्चये ॥ तेन प्रकारेण । प्रकारवचनेथाल् । विभक्तित्वात् त्यदाद्यत्वम् ॥
तथागतः । पुं । बुद्धमुनौ । सुगते ॥ तथा सत्यं गतं ज्ञानं यस्य यथापुनरावृत्तिर्नभवति तथा तेनप्रकारेण गत इति तथागतः । सुप्सुपेतिसमासः । तथाच सुगतिसाधकतास्योक्ता भवति । तदुक्तंबौद्धागमे । यथागतास्ते मुनयः निर्वाणगतिं तथागतः सो



ऽपि तत्तस्तथागतइति ॥ त्रि । प्रकान्तगतिशालिनि ॥ तथाभूते ॥
तथाच । अ । पूर्वोक्तार्थदृढीकरणे ॥
तथाहि । अ । निदर्शने ॥ प्रसिद्धमेवेत्यर्थे ॥ तथाच हिच ॥
तथैव । अ । तद्वदेवेत्यर्थे ॥
तथ्यम् । न । सत्ये । ऋते ॥ त्रि । तद्वति ॥ तथा साधुः । तथासाधुरितियत् ॥
तद् । त्रि । पूर्वोक्ते बुद्धिस्थस्य परामर्शे । सो इतिभाषा ॥ तद्वक्तास्मादौ दृष्टः स इति कथ्यते ॥ विप्रकृष्टविषये ॥ स्त्री । सा ॥ न । तत् ॥ तद् । सत्यज्ञानादिलक्षणलक्षितस्य तत्त्वमस्यादिश्रुतिप्रसिद्धस्य ब्रह्मणो नाम्नि ॥ यथा । तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः । दानक्रियाश्चविविधाः क्रियन्ते मोक्षकाङ्क्षिभिरिति ॥ तदिति ब्रह्माभिधानमुच्चार्य्य फलमभिसन्धाय कर्म्मणः फलमित्यर्थः ॥ तनोति । तनु० । त्यजितनियजिभ्यो डिदित्यद्रिः ॥
तदनन्यत्वम् । न । तदभिन्नत्वे ॥ तस्मात् अनन्यत्वं नाम पृथक्सत्ताराहित्यम् ॥
तदन्यबाधितार्थप्रसङ्गः । पुं । दोषविशेषे ॥ यथा । धूमो यदि वह्निव्यभि

सच्चिदानन्दघने एव वाह्यसर्वविषयपरित्यागेन साधनपरिपाकात् पर्यवसिता बुद्धिरन्तःकरणवृत्तिः सा व्याक्षात्कारःतन्वायस्य स तथा ॥

तनयः । पिं । पुत्रे ॥ तनोति कुलम् तन्यते वा । तनु० । बहिमसिततनिभ्यःकयम् ॥

तनया । स्त्री । दुहितरि । पुत्र्याम् ॥ टाप् ॥ चक्रकुल्याख्यायां लतायाम् ॥ घृतकुमार्याम् ॥

तनिका । स्त्री । तनी इति भाषाप्रसिद्धे बन्धनरज्जौ ॥ यथा । विलासतनिका ॥

तनिमा । पुं । तनुत्वे । तानवे ॥ तनो भावः । पृथ्वादित्वात् इमनिच् ॥

तनिष्ठः । त्रि । क्षुद्रे ॥ अयमेषां मतिशयेनतनुः । अ तिशायने इष्ठन् ॥

तनीयान् । त्रि । अल्पे ॥ अयमनयोरतिशयेन तनुः । द्विवचनविभज्योपपदसु ॥

तनु । स्त्री । काये । शरीरे ॥ त्वचि ॥ स्त्रियाम् ॥ तनुः ॥ वोतोगुणवचनादिति पचितिकोङीषभावः ॥ त्रि । अल्पे ॥ विरले ॥ कृशे ॥ तनोति तन्यते वा । तनु० भृमृशीत्युः ॥ लघ्वे ॥

तनुकम् । न । त्वचे ॥ तनुसूत्र इति यावादिषु पाठात् कन् ॥

तनुचीरः । पुं । आम्रातके ॥

तनुच्छदः । पुं । वर्मणि ॥ तनुश्छाद्यते ऽनेन । छद० । पुंसिसंज्ञायामिति घः ॥

तनुच्छायः । पुं । आश्वबर्बुरकवृक्षे ॥ स्त्री । न । शरीरच्छायायाम् ॥ तनोश्छाया । विभाषासेनेति वा क्लीबत्वम् ॥

तनुजः । पुं । पुत्रे ॥ तनोर्जातः । जः ॥

तनुजा । स्त्री । पुत्र्याम् ॥ टाप् ॥

तनुत्रम् । न । वर्मणि । सन्नाहे ॥ तनुस्त्रायते । त्रैङ्० । आतोनुपेति कः ॥

तनुत्राणम् । न । कवचे । सन्नाहे ॥ शरीररक्षणे ॥

तनुत्वचा । स्त्री । तुहाग्निमन्थे ॥

तनुपत्रः । पुं । इङ्गुदीवृक्षे ॥

तनुभस्त्रा । स्त्री । नासिकायाम् ॥ तनोर्भस्त्रेव ॥ तन्वयीचर्मप्रसेविकायाम् । छोटी भायी इति छोटीमसक इतिच भाषा ॥

तनुभृत् । पुं । जीवे ॥

तनुमध्या । स्त्री । गायत्रीछन्द प्रभेदे ॥ त्यौचेत्तनुमध्या । य० सूर्येर्मुरञ्चोरत्यद्भुतरूपा । आस्तां मम चित्ते नित्यं तनुमध्या ॥

तनुरसः । पुं । घर्मे । स्वेदजले ॥ कल्प

रसे ॥ त्रि । तद्विशिष्टे ॥

तनुरुट् । न । रोमणि ॥

तनुरुहम् । न । तनुरुहे ॥ त्रि । तनौ रुहे ॥

तनुवातः । पुं । नरकविशेषे ॥

तनुत्रम् । न । वर्मणि । सन्नाहे ॥ तनुं त्रायते आच्छादयति । मूल० । कर्मण्यण् ॥

तनुबीजः । पुं । राजबदरे ॥

तनुव्रणः । पुं । वल्मीकरोगे ॥

तनुः । न । शरीरे ॥ तनोति तन्यते वा । तनु० । अर्तिपृवपियजितनिधनितपिभ्योनिदिति उसिप्रत्ययः । तनुषी तनूंषि ॥

तनुसञ्चारिणी । स्त्री । बालिकायाम् ॥

तनुसरः । स्वेदे ॥ तनोःसरति । सृ० अच् ॥

तनूः । स्त्री । काये । शरीरे ॥ तनोति तन्यते वा । तनु० । भृमृशीत्यु । प्राणिजातेरित्यूङ् ॥ कृषिचमितनिधनीत्यूर्धा ॥

तनूकृतः । त्रि । तष्टे । सूक्ष्मीकृते ॥ अतनुस्तनुःकारि । कृञः क्तः ॥

तनूजः । पुं । पुत्रे ॥ त्रि । शरीरजे ॥ तन्वाःजातः । पञ्चम्यामिति डः ।

तनूजनिः । पुं । पुत्रे ॥ तन्वाःजनिर्यस्य ॥

तनूजा । स्त्री । पुत्रिकायाम् ॥ टाप् ॥

तनूनपम् । न । आज्ये । घृते ॥ तन्वा जनंकृशं पाति । पा० । कः ॥

तनूनपात् । पुं । अग्नौ । पावके ॥ तनूं शरीरं न पातयति । नभ्राण्नपादिति निपातितः । तनूनपातौ । तनूनपातः ॥ तनूंस्यस्वरूपं न पाति रक्षति । आशुविनाशित्वात् इति तनूनपाच्छब्दन्तः । उगिदचामिति नुमि तनूनपान् तनूनपान्तौ तनूनपान्त इति वा ॥ तन्वा जनं कृशं पाति । तनूनपं घृतादि तद् अस्ति । अदोऽन इतिविट् । तनूनपात् तनूनपादौ तनूनपाद इति वा ॥ चित्रके ॥

तनूरुहम् । न । रोमणि ॥ पक्षिपक्षे । पतत्रे ॥ पुत्रे ॥ तन्वां रोहति । रु० । इगुपधेतिकः । मूर्धन्यावा ॥

तनूह्रदः । पुं । पायौ । गुदे ॥

तन्तिः । स्त्री । प्रसारितरज्ज्वाम् ॥ दामन्याम् ॥

तन्तुः । पुं । सूत्रे ॥ ग्राहे ॥ अपत्ये ॥ सन्ततौ ॥ तनोति तन्यते वा । तनु० । सितनीतितुन् ॥

तन्तुकाष्ठम् । न । तूल्याम् । तांतकाकाठ इति भाषा ॥

तन्तुकी । स्त्री । नाड्याम् ॥

तन्तुकीटः । पुं । कोषकारे । गुटिपोका इतिगौड भाषा । रेसमकाकीडा

इति भाषा ॥

तन्तुणः । पुं । ग्राहे । हाँगर इतिगौ-
ड़भाषा ॥

तन्तुनागः । पुं । ग्राहे ॥

तन्तुनाभः । पुं । लूतायाम् ॥

तन्तुनिर्य्यासः । पुं । तालवृक्षे ॥

तन्तुपर्व्व । न । परमेश्वरोपवीतदानति-
थौ । श्रावण्यां पूर्णिमायाम् ॥

तन्तुभः । पुं । सर्षपे ॥ तन्तुना भाति ।
भा० । सुपीतिकः ॥ वत्से ॥

तन्तुरम् । न । }
तन्तुलम् । न । } मृणाले ॥

तन्तुकी । स्त्री । सितापाके । चासनी
इतिभाषा ॥

तन्तुवापः । पुं । तन्त्रवाये । कुविन्दे ॥
तन्तून् वपति । टुवप्० । कर्म्मण्यण् ॥

तन्तुवाय । पुं । लूतायाम् ॥ तन्तून् व-
यति । वेञ्० । ह्वावामश्चेत्यण् ॥ त-
न्त्रवाये । कुविन्दे । कोष्टी इतितांती
इतिचभाषा ॥

तन्तुविग्रहा । स्त्री । कदल्याम् ॥

तन्तुशाला । स्त्री । गर्त्तिकायाम् । त-
न्तुवपनगृहे ॥ तन्तूनां शाला ॥

तन्तुसन्ततम् । न । ऊते । स्यूते । बुना
कपड़ा इतिभाषा ॥

तन्तुसारः । पुं । गुवाकवृक्षे ॥

तन्त्रम् । न । कुटुम्बकृत्ये ॥ सिद्धान्ते ॥



उत्तमौषधे ॥ प्रधाने ॥ तन्तुवाये ॥
परिच्छदे ॥ हेतौ ॥ उभयार्थ प्रयो-
जके । उभयोर्द्देशेनसकृत्प्रवृत्तौ ॥
इतिकर्त्तव्यतायाम् ॥ राष्ट्रे ॥ परच्छ-
न्दे ॥ करणे ॥ अर्थसाधके ॥ तन्तौ ॥
स्वराष्ट्रचिन्त याम् ॥ परिजने ॥ वाप
साधने । तन्तुवायशलाकायाम् ॥ त-
न्यन्ते तन्त्रा ऽस्मिन् । ष्ट्रन् ॥ प्रबन्धे
॥ शपथे ॥ धने ॥ गृहे ॥ वपनसाध-
ने ॥ कुले ॥ श्रुतिशाखादिभेदे ॥
शास्त्रविशेषे ॥ तल्लक्षणं यथा । स-
र्गश्च प्रतिसर्गश्च मन्त्रनिर्णयएवच ।
देवतानाञ्च संस्थानं तीर्थानां चैव
वर्णनम् ॥ तथैवाश्रमधर्मश्चविप्रसं-
स्थानमेवच । संस्थानञ्चैवभूतानां
यन्त्राणाञ्चैवनिर्णयः ॥ उत्पत्तिर्वि-
धानाञ्च तरूणांकल्पसंज्ञितम् । सं-
स्थानं ज्योतिषां चैव पुराणाख्यानमे-
वच ॥ कोषस्य कथनञ्चैव व्रतानांप-
रिभाषणम् । शौचाशौचस्यचाख्या-
नं नरकाणाञ्चवर्णनम् ॥ हरचक्रस्य
चाख्यानं स्त्री पुंसोश्चैवलक्षणम् ।
राजधर्मो दानधर्मः युगधर्म स्तथैव
च ॥ व्यवहारः कथ्यतेच तथाचाध्या-
त्मवर्णनम् । इत्यादिलक्षणैर्युक्तं
तन्त्रमित्यभिधीयते ॥ * ॥ अथतस्य
माहात्म्यम् । विष्णुर्वरिष्ठोदेवानां ह्र-

ह्रानामुदधिस्तथा । नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः ॥ अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा नरः । देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा ॥ तथा समस्तशास्त्राणां सन्त्रशास्त्रमनुत्तमम् । सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम् ॥ कीर्त्तितं देवदेवस्य वक्त्रपद्मसमेयव । पावनं श्रद्धधानानामिहलोके परत्र चेति ॥ तच्च चतुःषष्टिसंख्यकम् । यथा । सिद्धीश्वरं महातन्त्रं कालीतन्त्रं कुलार्णवम् । ज्ञानार्णवं नीलतन्त्रं फेत्कारी तन्त्रमुत्तमम् ॥ देव्यागममुत्तराख्यं श्रीक्रमं सिद्धियामलम् । मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा ॥ वाराहीतन्त्रं देवेशि योगिनीतन्त्रमुत्तमम् । गणेशविमर्षिणी तन्त्रं नित्यातन्त्रं शिवागमम् ॥ चामुण्डा च महेशानि मुण्डमालाख्यतन्त्रकम् । हंसमाहेश्वरं तन्त्रं निरुत्तरमनुत्तमम् ॥ कुलप्रकाशकं देवि कल्पं गान्धर्वकं शिवे । क्रियासारं निबन्धाख्यं स्वतन्त्रतन्त्रमुत्तमम् ॥ सम्मोहनं तन्त्रराजं ललिताख्यं तथा शिवे । राधाख्यं मालिनी तन्त्रं

वृहच्छ्रीक्रम



द्रेश्वरतन्त्रञ्च मालिनीविजयं तथा ॥ समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम् । योगिनी हृदयं तन्त्रं भैरवं परमेश्वरि ॥ सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशि नवरत्नेश्वरं तथा ॥ कुलचूडामणितन्त्रं भावचूडामणीयकम् । मन्त्रदेवप्रकाशञ्च कामाख्या नमकं तथा ॥ कामधेनु कुमारी च भूतडामरसंज्ञकम् । मालिनीविजयं तन्त्रं यामलं ब्रह्मयामलम् ॥ विश्वसारं महातन्त्रं महाकालं कुलामृतम् । कुलोड्डीशं कुब्जिकाख्यं यन्त्रचिन्तामणीयकम् ॥ एतानि तन्त्ररत्नानि सफलानि युगे युगे । कालीविलासकादीनि तन्त्राणि परमेश्वरि ॥ कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु । महाचीनादितन्त्राणि कलिकाले महेश्वरि ॥ सुसिद्धानि वरारोहे रथक्रान्तासु भूमिषु इति सिद्धिसारस्वतम् ॥ ४ ॥ अपिच । चतुःषष्टि ■ तन्त्राणि यामलादीनि पार्वति । सफलानीह वाराहे विष्णुक्रान्तासु भूमिषु ॥ कल्पभेदेन तन्त्राणि कथितानि च यानि च । पापण्ड मोहनार्थैव विफलानीह सुन्दरीति ॥ विश्वसारतन्त्रम् ॥ चि। आयत्ते

॥ साङ्ख्यादिशास्त्रविशेषे ॥ तन्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति व्युत्पत्तेः ॥ तन्त्रणम् । तन्त्यतेऽनेन वा । तनु० । ष्ट्रन् ॥ यद्वा । तन्त्रणम् । तन्त्यते वा । तत्रि कुटुम्बधारणे । घञ् ॥

तन्त्रकम् । न । अनाहते । नवीनवस्त्रे ॥ तन्त्रादचिरापहृते इति साधु ॥

तन्त्रकाष्ठम् । न । तन्त्रवायस्य तुर्य्याम् ॥

तन्त्रता । स्त्री । अनेकमुद्दिश्य सकृत्प्रवृत्तौ ॥ यथा । आग्नेयाष्टकपालैन्द्रघ्यैन्द्रपयोयागानां यथा आग्नेयाष्टाकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां यथा सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिध्यति । तथा नानाप्रयुक्तपापक्षये सर्वोद्देशेन सकृत् प्रायश्चित्तकृते ब्रह्मवधजन्यपापनाशः । तन्त्रताया हेतुश्च । अदृष्टार्थैकजातीयकर्मणः काम्यदर्शपूर्णमासादीनां प्रयोगानुष्ठानैव हेतुभूतानामभेदे उद्देश्यविशेषाग्रह इति । एवञ्च सालोऽधिकारी भवति दैवे पैत्रे च कर्मणि । पवित्राणां तथान्येषां दानेचविधिदर्शिते इति विष्णूक्तम् । अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चनेति दक्षोक्तञ्च क्रियाङ्गस्नानं कर्तृसंस्कारद्वारैव तद्दिनकर्त्तव्याशेषकर्मार्थमेकमेव न तु प्रतिकर्मकर्त्तव्यम् ॥ इति प्रायश्चित्ततत्त्वम् ॥

तन्त्रवापः । पुं । तन्त्रवाये ॥ तन्त्राणि वितन्यन्ते यत्र तत् तन्त्रम् । तद् वपति । टुवप० । कर्मण्यण् ॥

तन्त्रवायः । पुं । कुविन्दे ॥ वर्णसङ्करजातिरयम् ॥ म्लेच्छोत्पत्तिर्यथा । ताम्रकुट्टात् कुविन्दकन्यायां मणिकारश्च जायते । मणिकारात् ताम्रकुट्टकन्यायां मणिबन्धो प्रजायत ॥ मणिबन्धात् कुविन्दकन्यायां तन्त्रवायश्च जज्ञिरे । इति पराशरपद्धतिः ॥ तन्तवो वितन्यन्ते यस्मिन् । तत् तन्त्रम् । तद् वयति । वेञ्० । ह्वावामश्चेति कापवादोऽण् ॥

तन्त्रिका । स्त्री । गुडूच्याम् ॥ तन्त्रयते । तत्रि० । ण्वुल् ॥ तन्त्र्येव वा । कन् । ह्रस्वः ॥

तन्त्रिपालकः । पुं । जयद्रथनृपे ॥

तन्त्रीः । स्त्री । वीणागुणे ॥ अन्ततावाम् । गुडूच्याम् ॥ देहशिरायाम् ॥ नाड्याम् ॥ रज्ज्वाम् ॥ नदीविशेषे ॥ युवतीप्रभेदे ॥ वीणाप्रभेदे । तन्त्र्यते । तत्रि० । अवितृस्तृतन्त्रिभ्य ईः ॥

तन्द्रा । स्त्री । निद्रायाम् ॥ आलस्ये । प्रमीलायाम् ॥ तस्या निदानं लक्षणञ्च । यथा । तमोवातकफात् तन्द्रेति ॥ इन्द्रियार्थेष्वसंवित्तिर्गौर-

वं जृम्भणं क्लमः । निद्रार्त्तस्येव यस्येहा तस्य तन्द्रीं विनिर्द्दिशेदिति ॥ निद्रायां प्रबुद्धस्य क्लमाभावः । तन्द्रायान्तु प्रबोधितस्यापि क्लम इत्यनयोर्भेदः ॥ तत् दाति । तत्पूर्व्वाद्दातेरातोऽनुपसर्गे कः । टाप् ॥ तत् द्राति वा । द्रा कुत्सायाङ्गतौ । सुषिगुह्यादिना तदोऽन्तलोपो निपात्यते ॥ निद्रातन्द्रेति वा निपात्यते ॥ तन्द्रा च सुखस्य भार्य्या निद्रायाः कन्या प्रीतेर्भगिनी । यथा । निद्राकन्या च तन्द्रा सा प्रीतिरन्या सुखप्रिये । याभ्यां व्याप्तं जगत्सर्व्वं विधिपुत्रविधेर्विधाविति ॥

तन्द्रालुः । त्रि । निद्रालौ ॥ तत् द्राति । द्रा० । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजिति तच्छीलादिषु आलुच् । तच्छब्दस्य नान्तत्वं समासस्य निपात्यते ॥

तन्द्रिः । स्त्री । आलस्ये ॥ निद्रायाम् ॥ तन्द्रायाः करणम् । तत्करोतीति णिच् स्मादचः ॥ यद्वा । तदिः सौत्रो धातुः ॥ तस्मात् वहुलमन्यत्रापीत्यौणादिकः क्रिन् ॥

तन्द्रिका । स्त्री । तन्द्र्याम् ॥

तन्द्रितः । त्रि । अलसे ॥ तन्द्रा सञ्जाता अस्य । ता० इतच् ॥

तन्द्री । स्त्री । अत्यन्तश्रमादिना सर्व्वेन्द्रियासामर्थ्ये । प्रमीलायाम् ॥ तन्द्र्याः कृदिकारादक्तिन इति ङीष् ॥ तत् द्राति वा । आतोऽनुपसर्गे कः । गौ० ङीष् ॥ तत् द्राति वा । द्रा० । निद्रातन्द्रेति तदोऽन्तलोपो निपात्यते ॥

तन्निष्ठः । त्रि । सर्व्वकर्म्मसंन्यासेन ब्रह्मात्मैक्यविचारपरे ॥ तस्मिन्नेव ब्रह्मणि सर्व्वकर्म्मानुष्ठानविक्षेपनिवृत्त्या स्थितिर्यस्य सः ॥ तस्मिन् स्थिते ॥

तन्मयः । त्रि । तद्भावभाविते ॥ अभेदे ॥

तन्मात्रम् । न । शब्दादीनां सूक्ष्मेषु । शब्दतन्मात्राणि स्पर्शतन्मात्रादीनि च्यादिपदवाच्येषु ॥ नत्वेषां शान्तादिविशेषोऽस्ति । यथोक्तं विष्णुपुराणे । तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥ न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिण इति ॥ सा मात्रा यस्मिन् तत् । त्रि । तावन्मात्रे ॥

तन्यतुः । पुं । वायौ ॥ निशि ॥ तनोतीति । तनु० । ऋतन्यञ्जीत्यादिना यतुच् ॥ तन्यतुर्गर्जितमिति तन्यतुरशनिरिति च मेदभाष्यम् ॥

तन्वयस्था । स्त्री । अभिव्यक्तस्यापि सकार्ये ऽस्वाभावात् कार्य्याजनने ॥

तन्विः । स्त्री । पृश्निपर्ण्याम् ॥

तन्वी । स्त्री । कृशाङ्ग्याम् ॥ वोतोगुणवचनादिति ङीष् । तनुशब्दस्तनुत्वं गुणमुक्त्वा तद्द्रव्यमभिधत्त इति गुणवचनः ॥ शालपर्ण्याम् ॥ सङ्कृतिसंज्ञके चतुर्विंशत्यक्षरात्मके वृत्ते ॥ भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥ यथा । माधवमुग्धे मधुकरविरुतैः कोकिलकूजितमलयसमीरैः । कम्पमुपेता मलयजसलिलैः प्राणतोऽप्यविगलतनुदाहा ॥ पद्मपलाशैर्विरचितशयने देहजसञ्ज्वरभरपरिदूने । निश्वसती सा मुहुरतिपरुषं ध्यानवशे तव निवसति तन्वी ॥ इति ॥

तपः । पुं । ग्रीष्मे । ज्येष्ठाषाढयोः ॥ तपति । तपसन्तापे । पचाद्यच् ॥

तपःकरः । पुं । तपस्वीमत्स्ये ॥ त्रि । तपश्चारके ॥

तपःक्लेशसहः । त्रि । दान्ते ॥ तपसःक्लेशः । सहते । सह० । अच् । तपःक्लेशस्य सहः ॥

तपःस्थः । त्रि । तपसि स्थिते ॥ सुपिस्थ इति कः ॥

तपःस्थली । स्त्री । काश्याम् ॥

तपती । स्त्री । छायायां सूर्यपत्न्याम् ॥ सूर्यसुतायाम् ॥ नदीविशेषे ॥

तपनः । पुं । सवितरि ॥ अरुष्करे । भल्लातवृक्षे ॥ निरयान्तरे ॥ ग्रीष्मे ॥ अर्कवृक्षे ॥ क्षुद्राग्निमन्थवृक्षे ॥ सूर्यकान्तमणौ ॥ तापे ॥ तपति । तप० । ल्युः ॥

तपनच्छदः । पुं । आदित्यभक्तके ॥

तपनतनया । स्त्री । यमुनायाम् ॥ तपनस्य तनया ॥ शमीवृक्षे ॥

तपनमणिः । पुं । सूर्यकान्तमणौ ॥

तपनात्मजा । स्त्री । गोदावरीनद्याम् ॥ यमुनायाम् ॥ तपनस्यात्मजा ॥

तपनी । स्त्री । गोदावर्याम् ॥

तपनीयम् । न । स्वर्णे ॥ तप्यतेऽनेन । तप० । कृत्यल्युटश्चानीयर् ॥

तपनीयकम् । न । सुवर्णे ॥

तपनेष्टम् । न । ताम्रे ॥

तपाः । पुं । माघमासे ॥ शिशिरे ॥ तपत्यस्मिन् । तप० । असुन् ॥

तपः । न । जनलोकोपरिवर्त्तिनि लोकविशेषे ॥ यथा । तमेव कोटिर्यन्नास्ते महायोगी सनन्दनः । ऋभुः सनत्कुमारश्च सनकश्च सदा तपाः इति ॥ चान्द्रायणादिलक्षणव्रते ॥ कर्त्तारमिन्द्रियाण्यदृष्टया तपस्तापयतीति व्युत्पत्तेः ॥ आलोचने ॥ स्वधर्मे । स्वाश्रमविहितकर्मणि ॥ देहक्लेशजनककर्मणि ॥ नवमभवने ॥ वाक्यानश-

आदाय वैष्णवः । धारयेत् सर्ववर्णो ऽमां हरिसालोक्यसिद्धये ॥ ब्रह्माण्डे । कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् । चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥ नारदीयपञ्चरात्रे । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । हरेः सुदर्शनं तप्तं धारयेत् तद्विचक्षणः ॥ सौपर्णे च श्रीभगवद्गरुडसंवादे तप्तमुद्राप्रकरणे । गर्भस्थविशेषेण सर्वेषामप्ययं विधिः । विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च ॥ पाद्मे । अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥ किञ्च तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे । षड्गुणचक्राङ्कनं कुर्याद्ब्राह्मणो मानुमूढये । कृताग्निनैव तप्तस्य सर्वेषां पापमुक्तये ॥ चक्रं वा शङ्खचक्रे वा तप्तान्यायुधानि वा । धारयित्वैव विधिवद् ब्रह्मकर्म समारभेत् ॥ * ॥ किञ्च तत्प्रसङ्ग एव । अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् । किञ्च । न तस्य किञ्चिदस्तीह यदि क्रतुसहस्रिणः । सर्ववेदविदो वापि सर्वशास्त्रविशारदः । अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥ किञ्च । तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधानतः । श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्धौ तथैव च ॥ हरेः पूजाधिकारार्थं चक्रं धार्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्धौ विशेषतः ॥ किञ्च । उपवीतादिवद्धार्याः शङ्खचक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥ * ॥ अथ । वेदवैश्यस्मार्तकर्मोक्ते धर्माननुतिष्ठमानो ऽग्निना चक्रं धत्ते । अग्निर्वै सहस्रारः सहस्रारो नेमिर्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीत्याद्याः श्रुतयो बह्व्य उदाहृताः [?] सन्निवेङ्कटाचार्यादिभिः । तद्विधानि पुराणवचनानि चेतानि गौरवभिया न लिखितानि । मन्वादिस्मृतिषु रामायणभारतादिष्वदृष्टत्वात् मन्वर्थविपरीताया स्मृतेरप्रशस्तत्वाच्च ॥

तप्तरूपकम् । न । रौप्ये ॥

तप्तसुराकुण्डम् । न । नरकान्तरे ॥

तप्तसूर्मीकुण्डम् । न । नरकविशेषे ॥

तप्ताङ्गारः । पुं । महानरकान्तरे ॥

तमः । पुं । तमोगुणे ॥ तमालवृक्षे ॥ स्वर्भानौ ॥ न । पापे ॥ अन्धकारे ॥ ताम्यति । तमु ग्लानौ । यथाद्यच् ॥

तमनम् । भावेघञ्वा [?] । नोदात्तोपदेशस्येति न वृद्धिः ॥

तमःपतिः । पुं । क्रियाहङ्निरोद्धरि वा





मदेवमार्ये ॥

तमःप्रधानः । पुं । तमोगुणप्रधानमायोपाधिके परमात्मनि ॥ त्रि । तमोगुणप्रधाने ॥

तमःप्रभः । पुं । नरकविशेषे ॥

तमःप्रभा । स्त्री । नरकभूमिभेदे ॥

तमकः । पुं । श्वासरोगप्रभेदे ॥

तमङ्गकः । पुं । इन्द्रकोपे । मञ्चके ॥

तमतः । त्रि । तृषिते ॥ तृष्णापरे ॥ ताम्यति । तमुकाङ्क्षायाम् । मृष हृषिपञ्जीत्यादिना ऽतच् ॥

तमप्रभः । पुं । नरकविशेषे ॥

तमरम् । न । वङ्गे ॥ इति हेमः ॥

तमस् । न । चक्षुर्वृत्तिनिरोधके भावे ध्वान्ते ॥ शोके ॥ पापे ॥ कार्याकार्याविवेके ॥ अविद्यायाम् ॥ मन्दान्धकारे ॥ मोहान्धकारे ॥ विशेषदर्शनविरोधिदोषे ॥ सर्वदेहिनां मोहनेप्रकृतेर्गुणविशेषे ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नाति ॥ गुणत्रयोक्तमेवतमष्ट साङ्ख्याचार्यैः । तमस्त्वयमविक्रियम् । यन्मोहहेतु रात्मोपशात्मकं तमः । भेदस्तमसोऽष्टविधः । तमसोऽविद्याया अष्टविधोभेदः । अष्टसु अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमस्तस्याष्टविधविषयत्वादष्टविधत्वम् ॥ मले ॥ ताम्यति-तम्यतेऽनेनवा । तमुग्लानौ । असुन् ॥ पुं । न । विधुन्तुदे ॥

तमसम् । न । अन्धकारे ॥ ताम्यति ग्लानिं प्राप्नोत्यनेनास्मिन्वा । तमु० । अत्यविचमितमीत्यादिना ऽसच् ॥

तमसा । स्त्री । नदीविशेषे ॥

तमस्ततिः । स्त्री । ध्वान्ते । अन्धकारसमूहे ॥ तमस स्ततिः ॥

तमस्विनी । स्त्री । क्षपायाम् । रात्रौ ॥ तमोऽस्त्यस्याम् । अस्मायामेधास्रजो विनिः ॥ हरिद्रायाम् ॥

तमा । स्त्री । रजन्याम् ॥ तमालद्रुमे ॥ ताम्यत्यस्याम् । तमु० । अच् । टाप् ॥

तमालः । पुं । तिलके । पुण्ड्रे ॥ खड्गे । असौ ॥ वरुणद्रुमे ॥ तापिच्छे । कालस्कन्धे ॥ तमालः शाखवद्वेषो,दाहविस्फोटहृत्पुनः ॥ कृष्णखदिरे ॥ ताम्यति । तमु० । तमिविशिविडी तिकालन् ॥ न । पत्रके । तेजपात इतिभाषा ॥

तमालकम् । न । सुनिषण्णशाके ॥ पत्रके ॥ पुं । न । तमालद्रुमे ॥

तमालपत्रम् । न । तापिच्छ । कालस्कन्धे ॥ तिलके ॥ पत्रके । तेजपात इति भाषा ॥ तमालस्य पत्रमिव तदा

कृतित्वात् ॥

तमालिका । स्त्री । ताम्रवल्ल्याम् ॥ भूम्यामलक्याम् ॥ ताम्रलिप्तदेशे ॥

तमाली । स्त्री । ताम्रवल्ल्याम् ॥ वरुणवृक्षे ॥

तमिः । स्त्री । रात्रौ ॥

तमिस्रम् । न । क्रोधे ॥ तिमिरे । अन्धकारे ॥ तमोराशौ । भावप्रधानो निर्देशः । ज्योत्स्नातमिस्रेति साधु ॥ तमिस्राख्याश्रयत्वेनाख्येतिवा । अर्थे च ॥

तमिस्रपक्षः । पुं । कृष्णपक्षे ॥

तमिस्रा । स्त्री । कृष्णपक्षनिशायाम् ॥ भूतरात्रौ ॥ दर्शयामिन्याम् ॥ तमस्तती । तमसां समूहे ॥ तत्रभवत्यभूतानि तमांसि विद्यन्ते । तमोबहुत्वमस्त्यस्याम् । ज्योत्स्नातमिस्रेति तमसउपधाया इत्वं रप्रत्ययश्च निपातितः । टाप् ॥

तमी । स्त्री । यामिन्याम् । रात्र्याम् ॥ ताम्रवल्ल्याम् । तमु । इन् । कृदिकारादक्तिनः ङीष् ॥ हरिद्रायाम् ॥

तमोगुणः । पुं । विषादात्मके । विषादमोहस्वरूपे ॥

तमोघ्नः । पुं । सूर्ये ॥ वह्नौ ॥ इन्दौ ॥ बुद्धे ॥ शङ्करे ॥ विष्णौ ॥ तमोहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ॥

तमोज्योतिः । पुं । खद्योते ॥ तमसि ज्योतिरस्य ॥

तमोनुत्-द् । पुं । चन्द्रे ॥ सूर्ये ॥ अग्नौ ॥ दीपे ॥ तमोनुदति । णुद० । क्विप् ॥

तमोनुदः । पुं । प्रकृतेः प्रेरके स्वयम्भुवि ॥ आदित्ये ॥

तमोपहः । पुं । सहस्रांशौ ॥ शशाङ्के ॥ वह्नौ ॥ तमोऽपहन्तीति विग्रहे अपेक्षितत्वमसोरित्यनेन अपपूर्वाद्धन्तेः तमसि कर्मोपपदे कर्तरि डः ॥ जिने ॥

तमोभित्-द् । पुं । तमोनुदर्थे ॥ खद्योते ॥ तमोभिनत्ति । भिदिर्० । क्विप् तुकौ ॥

तमोमणिः । पुं । खद्योते ॥ तमसो मणिरिव ॥ गोमेदकमणौ ॥

तमोलिप्ती । स्त्री । तमोलुक इतिख्याते प्रसिद्धे देशे । ताम्रलिप्ते । वेलाकूले ॥

तमोविकारः । पुं । रोगे ॥

तमोविशालः । पुं । भूतसर्गे पश्वादिस्थावरान्ते ॥ भूतसर्गोऽपि मोहमयत्वात्तमोबहुलः ॥

तमोहरः । पुं । चन्द्रे ॥ न । ज्योतिषि ॥ निर्गुणत्वात् भागेच सत्त्वभागेऽद्भुतानिवा । मध्येनाद्यः स्वयं ज्योतिस्तज्ज्यो

तिमिंतमोऽपहरम् ॥ त्रि । तमसो हर्त्तरि ॥ हरति । हृञ् । अच् । तमसो हरः ॥

तम्पा । स्त्री । } गवि । सौरभेय्याम् ॥
तम्बा । स्त्री । } इति हेमचन्द्रः ॥

ताम्बिका । स्त्री । तम्बायाम् ॥

तम्बी । स्त्री । तबी इति भाषाप्रसिद्धे कान्दविकभाण्डे ॥

तयः । पुं । रक्षके ॥ तयति । तय रक्षणे गतौ च । अच् ॥

तरः । पुं । तरणे ॥ न । लोभे ॥ तरति । तॄ० । अप् । तरणं वा । ऋदोरप् ॥

तरक्षः । पुं । तरक्षु इति प्रसिद्धे तरक्षौ ॥

तरक्षुः । पुं । मृगादने । तेंडुवा । घर तितरख इत्यादि भाषा । चक्षाते मधु भावे ॥ तरं गतिं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् । मित० डुः ॥

तरक्षुकः । पुं । तरक्षौ ॥ संज्ञायां कन् ॥

तरङ्गः । पुं । वायुना नद्यादिजलस्य तिर्य्यगूर्द्ध्वगमने । भङ्गे । ऊर्म्मौ । लहर ढेउ इत्यादि भाषा ॥ तरति । तॄ प्लवनसन्तरणयोः । तरत्यादिभ्यश्च इत्यङ्गच् ॥ वस्त्रादिसमुत्काले ॥

तरङ्गिणी । स्त्री । नद्याम् । तटिन्याम् ॥ तरङ्गाः सन्त्यस्याम् । अत इनिः । पुष्करादित्वं इनिर्वा । ऋन्नेभ्यो ङीप् ॥

तरङ्गितः । त्रि । भङ्गिमति । सञ्जाततरङ्गे ॥ तरङ्गाः सञ्जाता अस्य । ता० इतच् ॥ यद्वा । तरङ्गवत् कृतः भङ्गमात् तत्करोतीति णिचि कर्म्मणि क्तः । आविष्टलिङ्गत्वात्सतुपो लुक् ॥

तरणः । पुं । भेलके । उडुपे । भेँगा इति भाषा ॥ स्वर्गे ॥ न । पारगमने । सन्तरणे ॥ प्लवनपूर्व्वकदेशान्तरगमने ॥

तरणिः । पुं । घुमणौ । सूर्य्ये ॥ भेलके ॥ अंशौ । किरणे ॥ तामे ॥ स्त्री । नौकायाम् ॥ घृतकुमार्य्याम् ॥ तरन्त्यनेन संसारम् । तरन्त्यनया वा । तॄ० । अर्त्तिसृधृधमीत्यादिना तरतेरनिः ॥

तरणिपेटकः । पुं । काष्ठाम्बुवाहिन्याम् ॥

तरणिरत्नम् । न । माणिक्ये ॥

तरणी । स्त्री । नावि ॥ घृतकुमार्य्याम् ॥ पद्मचारिण्याम् ॥ कृदिकारादि तिङीष् ॥

तरण्डः । पुं । न । बडिशीसूत्रबन्धन काष्ठे । छुड इति खगम इति च भाषा ॥ प्लवे ॥ नौकायाम् ॥ कुम्भतुम्बीरम्भादिप्लवे ॥ पुं । देशविशेषे ॥ तरति । तॄ० । वाहुलकाद्ण्डन् ॥

तरण्डपादा । स्त्री । } नावि ॥ इति शब्दरत्नावली ॥
तरण्डा । स्त्री । }
तरण्डी । स्त्री । }

तरतमः । अ । न्यूनाधिकभावेने पर्य्यां ॥
तरत्-द् । स्त्री । भेकके । प्लवे ॥ प्रश्वमा
। ने ॥ कारण्डवविहङ्गमे ॥
तरदी । स्त्री । काष्ठकिटपविशेषे ।
तीक्ष्णपाम् । रक्तबीजकायाम् ॥
तरण्डी । स्त्री । पक्वान्नविशेषे ॥ यथा
। घृतेन मर्दितो दध्ना कणिक्कां ने
नयेत् ततः । विधाय वटिका सत्या
। मृते मन्दाग्निना पचेत् ॥ प्रक्षिप्ताः
। खण्डपाकेन कर्पूरेण विमिश्रयेत् ।
ततस्ताः समरिचा तरण्डास्तु ताः
स्मृताः ॥ बल्या पुष्टिकरी हृद्या गु-
र्व्या पित्तानिलापहा । सुस्निग्धा क
फदा पथ्यं किञ्चित्सन्धानकृद्धिता ॥
तरन्तः । पुं । समुद्रे ॥ भेके ॥ आसारे ।
राक्षसे ॥ तीर्थते । तॄ० । तृभूवहि
। वसीत्यादिनाझच् सवषित् ॥
तरन्ती । स्त्री । नौकायाम् ॥ तरति नी
यते ऽनया ॥ झचः पित्त्वान्ङीष् ॥
तरपण्यम् । न । आतरे । नद्यादिसन्ता
रमूल्ये ॥ तरणम् । तॄ० । कर्त्तार
यु । तरस्य पण्यम् ॥
तरम्बुजम् । न । तरबूज इति प्रसिद्धे
फले ॥ यथा । ज्येष्ठेमासि महेशा
नि पौर्णमास्यां निशार्द्धके । तृष्णा
तुरा मद्यःकाली भ्रमन्ती पितृका
नने ॥ तज्ज्ञात्वा महामाया तस्यैकं
दर्श तरम्बुजम् ॥ तत्कर्त्तम यथाक्षत्
कुष्माण्डर्दासिक्तमिया ॥ ये भेदयाा
न् फलं रम्यं संचिरायुरसतुष्टिगमिष्यु
। तरम्बाख्यातन्ततम् ॥
तरलः । पुं । हारमध्यमणौ ॥ हारे ॥
तले ॥ त्रि । चञ्चले ॥ कामुके । वि
ट्ठे ॥ भास्वरे ॥ मध्यशून्यद्रव्ये ॥ द्रवी
भूते ॥ तरति । तॄ० । अलच् ॥ त
रं लाति । ला । आतश्चोपसर्गे कः ॥ इत्यादि
व्याख्या कथा ॥
तरलनयना । स्त्री । चञ्चलनेत्रायां व
निताम् ॥ तरले लोलनयने यस्याः ॥
तरलनयनिः । पुं । सर्वसमविशेषे ॥
द्विजवरगणयुगं सुमनय सकुसुमम
। मधिमिवरचय । सुदतिविमलमति
फणिपतिनिगदिततरलनयनमिति
॥ यथा । अपहर पुरहर ममदर म
भिनवकलियुगभयहर । हिमगिरि
विहितविनयमवर सुकृतसुखभयभ
रधरेति ॥
तरललोचना । स्त्री । चञ्चललोचनायाम् ॥ तरले लोचने यस्याः ॥
तरला । स्त्री । यवाग्वाम् ॥ सुरायाम्
॥ मधुमक्षिकायाम् ॥ तरं लाति ।
ला० । कः । टाप् ॥
तरलायितः । पुं । चञ्चलाचरिते ॥
तरलितः । त्रि । आन्दोलिते । प्रेङ्खोलि

ते । कम्पिते । धूते । प्रेङ्खिते । सुखि ते । तां० इतच् ॥

तरवारिः । पुं । तरवार इति प्रसिद्धे खड्गे ॥ इति हेमचन्द्रः ॥ चतुरङ्गारिपोः

न्द्रराजस्य ॥ विशेषस्तस्यान्यच खड्ग परीक्षायां युक्तिकल्पतरौ च द्रष्टव्यः ॥

तरः । न । बले ॥ रोगे ॥ जवे । वेगे ॥ सवेगगतिवचने ऽस्य प्रयोगः ॥ तो रे ॥ कपौ । प्लवगे ॥ वेगाख्यगुणे ॥ तरन्त्यनेन । तृ० । असुन् ॥

तरसम् । न । मांसे ॥ तरो बलमस्त्य स्मिन् । अर्शआद्यच् ॥

तरसा । अ । झटित्यर्थे । शीघ्रे ॥

तरस्थानम् । न । घट्टे ॥ तरस्थानम् ॥

तरस्वी । पुं । गरुडे ॥ वायौ ॥ त्रि । शूरे ॥ वेगिनि ॥ तरो बलं वेगो वाऽस्यास्ति । अस्मायामेधास्रजो विनिः ॥

तरान्धुः । पुं । नौविशेषे । डोङ्गे । व- डने ॥

तरालुः । पु । नौकाविशेषे ॥

तरिः । स्त्री । नौकायाम् ॥ वस्त्रादी नां पेटके ॥ दशायाम् ॥ तरन्त्यनया । तृ० । अ चड़ः ॥

तरिकः । पुं । प्लवे । भेलके ॥

तरिका । स्त्री । नावि ॥

तरिणी । स्त्री । नौकायाम् ॥

तरिता । स्त्री । तर्जन्याम् ॥ गांजा इ ति भाषा प्रसिद्ध मर्व्वर्याम् ॥ यथा । संविदा कालकूटञ्च ताम्रकूटञ्च धु स्तूरम् । अहिफेनं खर्जुरस रसा दि

तरिरथः । पुं । अरित्रे ॥ इति शब्दा वली ॥

तरी । स्त्री । वस्त्रादिपेटके ॥ द्रोण्या म् ॥ नौकायाम् । नावि ॥ गदाया म् ॥ धूमे ॥ दशायाम् ॥ तरन्त्यन या । तृ । अचः । कृदिकारादिति ङीष् ॥ पचादौ तरट् इति पाठात् ङीप् वा ॥

तरीः । स्त्री । नावि ॥ तरन्त्यनया । तृ० । अवितृस्तृतन्त्रिभ्य ईः ॥

तरीषः । पुं । स्वर्गे ॥ अह्नोदधौ ॥ शो भनाकारे ॥ भेले ॥ व्यवसाये ॥ स मर्थे ॥ बोधे ॥ तरन्ति येन । तृ० । कृतृभ्यामीषन् ॥

तरीषी । स्त्री । शक्रकन्यायाम् ॥

तरुः । पु । अगमे । द्रुमे ॥ तरन्ति नर कमनेन रोपकाः । तृ० । भृमृशीतृ चरीति उप्रत्ययः ॥

तरुकुक्षिः । पुं । पक्षिविशेषे । वागुदे । वागुड इति भाषा ॥

तरुखण्डः । पु । तरूणां समूहे ॥ इत्या दिश्च खण्डः ॥

तरुजीवनम् । न । द्रुममूले ॥

तरुणः । पुं । एरण्डे ॥ स्थूलजीरके ॥ न । कुब्जपुष्पे ॥ त्रि । यूनि । जाततारुण्ये ॥ नूतने ॥ तरति । तॄ० । चोरस्य [illegible]

तरुणज्वरः । पुं । सप्ताहावधिज्वरे ॥ यथा । आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥

तरुणदधि । न । पञ्चदिनातीतदधिनि ॥

तरुणी । स्त्री । युवत्याम् । द्वितीयवयःप्राप्तायां नार्याम् ॥ आषोडशाद्भवेद्बाला तरुणी त्रिंशता मतेत्युक्तः ॥ तरति । तॄ० । चोरस्योनन् । वयस्यचरमइति ङीप् । नन्फकीकगिति वा ॥ गौरादिङीष् वा । स्वरे विशेषः ॥ घृतकुमार्याम् । सहायाम् ॥ दन्तीवृक्षे ॥ चीडानामगन्धद्रव्ये ॥ सेवतीइतिभाषाप्रसिद्धे पुष्पे । सहायाम् । गन्धाख्यायाम् ॥

तरुणीकटाक्षमालः । पुं । तिलकवृक्षे ॥

तरुतूलिका । स्त्री । } वातुल्याम् । बादुड पक्षीइति भाषा ॥
तरुदूलिका । स्त्री । }

तरुनखः । पुं । कण्टके ॥

तरुभुक् । पुं । वन्दाके ॥

तरुमृगः । पुं । वानरे ॥

तरुरागः । पुं । नवीनपल्लवे । किसलये ॥

तरुराजः । पुं । तालद्रुमे ॥

तरुरुहा । स्त्री । } वन्दाके ॥
[illegible] । स्त्री । }

तरुवल्ली । स्त्री । जतुकालतायाम् ॥

तरुविलासिनी । स्त्री । नवमल्लिकायाम् । सप्तलावतायाम् ॥ तरोर्विलासिनी ॥

तरुशायी । पुं । खगे । पक्षिणि ॥

तरुसारः । पुं । कर्पूरे ॥ इति शारावली ॥

तरुस्था । स्त्री । वन्दाके ॥

तरूटः । पुं । उत्पलकन्दे ॥

तर्कः । पुं । काङ्क्षायाम् ॥ वितर्के । व्यभिचारग्राहाभिवर्त्तके ॥ स च पञ्चविधः । यथा । आत्माश्रयः १ । अन्योन्याश्रयः २ । चक्रकः ३ । अनवस्था ४ । प्रमाणबाधितार्थकः ५ इति ॥ ऊहे । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहे ॥ अनुमाने ॥ व्याप्यारोपेण व्यापकारोपे । व्याप्यारोपात् व्यापकप्रसञ्जने । यथा । वह्निर्न स्यात् तर्हि धूमोपि न स्यात् ॥ मीमांसादितर्कशास्त्रे । आगमाविरोधिन्यायेन आगमार्थपरीक्षणे । विचारे ॥ बुद्धिसाध्ये । स्वबुद्ध्यभ्यूहमात्रे ॥ हेतुदृष्टान्तात्मनि ॥ तर्कणम् ।

तर्कभाषार्थप्रदीपं धटपुटेतिद-
ण्डके पठितः । भावेघञ् ॥ तर्कोऽ
र्थवाद इति कर्कोपाध्यायः । यथा ।
अक्ताः शर्करा उपदधातीति विधिः
श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वा
तन्मध्ये केनाक्ता इति संशये तेजो
वै घृतमित्यर्थवादात् घृतेनाक्ता इ
ति निर्णीयते । अतस्तर्कोऽर्थवादः ॥
तर्को मीमांसेति कल्पतरुकारः ॥ * ॥
अचिन्त्याः खलु ये भावा न तांस्त-
र्केण योजयेत् । नाऽप्रतिष्ठिततर्के
ण गम्भीरार्थस्य निश्चयः ॥

तर्ककः । पुं । याचके ॥ तर्ककारके ॥

तर्कणम् । क्लि । उत्प्रेक्षणार्थे ॥

तर्कविद्या । स्त्री । आन्वीक्षिक्याम् ॥
तर्कस्य न्यायस्य विद्या ॥ तथाहि । च
तुर्विधेभ्यः पृथिव्यादिपरमाणुभ्यो वि
श्वमुत्पद्यते स एवोपादानभूता ना
न्यत् । निमित्तकारणमीश्वरः कर्तृत्वा
त् कुलालवदिति तर्कविद्यायाः प्रमे
यम् ॥ * ॥ अहो दुर्मतयः सर्वा पुरुष
स्य निरूपणे । तर्कविद्या न जानन्ति प्र
मेयं पुरुषोत्तमम् ॥ प्रमेयम् अभिन्न
निमित्तोपादानत्वात् । अतएतदपि
न जानन्ति सर्वं प्रमेयजातं घटादिव
त् कार्यमिति परमाणूपादानकारण
मप्यपेक्षणीयमेवेति । परमाणूनां
प्रमेयत्वहेतुना कार्यत्वसिद्धौ तयो
पादानमपेक्षणीयम् । एवं तत्तत्था
पि च्यवनवस्था स्यात् । अतोऽप्रमेयः
परमात्मैवोपादानं नान्यद्द्रव्यकल्पि
तम् अपेक्षणम् । तथाहि । अन्यः
शीतकरान्तरे घनगरस्त्वमेल्लाषा-
दिवत् कार्यमेव प्रसूयमेत । दुह
यध्वंसादियुक्तं जगत् । शुक्तौ रूप्य
मिव स्वजीवभुजगः स्वात्मावबोधे
हरौ, पश्यति प्रभवत्ययात्मनि ते-
तत्प्रापबोधोदयादिति प्रबोधचन्द्रो
दयः ॥

तर्कारी । स्त्री । जयाद्रुमे । अरणी इ
ति भाषा । काली इति केचित् । त
र्कमृच्छति । ऋगतौ । कर्मण्यण् ।
ङीप् । गौरादित्वात् ङीष् वा ॥

तर्कियाः । पुं । } दद्रुमे ॥ इति रत्न-
तर्किकः । पुं । } माला ॥

तर्की । त्रि । तर्कविशिष्टे । मीमांसके
॥ यथा । त्रैविद्यो हेतुकस्तर्की नैरु
क्तो धर्मपाठकः । त्रयश्चाश्रमिणः पू
र्वे परिषत् स्याद्दशावरेति मनुः ॥

तर्कुः । पुं । कपासनालिकायाम् । त-
र्क्व्याम् ॥ कृन्त्यतेऽनेन । कृती वेष्टने
। कृतेराद्यन्तविपर्ययश्चेष्यु. । कका
रतकारयोर्विनिमयः । तकुआ इति
भाषा ॥

तर्कुटम् । न । कर्त्तने । काटना इति भाषा ॥ इतित्रिकाण्डशेषः ॥

तर्कुटी । स्त्री । तर्कुः ॥ इतिशब्दरत्नावली ॥

तर्कुपिण्डः । पुं । तर्कुस्थितमृत्पिण्डे । वर्त्तुलायाम् ॥ इतिशब्दरत्नावली ॥

तर्कुपीठी । स्त्री । तर्कुपिण्डे ॥ इतिशब्दरत्नावली ॥

तर्कुशाणकः । पुं । तर्कुभ्रमणयन्त्रे । जौलोले । चरखा इतिभाषा ॥ श०चा० ॥

तर्कुशाणः । पुं । तर्कुघर्षणपाषाणे । जामरे । सानके ॥ इतित्रिकाण्डशेषः ॥

तर्क्षुः । पुं । तरक्षुके ॥ इतिशब्द० ॥

तर्क्ष्यः । पुं । यवक्षारे ॥

तर्जनम् । न । भर्त्सने ॥ भयजनने ॥ तर्ज० । ल्युट् ॥

तर्जनी । स्त्री । प्रदेशिन्याम् । अङ्गुष्ठनिकटाङ्गुलौ ॥ तर्ज्यते ऽनया । तर्जभर्त्सने । करणे ल्युट् ॥

तर्जिकः । पुं । देशविशेषे । ताजिके ॥

तर्जितः । त्रि । भर्त्सिते ॥ तर्ज्यतेस्म । तर्जभर्त्सने । क्तः ॥

तर्णः । पुं । वत्से ॥ तृणोति तर्णोति वा । तृणु अदने । अच् ॥

तर्णकः । पुं । गोपुत्रे । वत्से । वाच्छा इतिभाषा ॥ सद्योजातस्तु तर्णकः ॥ तृणोति तर्णोति वा । तृणु० । ण्वुल् ॥

तर्णिः । पुं । सूर्ये ॥ प्लवे ॥ इतिशब्द० ॥

तर्त्तरीकम् । न । वहित्रे । पोते । जहाज इतियवनभाषा ॥ त्रि । पारगे ॥

तर्दः । त्रि । हिंसके ॥ तर्द हिंसायाम् । अच् ॥

तर्दूः । पुं । दारुनिर्म्मितदर्व्याम् । दारुहस्तके । डोइ इतिभाषा ॥ अवत रखो मकरणे ॥ तरति० । तृ० । वो- दुदृपेश्च दुडागमश्च ॥ तर्दति । ह बलिवा । तर्द० । उतृदिर् हिंसानादरयोर्वा । बाहुलकात् ऊः ॥

तर्पणम् । न । तृप्तौ ॥ प्रीणने ॥ यज्ञकाष्ठे ॥ महायज्ञविशेषे । पितृयज्ञे । पित्रुद्देश्याम्बुदाने । पितॄणां कव्यवाहादीनाञ्च विधिना जलान्नदाने न तृप्तिसम्पादने ॥ तद्विविधम् । प्रधानमङ्गञ्च ॥ तत्राद्यं यथा । तर्पणञ्च शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥ विधवामधिकृत्य । तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकमिति ॥ * ॥ द्वितीयं यथा । नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते । तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥ तर्पणाकरणे दोषो यथा । नास्ति-

यभार्या सुतश्चापि न तर्पयति वैसु तः। पिबन्ति देहनिःस्रावं पितरो वै जलार्थिन इति ॥ जीवत्पितृ- कस्य तन्निषेधो यथा। दर्शस्नानं गया श्राद्धं तिलैस्तर्पणमेव च। न जीव त्पितृको भूप कुर्यात् कृत्वाघमा प्नुयादिति ॥ तृप्तप्रीणने। भावे ल्युट्॥

तर्पणी। स्त्री। गुरुस्कन्धद्रुमे॥

तर्पणेच्छुः। पुं। भीष्मे॥ त्रि। तर्पणा काङ्क्षे॥

तर्पिणी। स्त्री। चारट्याम्। पद्मचारि ण्यामोषधौ॥

तर्म। न। यूपाग्रे॥ तरति। तॄ०। सर्व धातुभ्योमनिन्॥

तर्दः। पुं। वत्सरे॥ चक्रमर्दे॥

तर्षः। पुं। लिप्सायाम्॥ उदन्यायाम्॥ भेलके॥ तर्षणम्। जितृषपिपा सायाम्। घञ्॥ तरत्यनेन। तॄ०। वृतृवदीतषो॥

तर्षणम्। न। तृषि। पिपासायाम्॥ ञितृष०। ल्युट्॥

तर्षितः। त्रि। सतृष्णे। तृषिते। तिसाया इति भाषा॥

तर्हि। अ। विशेषे॥ तदार्थे॥ तस्मिन् काले। अनद्यतनेर्हिल्यन्यतरस्याम्॥

तलः। पुं। तालमहीरुहे॥ चपेटे॥ त्सरौ॥ सव्येन पाणिना तन्त्रीघाते॥ आधारे॥ स्वभावे॥ पुं। न। अधो भागे। अनूर्द्ध्वे। तले इति नीचे इति च भाषा॥ स्वरूपे॥ यथा। महीतलम्॥ न। कानने। वने॥ कार्य्यबीजे॥ चाखवाले। गर्त्ते॥ पादतलस्यम ध्ये॥ स्त्री। न। ज्याघातवारणे॥ तलति। तलप्रतिष्ठायाम्। पचाद्यच्॥

तलकम्। न। पुष्करिण्याम्। तलाव इतिहिंदू भाषा॥ इति हारावली॥

तलप्रहारः। पुं। चपेटे। चर्पटि। तलाघाते॥

तलसारकम्। न। अश्वस्य वक्षस्थबन्ध नरज्जौ। वक्षःपट्टे। तङ्ग इतिभाषा॥

तलहृदयम्। न। पादतलस्यमध्ये॥

तला। स्त्री। गोधायाम्। ज्याघात वारणे॥

तलाची। स्त्री। नखनिर्मितेकटे॥

तलातलम्। न। अतलादिषु पञ्चमेऽ धोभुवने॥

तलिका। स्त्री। वक्षःपट्टे। तलसारके॥

तलित्। स्त्री। विद्युति। तडिति॥ डलयोरैक्यस्मरणात्वर्णविपर्ययः॥

तलितः। त्रि। आज्यादिभृष्टमांसादौ॥

तलितमांसम्। न। पक्वमांसप्रभेदे। भृष्टमांसे॥ यथा। शुद्धमांसविधाने न मांसं सम्यक् प्रसाधितम्। पुन- स्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बु-

धैः ॥ तल्लितं वंशमेघाबिमांसौघः
युक्तद्दिकृत् । तर्पणलघुसुस्निग्धं रो
चनं दृढताकरम् ॥

तलिमः । त्रि । विरले ॥ स्तोके ॥ स्व-
च्छे ॥ दुर्बले ॥ न । शय्यायाम् ॥
तलति तल्यते वा । तल० । तलि
। पुलिभ्यामिमन् ॥

तलिमम् । न । कुट्टिमे ॥ तल्पे ॥ च-
न्द्रातपे ॥ विताने ॥

तलुनः । पुं । पवने ॥ यूनि ॥ तरति
। सू० चोरश्चलोवे उनन् ॥

तलुनी । स्त्री । युवत्याम् । तरुण्या
म् ॥ वयसि चरम इति ङीप् इति
वा ङीप् । गौ० ङीप् वा ॥

तलेक्षणः । पुं । शूकरे ॥ इति शब्दा० ॥

तलोदरी । स्त्री । भार्यायाम् ॥

तलोदा । स्त्री । नद्याम् ॥

तल्कम् । न । वने ॥ इति त्रिकाण्ड-
शेषः ॥

तल्पम् । न । अट्टे ॥ कलत्रे । दारेषु ॥
शय्यायाम् ॥ तल्यतेऽस्मिन् ॥ तल०
। खष्पशिल्पशष्पेति साधु ॥

तल्पकीटः । पुं । मत्कुणे ॥

तल्पनम् । न । करिपृष्ठे ॥ पृष्ठवंशस्य
मांसे ॥

तल्लः । पुं । जलाधारविशेषे । तलाव
इति हिन्दूभाषा ॥ न । बिले । आल-
वाले ॥ त्रि । तस्मिन् लीने ॥

तल्लजः । पुं । मतल्लिकायाम् । प्रशस्ते
॥ तल्लति । तलजन्तौ । पचाद्यच्
। तल्लजः । अयमलक्षलिङ्गः समा
से उत्तरपदे भवति । यथा । प्रश-
स्ता कुमारी कुमारीतल्लजः । तल्ल
जस्य रूढिशब्दत्वात् प्रशंसावचनैश्चे
ति समासः ॥

तल्लिका । स्त्री । कुञ्चिकायाम् । कूञ्चि
कायाम् । कूंची ताली इत्यादि
भाषा ॥

तल्ली । स्त्री । तरुण्याम् ॥

तवक्षीरम् । न । पयःक्षीरे । यवजे ।
तीखुर इति भाषा ॥ तवक्षीरं तु मधु
रं शिशिरं दाहपित्तहृत् । क्षयकास
कफश्वासास्रदोषं हन्ति च सेवनात् ॥

तवक्षीरी । स्त्री । गन्धपत्रायाम् ॥

तवराजः । पुं । यवासशर्करायाम् ॥

तवराजोद्भवखण्डः । पुं । यवासशर्करा
भवखण्डे । सिद्धमोदके ॥

तवर्गः । पुं । तादिपञ्चवर्णेषु ॥

तवर्गीयः । पुं । तवर्गभवे वर्णे ॥ वर्गान्ता
च्चेति ठक् ॥

तविषः । पुं । स्वर्गे ॥ महोदधौ ॥ त-
वेति सौत्रो धातुः । तवेर्णिद्वेति टिषच्
॥ सुवर्णे ॥ शोभनाकृतौ ॥ व्यवसा
ये ॥ भेले ॥

तविषी । स्त्री । अर्ककन्यायाम् ॥ पृथिव्याम् ॥ नद्याम् ॥ वैदिकनिघण्टौ तु बलेपि ॥ टित्त्वात् ङीप् ॥

तष्टः । त्रि । तनूकृते ॥ तक्ष्यते स्म । तक्ष० । क्तः । ओरितिकलोपेष्टुत्वम् ॥

तष्टिः । स्त्री । काष्ठतक्षणे ॥

तसरः । पुं । वस्त्रवानयन्त्रके । टसर इति भाषा ॥ सूत्रवेष्टने । तासनी इति गौडभाषाप्रसिद्धे सन्तवायोपकरणे ॥ तनोति । तनु० । तनपृथ्योःसरन् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

तस्करः । पुं । चौरे ॥ द्विविधा स्तस्करान् विद्यात् परद्रव्यापहारकान् । प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः । प्रच्छन्नवञ्चकास्त्वेते येस्तेनाटविकादयः ॥ तत्करोति । दिवाविभेत्स्थकियत्तद्बहुनित्सच् ॥ तद्बृहतोःकरपत्योश्चौरदेवतयोः सुट्तलोपौ ॥ दमनवृक्षे ॥ पृक्काशाके ॥

तस्करस्नायुः । पुं । काकनासालतायाम् ॥

तस्करी । स्त्री । कोपनायां नार्याम् ॥

तस्थिवान् । त्रि । स्थितिमति । स्थिते ॥ ष्ठा० । छन्दसिलिट् । द्विरुक्तिका र्थम् । लिटः कानचादेशः ॥ वसु-

श्वेतिकसुर्भूच्येयोवा ॥

तस्त्रः । पुं । स्थावरे ॥

ताच्छील्यम् । न । नियततत्स्वभावतायाम् ॥ भावेष्यञ् ॥

ताटङ्कः । पुं । तालपत्रे । कर्णिकायाम् ॥ ताडङ्के ॥ गुर्वादरे ॥

ताटस्थ्यम् । न । उदासीनत्वे ॥ निकटस्थत्वे ॥

ताडः । पुं । ताडने ॥ घोषे । शब्दे ॥ मुष्टिमेयतृणादिषु ॥ अद्रौ ॥

ताडका । स्त्री । राक्षसीविशेषे ॥

ताडकान्तकः । पुं । श्रीरामे ॥

ताडकाफलम् । न । बृहदेलायाम् ॥

ताडकेयः । पुं । मारीचराक्षसे ॥ ताडकायाअपत्यम् । स्त्रीभ्योढक् ॥

ताडङ्कः । पुं । कर्णभूषायाम् । कर्णदर्पणे । कानतड़का इतिभाषा ॥

ताडनम् । न । आघाते ॥ यथा । शताऽपराधे वनितां पुष्पेणापि न ताडयेत् । दोषाच गमयेत् स्त्रीणां गुणानेव प्रकाशयेदितिमात्त्विकाः ॥ लालने बहवोदोषा स्ताडने बहवोगुणाः । तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥

ताडनी । स्त्री । अश्वताडनयष्ट्याम् । कशायाम् ॥ ताड्यतेऽनया । तड आघाते । णिजन्तः । ल्युट् । ङीप् ॥

ताडपत्रम् । न । ताडङ्के ॥

ताडागम् । न । तडागोदके ॥ यथा ।
प्रशस्तभूमिभागस्थो बहुसंवत्सरो
षितः । जलाशय स्तडागः स्यात्ताडा
गंतज्जलं स्मृतम् ॥ ताडागमुदकं स्वा
दु कषायं कटुपाकि च । वातलं बहुवि
ष्टम्भ मधुरं पित्तकफापहम् ॥ त
डागस्येदम् । अण् ॥

ताडिः । स्त्री । ताडीद्रुमे । ताडियात
इतिगौड भाषाप्रसिद्धे ॥

ताडी । स्त्री । मत्त्द्रुमे । ताडियात
इति गौडभाषा ॥ आभरण विशेष
इतिदुर्गसिंहः ॥

ताड्यमानः । त्रि । पटहादिवाद्ये ॥ त्रि ।
तर्क्षादिताडिते । हन्यमाने । ताड
नयुक्ते ॥

ताण्डः । पुं । मुन्यन्तरे ॥

ताण्डवः । पुं । न । लास्ये । नृत्ये ॥ पुं
नृत्यं ताण्डवमाहुः स्त्रीनृत्यं लास्य
मुच्यते ॥ तण्डुना प्रोक्तम् । तेनप्रो
क्तमित्यण् ॥ तृणान्तरे ॥ उद्धतनृ
त्ये ॥ त्रिमुनि (॥) ॥

ताण्डवतालिकः । पुं । नन्दिनि । शि
वद्वारस्थि ॥

ताण्डवप्रियः । पुं । शिवे ॥ त्रि । नृत्य
प्रिये ॥ ताण्डवं प्रियं यस्य ॥

ताण्डवितम् । न । नर्त्तिते ॥

ताण्ड्यं । न । नृत्यशास्त्रे ॥

ताण्डी । पुं । सामः शाखाविशेषा ऽ
ध्यायिनि ॥

ताता । पुं । जनके । पितरि ॥ अनुक
म्प्ये ॥ त्रि । पूज्ये ॥ चतुष्कले (ऽ॥)
आदिगुरौ ॥ तनोति । तनु० । दुत
निभ्यांदीर्घश्चेति क्तः । अनुदात्तेति
नलोपः ॥

तातगुः । पुं । पितृताते । काका चाचा
इतिभाषा ॥ पितृ जनकस्य हिते ॥

तातजनयित्र्यौ । स्त्री । मातापित्रोः
॥ द्विवचनान्तोयम् ॥

तातसुल्यः । त्रि । पितृसमे । मनोज
वसे ॥ तातेन तुल्यः ॥

तातनः । पुं । खञ्जने ॥

तातलः । पुं । व्याधि । रोगे ॥ पाके ॥
लोहकूटे ॥ मनोजवे । तात्तुल्ये ॥
त्रि । तप्तसाधे ॥

ताति । पुं । पुत्रे ॥ इतिजटाधरः ॥

तात्कालिकः । पुं । तत्कालभवे ॥

तात्कालिकविकारः । पुं । चित्तासास्थे
भावे ॥ तात्कालिकविकारः स्मादि
त्वासो ऽङ्ककियादिषु ॥

तात्पर्य्यम् । न । तत्परतायाम् ॥ व
क्तुरिच्छायाम् ॥ अभिप्राये ॥ तत्प
रस्य भावः । ष्यञ् ॥

तादर्थ्यम् । न । तदर्थत्वे । तस्मैइदम्

दोषघ्नकंमिति ॥

तापः । पुं । सन्तापे ॥ कृच्छ्रे ॥ तपनम् । तपसन्तापे । घञ् ॥

तापकः । पुं । ज्वरे ॥ त्रि । तापकृति ॥ तापयति । तप० । ण्वुल् ॥

तापत्यः । पुं । अर्जुने ॥ इति पु० ॥

तापत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रये ॥ आध्यात्मिकादिभैदैर्य त्रात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यःप्राप्नोत्यात्यन्तिकं फलम् ॥ तापानां त्रयम् ॥

तापनः । पुं । सूर्ये ॥ कामबाणे ॥ असुरविशेषे ॥ सूर्यकान्तमणौ । त्रि । तापके । तापयितरि ॥ तापयति । तप० । कर्त्तरि ल्युः ॥

तापनीयः । पुं । निष्कपरिमिते सुवर्णे ॥ तपनीयस्य विकारःपरिमाणः । जातरूपेभ्य.परिमाणे इत्यण् ॥

तापसः । पुं । दमनकवृक्षे ॥ बकपक्षिणि ॥ न । तमालपत्रे । तेजपात इतिभाषा ॥ त्रि । तपस्विनि ॥ वानप्रस्थे ॥ तपोऽस्यास्ति । अण्चेत्यण् ॥ यद्वा । तपःशीलमस्य । छत्रादिभ्योणः ॥

तापसतरुः । पुं । } इङ्गुदीवृक्षे । इं-
तापसद्रुमः । पुं । } गुआ इतिभाषा ॥ तापसैरुपयुक्तस्तरुः ॥

तापसद्रुमसन्निभा । स्त्री । गर्भदात्री ओषधौ ॥

तापसप्रियः । पुं । पियालद्रुमे ॥

तापसप्रिया । स्त्री । द्राक्षायाम् ॥

तापसेष्टः । पुं ॥ पियाले । चारे ॥

तापहरी । स्त्री । ताहरी इति प्रसिद्धे व्यञ्जनपदार्थे ॥ यथा । घृते हरिद्रासंयुक्ते माषार्द्धां भर्जयेद्वटीः । तण्डुलाँश्चाऽपिनिर्द्दिष्टान् सहैवपरिभर्जयेत् ॥ सिद्धियोग्यं जलं तत्रप्रिय कुशलः पचेत् । लवणार्द्रकहिङ्गूनि माचर्यां तत्रनिःक्षिपेत् ॥ एषासिद्धिं समायाता प्रोक्ता तापहरीबुधैः ॥ भवेत्तापहरीबल्या वृष्या श्लेष्मसमाचरेत् । तर्पणीरुच्याकृच्चागुर्वी तथ गुणावृता ॥

तापिच्छः । पुं । तमालवृक्षे ॥ तापिनं छादयति । छद० । कर्म्मण्यण् । पृषोदरादिः ॥ न । तमालपुष्पे ॥ तापिच्छस्यपुष्पम् । फलेलुगितिलुक् । हितीनं प्रसवे सर्वमितिक्लीवता ॥

तापिञ्जम् । न । धातुमाक्षिके ॥ इति राजनिर्घण्टः ॥

तापितः । त्रि । पीडिते ॥ जातसन्तापे ॥ । तपाया इति भाषा ॥ तापःसञ्जातोस्य । ता० इतच् ॥

तापी । पुं । बुद्धे ॥ त्रि । तापवति ॥

फलस्समाह । न पृथक् फलानि-
तेषां शिखिकीलकराहुदर्शनानि
यदि । तदुदयकारण मेषां केत्वा
दीनां फलं क्रमाद् ब्रूयात् ॥*॥ ताम
सकीलानां दर्शनवशात् फलमाह ।
यस्मिन् यस्मिन् देशे दर्शनं याया
न्ति सूर्यविम्बस्थाः । तस्मिंस्तस्मिन्
व्यसनं महीपतीनां परिज्ञेयम् ॥
॥ चुत्प्रम्लानशरीराः मुनयोऽप्युत्
सृष्टधर्मसच्चरिताः । निर्मांसबाल
स्ताः कृच्छ्रेणायान्ति परदेशम् ॥ त
स्करविलुप्तवित्ताः प्रदीर्घनिः श्वास
मुकुलितविपुटाः । सन्नाः सन्नश
रीराः शोकोद्भववाष्परुद्धदृशः ॥ चा
मा जुगुप्समानाः स्वनृपतिपरचक्र
पीडिताः मनुजाः । स्वनृपतिचरितं
कर्म च पुराकृतं प्राभुवन्त्यन्ये ॥ गर्भेष्व
पिनिष्पन्ना वारिमुचो न प्रभूतवारि
मुचः । सरितो यान्ति तनुत्वं क्वचित्
क्वचिज्जायते सस्यम् ॥*॥ तेषामाकृ
तिवशेन फलमाह । दण्डेनरेन्द्रमृत्यु
र्व्याधिभयं स्यात् कबन्धसंस्थाने । ध्वा
ङ्क्षे च तस्करभयं दुर्भिक्षं कीलके-
ऽर्कस्थे ॥ राजोपकरणरूपैः छत्रध्वज
चामरादिभिर्विद्धः । राजान्यत्वकृद
र्कः स्फुलिङ्गधूमादिभिर्जनहा ॥ ए
कोऽदुर्भिक्षकरो द्वाद्याःस्युर्नरपतेर्वि

नाशाय । सितरक्तपीतकृष्णैस्तैर्विद्धो
ऽर्कोऽनुवर्णघ्नः ॥*॥ विशेषफलान्याह
। दृश्यन्ते च यतः सूर्यविम्बस्थोत्थि
तामसोत्पाताः । आगच्छति लोका
नां तेनैव भयं प्रदेशेनेति वाराहीसं
हिता ॥

तामसयज्ञः । पुं । यज्ञविशेषे ॥ यथा ।
विधिहीनमसृष्टान्नं मन्त्रहीनमद
क्षिणम् । श्रद्धाविरहितं यज्ञं ताम
सं परिचक्षते ॥ तामसानां यज्ञः ॥

तामसाहारः । पुं । तामसप्रकृतीना-
माहारे ॥ यातयामं गतरसं पूतिप
र्युषितञ्च यत् । उच्छिष्टमपि चामे-
ध्यं भोजनं तामसप्रियम् ॥

तामसिकः । त्रि । तामसे । तमोगुण-
कार्ये ॥

तामसी । स्त्री । निशायाम् ॥ दुर्गाया
म् ॥ तमोन्वितायाम् ॥ जटामां-
स्याम् ॥

तामिस्रः । पुं । विपर्ययविशेषे ॥ स चा
ष्टादशधा । यथा । शब्दादयो दश वि
षया रञ्जनीयाः स्वरूपतः । ऐश्वर्यं
चाणिमादिकं न स्वरूपतो रञ्जनीयम्
। किन्तु रञ्जनीयशब्दाद्युपायः । ते
च शब्दादय उपस्थिताः परेणोपह-
न्यमानास्तदुपायाश्चाणिमादयः
स्वरूपेणैव कोपनीया भवन्तीति श

ब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशोक्ताः ॥ तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति साङ्ख्याः ॥ भोगेच्छाप्रतिघाते सति क्रोधे ॥ राक्षसे ॥ तमिस्रावारिणि ॥ नं ॥ अन्धकारमये नरके ॥ परवित्तापत्यकलत्रापहर्त्ता यमदूतैर्यैर्निपात्यते ॥ तमिस्रं भोक्ष्यम् अस्या ऽस्तिवा ॥ ज्योत्स्ना तमिस्रमयम् ॥

ताम्बूलम् ॥ नं ॥ क्रमुके । गुवाके ॥ नागवल्लीदले । पान इति प्रसिद्धे ॥ ताम्यति । तमु ॥ पिच्छादित्वात् ऊलच् धातोर्दीर्घत्वञ्च ॥ ताम्बूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धिनिर्णाशनम् । वक्त्राभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥ अपि चाह्नुः । ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् । वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु ॥ बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ॥ * ॥ अनिधाय मुखे पर्णं पूगं खादयते नरः । सप्तजन्म दरिद्रः स्यादन्ते न स्मरते हरिम् ॥ * ॥ पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसम्भवः । चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥ नायुरग्रे विषं मूले मध्ये लक्ष्मीः स्थिरस्थिता ॥ तस्मादग्रञ्च मूलञ्च मध्यं पर्णस्य वर्जयेत् ॥ चूर्णाधिकं हरति गन्धमथाविपूगं रागं तथाधिकदलं सुगन्धिकारि । ताम्बूलमुक्तमिदं रसनाग्रभिन्नपर्णानिशास्वधिकमुचितं पर्णमह्नि ॥ ताम्बूलं न हितं प्रोक्तं शरीरे रूक्षदुर्बले । ज्वरास्यशोषपित्तास्रमदमूर्च्छाविरोगिषु ॥ ताम्बूलात्युपयोगात् स्याच्छोषः पित्तानिलास्रता । देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥ * ॥ विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद्यदि । तावद्भवति चण्डालो यावद्गङ्गां न गच्छति ॥ * ॥ ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् । तपस्विनाञ्च विप्रेन्द्र गोमांससदृशं ध्रुवम् ॥ इति ब्रह्मवैवर्तपुराणम् ॥

ताम्बूलकरङ्कः । पुं । पानबट्टा इति प्रसिद्धे ताम्बूलपात्रे । स्वग्याम् ॥

ताम्बूलदः । त्रि । ताम्बूलिके । ताम्बूलदातरि ॥ इति त्रिकाण्डशेषः ॥ ताम्बूलं ददाति । डुदाञ् । आत इति कः ॥

ताम्बूलपत्रः । पुं । पिण्डालौ ॥

ताम्बूलरागः । पुं । मसूरे ॥ ताम्बूल

रङ्गे ॥

ताम्बूलवल्लिका । स्त्री । ताम्बूल्याम् ॥

ताम्बूलवल्ली । स्त्री । ताम्बूल्याम् ॥ ताम्यति । तमु ॰ । क्विप् । अनुनासिकस्येति दीर्घः । वा लसि । बुलमज्जने । सुरादीनाञ्चित्वात् । इगुपधेति कः । ताम् चासौ बुलश्च । पृषोदरादिः । ताम्बूलाख्या वल्ली । शाकपार्थिवादिः ॥

ताम्बूलिकः । पुं । ताम्बूलिनि ॥

ताम्बूली । त्रि । ताम्बूलाधिकृते । तमोली इति प्रसिद्धे आख्यकारे ॥

ताम्बूली । स्त्री । ताम्बूलवल्ल्याम् ॥ ताम्बूलात् गौरादिङीष् ॥

ताम्रम् । न । तामा इति प्रसिद्धे तैजसधातुविशेषे । शुल्वे । म्लेच्छमुखे । नैपालिके ॥ अस्योत्पत्त्यादयो यथा । शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले । तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥ जपाकुसुमसङ्काशं स्निग्धं मृदु घनक्षमम् । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम् । लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥ ताम्रं कषायं मधुरं सतिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च ॥ पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम् । शोथं कृमिं शूलमपाकरोति प्राहुः परे बृंहणमल्पमेतत् ॥ एको दोषो विषे ताम्रे त्वसम्यङ्मारिते ऽष्टते । दाहः स्वेदो वमिर्मूर्च्छा क्लेदो रेको यमिभ्रमः ॥ तस्य शोधनविधिर्यथा । पतलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ तस्य मारणविधिर्यथा । सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः । वासरत्रयमम्लेन ततः खल्वे विनिःक्षिपेत् ॥ पादांशं सूतकं दत्त्वा याममम्लेन मर्दयेत् । तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेन च ॥ गन्धकेनाम्लघृष्टेन तस्य कुर्य्याच्च गोलकम् । ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं सपुनर्नवाम् ॥ तत्कल्केन बहिर्गोलं लेपयेद् द्व्यङ्गुलोन्मितम् । धृत्वा तद्गोलकं भाण्डे शरावेण निरोधयेत् ॥ वालुकाभिः प्रपूर्य्याथ विभूतिलवणाम्बुभिः । दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपा-

चयेत् ॥ क्रमवृद्ध्याग्निना सम्यक् याव द्यामचतुष्टयम्। स्वाङ्गशीतं समुद्धृत्य मर्दयेच्छूरणद्रवैः॥ यामैकं गोलकं तच्च निःक्षिपेच्छूरणोदरे। मृदालेपस्तु कर्त्तव्यः सर्वतोऽङ्गुष्ठमात्रकः॥ पाच्यं गजपुटे चित्तं सर्वं भवति निश्चितम्। वमनञ्च विरेकञ्च मूर्च्छां भ्रममथारुचिम्॥ विदाहं स्वेदमुत्क्लेदं न करोति कदाचनेति॥ अरुणे। गुल्मनिभे॥ पुं। कुष्ठरोगप्रभेदे॥ त्रि। अरुणवर्णवति॥ ताम्राक्षि तम्यसेवा। तमु०। आसितश्यो द्दीर्घश्चेति रक्तदीर्घी॥

ताम्रकम्। न। ताम्रे॥ स्वार्थेकः॥

ताम्रकर्णी। स्त्री। अञ्जनाख्यपश्चिमदिग्गजकरिण्याम्॥ ताम्रौ कर्णौ यस्याः। पाककर्णेति नासिकेति वाङीप्॥

ताम्रकारः। पुं। ताम्रकुट्टके। गौल्मिके। कंसेरा इति भाषा प्रसिद्धे वर्णसङ्करजातौ॥ उत्पत्तिः कंसकारे द्रष्टव्या। ताम्रं करोति। कुम्भ०। कर्मण्यण्॥

ताम्रकुट्टकः। पुं। कांस्यकारे॥ ताम्रं कुट्टयति। पुं। कुट्टच्छेदे। कर्मण्यण्। स्वार्थेकः॥

ताम्रकूटः। तमाखु इति प्रसिद्धे क्षुपे॥ यथा। सविदाकाचकूटश्च ताम्रकूटं धुस्तुरम्। अहिफेनं खर्जुरसं तारिकातरिता तथा॥ इत्येष्टौसि द्धिरष्यामि यथा सूर्योदकं प्रिये इति कुलार्णवतन्त्रम्॥

ताम्रकृमिः। पुं। इन्द्रगोपकीटे॥

ताम्रगर्भम्। न। तुत्थे॥

ताम्रचूडः। पुं। कुक्कुटे॥ ताम्रा चूडा यस्य॥ कुकुरद्रुमे॥

ताम्रत्रपुजम्। न। कांस्ये॥

ताम्रदुग्धा। स्त्री। गोरक्षदुग्धायाम्॥

ताम्रपट्टम्। न। ताम्रनिर्मितलेखनपत्रे॥ यथा। दत्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत्। आगामिभद्रनृपतेः परिज्ञानाय पार्थिवः॥ पटे वा ताम्रपट्टे वा समुद्रोपरिचिह्नितम्। इति मिताक्षरा॥

ताम्रपत्रः। पुं। जीवशाके॥ न। ताम्रनिर्मितपत्रे॥

ताम्रपर्णः। पुं। भारतवर्षीयोपद्वीपे॥

ताम्रपर्णी। स्त्री। चोलदेशप्रसिद्धायां सरिदाराम्॥

ताम्रपल्लवः। पुं। अशोकतरौ॥

ताम्रपाकी। पुं। गर्दभाण्डवृक्षे॥

ताम्रपादी। स्त्री। हंसपद्याम्॥

ताम्रपुष्पः। पुं। भूमिचम्पके। भूंआंपा इति भाषा॥ कोविदारे। रक्तकाञ्चने॥

मध्ये ॥ कनीनिकायाम् ॥ न । रूप्ये ॥ अध्ययनरूपायांसिद्धौ ॥ त्रि । स्फुरितदीधितौ ॥ अस्युवनादे ॥ निर्मले ॥ अत्युचे ॥ तारयति अतिक्रामति अन्यान् शब्दान् । तॄ० बहुलमेतन्निदर्शन मितिचुरादिगणसूत्रात् स्वार्थेणिच् । पचाद्यच् ॥ यद्वा तार्यते ऽनेनवा । घञ् घोवा ॥

तारकः । पुं । दैत्यविशेषे ॥ कर्णधारे ॥ भेलके ॥ न । दृशि ॥ स्त्री । कनीनिकायाम् ॥ रूप्ये ॥ त्रि । प्रातरि ॥ संसारसमुद्रस्य तरणकारयितरि ॥ अतिजगतीप्रभेदे वृत्तविशेषे । यथा । यदि तोटकवृत्तपदे गुरुरन्त्यम् भवतीह तदा किलतारकवृत्तम् । फणिनायकपिङ्गलवर्णित मेतं हर भण्डितमण्डलिका रसाचितम् ॥ यथा । अतिभारतरं हृदि चन्दनपङ्कं मनुते सरसीपयसं विषपङ्कम् । तवदुस्तरतारवियोगपयोधे र्नहि पारमसौ भविता प्रमदाधे ॥ तारयति । तॄ० । ण्वुल् ॥

तारकजित् । पुं । कार्त्तिकेये । षडानने ॥ तारकं जयति । जि० । क्विप् । तुक् ॥

तारकराजः । पुं । चन्द्रे ॥

तारका । स्त्री । न । नेत्रकनीनिकायाम् ॥ रूप्ये । नक्षत्रे ॥ तारका ज्योतिषी त्यमरः ॥ स्त्री । इन्द्रवारुण्याम् ॥

तारकारिः । पुं । कार्त्तिकेये । षडानने ॥ तारकस्य दैत्यविशेषस्य अरिः ॥

तारकिणी । स्त्री । निशायाम् ॥

तारकितम् । न । नभसि ॥ तारकाः संजाता अस्य । तदस्यसंजातंतारकादिभ्यइतच् ॥

तारखः । पुं । भेलके ॥ अष्टादशवत्सरे ॥ अतिदृष्टिसञ्जातेन धान्यस्याप्रपीडनम् । यत्रभवति सामान्यं तारणो सुरवन्दिते ॥ त्रि । तरणकारयितरि ॥ तारयति । तॄ० । ल्युः ॥ सन्तारणे ॥

तारणिः । स्त्री । नावि ॥

तारतण्डुलः । पुं । श्वेतयावनाले ॥

तारतम्यम् । न । तरतमयोर्भावे न्यूनाधिक्ये ॥ यथा । निर्धनं निधनमेतयोर्द्वयो स्तारतम्यविधिमुग्धचेतसाम् ॥ वेधनाम विधिना विनिर्मितौ रेफएव जयवैजयन्तिका ॥

तारतारम् । न । आगमाविरोधिना न्यायेन आगमार्थपरीक्षारूपे ऊहे । तृतीयायांसिद्धौ ॥

तारदी । स्त्री । तरदीवृक्षे ॥

तारपुष्पः । पुं । कुन्दवृक्षे ॥

तारापीडः। पुं। निशाकरे। चन्द्रे॥

ताराभूषा। स्त्री। रात्र्याम्॥

ताराभ्रः। पुं। कर्पूरे॥

तारामण्डलः। पुं। ईश्वरगृहविशेषे॥

तारामार्गः। पुं। आकाशे॥

तारारात्रिः। स्त्री। आगमोक्तपर्वविशेषे॥ यथा। भाद्रे मासि कृष्णपक्षे भौमवारे कुजर्क्षगे। अर्द्धरात्रौ सक्रमश्च सा तारा रात्रिरीरितेति॥

तारारिः। पुं। विटमाक्षिके॥

तारावती। स्त्री। कालिकापुराणप्रसिद्धायां चन्द्रशेखरभूपपत्न्याम्॥

तारिकम्। न। तरमूल्ये॥

तारिका। स्त्री। ताडीतिख्याते तालरसे॥

तारिणी। स्त्री। बुद्धदेव्यन्तरे। लोकेश्वरात्मजायाम्॥ * ॥ शिवपत्न्याम्। द्वितीयायां महाविद्यायाम्॥

तारुण्यम्। न। यौवने॥ तरुणस्य भावः। ब्राह्मणादित्वात् ष्यञ्॥

तारेयः। पुं। वालिवानरपुत्रे। अङ्गदे॥ तारायाः अपत्यम्। ढक्॥

तार्कवम्। न। तर्कोर्विकारे॥ तदवयवे॥ कोपधाच्चेत्यण्॥

तार्किकः। त्रि। तर्कतत्परे। तर्कशास्त्रविदि॥ तर्कमधीते। ठक्॥ स च षड्विधो यथा। स्याद्वादवादार्हतः स्यात् शून्यवादी तु सौगतः १। नैयायिकस्त्वक्षपादः २। योगः साङ्ख्यस्तु कापिलः ३। वैशेषिकः स्यादौलूक्यो ४। बार्हस्पत्यस्तु नास्तिकः ५। चार्वाकलोकायतिकश्चैते ६ ते षडपि तार्किकाः॥ आत्मनोऽचिद्रूपवादिनोऽनात्मवा ह्येते स्वबुद्धिपरिकल्पितं यदिच्छन्ति तद्वदन्ति॥

तार्क्षः। पुं। कश्यपे॥

तार्क्षी। स्त्री। पातालगरुडीलतायाम्॥

तार्क्ष्यः। पुं। अश्वे॥ सर्पे॥ गरुडाग्रजे॥ गरुडे॥ तार्क्षस्य कश्यपस्यापत्यम्। गर्गादित्वात् यञ्। बहुत्वे तार्क्षाः॥ एकस्मिन् कल्पे तृक्षस्य मुनेरपत्यत्वात् तार्क्ष्यो गरुडः। गर्गादित्वात् यञ्। बहुत्वे यञञोश्चेति लुकि तृक्षाः स्यन्दने॥ सुवर्णे॥ स्यन्दने॥ अश्वकर्णाख्यतरौ॥ न। रसाञ्जने॥

तार्क्ष्यजम्। न। रसाञ्जने॥

तार्क्ष्यध्वजः। पुं। हरौ। विष्णौ॥ इति हेमचन्द्रः॥

तार्क्ष्यनायकः। पुं। गरुडे॥ इति राजनिर्घण्टः॥

तार्क्ष्यप्रसवः। पुं। अश्वकर्णवृक्षे॥

तार्क्ष्यशैलम्। न। तत्तुल्यया दार्व्या कृताञ्जने। रसगर्भे। रसाञ्जने॥ तार्क्ष्य

ऽर्द्धति राजनिर्घण्टः ॥

तिक्तभद्रः । पुं । पटोले ॥

तिक्तमरिचः । पुं । कतकवृक्षे ॥

तिक्तरोहिणिका । स्त्री ।] कटुका-
तिक्तरोहिणी । स्त्री । ॥] याम् ॥ क
टुकायाम् ॥ तिक्ता चासौ रोहिणी च ॥

तिक्तवल्ली । स्त्री । मूर्वालतायाम् ॥

तिक्तबीजा । स्त्री । कटुतुम्ब्याम् ॥

तिक्तशाकः । पुं । खदिरवृक्षे ॥ वरुण
द्रुमे ॥ तिक्तः शाकोऽस्य पत्त्राणाम् ॥
वरुणस्य शाकमध्ये पाठात् ॥ पत्त्रसु
न्दरवृक्षे ॥

तिक्तसारः । पुं । खदिरे ॥ तिक्तः सारो
ऽस्य ॥ न । दीर्घरोहिषकतृणे ॥

तिक्ता । स्त्री । कटुक्याम् ॥ पाठायाम्
॥ यवतिक्तायां लतायाम् ॥ षड्भु
जायाम् ॥ छिक्कन्याम् ॥ टाप् ॥

तिक्ताख्या । स्त्री । कटुतुम्ब्याम् ॥

तिक्ताङ्गा । स्त्री । पातालगरुडीलता
याम् ॥

तिग्मम् । न । तीक्ष्णे ॥ गैना इति भाषा
॥ त्रि । तद्वति ॥ तेजयति । तिज० ।
युजिरुचितिजां कुश्चेति मक् कवर्गे
श्चान्तादेशः ॥

तिग्मरश्मिः । पुं । सूर्ये ॥ तिग्मा रश्म
योऽस्य ॥

तिग्मांशुः । पुं । सूर्ये ॥ तिग्माः कराः



अंशवोऽस्य ॥

तिजिलः । पुं । चन्द्रे ॥ तेजते । तिज० ।
इगुपधादिभ्यः किदितीलच् ॥

तिटी । स्त्री । त्रिवृति ॥ सतीलायाम् ॥

तितउः । पुं । चालन्याम् ॥ तनोति ॥
तन्यते वा ॥ तनु० । तनोतेर्डउः स
न्वच्च ॥ सन्वद्भावाद्द्वित्वमभ्यासस्ये
त्त्वम् । चुट्छिद्रसमेतं पिधानं
तितउ मृतमित्युक्तः स्त्रीष्वपि ॥

तितिक्षा । स्त्री । क्षान्तौ । क्षमायाम्
। परापराधसहने ॥ सर्वदुःखसह
ने ॥ शीतोष्णमानापमानलाभाला
भयोक्तपर्यादिद्वन्द्वसहिष्णुतायाम् ॥
अहो तितिक्षामाहात्म्यमहो दानफ
लं महत् । यदागतो हरिश्चन्द्रो म
हेन्द्रस्य सलोकताम् ॥ तिजेः क्षमा
र्थात् सन्नन्तादप्रत्यये टाप् ॥

तितिक्षितः । त्रि । क्षान्ते । सोढे ॥ ति
तिक्षा जाताऽस्य । सा कोऽदित्वा
त् इतच् ॥

तितिक्षुः । त्रि । क्षमान्विते । क्षान्ते ।
सहिष्णौ । जीवनविच्छेदप्यतिरि
क्षीत द्विजन्मसहिष्णा तितिक्ष्वाख्या
तारः ॥ तितिक्षते । तिजेः क्षमाया
म् । गुप्तिज्किद्भ्यः सन् । तितिक्षण
शीलः । सनाशंसेत्युः ॥

तितिभः । पुं । इन्द्रगोपकीटे ॥ इ० हे० ॥

नितीर्थानि यथाक्रमेति विद्यावृषयर्मम् ॥ उपाध्याये गुरौ मन्त्रिणि ॥ इति मेदिनिकरः ॥ सचिवे ॥ इति हेमचन्द्रः ॥ योनौ ॥ दर्शने ॥ निपाने । नक्षत्रप्रदेशे । घट्टे ॥ उपड्डपर्वणाश्रये ॥ मेघे ॥ विप्रे ॥ तीर्यते ऽनेन वा तरत्यनेन वा । तृ॰ पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ जङ्गमतीर्थानि यथा । अङ्गुष्ठस्य दे ब्रह्मतीर्थं स्यादङ्गुष्ठमूले कायम् । मध्येऽङ्गुष्ठाङ्गुल्योः पैत्रं मूलेऽङ्गुष्ठस्य ब्राह्मम् ॥ तीर्थं त्रिविधम् । जङ्गमं मानसं स्थावरमेदात् । तथाच । ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥ * ॥ मानसानि यथा । शृणु तीर्थानि गदतो मानसानि ममानघे । येषु सम्यङ्नरः स्नात्वा प्रयाति परमां गतिम् ॥ सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥ दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थञ्च प्रियवादिता ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥ एतत्ते कथितं देवि मानसं ती-

र्थं सर्वदम् ॥ * ॥ भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु । यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः । तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः ॥ प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता ॥ तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः । उभयोरपि यः स्नाति स याति परमां गतिम् ॥ * ॥ तीर्थगमने दोषो यथा । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च । अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ * ॥ गमने फलं यथा । अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमने न यत् ॥ तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः । कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत् ॥ तिर्यग्योनिं न वै गच्छेत् कुदेशे न च जायते । न दुःखी स्यात् स्वर्गभाक् च मोक्षोपायञ्च विन्दति ॥ * ॥ तीर्थफलभागिनो यथा । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित् । अहङ्कारविमुक्तश्च स ती॰ ॥

धर्माम्भिको निरारम्भो ब्रह्मचारी जितेन्द्रियः। विमुक्तः सर्वसङ्गेभ्यः स तीर्थ०॥ अक्रोधनो मलमतिः सत्यवादी दृढव्रतः। आत्मोपमश्च भूतेषु सती०॥ अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः। हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः॥ इति काशीखण्डम्॥ कृते तु पुष्करं तीर्थं त्रेतायां नैमिषं तथा। द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत्॥

तीर्थकरः। पुं। जिने॥ करोति इति करः। तीर्थस्य करः॥ कपिलकणाभ्द्यादिशास्त्रकारेषु॥

तीर्थङ्कृत्। पुं। } जिने॥
तीर्थङ्करः। पुं। }

तीर्थराजिः। स्त्री। } अविमुक्ते। काश्याम्॥
तीर्थराजी। स्त्री। }

तीर्थवाकः। पुं। केशे॥ इति हेमचन्द्रः॥

तीर्थसेवी। पुं। बकपक्षिणि॥ इति राजनिर्घण्टः॥ त्रि। तीर्थवासिनि॥

तीवरः। पुं। अम्बुधौ॥ व्याधे॥ तेखोर इति गौडप्रसिद्धे वर्णसङ्करजातिविशेषे॥ स तु राजपुत्रस्त्रियां क्षत्रियाज्जातः इति ब्रह्मवैवर्त्तपुराणम्॥ चूणिकभार्यायां पुण्ड्रकाज्जात इति पराशरपद्धतिः॥ तरति तीर्थेनेति। तॄ०। छित्वरच्छत्वरेत्यादिना ष्वरजन्तो निपातितः॥



तीवरी। स्त्री। तीवरस्त्रियाम्॥ षित्वान् ङीष्॥

तीव्रः। पुं। शिवे॥ नं। लोहे॥ तीरे॥ त्रपुणि। सीसके॥ तीक्ष्णे॥ त्रि। दुःसहे॥ अत्युष्णे॥ नितान्ते। प्रचण्डे॥ अत्यर्थे। सामान्यक्लीबे। इयं गामिनि साध्यलिङ्गः॥ यथा। तीव्रं भुङ्क्ते। तीव्रो नरः। कटौ। कटुरसादौ॥ तीक्ष्णे॥ तीव्यति। तीव स्थौल्ये। बाहुलकात् रक्। यद्वा। तेजति। तिज निशाने। बाहुलका दरन् दीर्घो जश्च वः॥

तीव्रकरः। पुं। सूर्ये॥

तीव्रगन्धा। स्त्री। यवान्याम्॥

तीव्रज्वाला। स्त्री। धातक्याम्॥

तीव्रबन्धः। पुं। सामसरसी॥

तीव्रवेदना। स्त्री। यातनायाम्॥ तीव्राचासौ वेदना च॥

तीव्रा। स्त्री। कटुरोहिण्याम्॥ राजिकायाम्॥ गण्डदूर्वायाम्॥ नदीविशेषे॥ महाज्योतिष्मत्याम्॥ तरदीवृक्षे॥ तुलस्याम्॥

तु। अ। पादपूरणे॥ भेदे॥ समुच्चये॥ अवधारणे॥ पक्षान्तरे॥ नियोगे॥ प्रशंसायाम्॥ विनिग्रहे॥ उत्साहनिश्चयार्थे॥ तुदति। तुद

| तुङ्गा | तुषोद् |
|---|---|

व्ययने। मितद्र्वादित्वात् डुः ॥

तुकाक्षीरी। स्त्री। वंशरोचनायाम् ॥

तुगा। स्त्री। वंशरोचनायाम् ॥

तुगाक्षीरी। स्त्री। वंशरोचनायाम् ॥ तक्षेदपीतिकश्चित् ॥

तुङ्गः। पुं। पुन्नागद्रुमे ॥ पर्वते ॥ बुधग्रहे ॥ नारिकेले ॥ गण्डके ॥ योगविशेषे ॥ यथा। अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ अपिच। सूर्याद्युच्चान् क्रियवृषमृगस्त्रीकुलीरान्त्ययूकान् दिग्वह्न्यष्टाविंशतिशरान् सप्तविंशांश्च विंशान्। अंशानेतान् मदति यवन त्वाम्यतुङ्गान् सुतुङ्गांशानेवाख्यात् मदनभवनेष्वाह नीचान् सुनीचानिति ॥ न। किञ्जल्के ॥ त्रि। उन्नते ॥ उग्रे ॥ प्रधाने ॥ तुङ्ग्यते। तुजि हिंसायाम्। घञ्। न्यङ्क्वादि० ॥

तुङ्गकः। पुं। पुन्नागवृक्षे ॥

तुङ्गकारण्यम्। न। तीर्थविशेषे ॥

तुङ्गभद्रः। पुं। मदोत्कटे ॥

तुङ्गभद्रा। स्त्री। दक्षिणादेश प्रसिद्धे सरिद्विशेषे ॥ अस्याजलगुणा यथा। तज्जलं निर्मलं स्निग्धं स्वादु प्रोक्तं तथा गुरु। कण्डुप्रियावहं प्रायः सात्यं मेधाकरं मतमिति ॥

तुङ्गशेखरः। पुं। पर्वते ॥

तुङ्गा। स्त्री। वंशलोचनायाम् ॥ शम्याम् ॥ अनुष्टुप्छन्दोभेदे ॥ द्विगुणनगणकर्णैः सुललितबहुवर्णैः। रसिकविहितरङ्गा भवतिह किल तुङ्गा ॥ यथा। विशसि मम चित्ते मदनविशिखकृत्ते। न नयनविपथत्वं व्रजसि तदपि मे त्वम् ॥

तुङ्गी। पुं। उच्चस्थानस्थिते ग्रहे ॥

तुङ्गिनी। स्त्री। महाशतावर्याम् ॥

तुङ्गी। स्त्री। हरिद्रायाम् ॥ शाकभेदे ॥ बर्बरायाम् ॥ तुङ्गति। तुजि०। अच्। न्यङ्क्वादिः। गौरादित्वात् ङीष् ॥ निशायाम् ॥

तुङ्गीपतिः। पुं। चन्द्रे ॥ इ० त्रि० ॥

तुङ्गीशः। पुं। शिवे ॥ कृष्णे ॥ सूर्ये ॥

तुच्छ। त्रि। शून्ये ॥ अल्पे ॥ हीने ॥ न। तुषाक्ते। भुसइतिभूसा इति च भाषा ॥ तोदितं तुद्। संपदादित्वात् भावे क्विप्। तुदा व्यथया छ्यति। छो छेदने मूलविभुजादित्वात् कः ॥ तुदति वा। आतदति कः ॥

तुच्छद्रुः। पुं। एरण्डवृक्षे ॥

तुच्छधान्यकम्। न। पुलाके ॥

तुच्छा। स्त्री। तुत्थायाम्। नीलीवृक्षे ॥

तुजः। पुं। दैत्ये ॥ तुजति। तुजिहिं

सायाम् । पचाद्यच् ॥

तुञ्जेट् । पुं । दैत्यभेदोपि शक्रे ॥ ईश० । क्विप् । तुञ्जेभ्यः ईट् ॥

तुटुमः । पुं । मूषके । उन्दुरौ ॥ इति त्रिकाण्डशेषः ॥

तुडिः । स्त्री । तोडने ॥ तोडति । तुडु तोडने ॥ सर्वधातुभ्य इन् ॥

तुणिः । पुं । नन्दिवृक्षे । तूणी इति भाषा ॥ तूणयति । तूण सङ्कोचे । अच् । ह्रस्वः । पृषोदरादिः ॥ तूणीकश्च कटुः पाके कषायो मधुरो लघुः । तिक्तो ग्राही हिमो वृष्यो मुखकुष्ठास्रपित्तजित् ॥

तुण्डम् । न । आनने । मुखे ॥ तुण्डति । तुडि तोडने । पचाद्यच् ॥

तुण्डकेरिका । स्त्री । कार्पास्याम् ॥

तुण्डकेरी । स्त्री । बिम्बिकायाम् । कुन्दुरु इति टूरी इति च ख्याता पश्चिमे । तेलाकुचा इति गौडभाषा ॥ प्रशस्तं तुण्डम् । प्रशंसायां कन् । तुण्डकमीर्ते । कर्मण्यण् ॥

तुण्डिः । पुं । मुखे ॥ चञ्चौ ॥ तुन्दकूप्याम् । स्त्री । नाभौ ॥ तुण्डेरिन् ॥

तुण्डिः । स्त्री । बिम्बफलायाम् ॥ उद्धायां नाभौ । टूंडी इति संडी इति च भाषा ॥ तुण्डते । तुडि० । सर्वधातुभ्य इन् ॥

तुण्डिका । स्त्री । बिम्बिकायाम् ॥ नाभौ । तुन्दकूप्याम् । टूंडी इति सुंडी इति च भाषा ॥

तुण्डिकेरी । स्त्री । कार्पास्याम् । समुद्रान्तायाम् ॥ कपास इति भाषा ॥ बिम्बिकायाम् ॥ तुण्डं चञ्चुरस्तियस्याः । अतइनिठनौ । तुण्डिकान् शरीरिणः ईरयति । ईर० । कर्मण्यण् ॥

तुण्डिकेशी । स्त्री । बिम्बिकायाम् ॥

तुण्डिभः । त्रि ॥ वृद्धनाभौ ॥ अतिशयिता तुण्डिः वृद्धा नाभिः अस्य । तुन्दिवलिवटेर्भः इति सूत्रे मूर्धन्योपधोऽपि तुण्डिरिति माधवः ॥

तुण्डिलः । त्रि । वृद्धनाभौ ॥ तुण्ड्यते । तुडि० । सर्वधातुभ्य इन् । ततः सिध्मादित्वाल्लच् ॥ मुखरे ॥ तुण्ड्यते । तुडि० । सलिकल्यनीति इलच् ॥

तुत्थः । पुं । अग्नौ ॥ न । अञ्जनभेदे । मयूरके । शिखिग्रीवे ॥ तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणञ्च तत् ॥ तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् ॥ विषाश्मकुष्ठकण्डूघ्नं खर्परञ्चापि तद्गुणम् । अस्य शोधनम् । विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः ॥ पुटं द-

था पुटं चौद्रे देयं तुत्थविशुद्धये ॥ तुदति । तुद्व्यथने । पातृतुदीति थक् ॥ तुत्थयति वा । तुत्थ आवरणे । अच् ॥ कर्परीतुत्थे ॥

तुत्थकम् । न । तुत्थे ॥

तुत्था । स्त्री । नील्याम् ॥ सूक्ष्मैलायाम् ॥ महानीलाम् ॥

तुत्थाञ्जनम् । न । अञ्जनभेदे । शिखिग्रीवे । वितुन्नके ॥ तुत्थयति तु-त्थेतेवा । तुत्थ० । अचुरण्या । तुत्थञ्च तदञ्जनञ्च ॥

तुन्तुभः । पुं । सर्षपे ॥ तुदति । तुद० । बाहुलकादुभच् । पृषोदरादिः ॥

तुन्दम् । न । उदरे ॥ कुक्षौ ॥ तुदति । तुद० । इगुपधेतिकः । आच्छीन-द्योरिति नुमिति योगविभागान्नु-म् ॥ यद्वा । तुदिः । च्यवनम् । तस्य मदने । अब्दादयश्चेतिसाधु ॥ त्रि । तुन्दि-ले ॥ तुन्दमस्त्यस्य । अर्शआदिभ्योच् ॥

तुन्दकूपिका । स्त्री । } नाभौ ॥
तुन्दकूपी । स्त्री । }

तुन्दपरिमृजः । त्रि । अलसे । मन्दे ॥ तुन्दमुदरं परिमार्ष्टि । संमृजुद्ध । तुन्दशोकयोः परिमृजापनुदोरि-ति कः ॥

तुन्दवान् । त्रि । तुन्दिले ॥ अतिशयितं तुन्दमुदरमस्य । तुन्दादिभ्यश्चेति

वान्मतुप् ॥

तुन्दिः । पुं । गन्धर्वविशेषे ॥ न । उदरे ॥ स्त्री । नाभौ ॥

तुन्दिकः । त्रि । वृहत्कुक्षौ । तुन्दिले ॥ अ-तिशयितं तुन्दमुदरमस्य । तुन्दादिभ्य इलश्चेति चकाराट्ठन् ॥

तुन्दिका । स्त्री । नाभौ ॥

तुन्दी । त्रि । पीनकुक्षौ । पिचण्डिले । तुन्दिले ॥ अतिशयितं तुन्दमस्त्य-स्य । तुन्दादिभ्यश्चेति चकारा-दिनिः ॥

तुन्दिभः । त्रि । तुन्दिभे ॥ तुन्दिर्वृद्धा नाभिरस्त्यस्य । तुन्दिवलिवटेर्भः ॥

तुन्दिलः । त्रि । वृहत्कुक्षौ । पिचण्डि-ले ॥ अतिशयितं तुन्दमस्त्यस्य । तु-न्दादिभ्यश्चेति इलच् ॥

तुन्दिलफला । स्त्री । त्रपुष्याम् ॥

तुन्नः । पुं । नन्दीवृक्षे ॥ तुद्यते । तुद० । क्तः ॥ त्रि । छिन्ने । द्विधाकृते ॥ व्य-थिते ॥

तुन्नकः । पुं । तुन्ने ॥

तुन्नवत् । त्रि । बहुच्छिद्रे ॥

तुन्नवायः । पुं । सौचिके । दर्जी इति भाषाप्रसिद्धे ॥ तुन्नं छिन्नं वयति । वे-ञ् तन्तुसन्ताने । ह्वावामश्चेत्यण् ॥

तुभः । पुं । छागे ॥ तोभते । तुभ हिं-सायाम् । इगुपधेतिकः ॥





तुमुलः । पुं । कलिद्रुमे ॥ व्याकुलेरणे ॥ न । रणसङ्कुले ॥ तबनम् तौति-हा । तुःसौघः । बाहुलकान्मुलक् ॥ सङ्कीर्णे । सङ्कुले ॥

तुम्बः । पुं । तुम्बाम् । अलाबाम् ॥ तुम्बतिरुचिम् । तुबिअर्दने । अच् ॥

तुम्बकः । पुं । तुम्बे ॥ स्वार्थेकः ॥ रा-जालावौ ॥

तुम्बा । स्त्री । दुग्धकलायांतुम्ब्याम् ॥ बहुसोखद्वाम् ॥ गवि ॥

तुम्बिः । स्त्री । अलाबाम् ॥ तुम्बतिरु-चिम् । तुबि० । सर्वधातुभ्यइन् ॥

तुम्बिका । स्त्री । अलाबाम् ॥ कटुतु-म्ब्याम् ॥

तुम्बिनी । स्त्री । कटुतुम्ब्याम् ॥

तुम्बी । स्त्री । अलाबाम् । तूंबी इति भाषा ॥ तुम्बतिरुचिम् । तुबिअर्दने । अच् । गौ० ङीष् ॥ इन्नन्तात् कृदिकारादक्तिनङीष्वा ॥ कुचिकवृषे-इतिरत्नमाला ॥

तुम्बीपुष्पम् । न । अलाबूपुष्पे । अला म्बुजे ॥

तुम्बुकम् । न । अलाबूफले । तूंबा इ-तिभाषा ॥ पुं । अलाबाम् ॥

तुम्बुरी । स्त्री । सुन्धासु । कुक्कुर्याम् ॥ धन्याके ॥ इतिमेदिनी ॥

तुम्बुरुः । पुं । अर्हदुपासकविशेषे ॥ ग-न्धर्वप्रभेदे । स्वर्गगायके ॥ वृक्षवि-शेषे । सूलभ्रे । तीक्ष्णफले ॥ धन्या-दि (?) विकले ॥ न । कुस्तुम्बुरुणि तिन्दुकीफले ॥ तुम्बुरु प्रथितं ति-क्तं कटु पाकेपितत्कटु । रूक्षोष्णं दी-पनं तीक्ष्णं रुच्यं लघु । विदाहि च ॥ वातश्लेष्मातिकर्णाक्षिशिरोरुग्गुदज-क्रिमीन् । कुष्ठशूलारुचिश्वासप्लीहकृ-च्छ्राणि नाशयेत् ॥

तुरम् । न । त्वरिते ॥ शीघ्रे ॥ वेगे ॥ त्वि-सहति ॥ तुतोर्त्ति । तुरत्वर-णे । कः ॥

तुरगः । पुं ॥ चित्ते ॥ वाजिनि ॥ तौर-यम् । तुरत्वरणे । घञर्थेकः । बाहु-लकाद्बक्वा । संज्ञापूर्वकत्वान्नगुणः । तुरेण तुरयावा गच्छति । अन्येभ्यो पीतिडः ॥

तुरगगन्धा । स्त्री । अश्वगन्धायाम् ॥

तुरगब्रह्मचर्यकम् । न । अभावात् स्त्री परित्यागे ॥

तुरगलीलकः । पुं । तालप्रभेदे ॥ द्रुत द्वन्द्वं विरामान्तं कथ्यस्तुरगलीलके ॥

तुरगस्कन्धः । पुं । तुरगाणां समूहे ॥ न रवरितुरगाणांस्कन्धश्च ॥

तुरगी । त्रि । सादिनि । अश्वारोहे ॥

तुरगी । स्त्री अश्वगन्धायाम् ॥ वडवा-याम् ॥

चैतन्यस्य तुरीयत्वं विश्वाद्यपेक्षया द्रष्टव्यम् ॥ त्रि । चतुर्थे ॥ यथा तुरीयं वाचो मनुष्या वदन्तीति । वाचस्तुरीयत्वं परायपेक्षया कुलगुरोरुपदेशात् ज्ञातव्यम् ॥ चतुर्णां पूरणः चतुरश्छयतावाद्यक्षरलोपश्चेति छः ॥

**तुरीयवर्णः** । पुं । शूद्रे ॥ तुरीयश्चासौ वर्णश्च ॥

**तुरुष्कः** । पुं । गन्धद्रव्यविशेषे । धूपे । सिल्हके । पीतसारके । शिलारस इति भाषा ॥ म्लेच्छजातिविशेषे । तुरुक इति भाषा ॥ देशविशेषे । तुरकस्थान इति भाषा ॥ श्रीवासे ॥ तुरोपति । तुर० । बाहुलकादुष्कः गुणाभावश्च । स्वार्थे कन् ॥ शब्दद्रुमे इति कश्चित् ॥

**तुर्यः** । त्रि । तुरीये । चतुर्थे ॥ चतुर्णां पूरणः । चतुरश्छयतावितियत् आद्यक्षरलोपश्च ॥

**तुर्वसुः** । पुं । म्लेच्छानां राज्ञि । म्लेच्छाचारे । ययातिराजस्य पुत्रविशेषे ॥

**तुलजापुरम्** । न । दक्षिणदेशप्रसिद्धे दुर्गास्थाने ॥

**तुलसी** । स्त्री । स्वनामप्रसिद्धायां वैष्णव्याम् । वृन्दायाम् । पर्णासे ॥ तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक् कफवातजित् ॥ शुक्ला कृष्णा च तुलसी, शुभैस्तुल्या प्रकीर्त्तिता ॥ तुलायास्सादृश्यम् स्यति । असु क्षेपणे । कर्मण्यण् । ङीप् । शकन्ध्वादिः ॥ यस्या देव्यास्तुलना स्ति विश्वेषु चाखिलेषु च । तुलसी तेन विख्याता इति देवीभागवतम् ॥ * ॥ यद्धर्मकर्म कुरुते मनुजः पृथिव्यां नारायणप्रियतमां तुलसीं विना च । तत्सर्वमेव विफलं भवति द्विजेन्द्र पत्रैर्विना विफलितुष्यति देवदेवः ॥ * ॥ तुलसीकाष्ठनिर्माणमाला गृह्णन्ति येनराः । पदे पदेऽश्वमेधानां लभन्ते निश्चितं फलम् ॥ प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् । मालतीं यूथिकां कुन्दं माधवीं केतकीं तथेत्यादि ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥

**तुलसीदेवी** । स्त्री । वर्वरीम् । सुरसायाम् ॥

**तुला** । स्त्री । सादृश्ये । माने । गृहाणां दारुबन्धाय पीठिकायाम् । उपरिस्थाप्यदार्वाधारभूते स्तम्भाग्रपीठे ॥ पलशते ॥ भाण्डे ॥ सप्तमराशौ । यूके । घटे ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । वृषतुरङ्गनक्रय-विक्रयो विबुधराधनदानमनाः पु

मान् । यस्मिन् तौलिगते बहुहार
भाग् विभवसम्मितवित्तविक्रमः ॥
तुलाधनुजातफलम् । तुलालग्ने
पुमान् जातः सुधीः सत्कर्मतत्परः ।
विद्वान् सर्वकलाविज्ञो धर्मात्मा जन
पूजितः ॥ तोल्यते ऽनया वा तोल-
नं वा । तुल उन्माने । भिदादित्वा
दङ् तुलोपमाभ्यामिति निर्देशात् वा
भावः ॥ * ॥ परीक्षाविशेषे ॥ यथा
नारदः । ब्राह्मणस्य घटो देयः क्षत्रि
यस्य हुताशनम् । वैश्यस्य सलिलं दे-
यं शूद्रस्य विषमेव तु ॥ साधारणः स
मस्तानां कोषः प्रोक्तो मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्वेषान्तु तुला-
स्मृता ॥

तुलाकोटिः । स्त्री । मानभेदे ॥ अर्बु
दे ॥ नूपुरे ॥ तुलां तुलयां कोट
यति । कुटपरितापे । अण् । अन्दः
॥ तुलाकारकोटिरग्रमस्या वा ॥

तुलाकोटी । स्त्री । तुलाकोटौ ॥

तुलाकोषः । पुं । तुलापरीक्षायाम् ॥

तुलाधरः । पुं । तुलाराशौ ॥ तुलागुणे
॥ त्रि । वाणिजके ॥ तुलायाः धरो-
धारकः ॥

तुलापुरुषदानम् । न । तुलादान इति लो
कप्रसिद्धे दाने । यथा । कार्य्यन्तु सर्वदा
नानां तुलापुरुषसंज्ञितमिति ॥ मोद
महादानानामेतद्दानविशेषे ॥

तुलामानम् । न । स्वर्णादीनां परिच्छे
दार्थं क्रियमाणे । कांटा इति भाषा-
प्रसिद्धे ॥

तुलाबीजम् । न । गुञ्जायाम् ॥

तुलिः । स्त्री । तुल्याम् ॥

तुलिका । स्त्री । खञ्जनिकायाम् ॥

तुलिकायन्त्रम् । न । ज्योतिर्विद्यायन्त्र
विशेषे ॥

तुलितः । त्रि । तुलया परिच्छिन्ने । तु
लां इतः तुलनया इति च भाषा ॥ उ
पमिते ॥ समीकृते ॥ तुलयतेश्चु
रादेर्ण्यन्तात् कर्म्मणि क्तः ॥

तुलिनी । स्त्री । } शाल्मलिवृक्षे ॥
तुलिफला । स्त्री । }

तुली । स्त्री । तुल्याम् । तन्तुवायकाष्ठ
विशेषे ॥

तुल्यः । त्रि । सदृशे । समे । समाने ॥
तुलया सम्मितः । नौवयोधर्म्मेत्या
दिना यत् ॥

तुल्यपानम् । न । बहुभिरात्मीयैर्जनैः
सह मिलित्वा एककाले कृते पाने ।
सपीतौ ॥ इत्यमरः ॥ तुल्यश्च तत्
पानञ्च ॥

तुल्ययोगिता । स्त्री । अलङ्कारविशेषे
॥ यथा । नियतानां सकृद्धर्म्मः सा पु
नस्तुल्ययोगिता ॥ नियतानां प्राक्-

रगिकानामेवाप्राकरविकानामेव-
वा । क्रमेणोदाहरणम् । पाण्डुत्वा
मंवदनं हृदयं सरसं तथालसञ्च
पुः । आवेदयति नितान्तं क्षेत्रियरो
गं सखि हृदन्तः ॥ कुमुदकमलनील
नीरजालि र्ललितविलासजुषोर्ह-
शोः पुरः । मलसममतरक्तिरम्बुज
ममप्रतिवसमेकपदे तवाननस्य ॥ अ
न्यदपि । प्रस्तुतानां तथान्येषां केव
लं तुल्यधर्मतः । औपम्यं गम्यते यत्र
सा मता तुल्ययोगितेति ॥

तुवरः । पुं । न ॥ कषायरसे ॥ तवति
छिनत्ति रोगान् । तुरितिसौत्रो धातुः
। छित्वरच्छत्वरेत्यादिना ष्वरच् ॥
धान्यविशेषे । तुवरयावनाले ॥ वि ।
कषायरसवति ॥

तुवरयावनालः । पुं । धान्यविशेषे । तु
वरे । रक्तयावनाले ॥ तुवरोयावना
लस्तु कषायोष्णो विरेचकः । सक्ष्म
श्री वातशमनो विदाही शोषका-
रकः ॥

तुवरिका । स्त्री । तुवर्याम् । आढक्या
म् । तुवर इति अरहर इतिच भाषा
॥ तुवरो ऽस्त्यस्याः । अतइनिठनावि
तिठन् । टाप् ॥ सुराष्ट्रजमृत्तिका-
याम् । फिटकरी इतिभाषा ॥

तुवरी । स्त्री । आढक्याम् । अरहर इ



ति तूर इतिच भाषा ॥ काक्ष्याम् । सौ
राष्ट्रमृदि । फिटकरी इतिभाषा ॥
तोरी इतिप्रसिद्धे धान्ये ॥ यथा । तु
वरी ग्राहिणी शीता लघ्वी कफवि
षास्रजित् । तीक्ष्णोष्णा वह्निदा क
ण्डूकुष्ठकोठकृमि प्रणुत् ॥

तुवरीतैलम् । न । तुवर्याः स्नेहे ॥ स्ने
हे तैलम् । तीक्ष्णोष्णं तुवरीतैलं ल
घु ग्राहि कफास्रजित् । वह्निकृ द्वि
षहृत् कण्डूकुष्ठकोठकृमिप्रणुत् ॥
मेदोदोषापहञ्चापि व्रणशोधनरो
पणम् ॥

तुवरीशिम्बः । पुं । रक्तचणमर्दके ॥

तुविः । स्त्री । तुम्बाम् ॥ इ० अ० स्वा ॥

तुषः । पुं । धान्यत्वचि ॥ बिभीतकद्रुमे
॥ तुष्यति । तुषतुष्टौ । इगुपधेति कः ॥

तुषग्रहः । पुं । वह्नौ ॥

तुषधान्यम् । न । मुद्गादिषु ॥ मुद्गो-
माषौ राजमाषौ निष्पावश्च मकु-
ष्ठकः । यावकादिकमन्यच्च त्रिपुटः
सकलायकः ॥ तुषधान्यानि प्रोक्तानि
वैद्यशास्त्रे भिषग्वरैः ॥

तुषसारः । पुं । अग्नौ ॥ इतिशब्द-
माला ॥

तुषानलः । पुं । तुषवाग्नौ । कुकूले ॥

तुषाम्बु । न । तुषोदके ॥

तुषारः । पुं । शीकरे ॥ हिमे ॥ देश

रविकानामेवाभाकरयिकाणामेव-
वा । क्रमेणोदाहरणम् । पाण्डुत्वा
मंवदनं हृदयं सरसं तवालसञ्च व
पुः । आवेदयति नितान्तं क्षेत्रियरो
गं सखि हृदन्तः ॥ कुमुदवनमपगतश्रि
मीरजाखि । कोकिलविलासजुषोर्ह-
मोःपुरःका । अस्तमस्तरश्मिरम्बुज
ममतिवतमेकपदे सरोजनस्य ॥ अ
न्यदपि । प्रस्तुतानां तथान्येषां केव
लं तुल्यधर्मतः । औपम्यं गम्यते यत्र
सा मता तुल्ययोगितेति ॥

तुवरः । पुं । न । कषायरसे ॥ तवति
हिनस्ति रोगान् । तुरिति सौत्रो धातुः
। छित्वरच्छत्वरेत्यादिना ष्वरच् ॥
धान्यविशेषे । तुवरयावनाले ॥ त्रि ।
कषायरसवति ॥

तुवरयावनालः । पुं । धान्यविशेषे । तु
वरे । रक्तयावनाले ॥ तुवरोयावना
लस्तु कषायोष्णो विरेचकः । सक्ला
वी वासशमनो विदाही शोषका-
रकः ॥

तुवरिका । स्त्री । तुवर्याम् । आढक्या
म् । तुवर इति अरहर इति च भाषा
॥ तुवरोऽस्त्यस्याः । अतइनिठनावि
ति ठन् । टाप् ॥ सुराष्ट्रजमृत्तिका-
याम् । फिट्करी इति भाषा ॥

तुवरी । स्त्री । आढक्याम् । अरहर इ



ति तूर इति च भाषा ॥ काक्ष्याम् । सौ
राष्ट्रमृदि । फिट्करी इति भाषा ॥
तोरी इति प्रसिद्धे धान्ये ॥ यथा । तु
वरी ग्राहिणी शीता लघ्वी कफवि
षास्रजित् । शीतोष्णा वह्निदा क
ण्डूकुष्ठकोठकृमि प्रणुत् ॥

तुवरीतैलम् । न । तुवर्याः स्नेहे ॥ स्ने
हतैलम् । तीक्ष्णोष्णं तुवरीतैलं ल
घु ग्राहि कफास्रजित् । वह्निकृत् वि
षहृत् कण्डूकुष्ठकोठकृमिप्रणुत् ॥
मेदोदोषापहञ्चापि व्रणशोधनं
परम् ॥

तुवरीशिम्बः । पुं । रक्तचक्रमर्दके ॥

तुविः । स्त्री । तुम्ब्याम् ॥ इ० अ० टी० ॥

तुषः । पुं । धान्यत्वचि ॥ बिभीतकद्रुमे
॥ तुष्यति । तुष तुष्टौ । इगुपधेति कः ॥

तुषग्रहः । पुं । वह्नौ ॥

तुषधान्यम् । न । मुद्गादिषु ॥ मुद्गो
माषो राजमाषो निष्पावश्च मकु
ष्ठकः । चणकाढकिमसूरास्त्रिपुटः
सकुलत्थकः ॥ तुषधान्यानि प्रोक्तानि
वैद्यशास्त्रे भिषग्वरैः ॥

तुषसारः । पुं । अग्नौ ॥ इति शब्द-
माला ॥

तुषानलः । पुं । तुषजाग्नौ । कुकूले ॥

तुषाम्बु । न । तुषोदके ॥

तुषारः । पुं । शीकरे ॥ हिमे ॥ देश

विशेषे ॥ हिमभेदे ॥ कर्पूरभेदे ॥ त्रि । शीतले ॥ तोषयति । तुषेरन्तर्भावितण्यर्थात् कर्मणि किरच् इत्यनुवृत्तौ तुषारादयश्चेत्यारन् ॥

तुषारकालः । पुं । हेमन्ते ॥

तुषारकिरणः । पुं । चन्द्रे ॥

तुषाराम्बु । न । तौषारे ॥

तुषितः । पुं । गणदेवताप्रभेदे ॥ वचेष्ठस्य यज्ञाख्यस्य विष्णोर्दक्षिणायां सुषुवे ॥ ते यथा । तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥ तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे ॥ तुष्यति । तुष + । इषिमिथिमुषिकुटिभ्यः कित् इति आकुलकात् कितच् ॥ यद्वा । तोषणं तुट् । संपदादित्वात् क्विप् । ततस्तारकादित्वादितच् ॥ प्राणापानौ उदानश्च समानो व्यान एव च । चक्षुः श्रोत्रं रसो घ्राणः स्पर्शो बुद्धिर्मनस्तथा । द्वादशैते हि तुषिता देवाः स्वारोचिषेऽन्तरे ॥ केषाञ्चिन्मते षट्त्रिंशत् तुषिता मताः ॥

तुषोत्थम् । न । तुषोदके ॥ इति राजनि० ॥

तुषोदकम् । न । काञ्जिके ॥ काञ्जिकप्रभेदे ॥ अस्य लक्षणं यथा । तुषोदकं यवैरामैः सतुषैः सकलैः कृतैः । यवैरदलसहितैः सन्धानमथवा कृतात् । तुषाम्बु दीपनं हृद्यं पाण्डुकृमिगदापहम् । तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्बस्तिशूलनुत् ॥

तुष्टः । त्रि । परितुष्टः । सन्तोषविशिष्टः । प्राप्तपरितोषे ॥ स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः । कुमाराः पांशुवर्षेण ब्राह्मणाः परनिन्दया ॥ तुष्यते स्म । तुष + क्तः ॥

तुष्टिः । स्त्री । तोषे । अधिगतार्थेऽन्यत्र तुच्छत्वबुद्धौ । भोगेष्वेतावता अलमिति बुद्धौ ॥ सा चानन्तपत्नी । यथा । अनन्तपत्नी तुष्टिश्च पूजिता वन्दिता भवेत् । यया विना न सन्तुष्टाः सर्वे लोकाः सर्वतद्दति, श्रीदेवीभागवतम् ॥ नवधा तुष्टिः । सा परिगणय्य इति । आध्यात्मिकास्ततः प्रकृत्युपादानकालभागाख्याः । बाह्या विषयोपरमात् पञ्च च नव तुष्टयोऽभिमताः ॥ प्रकृतिव्यतिरिक्त आत्मास्तीति यद्यततोऽस्य श्रवणमननेभ्यः । ततो विवेकसाक्षात्काराय तु असदुपदेशतुष्टो न प्रयतते तस्य चतस्र आध्यात्मिकास्तुष्टयो भवन्ति । प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात् ताः तुष्टयस्तस्मादाध्यात्मिकाः । कास्ता इत्यत आह । प्रकृत्युपादानकालभा-

ते । इनश् । तूर्णपूरणे । तूणश्चेतिघ
ञ् । गौरादित्वात् ङीष् ॥
तूणीकः । पुं । नन्दीवृक्षे ॥
तूणीरः । पुं । तूणे । निषङ्गे ॥ तूणीं
शरैः सङ्कोचं राति । रादाने आदा
नेच । आतोऽनुपेतिकः ॥ यद्वा । तूण
संयमे । तूण० । बाहुलकादीरन् ॥
तूतकम् । न । तुत्थे । तूतिया इति
भाषा ॥
तूदः । पुं । तूदे । अश्वत्थाकारे पार्श्व
पिप्पल इति ख्याते तूत इति च प्र
सिद्धे वृक्षे ॥ अस्य फलगुणाः । तूदं पक्वं
गुरु स्वादु हिमं पित्तानिलापहम् ।
तदेवामं गुरु सरमत्युष्णं रक्तपि
त्तकृत् ॥ तूदति । तुद व्यथने । इगु
पधेतिकः । पृषोदरादिः ॥
तूरम् । न । वाद्यसामान्ये ॥ तूर्यमा
ने पटहादौ ॥
तूरी । स्त्री । धत्तूरे ॥ इति भावप्रकाशः ॥
तूर्णम् । न । शीघ्रे । सत्वरे ॥ त्रि । त
द्वति ॥ त्वरतेस्म । ञित्वरा सम्भ्रमे
। गत्यर्थाकर्मकेतिकर्त्तरि क्तः । रुष्य
मत्वरसङ्घुषास्वनामितीड्वा पक्ष
े । ज्वरत्वरेत्यूठ् । रदाभ्यामिति न
त्वम् ॥
तूर्णिः । पुं । मनसि ॥ त्वरायाम् ॥ त्वर
ते त्वरयते वा । ञित्वरा० । वन्हि

श्चयद्धर्म्म्यात्वरिभ्यो नित् इति निः ॥
तूर्य्यम् । न । वाद्ये ॥ वाद्यप्रभेदे ॥ आ
दिगुरु (ऽ।) त्रिकाले ॥
तूर्य्यखण्डः । पुं । डुगडवाद्ये ॥
तूलम् । न । ब्रह्मदारुणि । ब्रह्मवृक्षे ।
तूदे ॥ आकाशे ॥ पुं । न । पिचौ ।
निर्बीजकार्पासे । तुला इति भाषा
॥ तूलयति तूल्यते वा ॥ तूल निष्क
र्षे । इगुपधेतिकः । घोवा ॥
तूलकम् । न । तूले ॥
तूलकार्म्मुकम् । न । तूलस्फोटनार्थे
धनुषि । पिञ्जले । तूलधनुषि ॥
तूलचापः । पुं । } तूलकार्मुके । धुन
तूलधनुः । न । } क इति भाषा ॥
तूलनालिका । स्त्री । पिञ्जिकायाम् ।
पौरव इति गौडभाषा ॥
तूलनाली । स्त्री । तूलनालिकायाम् ॥
तूलपिचुः । पुं । तूले ॥
तूलवृक्षः । पुं । शाल्मलीवृक्षे ॥
तूलशय्या । स्त्री । तूलिकायाम् ॥ तूल
शय्या । तूलेन निर्मिता शय्या वा ।
शाकपार्थिवादिः ॥
तूलशर्करा । स्त्री । कार्पासबीजे । बि
नौला इति बिनौला इति कपासि
आ इति च भाषा ॥
तूलसेचनम् । न । कर्त्तने । तूलकर्त्त
ने । कातना इति भाषा ॥ इ० श० ॥

तूला । स्त्री । कार्पासाम् ॥ वर्त्याम् ॥

तूलिः । स्त्री । तूल्याम् ॥ स्वनामाख्याते चित्रकरोपकरणे । ईषिकायाम् ॥ तूलति । तूल० । इगुपधात्किदितीन् ॥

तूलिका । स्त्री । शय्योपकरणे । तोसक इति भाषा ॥ आलेख्यसमालेखन्याम् । कूर्चिकायाम् ॥ यथा । जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि । स्वयमेव समालोक्य प्रीणाति भगवान् शिवः ॥ आत्ममये महति पटे विविधजगच्चित्रमात्मनालिखितम् । स्वयमेव केवलं मत्वा पश्यन् प्रमुदं प्रयाति परमात्मेति ॥ ईषिकायाम् । वीरणादिशलाकायाम् ॥ सुवर्णादेरावर्त्तनपरीक्षणार्थं निक्षिप्य मौषायां शलाकायाम् ॥ तूलति तूल्यते वा । तूल० । क्वुन् ॥

तूलिनी । स्त्री । शाल्मलिद्रुमे ॥ शल्मयाकल्पे ॥

तूलिफला । स्त्री । शाल्मलौ ॥

तूली । स्त्री । नील्याम् ॥ वर्त्याम् ॥ तूलिकायाम् ॥ चित्रलेखन्याम् । चित्रसाधनद्रव्ये । कूर्चिकायाम् ॥ ङीष् ॥

तूबरः । पुं । काले ऽश्मश्रुपुरुषे ॥ प्रौढायूढानडुहि । काले ऽजातशृङ्गे पशौ ॥ पुरुषव्यञ्जनयुक्ते ॥ कषाय रसे ॥ तौति । तुः सौत्रोऽगत्यादौ । बाहुलकाद्वरो दीर्घश्च ॥ यद्वा । तनोति । बाहुलकाट् डुः । तूः तस्या वरश्च आच्छादकः ॥

तूबरी । स्त्री । आढक्याम् ॥ सौराष्ट्रमृत्तिकायाम् ॥

तूष्णींशीलः । त्रि । तूष्णीके । मौनयुक्ते ॥ तूष्णीं शीलं यस्य ॥

तूष्णीकः । त्रि । मौनयुक्ते । मौनशीले ॥ तूष्णींशीलः । शीलेकोऽमलोपश्च । केष इति ह्रस्वोन मलोपस्तु मध्यात् अन्त्याचोऽपमेवबिंदुथात् । ढयि अव्ययानामिति टिलोपेन सिद्धत्वात् ॥

तूष्णीकाम् । अ । मौने ॥ अकच्प्रकरणे तूष्णीमःकाम्वक्तव्यः ॥ मित्वादन्त्यादचःपरः ॥

तूष्णीम् । अ । मौने ॥ तोषणम् । तुषतुष्टौ । बाहुलकान् नीम् उपधाया ऊत् ॥ घटाकाशं महाकाशइवात्मानं परात्मनि । विलाप्याखण्डभावेन तूष्णीं भव महामुने इत्युपदेशः ॥

तूस्तम् । न । रेणौ ॥ जटायाम् ॥ तोसति । तुसशब्दे । बाहुलकात्-तन् धातोर्दीर्घश्च ॥

टखम् । न । जातीफले ॥

टखम् । न । भर्जने । टखमाने ॥ ट

ध्वविशेषे नडादौ ॥ तृण्यते । तृणु
अदने । घञ् । संज्ञापूर्वकत्वाद्गुणो
न ॥ यद्वा । तृह्यति । तृहू हिंसाया
म् । तृहेः क्नो हलोपश्च ॥ अस्मिन्वैर
भयं रोगो राजपीडा धनक्षतिः । स
मूहे तृणकाष्ठानां कृते । वस्त्रादिप-
क्वके ॥

तृणकन्दः । पुं । कसेरुणि ॥

तृणकाण्डम् । न । तृणानां समूहे ॥
दूर्वादिभ्यः काण्डः ॥

तृणकुङ्कुमम् । न । सुगन्धद्रव्यप्रभेदे ।
तृणपुष्पे । गन्धाधिके ॥ कटुत्वमुष्ण
त्वं कफमारुतशोफकण्डूतिपामाकु-
ष्ठामदोषनाशित्वं परममास्यरक्षत्वं
चास्य गुणाः ॥

तृणकुटी । स्त्री । कायमाने । तृणौ
कसि ॥

तृणकूर्म्मः । पुं । तुम्ब्याम् ॥

तृणकेतुः । पुं । } वंशे ॥
तृणकेतुकः । पुं । }

तृणगोधा । स्त्री । चित्रकोले ॥ कृक-
लासे ॥

तृणग्रन्थिः । स्त्री । स्वर्णजीवन्त्याम् ॥

तृणग्राही । पुं । नीलमणौ ॥ कपूर
इति प्रसिद्धे मणिविशेषे । तृणमणौ ॥

तृणजातिः । स्त्री । उलपादौ ॥

तृणज्योतिः । न । रात्रौ प्रकाशशालिन
॥ लताविशेषे ॥

तृणता । स्त्री । कार्मुके । धनुषि ॥ तृ
णत्वे ॥ भावेतल् ॥

तृणद्रुमः । पुं । नारिकेलादिवृक्षेषु ॥
ताले ॥ गुवाके ॥ ताल्याम् ॥ केत
क्याम् ॥ खर्ज्जूरे ॥ खर्ज्जूर्य्याम् ॥ हि-
न्ताले ॥

तृणधान्यम् । न ॥ नीवारे । श्यामा-
कादौ । उड़िधान इति गौडभाषा
॥ तृणमिव धान्यम्, अकृष्टोत्पन्न-
त्वात् ॥

तृणध्वजः । पुं । वंशे ॥

तृणनिम्बः । पुं । नेपालनिम्बे ॥

तृणपत्रिका । स्त्री । इक्षुदर्भायाम् ॥

तृणपर्णी । स्त्री । गुण्डासिन्याम् ॥

तृणपुष्पम् । न । तृणकुङ्कुमे ॥

तृणपुष्पी । स्त्री । सिन्दूरपुष्पीवृक्षे ॥

तृणपूली । स्त्री । चाँच इति गौडेषु प्र
सिद्धे । चञ्चायाम् ॥

तृणमणिः । पुं । तृणग्राहिणि ॥

तृणमत्कुणः । त्रि । लग्नके । जामिन्
इति भाषा ॥ इति त्रिकाण्डशेषः ॥

तृणराजः । पुं । नारिकेले ॥ तालवृक्षे
॥ तृणानां राजा । टः ॥

तृणराजाह्वः । पुं । तालद्रुमे ॥ तृणरा
जस्याह्वा यस्य ॥

तृणराजाह्वयः । पुं । तालवृक्षे ॥ तृण

वादी भवति निखिलविषो यत्कृती यावत्तृप्तः ॥ टा श्याम् भिस् इति चिके ॥ टाप् ॥

तृतीयाकृतम् । त्रि । त्रिगुणाकृते । त्रिवारकृष्टक्षेत्रे ॥ तृतीयकृतम् । कृष्टे द्वितीयतृतीयेतिडाच् ॥

तृतीयाप्रकृतिः । स्त्री । नपुंसके ॥ स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः तृतीयः प्रकारः । अस्तमस्तमेतत् । समासेतु तृतीयप्रकृतिरेव ॥

तृपत् । पुं । चन्द्रे ॥ छत्रे ॥ तृप्यति तृप प्रीणने । संसत्तृपद्वदिति अतिप्रत्ययान्तो निपातितः ॥

तृपला । स्त्री । लतायाम् ॥ तृप्यति । तृप० । कलस्तृपश्चेति तृपतेः कलप्रत्ययः ॥

तृप्तः । त्रि । हृष्टे । प्रमुदिते । प्रीते । तृप्तियुक्ते ॥ तृप्यतिस्म । तृप० क्तः ॥

तृप्तिः । स्त्री । तर्पणे । सौहित्ये । भक्ष्यादिनाकाङ्क्षानिवृत्तौ ॥ सर्वकामावाप्तौ । अलम्मन्यत्वेनेच्छाविच्छित्तौ ॥ तर्पणम् । तृप० । स्त्रियां क्तिन् ॥

तृप्रः । पुं । घृते ॥ पुरोडाशे ॥ तृप्यतेऽनेन । तृप० । स्फायितञ्चीत्यादिना रक् ॥ न ॥ काष्ठे ॥ दुःखे ॥

तृप्राशुः । त्रि । तृप्रं न सहते । आशुः ॥

तृफला । स्त्री । त्रिफलायाम् ॥ तृफति तृफदसौ । कलस्तृपश्चेति चकारात् तृफतेरपि कलः ॥

तृफुः । पुं । सर्पजातौ ॥

तृट् । स्त्री । लिप्सायाम् । वाञ्छायाम् ॥ चन्द्रकायाम् ॥ स्मरपुत्र्याम् । कामकन्यायाम् ॥ तर्षणम् । त्रितृषपिपासायाम् । संपदादि क्विप् ॥

तृषा । स्त्री । तृषि ॥ भागुरिमते टाप् । तृषापि न कृशाम्ममेति प्रयोगः ॥ शाकुन्तलीवचो ॥

तृषाभूः । स्त्री । क्लोमनि । फोंपडा इति भाषा ॥

तृषाह्म् । न । जले ॥

तृषाह्वकम् । न । मधुरिकायाम् ॥

तृषाह्वा । स्त्री । मधुरिकायाम् ॥

तृषितः । त्रि । सतृषि । तृषयायुक्ते ॥ तृट्सञ्जाताऽस्य । तारकादित्वादितच् ॥

तृषितोत्तरा । स्त्री । प्रसन्नपर्ण्याम् ॥

तृष्णक् । त्रि । लुब्धे ॥ तृष्यति । त्रितृष० । सत्नीत्वः स्वपितृषोर्नजिङ् ॥

तृष्णा । स्त्री । तर्षे । पिपासायाम् । प्यास इति भाषा ॥ लिप्सायाम् । अप्राप्ताभिलाषे । अनात्मीयस्वीकारेच्छायाम् ॥ इदं मे न चीयतामितीच्छायाम् ॥ उचितव्ययाकरणेनापि

पुर्याम् ॥ यथा ॥ रक्तपीतमणिप्रायहेमप्राकारगोपुरा । यत्र तेजोवती च क्रितुल्यभूतनिषेविता ॥ तेजवलाख्याकाष्ठे ॥

तेजोरथः । पुं । रुद्राग्निमन्थे ॥

तेनः । पुं । आनाहविशेषे ॥ यथा । तेनेतिप्रसवस्तेनः स्थानं क्लेशानां मदयैकः । तेषां ते नात्यते गौरी नमस्ते नोत्पतेश्वरः । तेनमाङ्गलिकरणायां ब्रह्मस्तेन इति स्मृत इति सङ्गी० ॥

तेमः । पुं । समुन्दने । आर्द्रीभावे ॥ तेमनम् । तिम आर्द्रीभावे । घञ् ॥

तेमनम् । न । आर्द्रीकरणे ॥ निष्ठाने । व्यञ्जने । तीवन इति तेमन इति भाषा ॥ तिम० ल्युट् । तिम्यतेऽनेन वा करणे वा ल्युट् ॥

तेमनी । स्त्री । चुल्लिप्रभेदे ॥

तेवनम् । न । केलिकानने ॥ क्रीडायाम् ॥ तेवनेन वनं गत्वा नदीतीर्थं बहूदकात्तिरामावसम् ॥

तैक्ष्ण्यम् । न । तीक्ष्णतायाम् ॥

तैजसः । पुं । इन्द्रियाणां करणे । राजसाहङ्कारे ॥ तेजोमयान्तःकरणोपहितत्वात् सूक्ष्मप्रपञ्चाभिमाने स्वप्नव्यष्ट्युपहितचैतन्ये ॥ तेजसि परमात्मनि स्थिते ॥ न । धातुद्रव्ये । सर्वधातु ॥ घृते ॥ तेजसो विकारः । तस्य विकारस्तस्य ॥ यद्वा । तेजोऽस्यास्य । ज्योत्स्नादण् ॥ तीर्थविशेषे ॥ यत्र ब्रह्मादिभिः सैनापत्ये कार्त्तिकेयोऽभिषिक्तः ॥

तैजसावर्त्तिनी । स्त्री । मूषायाम् ॥ तैजसानां विकारः सुवर्णादि तस्यावर्त्तनेऽस्याम् । वृतु वर्त्तने । णिच् । अधिकरणे ल्युट् । ङीप् ॥

तैतिलः । पुं । गण्डकपशौ ॥ न । चतुर्थकरणे ॥ करणस्तदेवो ललनाभिलाषी सुमूर्त्तिसत्कर्त्तितमानदेशः । मन्ता गुणज्ञः कृपणः सुशीलस्तैतिलाख्यं करणं प्रसूतौ ॥

तैन्तिडीकम् । न । तिन्तिडीकस्यापत्ये ॥ तद्विकारे ॥ कोपधाच्चस्याण् ॥ तिन्तिडीके संस्कृते ॥ कुलत्थकोपधादण् ॥

तैत्तिरः । पुं । तित्तिरिखगे ॥ न । तित्तिरीणां गणे ॥ तित्तिरीणां समूहः । अनुदात्तादेरञ् ॥

तैत्तिरिकः । पुं । शाकुनिकविशेषे ॥ तित्तिरान्हन्ति । ठक् ॥

तैत्तिरीयकः । पुं । यजुर्वेदीयशाखाविशेषस्य वेत्तरि ॥

तैत्तिरीया । स्त्री । यजुर्वेदस्य शाखाविशेषे ॥

तैमिरिकः । त्रि । तिमिरयुक्तचक्षुषि ॥

। यथा ह्यसस्य । धारासुयोजितानाम्
निसर्गात् मेरवं विना । अविच्छिन्न
मिवाभाति सत् तेजः सततोत्थित
म् ॥ कथापादेदिधातैयत् साध्वसा
त् स्फुरितमुत्तदिति ॥ * ॥ शब्दस्य
योतन्मात्रसहितात् रूपतन्मात्रादुत्पन्ने-
ऽर्द्धस्पर्शरूपगुणे तृतीयेमहाभूते
॥ यथा । तृतीयं ज्योतिरित्याहुश्च
क्षुरध्यात्ममुच्यते । अधिभूतं ततोरूपं
सूर्यस्तत्राधिदैवतम् ॥ उष्णस्पर्शवत्ते-
जः । तद्द्विविधम् । नित्यमनित्यञ्च
। नित्यं परमाणुरूपम् । अनित्यं का
र्यरूपम् । पुनस्त्रिविधम् । शरीरेन्द्रिय
विषयभेदात् । शरीरमादित्यलोके
। इन्द्रियं रूपग्राहकं चक्षुः कृष्णतारा-
ग्रवर्त्ति । विषयश्चतुर्विधः । भौमदि
व्योदर्याकरजभेदात् । भौमं वह्न्या
दिकम् । अबिन्धनं दिव्यं विद्युदादि ।
भुक्तान्नस्य परिणामहेतुरौदर्यम् । आ
करजं सुवर्णादीतितर्कसङ्ग्रहः ॥ स्प
र्शस्य तेजसस्तु स्याद्रूपं शुक्लभास्व
रम् । नैमित्तिकं द्रवत्वन्तु नित्यतादि
चपूर्ववत् ॥ इन्द्रियं नयनं वह्निस्वर्णादि
र्विषयोमतइतिभाषापरिच्छेदः ॥
तेजयति तेज्यते ऽनेन वा । तिज० ।
असुन् ॥ तेजोऽश्वमितिच्छन्दोभि-
धानम् ॥



तेजस्करः । त्रि । तेजोवृद्धिकारके ॥
तेजस्वी । त्रि । तेजोयुक्ते ॥ स्वक्ष-
मित्रमति ॥ तेजोऽस्त्यस्यामिन्
विनिः ॥
तेजस्विनी । स्त्री । ज्योतिष्मत्याम् ॥
महाज्योतिष्मत्याम् ॥ तेजस्वी ते
जस्वत्त्वात् तेजस्वत्यादिनामा
ते तेजःफले ॥ तेजस्विनी कन्या
सकाशाऽऽशामयवातलम् । पाप
मुंशाकटुस्तिक्ता वह्निप्रदीप-
नी ॥ नाम्नप्रयोगीयम् ॥
तेजितः । त्रि । शाते । शाणादिना ती
क्ष्णीकृते । शाणिते । निशिते ॥ ते
जते स्म । तिज० । क्त० । कर्मणि ॥
तेजीयान् । त्रि । तेजोयुक्ते ॥ तेजीय
सांनदोषाय वह्नेः सर्वभुजोयथा ॥
तेजोमन्थः । पुं । गणिकारिकायाम् ॥
तेजोमथ्नाति । मन्थ० । कर्मण्यण् ॥
तेजोमयः । पुं । तेजः प्रचुरे चैतन्य
प्रधानेज्योतिर्मये । अन्तःकरणोप-
हितत्वात् वासनामये स्वप्ने ॥
तेजोमात्रा । स्त्री । इन्द्रिये ॥ तेजसो
मात्रा ॥
तेजोरूपम् । न । प्रकाशरूपे ब्रह्मणि
॥ त्रि । प्रभारूपे ॥
तेजोवती । स्त्री । गजपिप्पल्याम् ॥
चव्ये ॥ महाज्योतिष्मत्याम् ॥ वह्नि

पुर्याम् ॥ यथा । रक्तपीतमणिप्रायैर्हेमप्राकारगोपुरा । अङ्गे तेजोवती च क्रितुल्यभूतनिषेविता ॥ तेजवला स्थकाष्ठे ॥

तेजोह्वः । पुं । क्षुद्राग्निमन्थे ॥

तेमः । पुं । आनाङ्गविशेषे ॥ यथा । तेनेतिमन्त्रस्तेनः स्यान्मन्त्राणां मद मञ्जः । तेमशब्देनोच्यते गौरी मशब्देनोच्यते हरः ॥ तेनमाङ्गलिकत्वाच्च शब्दस्तेन इति स्मृत इति सङ्गी० ॥

तेमः । पुं । समुन्दने । आर्द्रीभावे ॥

तेमनम् । तिम आर्द्रीभावे । घञ् ॥

तेमनम् । न । आर्द्रीकरणे ॥ निष्ठाने व्यञ्जने । तीवण इति तेवण इति च भाषा ॥ तिम० । ल्युट् । तिम्यतेऽनेन वा करणे वा ल्युट् ॥

तेमनी । स्त्री । चुल्लिप्रभेदे ॥

तेवनम् । न । केलिकानने ॥ क्रीडायाम् ॥ तेवनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः इति रामायणम् ॥

तैक्ष्ण्यम् । न । तीक्ष्णतायाम् ॥

तैजसः । पुं । इन्द्रियाणां कारणे । राजसाहङ्कारे ॥ तेजोमयान्तःकरणोपहितत्वात् स्थूलप्रपञ्चप्रकाशने स्वप्नस्थव्युपहितचैतन्ये ॥ तेजसि परमात्मनि स्थिते ॥ न । धातुद्रव्ये । सर्वधातु ॥ घृते ॥ तेजसोविकारः । त-स्यविकार इत्यण् ॥ यद्वा । तेजोऽस्यास्य । ज्योत्स्नादित्वादण् ॥ तीर्थविशेषे ॥ यत्र ब्रह्मादिभिः सैनापत्ये कार्त्तिकेयोऽभिषिक्तः ॥

तैजसावर्त्तिनी । स्त्री । मूषायाम् ॥ तेजसो विकारः सुवर्णादि तस्यावर्त्तते ऽस्याम् । वृतु वर्त्तने । णयन्तः । अधिकरणे ल्युट् । ङीप् ॥

तैतिलः । पुं । गण्डकपशौ ॥ न । चतुर्थकरणे ॥ करणस्तद्रूपे जातो ललनाभिलाषी सुमूर्त्तिसन्मानितकामदेवः । वक्ता गुणाख्यः कुमलः सुशीलस्तैतिलाख्यकरणं प्रसूतौ ॥

तैत्तिडीकम् । न । तित्तिडीकस्यावयवे ॥ तद्विकारे ॥ कोपधाच्चेत्यण् ॥ तित्तिडीकैः संस्कृते ॥ कुलत्थकोपधादण् ॥

तैत्तिरः । पुं । तित्तिरिखगे ॥ न । तित्तिरीणां गणे ॥ तित्तिरीणां समूहः अनुदात्तादेरञ् ॥

तैत्तिरिकः । पुं । शाकुनिकविशेषे ॥ तित्तिरान्हन्ति । ठक् ॥

तैत्तिरीयकः । पुं । यजुर्वेदीयशाखाविशेषाध्येतरि ॥

तैत्तिरीया । स्त्री । यजुर्वेदस्य शाखाविशेषे ॥

तैमिरिकः । त्रि । तिमिरग्रस्तचक्षुषि ॥

तोडः । पुं । भेदे ॥ तोडनम् । तुडतो डने ॥ घञ् ॥

तोडनम् । न । दारणे ॥ हिंसने भेदे ॥

तोत्रम् । न । प्रतोदे । प्राजने । गवा दिपशूनां ताडनदण्डे ॥ वेणुके । हस्तिन स्ताडनदण्डे ॥ तुद्यते ऽनेन ॥ तुद्व्यथने । दाम्नीतिष्ट्रन् ॥

तोदः । पुं । व्यथायाम् ॥ तोदनम् । तुद॰ । घञ् ॥

तोदनम् । न ॥ व्यथने ॥ तोत्रे । हस्ति प्रभृतिप्रेरणदण्डे ॥ तुद॰ । ल्युट् ॥

तोदितः । त्रि । प्रेरिते ॥

तोमरः । पुं । न । शर्वलायाम् । गदा सा इति सव्वी इतिच ख्याते ऽस्त्रे ॥ हस्तक्षेप्यसप्तव्यदण्डे । रायबाँस इति भाषा ॥ स्थूलाग्रगदायाम् ॥ लघ्वादि (।ऽ) त्रिकले ॥ द्वचतीछन्दोभेदे ॥ यथा । प्रथमं करं विनिधाय जगणद्वयमभिधाय । कुरु तोमरं सुखकारि फणिराजवक्त्रविहारि ॥ यथा । सखि माद्रके मधुमासि कथमत्सरं किमिहासि । सहते न किं विहगाधिकमुपायकं प्रविशामीति ॥

तोमरधरः । पु । अग्नौ ॥ इतिशब्दा॰ ॥

तोमरिका । स्त्री । आढक्याम् । तुवर इति भाषा ॥

तोयम् । न । अम्बुनि । जले ॥ एकत्र सोघृत तोय मभक्ष्यं सर्वमम्मतम् ॥ उद्धृतं वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तुल्यं स्यात्मनुराह प्रजापतिः ॥ अगन्धमव्यक्तरस शीत स्पर्शं तृषापहम् । अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते ॥ तौति । तु. वैपश्राथर्णार्थः । श्राग्रादिकोयः ॥ पूर्वाषाढायाम् ॥

तोयकामः । पुं । अम्बुवेतसे । परिव्याधे ॥ त्रि । जलाभिलाषिणि ॥

तोयकृच्छ्रम् । न । जलमात्रपानरूप व्रतविशेषे ॥ इतिमिताक्षरा ॥

तोयडिम्भः । पुं । घनोपले ॥ इ॰शा॰ ॥

तोयदः । पुं । मेघे ॥ मुस्तके ॥ न । आज्ये ॥ त्रि । जलदातरि ॥ जलदान माहात्म्यमहाभारते दानधर्मे । अन्नेदत्ते नरेणह प्राणादत्ता भवन्तु त । प्राणदानाद्धि परमं दानं मिह विद्यते ॥ अन्नं वापि प्रभवति पानीयात् कुरुसत्तम । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते ॥ अन्नौ षध्यो महाराज वीरुधश्च जलोद्भवाः । यत प्राणभृतां प्राणाः सम्भवन्ति विशांपते ॥ तस्मात् पानीयदानाद्वै न परं विद्यते क्वचित् । तद्दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः ॥ धन्यं यशस्य मायुष्य जलदान मिहोच्यते

भूश्वाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ सर्वकाममवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते ॥ तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते । अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुरिति ॥ तोयं ददाति । दा + कः ॥

तोयधरः । पुं । मुस्तायाम् ॥ सुनिषण्णाख्यशाके ॥ घने । मेघे ॥ तोयस्य धरः ॥

तोयधिः । पुं । उदन्वति । समुद्रे ॥ तोयानि धीयन्तेऽत्र । डुधाञ् + कर्मण्यधिकरणे चेति किः । आतोलोपः ॥

तोयधिप्रियम् । न । लवङ्गे ॥

तोयनिधिः । पुं । अब्धौ । समुद्रे ॥ तोयानि निधीयन्तेऽत्र । डुधाञः किः ॥ तोयानां निधिर्वा ॥

तोयपिप्पली । स्त्री । शाकुल्याम् । मकुलादन्याम् । गौडभाषया कांचडा इति प्रसिद्धे जलजशाके ॥ तोयस्य पिप्पलीव ॥

तोयपुष्पी । स्त्री । पाटलावृक्षे ॥

तोयप्रसादनः । पुं । न । कतके ॥ षष्ठीसमासः ॥

तोयप्रसादनफलम् । न । कतकफले ॥

तोयफला । स्त्री । इर्वारौ ॥

तोयवल्ली । स्त्री । कारवेल्ले ॥

तोयशाला । स्त्री । प्रपायाम् ॥

तोयशुक्तिका । स्त्री । जलशुक्तौ ॥

तोयसूचकः । पुं । भेके ॥ इ० शब्दा० ॥

तोयात्मा । स्त्री । विष्णौ ॥ यथा । यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारः तस्मै तोयात्मने नम इति ॥

तोयाधिवासिनी । स्त्री । पाटलावृक्षे ॥

तोयेभः । पुं । वरुणे ॥ जलभिष्यायाम् ॥

तोरणः । पुं । न । बहिर्द्वारे । द्वारबाह्यभागे ॥ तम्भे परि चिते सिंहद्वाराख्ये ॥ तुरत्यनेन । तुर त्वराहिंसयोः । अधिकरणे ल्युट् युच्वा ॥ तोरयन्त्यनेनेति वा ॥ तुड अभावे । रल योरैकत्वम् ॥ तुसुरत्यनेन वा ॥ तुरत्वरणे । जौहोत्यादिकः ॥ न । कण्ठायाम् ॥ कन्धरा तोरणं कण्ठी इति हारावली ॥

तोलः । पुं । न । गुञ्जाशीतिसम्मिते । तोलके ॥

तोलकः । पुं । न । कोले । इङ्गुदफले । वटके । कर्षार्द्धे । अशीतिगुञ्जामिते ॥ षोडशमाषके पञ्चरत्तिकापरिमाणे । तोला इति भाषा । कर्षे ॥ इति वैद्यकपरिभाषा ॥

तोषः । पुं । तुष्टौ ॥

तौच्छिकः । पुं । धनूराशौ ॥

तौतातिकम् । न । तुतातभट्टकृतमीमांसाशास्त्रे ॥

तौतिकः । पुं । शुक्तौ ॥ न । मुक्तायाम् ॥

तौरङ्गिकः । पुं । अश्वारोहे । सादिनि ॥

तौरायणिकः । पुं । यजमाने ॥ तुरायणं यज्ञविशेषं निर्वर्त्तयति । पारायण-तुरायणेत्यादिना ठञ् ॥

तौर्य्यम् । न । तुर्य्यमुरजादौ भवेऽशब्दरूपे ॥

तौर्य्यत्रिकम् । न । नृत्यगीतवाद्येषु समुदितेषु ॥ तुरीत्वरायाम् । कण्ठोऽरयेत् । गुणं साधित्वा आहुश्च काहुलिचेतिदीर्घः । तूर्य्यमुरजादि तत्र भवं तौर्य्यशब्दः । त्रयोंऽशा यस्य तत् त्रिकम् । सङ्ख्याया अतिशदन्तायाः कन् । तौर्य्योपलक्षितं त्रिकमिति विग्रहः ॥

तौलः । पुं । तुलाराशौ । तौलिनि ॥ त्रि । तुलासम्बन्धिनि ॥

तौलिकः । पुं । चित्रकारे ॥

तौलिकिकः । पुं । चित्रकारे । रङ्गाजीवे ॥

तौल्यम् । त्रि । तुलया परिच्छिन्ने ॥ तुल्यमेव । स्वार्थे ऽण् ॥

तौषारम् । न । हिमोदकविशेषे । तुषारजले ॥ अपि नद्याः समुद्रान्ते वह्निरापस्तद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः ॥ अपथ्याः प्राणिनां प्रायो भूरुक्षायास्तु ताः स्मृताः ॥ तुषारास्तु हिमं रूक्षं स्याद्वा तत्र मपिच्छलम् । कफोरुस्तम्भकण्ठामिमेदोगलगदादिरोगनुत् ॥ नदीनीरस्य समुद्रपर्यन्तवह्निरास्ते तद्भवा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तुषाराख्याः इत्यर्थः ॥ तुषारस्येदम् । तस्येदमित्यण् ॥

त्यक्तः । त्रि । हीने । विधूते । समुज्झिते । कृतत्यागे । छोड़ा इतिभाषा ॥ त्यज्यतेस्म । त्यज हानौ । क्तः ॥

त्यक्तव्यः । त्रि । त्यजनीये ॥

त्यक्तसर्वपरिग्रहः । त्रि । समस्तभोगोपकरणरहिते विरक्ते ॥ त्यक्ताः सर्वे परिग्रहा येन ॥

त्यजनम् । न । त्यागे । वर्ज्जने ॥

त्यद् । त्रि । तच्छब्दार्थे ॥ सर्वादिः । त्यजति । त्यज० । त्यजितनियजिभ्यो डित् इत्यदिः ॥ स्त्रियां स्या । क्लीबे त्यत् ॥ वाक्यालङ्कारयोः ॥

त्यागः । पुं । दाने । अर्थिषु मुक्तहस्ततायाम् ॥ धर्म्मेणोपार्जितार्थस्य सत्पात्रे विनियोगे ॥ वर्ज्जने ॥ सर्वकर्मफलाभिसन्धिवर्ज्जने । कर्माधिकारिक

तृकफलाभिसन्धिपूर्व्वककर्म्मत्यागे ॥ स च सात्त्विकादिभेदात् त्रिविधो भवति ॥ यथा । नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥ १ ॥ दुःखमित्येव यत्कर्म्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ २ ॥ कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥ ३ ॥ अपि च । विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च त्रिविधो भवति । तथाहि । फलाभिसन्धिपूर्व्वककर्म्मत्यागः सत्यपि कर्म्मणि फलाभिसन्धित्यागादेकः १ । स च सात्त्विकत्वादादेयः ॥ सत्यपि फलाभिसन्धौ कर्म्मत्यागात् द्वितीयः २ । स च दुःखबुद्ध्याकृतो राजसः विपर्य्यासेनकृतस्तामसः इतिभेदात् द्विविधो हेयो भवति ॥ फलाभिसन्धेः कर्म्मणश्च त्यागात् तृतीयः ३ । स च कर्म्मानधिकारिकर्त्तृकोनैर्गुण्यरूपः ॥ सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्व्वककर्म्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यवेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य कर्म्मणो वैतृष्ण्ये जातस्वावश्यकस्य परित्यागः स एकः साधनभूतो विविदिषासंन्यास उच्यते ॥ द्वितीयस्तु जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य, स्वतस्सफलाभिसन्धेः कर्म्मणश्च परित्यागः फलभूतः स विद्वत्संन्यास इत्युच्यते ॥ * ॥ त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ * ॥ त्यागेन युक्ता दिवमुत्पतन्ति त्यागेनहीना नरकं व्रजन्ति । न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्व्वव्यसनानि हन्ति ॥ त्यजनम् । त्यज हानौ । घञ् ॥ विवेकिपुरुषे ॥ इति शब्दरत्नावली ॥ उपेक्षायाम् ॥

त्यागफलम् । न । ध्याननिष्ठायाम् ॥

त्यागी । त्रि । दातरि ॥ शूरे ॥ वर्ज्जनशीले ॥ सात्त्विकत्यागेनयुक्ते ॥ न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ नहि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥

त्यजति तत्कीर्त्तः । सम्पूर्चानुबधे तिथिनुप् ॥

त्यागिमः । त्रि । त्यागजे ॥ त्यागेन निर्वृत्तः । भावप्रत्ययान्तादिमप् ॥

त्याजितः । त्रि । विसर्जिते ॥ त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणिक्तः । यथा न्ते कर्त्तुश्च कर्मणामिति युक्तः ॥

त्याज्यः । त्रि । त्यागयोग्ये । वर्जनीये । वर्ज्ये ॥ सीरे-प्रतिग्रहत्याज्यो व्याज्योधर्मस्य विक्रयः ॥ अपिच, पित्रसितयर्मर्सं शोधितं यात्मशोधितम् । त्याज्यो भवति कौमो हव्यकव्येषु सर्वदा इति ॥ त्यजेण्यच्चति यच्छति अवगदेशाभावः ॥

त्रङ्गः । पुं । प्रतिमार्गे ॥

त्रङ्गा । स्त्री । प्रतिमार्गे । उदङ्गे ॥

त्रप । पुं । लज्जायाम् ॥ त्रपते-। त्रपूष लज्जायाम् । भिदादङ् ॥

त्रपा । स्त्री । लज्जायाम् ॥ कुलटायाम् ॥ त्रपते ऽनया । त्रपूष ० । पिद्भिदादिभ्योऽङ् । टाप् ॥ कुले ॥ कीर्त्तौ ॥ इति शब्दरत्नावली ॥

त्रपाकः । पुं । म्लेच्छविशेषे ॥

त्रपारण्डा । स्त्री । वेश्यायाम् ॥

त्रपिष्ठः । त्रि । तृप्ततमे ॥ अयमेषामतिशयेनतृप्रः । अतिशायने इष्ठन् । प्रियस्थिरेति तृपस्यत्रबादेशः ॥

त्रपीयान् । त्रि । तृप्ततरे ॥ अतिशयेन तृप्रः । द्विवचनविभज्येति ईयसुन् ॥ प्रियस्थिरेति तृपस्त्रबादेशः ॥

त्रपु । न । सीसके ॥ रङ्गे ॥ अमिंद्दृत्वा त्रपते लज्जतइव । त्रपूष० । शस्त्रुस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः ॥

त्रपुकर्कटी । स्त्री । त्रपुष्याम् ॥

त्रपुटी । स्त्री । सूक्ष्मैलायाम् ॥ द० र० ॥

त्रपुलम् । न । रङ्गे । राँग इति भाषा ॥

त्रपुषम् । न । कर्कटीप्रभेदे । सुधांवा हे । सुशीतले । लघुखीरा बालम खीरा इत्यादिभाषा ॥ त्रपुषं लघु शीलच्च नवं तृद्क्लमदाहजित् । स्वादुपित्तापहं शीतं रक्तपित्तहरं परम् ॥ तत् पक्वं अत्युष्णंस्यात् पित्तलं कफवातनुत् । तद्वीजमूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥

त्रपुषी । स्त्री । कर्कट्याम् । खीरा इति भाषा ॥

त्रपुः । न । } रङ्गे ॥
त्रपुसम् । न । }

त्रपुसी । स्त्री । महेन्द्रवारुण्याम् ॥ कर्कट्याम् ॥ लताविशेषे । पीतपुष्पायाम् । खीरा इति भाषा ॥

त्रयम् । न । त्रितये ॥ त्रयोऽवयवाः अस्य । सङ्ख्याया अवयवेतयप् । द्वि

त्रिभ्यातयस्तायन्त्याः ॥

त्रयी । स्त्री । त्रिवेदाम् । ऋग्यजुःसामाख्यश्रुतित्रये ॥ ब्रह्माऽथपुरुषो रुद्र स्त्रयमेतत् त्रयीमयम् । सर्गादावृग्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः । रुद्रः साममयोऽन्ताय तस्मात्तस्याशुचिर्ध्वनिः ॥ पुरन्ध्याम् ॥ सुमतौ ॥ सोमराजीवृक्षे ॥ भवान्याम् । दुर्गायाम् ॥ यथा । ऋग्यजुःसाममार्गेण साङ्गवेदगता प्रिया । त्रयीति पठ्यते लोके दृष्टादृष्टार्थसाधिनीति देवीपुराणम् ॥ त्रितये ॥ टित्त्वेति ङीप् ॥

त्रयीतनुः । पुं । सूर्ये ॥ त्रयी तनुर्यस्य सः ॥

त्रयीधर्मः । पुं । त्रय्या विधीयमाने ज्योतिष्टोमादिकर्मणि ॥ त्रय्याःधर्मः त्रयीधर्मः ॥

त्रयीमुखः । पुं । ब्राह्मणे ॥ त्रयी मुखे यस्य ॥

त्रयोदशः । त्रि । त्रयोदशानाम्पूरणे ॥ तस्यपूरणे डट् ॥

त्रयोदश । त्रि । सङ्ख्याविशेषे १३ । तेरह इति भाषा ॥ सङ्ख्येये ॥ त्रयश्च दश च । त्र्यधिकादशेति वा । वे स्थ इति नयस् । [illegible] ॥

त्रयोदशी । स्त्री । तिथिविशेषे ॥ सा चन्द्रस्य त्रयोदशकलाक्रियारूपा वा त्रयोदशकलाक्रियावच्छिन्नकालरूपा वेति तिथ्यादितत्त्वम् ॥ रूपान्वितः सात्त्विकभावहीनः सुखोपचारो जनीप्रियश्च । सदालसः शिल्पगुणैः कवेत्ता त्रयोदशी जन्मतिथिर्यदि स्यात् ॥

त्रय्यात्मा । पुं । सूर्ये ॥ त्रयी आत्मास्वरूपं यस्य ॥

त्रसम् । न । वने ॥ त्रि । जङ्गमे ॥ त्रसति । त्रसीउद्वेगे । पचाद्यच् ॥

त्रसनः । त्रि । सन्त्रासियुक्ते ॥

त्रसरः । पुं । तन्तुवायोपकरणविशेषे । सूत्रवेष्टने । तासनी इति गौडभाषा ॥ त्रसनम् । त्रसी० अरम् ॥

त्रसरेणुः । पुं । परमाणुषट्के । संयुक्ताणुकत्रये ॥ जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥ वैद्यकपरिभाषया त्रिंशत् परमाणुपरिमाणे । त्वंशाम् ॥ यथा । जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते । त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणुभिरिति ॥ स्त्री । सूर्यपत्न्याम् ॥

त्रस्तः । त्रि । भीते ॥ चकिते ॥ न । शीघ्रे ॥

त्रस्नुः । त्रि । त्रासशीले । भीरौ ॥ त्रस्यति । त्रसी० । त्रसिगृधिधृषिक्षिपेः

वायमा ।

क्तः । नेड्वशीतिनेट् ॥

वायम् । न । वायमाणाया ओषधौ ॥ र क्षणे ॥ त्रि । रक्षिते । वायतेक्त । वेड् पाक्षने । क्तः । नुदविदेति पक्षेनत्त्वम् ॥ रक्षके ॥ त्रायते । कर्त्तरि ल्युटचा ॥

वाणा । स्त्री । वायमाणायाम् ॥

वातः । त्रि । रक्षिते ॥ वायतेक्त । वै ङ्० । क्तः । नुदविदोन्देत्राघ्राह्रीभ्यो ऽन्यतरस्यामितिपक्षेनत्वाभावः ॥

वाता । त्रि । पालयितरि ॥ वायते । वेङ्० तृच् ॥

वाप्सः । पुं । अवसाने शब्दे ॥ चोमेय स्य । यथा । थावान् कश्चित् वाप्सः । शब्दोऽयं नपुंसकेतु बोद्धव्यः ॥ यथा । पद्मच्छत्रद्रपविपकदलादयो न- पुंसकाः पथ्यन्ते ॥

वापुषम् । त्रि । वपुषोविकारे ॥ वपुल सुनेः पुगित्यण् ॥

वायन्ती । स्त्री । वार्षिके । वायमाणा याम् । वलभद्रिकायाम् ॥ वायं त्राः । संपदादित्वात् क्विप् । वाम् अयति । इगतौ । शतृप्रत्ययः । उगितश्चे तिङीप् ॥ वायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगु ल्मास्त्रभ्रमशूलविषप्रणुत् ॥

वायमाणः । त्रि । रक्षमाणे ॥

वायमाणा । स्त्री । मता इति वङ्गभाषा

वायमा ।

वित्रकः

इतिच गौडभाषाप्रसिद्धायां देवब लायाम् । वार्षिकौषधौ । वायन्त्या म् ॥ अस्यागुणा यथा । शीतत्त्वंम धुरत्वं गुल्मज्वरकफास्त्रभ्रमतृष्णा क्षयग्लानिविषच्छर्दि विनाशित्वमि तिराजनिर्घण्टः ॥ वायते । वेङ्० । शानच् चानश् वा ॥

वासः । पुं । भये ॥ चसीउद्वेगे । घञ् ॥ ग्रसेर्देवे ॥

वासजिह्मः । त्रि । भयक्लिष्टे ॥ वासेन जिह्मः ॥

वासदायी । त्रि । भयदातरि । शङ्खे ॥ इति हेमचन्द्रः ॥

वासनः । त्रि । भयावहे ॥

वयः । पुं । त्रिसङ्ख्यायाम् । तीनइति भाषा । त्रि । सङ्ख्येये । त्रिसङ्ख्या विशिष्टे ॥ यथा त्रयोदेवाः त्रतुदेवा नांत्रयः ॥ तरतिःतॄ० । तरतेर्ड्रिः । त्रयः त्रीन् त्रिभ्यइत्यादिरूपाणि ॥ तिस्रोभार्या स्त्रियाश्चास्य त्रयोभृत्या स्त्र वान्धवाः । प्रुव वेदविदश्चाद्य मह्यो ते मङ्गलप्रदाः इतिब्रह्मवैवर्त्तपुरा- णम् ॥

त्रिंशः । त्रि । त्रिंशत्तमे । तीसवाँ इति भाषा ॥ त्रिंशतःपूरणः । तस्यपूरणे डट् ॥

त्रिंशकः । त्रि । त्रिंशद्भि क्रीते ॥ त्रिंश

त्रिंशद्भागैर्युक्तसंज्ञायामित्यसं-
ज्ञायामार्षीयेष्वर्थेषु लुक् ॥ टि-
लोपः ॥

त्रिंशत्, स्त्री, सङ्ख्याविशेषे । तीस
इति भाषा ॥ सङ्ख्येये ॥ त्रयोदश
तः परिमाणमस्य । पङ्क्तिविंशति
त्रिंशच्चत्वारिंशदिति निपातनात् प्र-
कृतेस्त्रिन् भावः शत्प्रत्ययः ॥

त्रिंशत्पत्रम्, क्ली, कुमुदे । कैरवे ॥ त्रिंश-
त्सङ्ख्यकानि पत्राणि यस्मिन् तत् ॥

त्रिंशांशः, पुं, राशेस्त्रिंशदंशे ॥ यथा ।
पञ्चपञ्चाष्टसप्ताक्षा विषमे त्रिंशदंश-
काः । माहेयशनिजीवज्ञशुक्राणां व्यु-
त्क्रमात् समे ॥ विषमराशौ कुज-
शनिगुरुबुधशुक्राणां पञ्चपञ्चाष्टसप्त-
पञ्चमितास्त्रिंशदंशकाः क्रमात् ज्ञेयाः
। समराशौ व्युत्क्रमात् तेषां विपर्यये
त्रिंशांशा ज्ञेयाः ॥ यथा मेषो विष-
मराशिः तत्र प्रथमादिपञ्चांशा भौ-
मस्य । षष्ठांशमारभ्य दशमांशपर्य-
न्तं पञ्चांशाः शनेः । एकादशांशमा-
रभ्य अष्टादशांशपर्यन्तमष्टावंशा गुरोः
। ऊनविंशांशमारभ्य पञ्चविंशांश-
पर्यन्तं सप्तांशा बुधस्य । ततः षड्विंशां-
शमारभ्य त्रिंशांशपर्यन्तं पञ्चांशाः
शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः । मि-
थुनसिंहतुलाधनुःकुम्भेष्वप्येवम् ॥
समराशौ व्युत्क्रमस्तथा । वृषे प्रथ-
मांशमारभ्य पञ्चांशा भृगोः । ततो
द्वादशांशपर्यन्तं सप्तांशा बुधस्य । त-
तो विंशांशपर्यन्तं अष्टावंशा गुरोः । त-
तः पञ्चविंशांशपर्यन्तं पञ्चांशाः शनेः
। ततस्त्रिंशदंशपर्यन्तं पञ्चांशाः कुज-
स्य त्रिंशांशाः ॥ एवं कर्ककन्यावृश्चि-
कमकरमीनेष्वपि बोध्याः ॥

त्रिकम्, क्ली, पृष्ठाधरे । पृष्ठवंशाधोभागे
। कटिभागे । त्रये ॥ त्रिपथस्थाने
॥ त्रिफलायाम् ॥ त्रिकटुनि ॥ इति मे-
दिनी ॥ यथा । गुडूचीसारसंयुक्तात् त्रि-
कषायसमन्वयात् । वातरक्तं निह-
न्त्याशु सर्वरोगहरस्त्वयम् ॥ त्रयाणां
सङ्घः । सङ्ख्यायाः संज्ञासङ्घसूत्रा-
ध्ययनेष्विति कन् ॥ तृतीयके ॥ तृ-
तीयेन रूपेण ग्रहणं यस्य । तावति-
थं ग्रहणमिति लुग्वेति कन् पूरणप्र-
त्ययस्य च वा लुक् ॥ पुं, गोक्षुरे ॥

त्रिककुत्, पुं, त्रिकूटाचले ॥ त्रीणि
ककुदानि शृङ्गाण्यस्य ॥

त्रिककुब्धामा, पुं, विष्णौ ॥ ऊर्द्धाधो-
मध्याभेदेन तिसृणां ककुभां धाम
आश्रयोऽयः ॥ तिसृणां ककुभां दिशां
समाहार इति विग्रहे तद्धितार्थोत्त-
रपदसमाहारे चेति समाहारे द्विगु-
रेकवचनमित्येकवद्भावे सनपुंस-

त्रिकपू | त्रिकूट
---|---

कमितिनपुंसकत्वेव त्रिककुप् तस्य धाम अधिष्ठानं प्रकाशोवेति। द्वन्द्व समासात्मकमेकं नाम। त्रिलिङ्गांक कुभामितिभाष्यं न विग्रहप्रदर्शनं किन्तु फलितार्थकथनम् ॥

त्रिकटः। पुं। गोक्षुरके॥

त्रिकटु। न। कटुत्रिके। त्र्यूषणे व्योषे॥ विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते॥ त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्। गुल्ममेहकफस्थौल्यमेदः श्लीपदपीनसान्॥ चव्यायां कटुनां मरिचशुण्ठिपिप्पलीनां समाहारः॥

त्रिकण्टः। पुं। गोक्षुरके॥ मत्स्यभेदे। सुवीप्रभेदे। तिर्कांटायूदर इति भाषा॥ टेङ्गरा इति गौडप्रसिद्धे मत्स्ये॥ न। कण्टकत्रये। मिलित वृक्षत्रय मिदक्षमीदुरालभारूपे॥ त्रीणि कण्टकानि यस्य यस्मिन्वा॥

त्रिकण्टकः। पुं। गोक्षुरकवत्ये॥ क्षुद्रमत्स्ये॥

त्रिकर्मकृत्। पुं। इज्याध्ययनदानानां कर्त्तरि॥

त्रिकशूलम्। न। वातजन्यव्यथाविशेषे॥ त्रिकसंज्ञः पृष्ठवंशास्थ्नो यः सन्धिस्तत्त्रिकं स्मृतम्। तत्र वातेन या पीडा त्रिकशूलं तदुच्यते॥

त्रिका। स्त्री। कूपस्यनेमौ। कूपस्याभ्रे रिव्यादिधारकयन्त्रे॥ तिस्रो ऽस्त्रयोऽस्याः। सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कन्॥

त्रिकायः। पुं। सुगते॥ त्रयः कायाअस्य॥

त्रिकार्षिकम्। न। मिलितनागराऽतिविषामुस्तात्रयरूपे॥

त्रिकालम्। न। कालैकालत्रये। परकाले॥

त्रिकालज्ञः। त्रि। सर्वज्ञे॥ पुं। बुद्धे॥ त्रिकालं जानाति। ज्ञा॰। आतइकः॥

त्रिकालदर्शी। पुं। मुनौ॥ त्रि। सर्वज्ञे। भूतभविष्यद्वर्त्तमानवेत्तरि॥ त्रिकालं पश्यति। दृशिर्॰। ग्रह्यादित्वाण्णिनिः॥

त्रिकालवित्। पुं। बुद्धे॥ त्रि। त्रिकालज्ञे॥ त्रिकालं वेत्ति। विद॰। क्विप्॥

त्रिकूटः। पुं। त्रिककुत्पर्वते। लङ्काराधारे। सुवेले॥ क्षीरोदार्णवतीरवर्त्तिनि गिरिविशेषे। यत्र गजेन्द्रो गरुडगामिना श्रीनारायणेनोद्धृतः। अस्यवर्णनं वामनपुराणे द्रष्टव्यम्॥ न। सामुद्रलवणे॥

त्रिकूटपर्वतः। पुं। तीर्थविशेषे॥

त्रिकूटलवणम्। न। द्रोणीलवणे॥

मन्दरस्त्रेधोभयार्थं इतिहतायिका
रात्रिदशानां स्वयम्भाख्याता॥

त्रिदशगोपः। पुं। इन्द्रगोपकीटे॥

त्रिदशदीर्घिका। स्त्री। स्वर्गङ्गायाम्॥

त्रिदशमञ्जरी। स्त्री। तुलस्याम्॥

त्रिदशवर्त्म। न। नभसि॥ त्रिदशानां
वर्त्म॥

त्रिदशाचार्य्यः। पुं। जीवे। सुरगुरौ॥
त्रिदशानाम् आचार्यः॥

त्रिदशाधिपः। पुं। शक्रे॥

त्रिदशाध्यक्षः। पुं। विष्णौ॥ गुणत्रयेण
सञ्जातानां तिसृणां दशानां जाग्रदा
दीनां अध्यक्षः स्वामी॥ त्रिदशानां
देवानां वा अध्यक्षः॥

त्रिदशायुधम्। न। वज्रे॥

त्रिदशारिः। पुं। दैत्ये॥ त्रिदशानाम्
अरिः॥

त्रिदशालयः। पुं। स्वर्लोके॥ त्रिदशाना
म् आलयः॥ सुमेरुपर्वते॥

त्रिदशावासः। पुं। त्रिविष्टपे। स्वर्गे॥
त्रिदशानाम् आवासः॥

त्रिदशाहारः। पुं। अमृते। पीयूषे॥

त्रिदशेश्वरी। स्त्री। दुर्गायाम्॥

त्रिदशाङ्किका। स्त्री। धर्मकषायाम्॥

त्रिदिनगतम्। न। नैमित्तिकव्रतविशे
षे॥ यथा। करकच्छ्रहोमाख्यं त्रिभी
रात्रोविकामतः। भीष्मवर्गं चरमौ
पितृष्वेषु त्रिदिनव्रतात्॥ दिनमेकं
निराहारो द्वितीयं पयसोऽशनः।
तृतीयन्तु नयेदह्नि त्रिदिनव्रतम
भिकेऽतिकृच्छ्रं वदेत्॥

त्रिदिनस्पृक्। पुं। त्र्यहस्पर्शे। अहस्ति
थिवयस्पर्शने॥ यथा। त्रिदिनस्पृक्
दिनक्षयस्पर्शमात्रकः। तथाहोरा-
त्रस्य वारत्रयेण तिथित्रयं यदि
स्पृश्यते तदा त्रिदिनस्पृक् स्यादि
त्यर्थः॥

त्रिदिवः। पुं। स्वर्गे॥ त्रयो ब्रह्मविष्णुमहे
शाः दीव्यन्त्यत्रेति त्रिदिवः। क्षणाये
ति घञ्। संज्ञापूर्वकत्वादगुणः॥
यद्वा। सात्त्विकराजसतामसभेदेन
त्रिविधाः दीव्यन्ति व्यवहरन्ति प्रकाश
न्ते वा। इगुपधत्वात् कः॥ यद्वा तृती
यावीः। प्रजर्षेकविधानम्। पूर्ति
विषये सङ्ख्याशब्दस्य पूरणार्थत्व
म्॥ न। खे। नभसि॥ सुखे॥

त्रिदिवा। स्त्री। नदीविशेषे॥

त्रिदिवेशः। पुं। देवे। निर्जरे॥ त्रि
दिवस्य ईशः॥

त्रिदिवोद्भवा। स्त्री। स्थूलैलायाम्॥

त्रिदिवौकाः। पुं। देवे। सुरे॥

त्रिदृक्। पुं। शिवे। महादेवे॥ त्रि।
त्रिनेत्रे॥

त्रिदोषः। पुं। सन्निपाते॥ न। वात-

त्तकफक्षये दोषत्रये ॥

**त्रिदोषजः** । पुं । त्रिदोषजनिते सन्निपातरोगे ॥ अस्य पूर्वरूपम् । सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ॥ सर्वदोषप्रकोपजे पूर्वं सर्वलिङ्गसमवायः । क्वचिद्यवितजृम्भानेपद्रावात्मा वक्षस्थितानां श्रमादीनां समवायो भवति ॥ * ॥ त्रिदोषजे वातकफो त्रिदोषजेनाद्यमूत्रमिश्रः किरातत्तिक्तादिगणैः प्रयोज्यः सुपूर्णिका पिप्पलीविमिश्रः ॥

**त्रिधा** । अ । त्रिप्रकारे ॥ यथा । त्रिधाकरोति ॥

**त्रिधातुः** । पुं । गणेशे ॥ न । धातुत्रये ॥

**त्रिधामा** । पुं । विष्णौ ॥ शिवे ॥ अग्नौ ॥ मृत्यौ ॥ त्रीणि धामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य सः ॥ न । स्त्री । धामत्रये ॥

**त्रिधारकः** । पुं । गुण्डतृणे ॥

**त्रिधारस्नुही** । स्त्री । त्र्यस्रे । स्नुहीविशेषे ॥

**त्रिधाविशेषः** । पुं । सूक्ष्मादिविशेषे ॥ यथा । सूक्ष्मा मातापितृजाः सहप्रभूतैस्त्रिधा विशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते ॥ सूक्ष्मशरीरमेकं मातापितृजोऽद्वितीयः महाभूतानि तृतीयो विशेषः । तेषां मध्ये सूक्ष्मा नियताः मातापितृजा निवर्त्तन्ते कीटान्ता वा भस्मान्ता वा विडन्ता वेति ॥ त्रिप्रकारको विशेषः ॥

**त्रिधासर्गः** । पुं । भूतादिसर्गे ॥ अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति । मानुष्यश्चैकविधः समासतोऽयं त्रिधासर्गः ॥ ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्वः याक्षः राक्षसः पैशाच इत्यष्टविकल्पो दैवः सर्गः । १ ॥ पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्यग्योनः सर्गः । २ ॥ मानुष्यस्त्वेकविधः । ३ ॥ ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात् ॥

**त्रिनयनः** । पुं । विषमनयने । शिवे ॥ त्रीणि नयनान्यस्य । क्षुभ्नादिषु चेति । निषेधात् पूर्वपदात् संज्ञायामग इति णत्वाभावः ॥ त्रि । नेत्रत्रयवति ॥

**त्रिनयना** । स्त्री । उमायाम् ॥ टाप् ॥

**त्रिनेत्रः** । पुं । शिवे । हरे ॥ त्रीणि नेत्राण्यस्य ॥ त्रि । नेत्रत्रयविशिष्टे ॥

**त्रिनेत्रचूडामणिः** । पुं । शशाङ्के । चन्द्रे ॥

**त्रिनेत्रा** । स्त्री । वाराहीकन्दे ॥ नेत्रत्रययुक्तायाम् ॥

**त्रिपञ्च** । त्रि । त्रिगुणितपञ्चसु । पञ्च

त्रिपर्णः । पुं । किंशुके ॥

त्रिपर्णा । स्त्री । वनकार्पासाम् ॥

त्रिपर्णिका । स्त्री । कन्दविशेषे । अम्लवल्ल्याम् । कन्दाल्याम् ॥

त्रिपर्णी । स्त्री । शालपर्ण्याम् ॥ वनकार्पास्याम् ॥ पृश्निपर्णीभेदे ॥

त्रिपाद्-द् । पुं । विष्णौ ॥ ज्वरे ॥ त्रयः पादा अस्य । संख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

त्रिपादिका । स्त्री । हंसपदीलतायाम् ॥

त्रिपिबन् । पुं । शार्ङ्गपक्षे ॥ मेघादेरापः पिबतोऽयस्य त्रीणिअस्रं स्रवन्ति कर्णौ जिह्वा च । त्रिभिः पिबति । पा० । शत्रु ॥

त्रिपिष्टपम् । न । स्वर्गे ॥ त्रिदशानामपि ष्टपम् । पृषोदरादित्वाद् दशशब्दलोपः ॥ तृतीयं पिष्टपम् त्रिपिष्टपम् । पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते त्रिभागवत् । मर्त्यपातालापेक्षया तृतीयं पिष्टपं भुवनम् ॥

त्रिपिष्टपसद् । पुं । देवतायाम् ॥ त्रिपिष्टपे दिवि सीदतिवर्त्तते । षद्लृ० । क्विप् ॥

त्रिपुटः । पुं । सतीनके । खिसारीति प्रसिद्धे कलाये ॥ त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा ॥ किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥ तीरे ॥ तालके ॥ क्षुपभेदे ॥ गोक्षुरे ॥

त्रिपुटा । स्त्री । मल्लिकायाम् ॥ सूक्ष्मैलायाम् ॥ त्रिवृद्दोषधौ ॥ त्रयः पुटा यस्याः ॥ कर्णस्फोटायाम् ॥ रक्तत्रिवृति ॥ स्थूलैलायाम् ॥ देवीविशेषे ॥

त्रिपुटी । पुं । एरण्डे ॥

त्रिपुटी । स्त्री । त्रिवृतायाम् ॥ त्रयाणां पुटानां समाहारे ॥ त्रयाणां ज्ञातृज्ञानज्ञेयादिरूपाणां पुटानामाकाराणां समाहारः । द्विगोरिति ङीप् ॥

त्रिपुटीफलः । पुं । एरण्डे ॥ त्रिपुटी फले यस्य ॥

त्रिपुण्ड्रम् । न । भालस्थतिर्यग्रेखात्रयान्विते ॥ ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रयोनिजः ॥ * ॥ विनाभस्मत्रिपुण्ड्रेण विनारुद्राक्षमालया । पूजितोऽपिमहादेवो न स्यात् तस्यफलप्रदः ॥ तस्मान्मृदापि कर्त्तव्यं ललाटे तु त्रिपुण्ड्रकमितिस्मृतिः ॥ स्नात्वा भस्मना वापि त्रिपुण्ड्रं विन्दुसंयुतम् । ललाटे तिलकं कुर्याद् गायत्र्या वा शुभ्रम्त्व इति महानिर्वाणतन्त्रम् ॥ येषां च पुमनुष्याणां त्रिपुण्ड्रे

ऽविनाशितम् । ब्रह्मानसहस्रांतत्-
स्थानिमेषं पुरायकृत्यैरितिदेवी-
भागवतम् ॥ अपिचतत्रैव नारदं प्रति
नारायणवाक्यम् । त्रिपुण्ड्रं ये विनि
न्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति
च ये भक्त्या धारयन्ति शिवमेव ते ॥ शिवं
शेषाः महद्यत्नेन ललाटे सर्वदेहिना
म् । तथापि मानवा मूर्खा न कुर्वन्ति
त्रिपुण्ड्रकमिति ॥ त्रयाणां पुण्ड्राणां
समाहारः ॥ तद्धितार्थेत्यादिनास
मासः ॥

त्रिपुण्ड्रकम् । न । त्रिपुण्ड्रे ॥ यथाभस्मा
ऽटनात्ततो भस्मरेखास्त्रिपुण्ड्रकमि
तिहारावली ॥ त्रिपुण्ड्रमेव । स्वा-
र्थेकः ॥

त्रिपुरः । पुं । असुरविशेषे ॥ न । मय
दानवविरचिते कामचारिणि पुरत्र
ये ॥ त्रयाणां पुराणां समाहारः त्रि
पुरम् । तद्धितार्थेतिसमासः । पात्रा
दित्वात् स्त्रीत्वाभावः ॥

त्रिपुरदहन. । पुं । शिवे । हरे ॥

त्रिपुरभैरवी । स्त्री । देवीविशेषे ॥

त्रिपुरमल्लिका । स्त्री । पुष्पवृक्षविशेषे
। स्वर्णमायायाम् । त्रिपुरमाल्लिकेति
गौडेपुख्यातायाम् ॥

त्रिपुरमालिका । स्त्री । सौहिन्याम्
वटपत्रायाम् ॥

त्रिपुरा । स्त्री । चतुर्वर्गप्रदायां परदे
वतायाम् ॥ ब्रह्माविष्णुमहेशाद्यैस्त्रि
दशैरर्चितापुरा । त्रिपुरेतिततोनामा
सकथितं दैवतैस्तव ॥ अपिच । त्रि
कोणं मण्डलंचास्यास्त्रिपुरन्तु त्रिरे
खकम् । मन्त्रन्तुत्र्यक्षरं चेयं तथारू
पत्रयं पुनः ॥ त्रिविधाकुण्डलीशक्ति
स्त्रिदेवानाञ्चसृष्टये । सर्वं त्रयं त्रयं
यस्मात् तस्मात्तुत्रिपुरामतेति ॥

त्रिपुरान्तकः । पुं । महेश्वरे । शूलिनि
। शिवे ॥ त्रयाणांसुवर्णरौप्यलोहा-
नां मयादिमासकानां दैत्यनयानां
वा पुराणि तेषामन्तकोनाशकः । त्र्य
वयवं पुरं त्रिपुरं तस्यान्तकः ॥ त्रया
णां पुराणां समाहारः । पात्रादिरि
ति कश्चित् तन्न । तथासतिपात्रा-
चीतिवत् त्रिपुरीति प्रयोगाभावः
स्यात् ॥

त्रिपुरारिः । पु । सदाशिवे ॥

त्रिपुरी । स्त्री । चेदिपुर्याम् । त्रिपुरा
इति प्रसिद्धदेशे ॥

त्रिपुषा । स्त्री । कृष्णत्रिवृति ॥

त्रिपुष्करम् । न । ब्रह्मकृततीर्थविशेषे ।
ज्येष्ठमध्यमकनिष्ठेषु त्रिषु पुष्कराभि
धक्षेत्रेषु ॥ पु । योगविशेषे ॥ यथा ।
वाराश्चरा क्षितिर्भद्रा नक्षत्र भद्र
पादकम् । आर्ते ऽचजारजोयोगा

मार्गैर्गच्छतीति विग्रहः ॥

त्रिमार्गी । स्त्री । त्रिपथे ॥ त्रयाणां मा-
र्गाणां समाहारः ॥ ङीप् ॥

त्रिमुकुटः । पुं । त्रिकूटाचले ॥

त्रिमुखः । पुं । बुद्धविशेषे ॥

त्रिमुखा । स्त्री । बुद्धदेवीविशेषे । मा-
यादेव्याम् ॥ वज्रधाराद्याम् ॥

त्रिमूर्त्तिः । पुं । बुद्धभेदे ॥ ब्रह्मविष्णु-
शिवाख्यमूर्त्तित्रयवति ॥ यथा । त्रि-
मूर्त्तिर्यःसर्गस्थितिविलयकर्माणि
तनुते । इति गणेशोपाध्यायः ॥ तिस्रो
मूर्त्तयो यस्य ॥ स्त्री । देवीविशेषे ॥
तिस्रो मूर्त्तयो यस्याः ॥ यथा ब्रह्माद-
यो वा मूर्त्तयो यस्याः ॥ एकमूर्त्तिरपि
भिन्नरूपिणी या जगज्जननपालन-
क्षये । कार्य्यतेश्वरतया विवर्त्तते त्र-
्यक्षि सह मानतोर्च्चिताम् ॥

त्रियष्टिः । स्त्री । त्रिपर्ण्याम् ॥

त्रियामकम् । न । पापे ॥ इतिशब्द-
माला ॥

त्रियामा । स्त्री । रात्रौ ॥ त्रयो यामा
यस्याः । आद्यन्तयोरर्द्धयोश्चेष्टाकाल-
त्वेन दिनप्रायत्वात् ॥ हरिद्रायाम् ॥
यमुनायाम् ॥ नील्याम् ॥ कृष्णत्रिवृ-
तायाम् ॥

त्रियुगः । पुं । यज्ञपुरुषे ॥ कृतयुगेय
षाभावात् । कलौ छन्नत्वाद्वा ॥

त्रियूहः । पुं । कपिलाश्वे ॥

त्रिरात्रम् । न । रात्रित्रये । तिसृणां रा-
त्रीणां समाहारे ॥

त्रिरुक्तम् । त्रि । विषादादिना त्रिवारो-
च्चारिते ॥ विषादे विस्मये हर्षे खे-
दे दैन्येऽवधारणे । प्रसादने सम्भ्र-
मे च द्विस्त्रिरुक्तं न दुष्यति ॥

त्रिरेखः । पुं । शङ्खे ॥ त्रि । रेखात्रयवि-
शिष्टे ॥ तिस्रो रेखा यस्य सः ॥

त्रिलवः । पुं । तृतीयांशे ॥

त्रिलवणम् । न । लवणत्रये ॥ यथा ।
सैन्धवञ्च विडञ्चैव रुचकञ्च तृतीय-
कम् । मिलितैतत् त्रिलवणं वैद्य-
शास्त्रे निरूपितम् ॥

त्रिलोकात्मा । पुं । अन्तर्यामिणि ॥ त्र-
याणां लोकानां आत्मा ॥

त्रिलोकधृक् । पुं । विष्णौ ॥ त्रीन् लो-
कान् धारयति इति । धृञ् । क्विप् ॥

त्रिलोकी । स्त्री । स्वर्गमर्त्त्यपातालेषु
॥ त्रयाणां लोकानां समाहारः । द्वि-
गोरिति ङीप् ॥

त्रिलोकेशः । पुं । सूर्ये ॥ सदाशिवे ॥
त्रयाणां लोकानामीशोऽधिष्ठाता ॥
त्रयो लोका यदायत्ताः स्वेषु कर्मसु
वर्त्तन्त इति वा ॥

त्रिलोचनः । पुं । त्र्यम्बके । शिवे ॥ त्री-
णि लोचनानि यस्य सः । त्रिषु कालेषु

लोकेषु गुणेषु वेदेषु वा लोचनं ज्ञानं यस्येति वा। त्रयो वेदाः त्रयो वा अकारोकारमकाराः लोचनानि यस्य वा ॥

त्रिलोचना । स्त्री । दुर्गायाम् ॥ शुद्रदेवी प्रभेदे ॥

त्रिलोचनाष्टमी । स्त्री । गौणचान्द्रज्येष्ठस्य कृष्णाष्टम्याम् ॥

त्रिलोहकम् । न । सुवर्णरजतताम्राभिधे धातुत्रये ॥

त्रिलोही । स्त्री । त्रिलोहघटितमुद्राविशेषे ॥

त्रिवर्गः । पुं । धर्मकामार्थेषु ॥ धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः ॥*॥ यथाऽऽनुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ त्रिफलायाम् ॥ कटुत्रिके ॥ वृद्धिस्थानक्षये॥ क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ सत्त्वरजस्तमस्सु ॥ यथा त्रिवर्गःसमूहः ॥ मुनीनां ॥ इति शब्दरत्नावली ॥

त्रिवर्षकः । पुं । गोक्षुरके ॥ न । त्रिफलायाम् ॥ त्र्यूषणे । कटुत्रिके ॥ ब्राह्मणक्षत्रियविट्सु ॥

त्रिवर्षिका । स्त्री । त्रिवर्षायाङ्गवि । त्रिहायण्याम् ॥ त्रीणि वर्षाणि वयो यस्याः सा त्रिवर्षा । ततः स्वार्थे कः ॥



त्रिविक्रमः । पुं । विष्णौ ॥ बलिबन्धनार्थं भूर्भुवःस्वर्गेषु त्रिषु लोकेषु गुणेषु वा त्रयो वा विक्रमाः पादन्यासा यस्य सः । त्रिरित्येव त्रयो लोकाः कीर्त्तिता मुनिसत्तमैः । क्रमते तांस्तथा सर्वांस्त्रिविक्रमो जनार्दनः ॥ इति हरिवंशः ॥ त्रीन् लोकान् विशेषेण क्रामति व्याप्नोति वा । क्रमु० अच् ॥

त्रिविधः । त्रि । त्रिप्रकारे ॥ तिस्रो विधा यस्य सः ॥

त्रिविधसर्गः । पुं । त्रिधासर्गे ॥

त्रिविष्टपम् । न । स्वर्गे । सुरलोके ॥ विशन्त्यत्र सुकृतिन इति विष्टपम् । विटपपिष्टपविशिपोलपा इति विशेरौणादिकः कपन् प्रत्ययः तस्य तुट् । अस्त्येति षत्वम् । सूत्रे पिष्टपेति पाठ उज्ज्वलदत्तादिभिरुक्तः । अन्ये तु विटपेति दन्त्योष्ठादिमेव पठन्ति । युक्तञ्चैतत् । यत्रप्रस्यविष्टपमित्यादौ तथा दर्शनात् । अमरकोषेपि विष्टपं भुवनं जगदिति प्रचुरपाठाच्च ॥ तृतीयं विष्टपम् ॥ त्रिभुवने॥

त्रिविष्टपसद् । पुं । देवे । सुरे ॥

त्रिवीजः । पुं । श्यामाके ॥ इति राजनिर्घण्टः ॥

त्रिवृत् । स्त्री । त्रिवृतायाम् । सुवहायाम् । श्वेतत्रिधारा इति प्रसिद्धौषधी

॥ श्वेता त्रिवृद्रेचनी स्यात् स्वादुरुष्णा समीरजित् । रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा ॥ श्वेतकृष्णप्रभेदेन द्विविधा त्रिवृदुच्यते । श्यामा त्रिवृत्ततो हीनगुणा तीव्रा विरेचिका ॥ मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ त्रीन् अवयवान् वृणोति । वृञ् । क्विप् तुक् ॥

त्रिवृता । स्त्री । त्रिवृदोषधौ ॥ त्रिभिरवयवैर्वृता ॥

त्रिवृत्करणम् । न । तेजोबन्नानां मिश्रीकरणे ॥ तत्प्रकारो यथा । तेजोबन्नानामेकैकं द्विधा सम विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्वद्वितीय स्थूल भागं परित्यज्यान्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनमिति ॥

त्रिवृत्पर्णी । स्त्री । हिलमोचिकायाम् ॥

त्रिवृद्वेदः । पुं । त्रयाणाम् । ऋग्यजुःसामात्मके वेदे ॥ प्रणवे ॥ ऋचो यजूंषि चान्यानि सामानि विविधानि च । एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ ऋग्यजुःसामात्मना त्रिरावर्तते इति त्रिवृत् स चासौ वेदश्चेति कर्मधारयः ॥

त्रिवेणी । स्त्री । स्थानविशेषे ॥ सा द्विधा । युक्तवेणीमुक्तवेणीतिभेदात् । तत्र प्रयागे युक्तवेणी गङ्गया यमुनासरस्वत्योः सङ्गमात् ॥ दक्षिणप्रयागे मुक्तवेणी गङ्गया यमुनासरस्वत्योर्वियोगात् ॥ दक्षिणप्रयागस्य सीमानिर्णयो यथा । प्रद्युम्नस्य ह्रदाद्दक्षे सरस्वत्यास्तथोत्तरे । तद्दक्षिणप्रयागस्तु गङ्गातो यमुना गतेति ॥ * ॥ सगरसन्ततिसन्तरणेच्छया प्रचलितां तिलवेन हिमालयात् । इह तु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवीति नदियाधिपतिक्षौण्याचन्द्रराजस्य सभास्थो वागीश्वरविद्यालङ्कारः ॥

त्रिवेणुः । पुं । रथमुखस्थेऽवयवविशेषे ॥

त्रिवेदः । पुं । वेदत्रयवेत्तरि ॥

त्रिवेदी । पुं । त्रिवेदज्ञे ॥

त्रिवेदी । स्त्री । वेदत्रये ॥ त्रयाणां वेदानां समाहारः । द्विगोरिति ङीप् ॥ ऐष्टिकपाशुकसौमिकवैदिकाश्रये ॥

त्रिवेला । स्त्री । त्रिवृति ॥

त्रिशक्तिधृक् । पुं । भगवति ॥ त्रिशक्तिमयीं तां धरतीति विग्रहः ॥

त्रिशङ्कुः । पुं । सूर्यवंशीयनृपविशेषे ॥ शलभे ॥ मूषदंशके । मार्जारे ॥ चातके ॥ खद्योते ॥

विशङ्कुजः । पुं । हरिश्चन्द्रनृपे ॥
विशङ्कुयाजी । पुं । विश्वामित्रे ॥
विशरणः । पुं । बुद्धे । जिने ॥
विशर्करा । स्त्री । मिलितगुडोत्पन्ना
विसोत्थामधुरेति राजनिर्घण्टः ॥
विशला । स्त्री । कूष्माण्डलताविशेषे ।
वेङ्कुमामासरि ॥
विशाखपत्र । पुं । बिल्वे । मालूरे ॥
विशिखः । पुं । राक्षसाकारे । रावणपु
त्रे ॥ विल्वे ॥ न । त्रिशूले ॥ काक-
लासरे ॥ किरीटे ॥ त्रि । त्रिशिखय
वति ॥
विशिखिदला । स्त्री । मौशाकन्दे ॥
विशिरा३ । पुं । ज्वरे ॥ कुवेरे ॥ राव
णसुतविशेषे ॥ खरसेनापतौ ॥ त्री
णिशिरांसि यस्य ॥
विशीर्षकम् । न । त्रिशूले ॥
विशूलम् । न । अस्त्रविशेषे । त्रिशिखे ॥
त्रयाणां शूलानां समाहारः ॥
विशूली । पु । शिवे ॥ त्रि । त्रिशूलधा
रिणि ॥
विशृङ्गः । पु । त्रिकोणे ॥ त्रिकूटाद्रौ ॥
त्रीणि शृङ्गाण्यस्य ॥
विशृङ्गी । पुं । रोहितमत्स्ये ॥
विष्टुप् । स्त्री । एकादशाक्षरायां वृत्तौ ॥
विसन्ध्यः । त्रि । परदेवतायाम् । पर
मेश्वरे ॥ त्रिष्वपिकालेषु सृष्टेः पूर्वं
प्रलयानन्तरं स्थितिसमये च सन्ध्योऽ
व्यभिचारेण वर्तमानत्वं ॥
विसन्धिः । स्त्री । पुष्पविशेषे । सन्ध्या
कुसुमे फागनियाँ इतिभाषा ॥ पूर्वा
परसन्धयस्त्री ॥
विसन्ध्यम् । न । प्राह्णापराह्णमध्या
ह्ने । त्रिकाले ॥ प्रातः सूर्योदयः का
लो मध्याह्नस्तदनन्तरम् ॥ सायंसू-
र्यास्तसमय त्रिकालानामियत्क्रमः
इतिनिर्णीततत्त्वम् ॥ तिसृणां सन्ध्या
नांसमाहारः ॥ आदन्तोवेतिपाक्षि
कीस्त्रीवता ॥ पुष्पविशेषे ॥
विसन्ध्या । स्त्री । जपापुष्पे ॥ देवी वि
शेषे ॥ अस्याः स्थानं कुरुक्षेत्रा
श्रीम् ॥
विसमम् । न । समचर्ये । समचरीत
कीनागरगुडरूपे ॥
विसरः । पुं । कुसरे ॥ इतिहेमचन्द्र. ॥
विसरकम् । न । विशारद्यधुमाने ॥ व
यायां सरकायां समाहारः । तद्धि
तार्थे त्यादिना समासः द्विगुः । पा
त्रादित्वान्नपुंसकत्वम् ॥
विसवनम् । न । त्रिकाले । विसन्ध्ये ॥
विसामा । स्त्री । नदीविशेषे । महेन्द्रा
द्रेः सरन्त्यां स्रवन्त्याम् ॥
विसिता । स्त्री । त्रिगर्तायाम् ॥
विसोढ्यम् । न । त्रिकुटेबेने । पिच

स्त्रे ॥ त्रिवारं सीतया समितम् । नौ यये।धर्मेस्थादिनायत् ॥

त्रिसुगन्धि । न । त्रिजातके ॥ त्वगेला पत्रकैस्तुल्यैः त्रिसुगन्धि त्रिजातकम् ॥

त्रिसुपर्णः । पुं । बहवृचानां वेदभागे से पावतेच ॥ तद्योगात् पुरुषे ॥

त्रिस्रोताः । स्त्री ॥ गङ्गायाम् ॥ त्रीणि स्रोतांसियस्याः ॥ नद्यन्तरे ॥

त्रिहल्यम् । न । त्रिगुणाकृते । तृतीयाकृते । त्रिसीत्ये ॥ त्रिवारं हलेन कृष्टम् । संतअनेहस्तात्करणिल्याकर्षे च्चिसियत् ॥

त्रिहायणी । स्त्री । त्रिवर्षायां गवि न्यव्यादायाम् ॥ त्रयोहायना यस्याः । दाम हायनान्ताच्चेतिङीप् ॥ त्रिचतुर्भ्यांहायनस्येतिणत्वम् ॥ द्रौपद्याम् ॥ यथा । कृते युगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणीति ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डम् ॥

त्रुटनम् । न । विच्छेदे । टूटना इति भाषा ॥

त्रुटिः । स्त्री । संशये ॥ लेश । स्वल्पे ॥ सूक्ष्मैलायाम् ॥ कालमाने । लवद्वये ॥ क्षणयोर्निमेषयोः ॥ त्रुट्यते ऽनेनवा । त्रुट छेदने । इगुपधात्किदि तीन् ॥

त्रुटितः । त्रि । छिन्ने ॥

त्रुटिबीजः । पुं । कच्व्याम् ॥ इति शब्दमाला ॥

त्रुटी । स्त्री । त्रुट्यर्थभावे ॥ कृदिकारादितिङीष् ॥

त्रेता । स्त्री । द्वितीययुगे । सत्ययुगानन्तरयुगे ॥ अस्यपरिमाणं यथा । त्रिचत्वारिंशल्लक्षेण विंशत्सहस्राधिकेनच । चतुर्युगं परिमितं नराणां क्रमेणच ॥ द्विनवत्यधपरिमितं षण्णवतिसहस्रकम् । त्रेतायुगं परिमितं कालविद्भिः प्रकीर्तितमिति ब्रह्मवैवर्ते प्रकृतिखण्डम् ॥ * ॥ तत्रधर्मो यथा ॥ * ॥ त्रेतायुगे समायाते धर्मः पादोनतां गतः । अल्पक्रोधान्विता लोकाः केचित् केचिद्दयामयाः ॥ विष्णुध्यानरता लोका यज्ञदानपरायणाः । वर्णाश्रमाचाररताः सुखिनः सुस्थचेतसः ॥ द्विजाभूमिस्पृशः शूद्राः सर्वेब्राह्मणसेविनः । ब्राह्मणाश्चमहात्मानो नेदवेदाङ्गपारगाः ॥ प्रतिग्रहनिवृत्ताश्च सत्यसन्धाजितेन्द्रियाः । तपोव्रतपरानित्यं दातारो विष्णुसेविनः ॥ कालवर्षी तडित्वांश्च स्त्रियः सर्वाः पतिव्रताः । वसुन्धरा च शस्याढ्या पुत्राश्च पितृसेविन इतिपाद्मेक्रि

त्वचीनी इतिभाषा ॥ चर्मणि । स्प र्शग्रहणबहिरिन्द्रियव्यापिनीन्द्रिये ॥ त्व चति । त्वचसंवरणे । क्विप् ॥ यद्वा । तनोति तन्यतेवा । तनु० । तने तेरनस्व: चा क्विप् प्रत्ययः ॥

त्वचम् । न । त्वचि । चर्मणि ॥ वल्क ले ॥ त्वक्पत्रे ॥ यथा । त्वचं कर्पूरवत् कटुकं स्वादु तिक्तञ्च रूक्षकम् । पि त्तलं कफवातघ्नं कण्डूआमाशयविना शनम् ॥ हृद्बस्तिरोगवातार्शः कृमि पीनसयुक्तहृदिति ॥ प्रशस्तोत्वगस्या स्ति । अर्शआदिषु ॥ त्वचति । त्वचसं वरणे । पुंसीतिघ: ॥

त्वचनम् । न । संवरणे ॥ त्वचो ग्रहणे ॥

त्वचा । स्त्री । त्वचि ॥

त्वचापत्रम् । न । त्वक्पत्रे ॥

त्वचिष्ठः । त्रि । त्वचीयसि । अतिशयत्व ग्विशिष्टे ॥

त्वचिसारः । पु । वंशे ॥ त्वचस्तादि तिसतस्याः असुक् ॥

त्वचिसुगन्धा । स्त्री । शुद्रैलायाम् ॥

त्वत् । त्रि । भिन्ने । अन्यस्मिन् ॥ तनो ति । तनु० तनोतेरनश्च० । चात् क्विप्तुक् ॥

त्वदीयः । त्रि । भवदीये ॥ तवायम् । छः । प्रत्ययोत्तरपदयोश्चेतिमपर्य न्तस्यत्वदादेशः ॥

त्वद्विधः । त्रि । त्वत्सदृशे ॥ त्वमेव विधा प्रकारोयस्य ॥

त्वम्पदलक्ष्यार्थः । पुं । अज्ञानोपहितम् स्थूलाद्युपहिताधारभूते अनुपहित प्रत्यगानन्दतुरीयचैतन्ये ॥

त्वम्पदवाच्यः । त्रि । त्वम्पदाभिधे ॥ दे हादिभिः परिच्छिन्नोजीवस्तुत्वम्प दाभिधः ॥

त्वम्पदवाच्यार्थः । त्रि । अज्ञानव्यष्टिः । एतदुपहितात्पत्वादिविशि ष्टं चैतन्यम् । एतदनुपहितचैतन्य ञ्च । एतत्त्रयं समायः पिण्डवदेकत्वे नावभासमानं त्वम्पदवाच्यार्थो भ वति ॥

त्वम्पदाभिधः । पुं । त्वम्पदवाच्ये । जीवे ॥ आत्मत्वनतया भाति योऽस्मत्प्रत्य यशब्दयोः । अन्तःकरणसम्भिन्नबो धः स त्वम्पदाभिधः ॥ त्वम्पदमभि धायस्य ॥

त्वरणम् । न । त्वरायाम् ॥

त्वरा । स्त्री । वेगे । सम्भ्रमे । आवेगे ॥ त्वरणम् । ञित्वरा० । घटादयः षितइतिषित्त्वातिदेशात् अङ् । टाप् ॥

त्वरिः । स्त्री । त्वरायाम् । संवेगे ॥

त्वरितम् । न । शीघ्रे ॥ त्वरतेस्म ञि त्वरासम्भ्रमे । गत्यर्थाकर्मकेति क

ति । दंश० अच् । गौ० ङीष् ॥

दंष्ट्रा । स्त्री । दन्तविशेषे । दाढायाम् । दाढ इति भाषा ॥ दन्तपङ्क्तिद्वयप्रान्ते वर्त्तमानस्थूलतरोदन्तविशेषा दंष्ट्राः । द्विगुणीकृतदन्तावलिरिति भावप्रकाशः ॥ दश्यतेऽनयेत्यर्थे दाम्नी शसयुयुजेत्यादिना करणे ष्ट्रन् । टाप् । गौरादिषु मातामहीशब्दस्य पाठात् इति नित्यःपितामहीष् ॥

दंष्ट्राकः । पुं । शूकरे ॥

दंष्ट्रिका । स्त्री । दाढिकायाम् ॥

दंष्ट्री । पुं । घृष्टौ । शूकरे ॥ सर्पे ॥ त्रि । दंष्ट्राविशिष्टे ॥ यथा दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः । ये स्वाम्यर्थे हता यान्ति राजन् स्वर्गं न संशयः । इत्यग्निपुराणम् । प्रशस्ता दंष्ट्रा अस्ति अस्य । ब्री० इनिः ॥

दकम् । न । वारिणि । जले ॥

दक्षः । पुं । ब्रह्मणो दक्षिणाङ्गुष्ठाज्जाते प्रजापतिविशेषे । तस्यैव मैथुनेन प्रजा जाताः ॥ ताम्रचूडे । कुक्कुटे ॥ मुनिविशेषे ॥ हरवृषे ॥ वृक्षविशेषे ॥ त्रि । चतुरे । ज्ञातव्येषु कर्त्तव्येषु वोपस्थितेषु सद्य एव तत्तत्करणे समर्थे । शिक्षिते । कुशले ॥ दक्षते । दक्ष वृद्धौ शीघ्रार्थे च । पचाद्यच् ॥



दक्षकन्या । स्त्री । भवान्याम् । दुर्गायाम् ॥ दक्षस्य प्रजापतेः कन्या ॥ ताःपञ्चाशत्सङ्ख्यकाः वह्निपुराणे गणभेदनामाध्याये प्रसिद्धाः ॥

दक्षजा । स्त्री । दुर्गायाम् ॥ दक्षाज्जाता । पञ्चम्यामिति डः ॥

दक्षजापतिः । पुं । शिवे ॥ चन्द्रे ॥

दक्षता । स्त्री । चित्रकारित्वे ॥

दक्षसावर्णिः । पुं । नवमे मनौ । भाविषु सप्तमनुषु द्वितीये ॥

दक्षसुतः । पुं । देवे ॥

दक्षा । स्त्री । भूमौ ॥

दक्षाध्वरध्वंसकः । पुं । शिवे ॥ वीरभद्रे ॥ दक्षाध्वरस्य ध्वंसकः ॥

दक्षाध्वरध्वंसकृत् । पुं । हरे ॥ वीरभद्रे ॥ दक्षाध्वरं ध्वंसं करोति । कृ० । क्विप् । तुक् ॥

दक्षाय्यः । पुं । गरुडे ॥ गृध्रे ॥ दक्षते । दक्ष० । स्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥

दक्षिणः । त्रि । दक्षिणोद्भूते ॥ सरले ॥ परच्छन्दानुवर्त्तिनि । पराभिप्रायवर्त्तिनि ॥ अपसव्ये । अवामे ॥ दक्षे ॥ औदार्यवति ॥ पुं । चतुर्थोपपत्यन्तर्गतपतिविशेषे ॥ सकलनायिकाविषयसमसहजानुरागो दक्षिण इति वचनात् ॥ दक्षते । दक्ष० ।

इदक्षिणाभ्यामिनन्॥

दक्षिणकालिका। स्त्री। आद्यायांशक्तौ॥

दक्षिणतः। अ। दिशि॥ देशे॥ वसत्यागतो वा। कालेदक्षिनास्ति। दक्षिणोत्तराभ्यामतसुजिति स्वार्थे ऽतसुच्॥

दक्षिणतीरम्। न। दक्षिणतीरे॥

दक्षिणमार्गः। पुं। पितृयाणे। गतागतं चत्वे कर्मिणांमार्गे॥ यथोक्तंमीमांसोपनिषद्भाष्ये। निर्विशेषं दक्षिणेनमार्गेण गतागतलक्षणेनेति॥

दक्षिणसिन्धुः। पुं। भौमतीर्थविशेषे॥

दक्षिणस्थः। पुं। सारथौ॥ त्रि। दक्षभागस्थिते॥ दक्षिणेतिष्ठति। स्था० सुपीतिकः॥

दक्षिणा। अ। दिशि॥ देशे॥ वसति रमणीयं वा। दक्षिणस्यांदिशि दक्षिणादिग्वा। दक्षिणादाजिति स्वार्थे आच्॥ दक्षिणाहि इत्यर्थे॥

दक्षिणा। स्त्री। अवाच्यांदिशि। याम्यदिशि॥ यज्ञादिविधिदाने॥ यज्ञपत्न्याम्॥ यथा। दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्रपूजिता। ययाविनाहिविश्वेषु सर्वकर्महिनिष्फलमिति भागवते ९ स्कन्धे १८ध्यायः॥ प्रतिष्ठायाम्॥ देशान्तरे॥ कविप्रथापतेस्तनयायाम्॥ परिक्रयद्रव्ये॥ नायिकाविशेषे॥ यथा। या गौरवं भयं प्रेम सद्भावं पूर्वनायके। न मुञ्चत्यन्यसक्तापि सा ज्ञेया दक्षिणा बुधैरितिश्रीधरस्वामी॥

दक्षिणाग्निः। पुं। अन्वाहार्यपचनाख्येयज्ञाग्निविशेषे॥ दक्षिणाग्नेर्हिं योनिविकल्पः। यतोवैश्यकुलाद्वित्तवतोवाभ्राष्ट्राद्वा गार्हपत्याद्वानीयते॥ दक्षिणोऽग्निः। दिक्संख्ये संज्ञायामितिसमासः॥

दक्षिणाचलः। पुं। मलयपर्वते॥

दक्षिणाचारः। पुं। वामेतराचारे॥ यथा। स्वधर्मनिरतोभूत्वा मन्त्रतन्त्रं न पूजयेत्। सएवदक्षिणाचारः शिवोभूत्वा शिवायजेदित्याचारभेदतन्त्रम्॥ यथा। चतुर्मकारःमन्त्रेवमच्चमेध्विजयारव इतिकश्चित्॥

दक्षिणात्। अ। दिशि॥ देशे॥ काले॥ वसत्यागतो रमणीयं वा॥ दक्षिणस्यांदिशि दक्षिणस्याः दक्षिणाया वा। उत्तराधरदक्षिणादातिः॥

दक्षिणापथः। पुं। देशविशेषे॥ यथा। एतेगच्छन्तिबहवःपन्थानो दक्षिणापथम्। अवन्तीमृचवन्तञ्चसमतिक्रम्यपर्वतमितिमहाभारते नलोपाख्यानम्॥

दक्षिणापथजन्मा। पुं। जातिविशेषे॥

यथा ॥ दक्षिणापथजन्मानः सर्व्वे नरवरान्धकाः ॥ गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ॥ उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि । यौनकाम्बोजगान्धाराः किराता बर्ब्बरैः सह ॥ एते पापकृतस्तात चरन्ति पृथिवीमिमामिति महाभारते मोक्षधर्म्मः ॥

दक्षिणापथदेशः । पुं । देशविशेषे ॥ यथा । तथापरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च ॥ सेतुकाः सूतिकाश्चैव कुपथा वारवासिकाः । महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्व्वशः ॥ कावेराश्च सहैषीकैराटव्याः शवरास्तथा । पुलिन्दा विन्ध्यमूषीका वैदर्भा दण्डकैः सह ॥ कुलीयाश्च शिराला रूपसास्तापसैः सह । तथा तैत्तिरिकाश्चैव सर्व्वे कारस्करास्तथा ॥ नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्म्मदाः । भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा ॥ कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह । इत्येते अपरान्ताश्च शृणु ये विन्ध्यवासिनः ॥ इति मत्स्यपुराणम् ॥

दक्षिणामुखः । पुं । दक्षिणदिगभिमुखे ॥ यथा । अमावास्यां गयाश्राद्धं दक्षिणामुखभोजनम् । न जीवत्पितृकः कुर्य्यात् कृते च पितृहा भवेत् ॥

दक्षिणा

दक्षिणामूर्त्तिः । पुं । परशिवः ॥ मोक्षेच्छार्थमहावटद्रुमतटे योगासनस्थं प्रभुं प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोदीक्ष्यमाणाननम् । मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं वन्दन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम् ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥

दक्षिणायनम् । न । देवानां रात्रौ । कर्कटेऽर्कसङ्क्रमे । श्रावणादिषट्सु मासेषु ॥ माघादिमासयुग्मैस्तु ऋतव षट् क्रमादिताः । उत्तरायणमासैकैस्त्रिभिः स्याद्दक्षिणायनम् ॥ याम्यायने यस्य भवेत् प्रसूतिः स्यात् कठोरः पिशुनस्वभावः । चतुष्पदाढ्यः कृषिमानहंयुर्घोषामयार्त्तो मनुजः प्रतापी ॥

दक्षिणारुः । पुं । व्याधकर्तृकदक्षिणाङ्गकृतव्रणे मृगे । दक्षिणेर्म्मणि ॥ दक्षिणे अरुरस्य ॥

दक्षिणार्हः । त्रि । दक्षिणीये ॥ दक्षिणामर्हति । अर्ह पूजायाम् । अर्हे रच् ॥

दक्षिणावर्त्तः । त्रि । दक्षिणे आवर्त्तविशिष्टे ॥

दकार्गलं

स्मेसितोऽसिरश्मापनोपलोऽधःसि
रा सुजला ॥ ११ ॥ उदगर्जुनस्य दृश्यो
वल्मीको यदि ततोऽर्जुनाद्धस्तैः ।
त्रिभिरम्बु भवति पुरुषैस्त्रिभिरर्द्धस
मन्वितैः पश्चात् ॥ श्वेतागोधार्द्धन
रे पुरुषे स्याद्धूसरा ततः कृष्णा । पी
ता सिता ससिकता ततो जलं नि
र्दिष्टमितम् ॥ १३ ॥ वल्मीकोप
चितायां निर्गुण्ड्यां दक्षिणेन कथित
करैः । पुरुषद्वये सपादे स्वादु जलं
भवति चाशोष्यम् ॥ रोहितमत्स्यो
ऽर्द्धनरे कपिलापाण्डुरा ततः पर
तः । सिकता सशर्करेटाः क्रमेण प
रतो भवत्यम्भः ॥ १५ ॥ पूर्वेण यदि
बदर्या वल्मीको दृश्यते जलं पश्चात्
। पुरुषैस्त्रिभिरादेश्यं श्वेता गृहगो
धिकाऽर्द्धनरे ॥ १६ ॥ सपलाशा बद
री चेद्दिश्यपरस्यां ततो जलं भवति
। पुरुषद्वये सपादे पुरुषेऽत्र च दुण्डु
भश्चिह्नम् ॥ १७ ॥ बिल्वोदुम्बरयोगे
विहाय हस्तत्रयं तु याम्येन । पुरुषैस्त्रि
भिरम्बु भवेत् कृष्णोऽर्द्धनरे च मण्डूकः
॥ १८ ॥ काकोदुम्बरिकायां वल्मी
को दृश्यते सिरा तस्मिन् । पुरुषत्रये
सपादे पश्चिमदिक्स्था वहति सा
च ॥ आपाण्डुपीतिका मृद्गौरः स व
र्णो भवति पाषाणः । पुरुषे कुमु

दनिभो दृष्टिपथं मूषिको याति ॥
२० ॥ जलपरिहीने देशे वृक्षः क
म्पिल्लको यदा दृश्यः । प्राच्यां हस्त
त्रितये वहति सिरा दक्षिणा प्रथमम्
॥ नीलोत्पलवर्णा कापोता दृ
श्यते तस्मिन् । हस्तेऽजगन्ध
को मत्स्योऽल्पमम्बु च सक्षारम् ॥
२२ ॥ श्योनाकतरोरपरोत्तरे सिरा
द्वौ करावतिक्रम्य । कुमुदा नाम सिरा
सा पुरुषत्रयवाहिनी भवति ॥ २३ ॥
आसन्नो वल्मीको दक्षिणपार्श्वे विभी
तकस्य यदि । अध्यर्धे भवति सिरा पु
रुषे ज्ञेया दिशि प्राच्याम् ॥ २४ ॥ त
स्यैव पश्चिमायां दिशि वल्मीको यदा
भवेद्धस्ते । तत्रोदग्भवति सिरा चतु
र्भिरर्धाधिकैः पुरुषैः ॥ श्वेतो विश्व
म्भरकः प्रथमे पुरुषे तु कुङ्कुमाभो
ऽश्मा । अपरस्यां दिशि च सिरा नश्य
ति वर्षत्रयेऽतीते ॥ २६ ॥ सकुशः सितो
ऽथ पूर्वे वल्मीको यत्र कोविदारस्य ।
मध्ये तयोर्नरैरर्धपञ्चमैस्तोयमक्षो
भ्यम् ॥ प्रथमे भुजगः कमलोदरस
न्निभो मही रक्ता । कुरुविन्दः पाषा
णश्चिह्नान्येतानि वाच्यानि ॥ २८ ॥
यदि भवति सप्तपर्णो वल्मीकवृत
स्तदुत्तरे तोयम् । वाच्यं पुरुषैः पञ्च
भिरत्रापि भवन्ति चिह्नानि ॥ पुरु

सुरसप्रतोयं कृष्णाचरकाश्च तथैव
स्युः ॥ ९९ ॥ * ॥ अथभूगुणाः ॥ स
शर्करा ताम्रमही कषायं क्षारं धरि
त्री कपिला करोति। आपाण्डुरायां
लवणं प्रदिष्टं मिष्टं पयो नीलवसुन्ध
रायाम् ॥ १०० ॥ शाकाश्वकर्णार्जुन
बिल्वसर्जाः श्रीपर्ण्यरिष्टाधवशिंशपा
श्च। छिद्रैश्च पर्णैर्द्रुमगुल्मवल्ल्यो रूक्षा
श्च दूरेऽम्बु निवेदयन्ति ॥ १ ॥ सूर्याग्नि
भस्मोष्ट्रखराऽनुवर्णा या निर्जला-
सा वसुधा प्रदिष्टा। रक्ताङ्कुराः क्षी
रयुताः करीरा रक्ताधरा चेज्जलम
श्मनोऽधः ॥ २ ॥ वैदूर्यमुद्गाम्बुदमेच
काभा पाकोन्मुखोदुम्बरसन्निभा वा
। भृङ्गाञ्जनाभा कपिलाथवा या ज्ञेया
शिला भूरिसमीपतोया ॥ ३ ॥ पारा
वतक्षौद्रघृतोपमा या क्षौमस्य वस्त्रस्य
च तुल्यवर्णा। या सोमवल्ल्याश्च समा
नरूपा साप्याशु तोयं कुरुतेऽक्षय-
म् ॥ ४ ॥ ताम्रैः समेता पृषतैर्विचि
त्रैरापाण्डुभस्मोष्ट्रखरानुरूपा। भृङ्गो
पमाङ्गुष्ठिकपुष्पिका च सूर्याग्निवर्णा
च शिला वितोया ॥ ५ ॥ चन्द्रातप
स्फटिकमौक्तिकहेमरूपाः याश्चेन्द्र
नीलमणिहिङ्गुलकाञ्जनाभाः। सू
र्योदयांशुहरितालनिभाश्च याः स्यु-
स्ताः शोभना मुनिवचोऽत्र च वृत्तमेत



त् ॥ ६ ॥ एता ह्यभेद्याश्च शिलाः
शिवाश्च यक्षैश्च नागैश्च सदाभिजु
ष्टाः। येषां च राष्ट्रेषु भवन्ति राज्ञां
तेषामवृष्टिर्न भवेत्कदाचित् ॥ ७
॥ * ॥ शिलानां विदारणार्थमाह ॥
भेदं यदा नैति शिला तदानीं पला
शकाष्ठैः सह तिन्दुकानाम्। प्रज्वा
लयित्वानलमग्निवर्णा सुधाम्बुसि-
क्ता प्रविदारमेति ॥ ८ ॥ तोयं शृ-
तं मोक्षकभस्मना वा यत्सप्तकृत्वः
परिषेचनं तत् ॥ कार्यं शरक्षारयुतं
शिलायाः प्रस्फोटनं वह्निवितापिता
याः ॥ ९ ॥ तक्रकाञ्जिकसुराः सकु
लत्था योजितानि बदराणि च तस्मिन्।
सप्तरात्रमुषितान्यभितप्तां दारयन्ति
हि शिलां परिषेकैः ॥ १० ॥ नैम्बप
त्रं त्वक्च नालं तिलानां सापामार्गं
तिन्दुकं स्याद्गुडूची। गोमूत्रेण स्रा
वितः क्षार एषां षट्कृत्वोऽतस्ता
पितो भिद्यतेऽश्मा ॥ ११ ॥ * ॥ अथ
पानम् ॥ अर्कपयोहुडुविषाणम
षीसमेतं पारावताखुशकृता च युतः
प्रलेपः। टङ्कस्य तैलमथितस्य ततो
स्य पानं पश्चाच्छितस्य न शिलासु भ
वेद्विघातः ॥ १२ ॥ क्षारे कदल्या
मथितेन युक्ते दिनोषिते पायितमा
यसं यत्। सम्यक्छितं चाश्मनि नैति

भङ्गं तथाम्लो हेम्यपि तस्य कीर्त्य-म् ॥ १३ ॥ * ॥ वापीलक्षणम् ॥ पा ली प्रागपरायता ऽम्बुसुचिरं धत्तेन याम्योत्तरा कल्लोलैरवदारमेति मरुता सा प्रायशः प्रेरितैः । तां चे दिच्छति सारदारुभिरपां सम्पात मावारयेत् पाषाणादिभिरेव वा प्र तिचयं क्षुण्णं द्विपाश्वादिभिः ॥ १४ ॥ ककुभवटाम्रप्लक्षकदम्बैः सनिचुलजम्बूवेतसनीपैः । कुरवकतालाशोकमधूकैः बकुलविमिश्रैश्चावृततीरा-म् ॥ १५ ॥ * ॥ नैर्ऋतदकदारलक्षणम् ॥ द्वारञ्च नैर्वाहिक मेकदेशे कार्यं शिलासञ्चितवारिमार्गम् । कोशस्थितं निर्विवरं कपाटं कृत्वा ततः पांसुभिरावपेत्तम् ॥ १६ ॥ * ॥ द्रव्ययोगमाह ॥ अञ्जनमुस्तोशीरैः सराजकोशातकामलकचूर्णैः । कतकफलसमायुक्तैर्योगः कूपे प्रदातव्यः ॥ १७ ॥ * ॥ अस्य गुणानाह ॥ कलुषं कटुकं लवणं विरसं सलिलं यदि वा ऽशुभगन्धि भवेत् । तदनेन भवत्यमलं सुरसं सुरगन्धि गुणैरपरैश्च युतम् ॥ १८ ॥ * ॥ नक्षत्राणि ॥ हस्तो मघानुराधा पुष्यधनिष्ठोत्तराणि रोहिण्यः । शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥ १९ ॥ * ॥ प्रतिष्ठा विधानम् ॥ कृत्वा वरुणस्य बलिं वट वेतसकीलकं सिरास्थाने । कुसुमैर्गन्धैर्धूपैः सम्पूज्य विधापयेत् प्रथम-म् ॥ १२० ॥ इति वाराहीयदकार्गलो नाम चतुःपञ्चाशत्तमो ऽध्यायः ॥ ५४ ॥

दग्धः । त्रि । भस्मीकृते । प्लुष्टे । प्लुष्टे ॥ अभिसृष्टे ॥ सन्तप्ते ॥ दग्धतेल । दग्धमसीकारके । क्तः ॥ म । क्लृप्ते ॥

दग्धकाकः । पुं । द्रोणकाके ॥

दग्धभम् । न । रव्यादिवारेषु भरण्यादिसप्तभेषु ॥ यथा । याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठार्यम्णं ज्येष्ठान्त्यं रवेर्दग्धभं स्यात् ॥ दग्धभततभम ॥

दग्धरथः । पुं । चित्ररथगन्धर्वे ॥

दग्धरुहः । पुं । तिलकवृक्षे ॥

दग्धवला । स्त्री । दग्धारुहे । भद्ररोहायाम् ॥

दग्धलग्नम् । न । शून्यलग्ने ॥ यथा । घटमृगसिंहौ तृतीयायां प्रथमायां तु कार्मुकौ । पञ्चम्यां बुधराशी द्वौ सप्तम्यां चापचन्द्रभे ॥ नवम्यां सिंहकीटाख्या एकादश्यां मृगोगृहौ । द्वादशीत्रयोदश्योर्दग्धसंज्ञास्वमीगृहाः ॥ दग्धसंज्ञनियतं कर्मकृतं सर्वं विनश्यति ॥

दग्धा । स्त्री । सिंहार्कादिषु ॥ तिथिविशेषे ॥ यथा । द्वादश्येकादशी चैव

मोठी छडी इत्यादि भाषा ॥ ह्रस्वो दण्डः । ह्रस्वे इतिकन् ॥

दण्डकन्दकः । पुं । धरणीकन्दे ॥

दण्डका । स्त्री । दण्डकारण्ये । जनस्थाने ॥

दण्डकाकः । पुं । द्रोणकाके ॥

दण्डकारण्यम् । न । रामवासपर्णनिवेशस्थाने । जनस्थाने ॥ दण्डकनाम्ना राज्ञा परिपालितो देशः । सचशुक्रशापाद्दण्डारण्यमभूत् ॥ तीर्थविशेषे ॥

दण्डढक्का । स्त्री । वाद्यविशेषे । ग्रामघोषे । यामनाख्याम् । दमामा नगारा नौबत इत्यादि भाषा ॥

दण्डताम्री । स्त्री । ताम्रीवाद्ये ॥

दण्डधरः । पुं । काले । यमे । अन्तके ॥ दण्डस्यधरः ॥ नृपे ॥ कुम्भकारे ॥ त्रि । दण्डहस्ते ॥ दुष्टनिग्रहकर्त्तरि ॥

दण्डधारः । पुं । पृथ्वीपतौ । राज्ञि ॥ यमे । समवर्त्तिनि ॥ त्रि । दण्डहस्ते ॥ दण्डं धरति । धृञ्० । कर्मण्यण् ॥

दण्डनायकः । पुं । सेनान्याम् । चतुरङ्गबलाध्यक्षे ॥

दण्डनीतिः । स्त्री । अर्थशास्त्रे ॥ शुक्रजीवाद्युक्तनीतिशास्त्रे ॥ दम्यतेऽनेन । दम० अमन्ताड्डः । दण्डो नीयते बोध्यतेऽनया इति दण्डनीतिः स्त्रिम् ॥ दण्डेन नीयते चेदं दण्डं नयति वा पुनः । दण्डनीतिरिति ख्याता त्रीँल्लोकानतिवर्त्तते ॥ विशेषोमहाभारते राजधर्मे द्रष्टव्यः ॥ दुर्गायाम् ॥ यथा । नयानयगता लोके विशस्य निश्चयाऽमघाः । दण्डमार्गगमनाद् वापि दण्डनीतिरिति स्मृतेति देवीपुराणम् ॥

दण्डनीयः । त्रि । दण्ड्ये ॥

दण्डपतिः । पुं । दण्डधरे ॥ दण्डनायके ॥

दण्डपांशुलः । पुं । गर्भाटे । द्वारपाले ॥

दण्डपाणिः । पुं । भैरवविशेषे । काशीस्थे शिवगणविशेषे ॥ यमे ॥ दण्डः पाणौ यस्य सः ॥

दण्डपारुष्यम् । न । ताडनादौ । अष्टादशविवादान्तर्गतविवादविशेषे ॥ राजसप्तव्यसनान्तर्गतव्यसनविशेषे ॥

दण्डपालः । पुं । अद्वैयमत्स्ये । डांडिका इति गौडभाषा ॥

दण्डपालकः । पुं । प्रकुलमत्स्ये ॥

दण्डभृत् । पुं । यमे ॥ कुम्भकारे ॥ त्रि । दण्डधारके ॥ दण्डं बिभर्त्ति । डुभृञ्० । क्विप् ॥

दण्डमत्स्यः । पुं । दण्डारी इति प्रसिद्धे मत्स्ये ॥ दण्डमत्स्योरसे तिक्तः पित्तरक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्लो बलवर्द्धनः ॥

दण्डमार्गः । पुं । दण्डाकारेपथि ॥

दण्डयात्रा । स्त्री । दिग्विजये ॥ युद्धाय गमने ॥ सयाने ॥ वरयात्रायाम् ॥ इति मेदिनी हेमचन्द्रौ ॥ दण्डायात्रा ॥

दण्डयामः । पुं । यमे ॥ दिवसे ॥ कुम्भसंभवे ॥ अगस्त्यमुनौ ॥ इति मेदिनी ॥

दण्डरी ॥ स्त्री । कर्करीफले इति राजनिर्घण्टः ॥

दण्डवान् । त्रि । दण्डिनि ॥ मतुप् ॥

दण्डवासी । पुं । दण्डे । द्वारपाले ॥ त्रि । दण्डवत्करि ॥

दण्डवाहधिः । पुं । हस्तिनि । दम्भे ॥ दण्डस्यवाहधियस्य ॥

दण्डवासी । पुं । द्वारपाले ॥ इति त्रिकाण्डशेषः ॥ एकग्रामाधिकृतेजने । चौधरी इति भाषा ॥ इति जटाधरः ॥

दण्डविष्कम्भः । पुं । कुठरे । मन्थवन्धनकाष्ठे । गर्गरी मुखस्थमन्थदण्डधारककाष्ठे ॥ दण्डं विष्कभ्नाति । स्कम्भु रोधने सौत्रः । कर्मण्यण् । वे स्कभ्नातेर्नित्यमिति षत्वम् ॥

दण्डहर्षकः । पुं । सुत्राम् ॥

दण्डव्यूहः । पुं । दण्डाकृतिव्यूहरचनाविशेषे ॥ यत्राग्रेबलाध्यक्षो मध्येराजा पश्चात् सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपेघोटकास्ततःपदा-तयः इत्येवंकृतरचनोदीर्घःसर्वतः समविन्यासोदण्डव्यूहउच्यते । तेन यातव्यमार्गे सर्वतोभयेसतियायात् ॥

दण्डस्थानम् । न । दण्डस्थानविशेषेषु ॥ यथा । दशस्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् । त्रिषु वर्णेषु यानिस्युः रक्षतो ब्राह्मणोव्रजेत् ॥ उपस्थमुदरं जिह्वा हस्तौ पादौचपञ्चमम् । चक्षुर्नासाच कर्णौ च धनं देहस्तथैवच ॥ अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः । साराऽपराधौचालोक्य दण्डं दण्ड्येषुपातयेदितिमनुः ॥

दण्डहस्तम् । न । तगरपुष्पे ॥

दण्डाजिनम् । न । दम्भे ॥ शाठ्ये ॥

दण्डाजिनिकः । त्रि । मायाविनि ॥

दण्डादण्डि । अ । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमित्यर्थे ॥ अन्ये० दीर्घः । इचकर्मव्यतिहारे ॥

दण्डारः । पुं । वाहने ॥ मत्तवारणे ॥ शरयन्त्रे ॥ कुम्भकारस्यचक्रे ॥

दण्डाहतम् । न । घोले । गोरसे ॥ दण्डेन मथ्या आहतम् । घोलोहितम् । कर्पूरकरणेकृतामहुलमिति समासः ॥ त्रि । दण्डेन ताडिते ॥

दण्डिकः । पुं । दण्डिनि ॥ दण्डोस्यास्ति । अतइनिठनाविति ठन् ॥ दण्डधारके

दधानः । त्रि । विश्वासे । धारयति ॥ दधातेः कर्त्तरि शानच् ॥

दधि । न । क्षीरोत्तरावस्थापन्ने दधि इति प्रसिद्धे गोरसे । क्षीरजे । मङ्गल्ये । त्रिरले । पयस्ये ॥ अस्य गुणाः । दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु । पाके ऽम्लं ग्राहि पित्तास्रशोथमेदःकफप्रदम् ॥ मूत्रकृच्छ्रे प्रतिश्याये शीतके विषमज्वरे । अतीसारे ऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥ तद्भेदाः पञ्च सम्प्रोक्तास्तद्यथा मन्दं तु वदेत् स्वादु स्वाद्वम्लं च ततः परम् ॥ अम्लं चतुर्थमित्यम्लं पञ्चमं दधि पञ्चधा । मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् ॥ मन्दं स्यात् दुष्टविण्मूत्रं दोषत्रयविदाहकृत् । यत् सम्यग्घनतां यातं व्यक्तस्वादुरसं भवेत् ॥ अव्यक्ताम्लरसं तत्तु स्वादुविष्टम्भि उदाहृतम् । स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफावहम् ॥ वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् । स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत् ॥ स्वादम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्ज्ञनैः ॥ यत्तिरोहितमाधुर्यं व्यक्ताम्लं तदम्लकम् । अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ॥ तदत्यम्लं दन्तरो



मत्यर्थं कण्ठादिदाहकृत् । अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥ * ॥ गव्यं दधि विशेषेण स्वादु बल्यं रुचिप्रदम् । पवित्रं दीपनं स्निग्धं पुष्टिकृत् पवनापहम् ॥ उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ॥ * ॥ माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् ॥ स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम् ॥ * ॥ आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । प्रशस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ * ॥ पक्वदुग्धभवं हृद्यं दधि स्निग्धं गुणोत्तरम् । पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम् ॥ * ॥ अथ निःसारदुग्धस्य दध्नो ऽथोच्यते गुणाः स्मृताः । असारं दधि सङ्ग्राहि शीतलं वातलं लघु । विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥ * ॥ गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु । बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् ॥ * ॥ सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् । सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु ॥ * ॥ न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ * ॥ प्रयाते दधि नो रात्रौ भक्ताभ्यामुष्णतान्वितम् ।

दन्तधावनम् ॥ विशेषमाह मरीचिः। द्वादशाङ्गुलन्तु विप्राणां क्षत्रियाणां नवाङ्गुलम्। अष्टाङ्गुलञ्च वैश्यानां शूद्राणान्तु षडङ्गुलम् ॥ चतुरङ्गुलमानेन नारीणां विधिरुच्यते। अन्तरप्रभवानाञ्च षडङ्गुलमुदाहृतमिति ॥ अथास्य वर्ज्जनम्। तत्प्रयोजनमदर्शनम्। वल्लीलतागुल्मतरुभेदैः स्युर्दन्तकाष्ठानि लक्षणमोयैः। कन्यानिर्व्वाच्यान्यथ तत् प्रसङ्गो मा भूदतो वच्म्यथ कामिकानि ॥ १ ॥ परिभाषार्थमाह। अज्ञातपूर्व्वाणि न दन्तकाष्ठान्यज्ञातपर्णानि न सूक्ष्मवितानि। न युग्मपर्व्वाणि न पाटितानि न चोर्द्ध्वशुष्काणि विना त्वचा च ॥ २ ॥ प्रविभागेन फलानि ॥ वैकङ्कतश्रीफलकाश्मरीषु ब्राह्मीद्युतिः क्षेमतरौ सुदाराः। वृद्धिर्व्वटेऽर्कप्रभुरश्वत्थेजः पुर्ण्णमधूके सगुणाः प्रियत्वम् ॥ लक्ष्मीः शिरीषे च तथा करञ्जेऽप्यर्थसिद्धिः समभीप्सिता स्यात्। मान्यत्वमाप्नोति जनस्य याभ्यां प्राधान्यमश्वत्थतरौ वदन्ति ॥ आरोग्यमायुर्बदरीबृहत्योरैश्वर्य्यवृद्धिः खदिरे सबिल्वे। द्रव्याणि चेष्टान्यतिमुक्तकेषु प्राप्नोति तान्येव पुनः कदम्बे ॥ नीपेऽर्थसिद्धिः करवीरेऽन्नमखिले भाण्डीरे स्यादन्नमेवं प्रभूतम्। शम्यां पञ्चाप्नोत्यर्ज्जुने चाश्मन्तके च द्विषतामेव नाशः ॥ ४ ॥ शाले ऽश्वकर्णे च महत्त्विगौरवं सभद्रदारौ च पिचांटरूषके। याति भ्यता प्राप्नोति जनस्य सर्व्वतः प्रियङ्गुवपामार्गसजम्बुदाडिमैः ॥ * ॥ अथ विधानम् ॥ उदङ्मुखः प्राङ्मुख एव वाऽब्दं कामं यथेष्टं हृदये निवेश्य। अद्यादनिन्द्यं सुखोपविष्टः प्रक्षाल्य जह्याच्च शुचौ प्रदेशे ॥ ८ ॥ * ॥ त्यक्तस्य वर्जनम्। अभिमुखपतितं प्रशान्तदिक्स्थं शुभमतिशोभनमूर्द्ध्वसंस्थितं यत्। अशुभकरमतोऽन्यथा प्रदिष्टं स्थितपतितञ्च करोति मिष्टमन्नम् ॥ इति ॥

दन्तकाष्ठकम्। क्ली। काष्ठविशेषः॥

दन्तच्छदः। पुं। रदनच्छदे। उत्तराधरोष्ठमात्रे ॥ दन्ताश्छाद्यन्तेऽनेन। छद संवरणे। चु०। पुंसीतिघः। छादेर्घेद्व्युपसर्गस्य इति ह्रस्वः ॥

दन्तच्छदोपमा। स्त्री। बिम्बाम् ॥

दन्तधावनः। पुं। खदिरद्रुमे ॥ दन्तान् धावति। धावयति शुद्धान्। ल्युट् ॥ गुच्छकरञ्जे ॥ बकुले ॥ न। दन्तशुद्धौ ॥ तद्विधिः। प्रातर्भुक्त्वा च यतवाक् कषायकटुतिक्तकम्। भक्षयेद् दन्तप

दन्तमूलम् । न । दन्तार्बुदाभिधे रोगे ॥

दन्तमूलिका । स्त्री । दन्तीवृक्षे ॥

दन्तरोगः । पुं । रदनामये ॥

दन्तरोगी । त्रि । रदनामयविशिष्टे ॥ फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् । तथातिकठिनं भक्ष्यं दन्तरोगी विवर्जयेत् ॥

दन्तवक्रः । पुं । भारतादिप्रसिद्धे नृपविशेषे ॥

दन्तवस्त्रम् । न । ओष्ठे ॥

दन्तवासः । न । ओष्ठे । अधरोष्ठयोः ॥

दन्तवीजकः । पुं । दाडिमे ॥

दन्तवेष्टः । पुं । दन्तरोगविशेषे ॥ यथा । स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥

दन्तशठः । पुं । जम्बीरे ॥ कपित्थे ॥ काम्मीरङ्गे ॥ नागरङ्गे ॥ शठति । शठ कैतवे च । चात् हिंसासङ्क्लेशनयोः । पचाद्यच् । अम्लरसे ॥ दन्तानां शठ इवापकारित्वादिति ॥

दन्तशठा । स्त्री । चाङ्गेर्याम् ॥ चुक्राम्लिकायाम् ॥ दन्तानां शठेवापकारित्वात् ॥

दन्तशर्करा । स्त्री । कफवायुशोषितदन्तगतमले ॥ यथा । मलो दन्तगतो यस्तु कफमारुतशोषितः । शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥

दन्तशाणम् । न । निशुम्भे । मिस्सी इति भाषाप्रसिद्धे दन्तघर्षणचूर्णे ॥ इति त्रिकाण्डशेषः ॥

दन्तशिरा । स्त्री । माड्याम् ॥

दन्तशूलः । पुं । रदनवेदनायाम् ॥ तत्रौषधं यथा । पिप्पलीनिम्बयष्ट्याह्वं कटुकारग्वधैः शृतम् । पाययेन्मधुनामिश्रं दन्तशूलोपशान्तये ॥

दन्तशोफः । पुं । दन्तार्बुदे ॥

दन्तहर्षः । पुं । दन्तरोगविशेषे ॥ यथा । शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः समीरितः ॥

दन्तहर्षकः । पुं । जम्बीरे ॥ इति जटाधरः ॥

दन्तहर्षणः । पुं । जम्बीरे ॥ रा०नि० ॥

दन्ताघातः । पुं । निम्बूके ॥ रतिक्रीडायां दशनाघाते ॥ तस्य स्थानानि यथा । स्तनयोर्गण्डयोश्चैव ओष्ठे चैव तथाधरे । दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः ॥ इति कामशास्त्रम् ॥

दन्तायुधः । पुं । शूकरे ॥ दन्ता आयुधो यस्य ॥

दन्तार्बुदः । पुं । न । दन्तरोगप्रभेदे । दन्तशोफे । द्विजरुजे ॥

दन्तालिका । स्त्री । वल्गायाम् । लगाम

इतिभाषा ॥

दन्तावलः । पुं । हस्तिनि । गजे ॥ अति शयितौ दन्तावस्य । दन्तशिखात् सं ज्ञायामिति वलच् । वले इति दीर्घः ॥

दन्तिका । स्त्री । दन्त्योषधौ । मुकूल के ॥ दाम्यति दाम्यते वा । दमुउप शमे । बसिवहिश्रि वा ऽमिदमी त्या दिना तन् । स्वार्थे कन् ॥

दन्तिजा । स्त्री । दन्तिकायाम् ॥

दन्ती । पुं । दन्तावले ॥ अतिशयितौ द न्तावस्य । इनिः ॥

दन्तिनी । स्त्री । दन्तीवृक्षे ॥

दन्तिमदः । पुं । हस्तिमदे ॥

दन्तिमूषिका । स्त्री । दन्त्योषधौ ॥

दन्ती । स्त्री । उदुम्बरपर्णीभेषजौ । प्रत्यक् पर्णीम् ॥ दाम्यति दाम्यते वा । दमु० । तन् । गौ० ङीष् ॥ ल घुदीर्घ प्रभेदेन प्रोक्ता दन्तीद्वयं सु धैः । दन्तीद्वयं सरं पाके रसेच क टु दीपनम् ॥ गुदाङ्कुराश्मशूला स्रकण्डुकुष्ठविदाहनुत् । तीक्ष्णो ष्णंहन्ति पित्तास्रकफशोथोदरकृ- मीन् ॥

दन्तीबीजम् । न । जयपाले ॥

दन्तुरः । त्रि । उन्नतरदे ॥ उन्नता दन्ताः सन्त्यस्य । दन्तउन्नत उरच् ॥ इ न्नतनते । विषमे ॥ कदाचिद्दन्तुरा मूर्खः कदाचित्त्रोभशःसुखी । क दाचित् तुन्दिलो दुःखी कदाचित्त्व स्वसावतीति सामुद्रकम् ॥ स्त्री । दन्तुरा ॥

दन्तुरच्छदः । पुं । वीजपूरे ॥

दन्तोलूखलिकः । पुं । } न प्रसे । नाम
दन्तोलूखली । पुं । } प्रस्वविशेषे ॥
येषोद्वाह्नादीन् दन्तैः खण्डयित्वा भ क्षयति सः ॥

दन्त्यः । त्रि । दन्तोद्भवेवर्णविशेषे ॥ द न्तेषुभवः । शरीरावयवाच्चेति यत् ॥ दन्तहिते ॥ दन्तेभ्योहितः । शरीरा वयवाद्यत् ॥

दन्दशूकः । पुं । राक्षसे ॥ सरीसृपे । फणिनि ॥ गर्हितं दशति । लुपसदे ति यङ् । यजजपेत्यूकः । जपजभ दहेत्यभ्यासस्यनुक् ॥ नरकविशेषे ॥

दन्द्रम्यमाणः । त्रि । अत्यर्थं कुटिला- मनेकरूपांगतिमिच्छति ॥

दभ्रम् । न । अल्पे ॥ दभ्यते ॥ दम्भुद- म्भने । स्फायितञ्चीति रक् ॥ पुं । समुद्रे ॥

दम् । अ । कलत्रे । पत्न्याम् ॥

दमः । पु । दमथे ॥ बाह्येन्द्रियनैश्चल्ये । बाह्येन्द्रियाणां श्रवणादिव्यतिरिक्त विषयेभ्यो निवर्त्तने । बहिरिन्द्रियाणा मुच्छृङ्खलव्यापारनिरोधे । बाह्येन्द्रि

यसंयमे ॥ निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥ ऋतुकालं विना ऋतिरिक्तकाले मैथुनाद्यभावे ॥ उपशमे । विकारहेतुविषयसन्निधानेऽपि मनसोऽविक्रियत्वे ॥ कुसंसिततकर्मणो विप्र यच्चित्तनिवारणम् । स कीर्त्तितो दमः प्राज्ञैः समस्ततत्त्वदर्शिभिः ॥ दण्डे ॥ दण्डकार्ये ॥ कर्द्दमे ॥ दमने ॥ दमनम् । दमु उपशमे । भावे घञ् । नोदात्तोपदेशेति वृद्ध्यभावः ॥

दमकः । त्रि । शासके । दमनकर्त्तरि ॥ दाम्यति । दमु० । ण्वुल् । नोदात्तोपदेशस्येति न वृद्धिः ॥

दमघोषः । पुं । चन्द्रवंशीयचेदिविषये । शिशुपालपितरि ॥

दमघोषसुतः । पुं । शिशुपाले ॥

दमथः । पुं । दण्डे ॥ दमे । तपः क्लेशसहे ॥ दमनम् । दमु० । शमादिभ्यो ऽथच् ॥ दाम्यति वा । बाहुलकाद्ययप्रत्ययः ॥

दमथुः । पुं । दण्डे ॥ दमे ॥

दमनम् । न । दण्डे ॥ यथा । अच्युतस्य दमनमुचितस्य श्रुतौ युतम् ॥ पुं । दोना इति प्रसिद्धे पुष्पे । पुष्पचामरे ॥ दमनस्तूत्कटस्तिक्तो दशघो हृद्यः सुगन्धिकः । ग्रहणीविषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥ वीरे ॥ कुन्दवृक्षे ॥ दाम्यति । दमु० । णिच् । ल्युः ॥

दमनकः । पुं । दमने । गन्धोत्कटे । दोना इति प्रसिद्धे पुष्पवृक्षे ॥ दमन एव । स्वार्थे कः ॥ न । वर्णवृत्तान्तरे ॥ यथा । द्विगुणभगणमिह वितनु हि । दमनकमिति गदति सुधीः ॥ यथा । सरभसमिह हरमुपनय । सुखमिह मदनकदनमयनमिति ॥ त्रिष्टुप्छन्दोभेदेऽपि ॥ यथा । द्विजवरगणयुग मम तदनु च कर्णयकारतमम् । फणिपतिवरपरिगदितं दमनकमिदमतिललितम् ॥ यथा । प्रणमत मधुरिपुचरणं भवजलनिधिपरितरणम् । अभिनवकिसलयरुचिरं सुरपतिसकलभयहरम् ॥

दमनी । स्त्री । अग्निदमनीवृक्षे ॥

दमयन्ती । स्त्री । नलनृपतेर्भार्यायाम् । विदर्भदेशीयभीमराजकन्यायाम् । भैम्याम् ॥ दमयन्तीं नलाभ्याञ्च नमस्कारं करोम्यहम् । अविवादो भवत्येव कलिदोषप्रशान्तिदः ॥ मल्लिकायाम् ॥

दमितः । त्रि । दान्ते ॥ कृतदमने हयादौ । मारादिसहे ॥ दम्यते स्म । दमु० । क्तः । वाह्रान्तेत्यादिना कृते

, साधुः ॥

दमी । त्रि । दमविशिष्टे ॥

दमुनाः । पुं । चित्रभानौ । अग्नौ ॥ दाम्यति । दमु॰ । अन्तर्भावितण्यर्थोदमेरुनसिः । दमुनसौ दमुनसः इत्यादि ॥ शुक्राचार्ये ॥

दमूनाः । पुं । चित्रभानौ । वह्नौ । पावके ॥ दाम्यति । दमु॰ दमेरुनसिः । अन्येषामपिदृश्यतइति पचेर्दीर्घः । शुष्टोदमुनाः । दमूनसंगृहपतिं वरेण्यम् । दमपाथाम्नु कूर्चएवदीर्घः पठ्यते । तन्मते ह्रस्वोवाशुक्लका दोष्यः ॥

दम्पती । पु । सहोक्त्या जायापत्योः । जम्पत्योः ॥ जायाचपतिश्च । राजदन्तादिगणेपठितात्जायायाः दम्भावो वा निपात्यते ॥ यत्रानुकूल्यं दम्पत्यो स्त्रिवर्गं स्तत्र वर्द्धते ॥

दम्भ, । पुं । कैतवे ॥ धर्मध्वजित्वे । धार्मिकतयात्मनः ख्यापने । अधार्मिकत्वेपि धार्मिकत्वख्यापने । कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छायाम् ॥ लोकवञ्चनाय विहित कर्मानुष्ठाने ॥ दभ्यतेऽनेन । दम्भु दम्भने । घञ् ॥

दम्भनम् । न । दम्भे ॥

दम्भित्वम् । न । लाभपूजाख्यात्यर्थं स्वधर्मप्रकटीकरणे ॥

दम्भोलिः । पुं । वज्रे ॥ दम्भुरोधने । असुन् । दम्भसि रोधने ओलिः समर्थः ॥ केशभूषणपर्यासिवारणेषु । दम्भोति खेदयति । दम्भु॰ । औणादिकओलिर्वा ॥

दम्यः । पुं । प्राप्तदमावस्थवत्से । वत्सतरे ॥ अनडुहि ॥ त्रि । दमनीये ॥ शास्ये ॥ दमभार्हः । दमुशमने । अर्हेकृत्यतृचश्चेत्यर्थे पोरदुपधादिति यत् ॥

दयः । पुं । करुणायाम् । दयायाम् ॥ इति शब्दरत्नावली ॥

दयमानः । त्रि । दयाकर्त्तरि ॥ दयते । दय॰ । लटः शानच् मुक् ॥

दया । स्त्री । कृपायाम् । दुःखितेषु भूतेष्वनुकम्पायाम् । परदुःखासहने ॥ लक्षणं यथा । यत्नादपिपरक्लेशं हर्त्तुं या हृदिजायते । इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्त्तितेति ॥ आत्मवत् सर्वभूतेषु यो हिताय शुभाय च । वर्त्तते सततं हृष्टः क्रियाह्येषाद् यास्मृता ॥ प्राणा यथात्मनोभीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः ॥ धर्मस्य पत्नी । यथा । मोक्षपत्नी दया साध्वी पूजिता च जगत्प्रिया । सर्वेषां

काश्चसर्वेष मिथ्याशास्त्रेययाविना ॥ यत्र मोहोस्ति तत्र दयायाः सत्त्वाद्दया मोऽस्तु पत्नीति देवीभागवते ९ स्कन्धे ३१ ऽध्यायः ॥ अहिंसा परमो धर्मो, विप्राणामेष संशयः । दया सर्वत्र कर्त्तव्या ब्राह्मणेन विजानता ॥ यस्मादन्यत्र विप्रेन्द्र न हिंसायाज्ञिकी मते ति देवीभागवतम् ॥ यस्मादन्यत्र दयाकर्त्तव्या यज्ञे तु हिंसैव कर्त्तव्या न सा याज्ञिकी हिंसा हिंसा भवति । अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति श्रुतेः ॥ या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसा, मेव तां विद्याद्वेदाद् धर्मो हि निर्बभाविति मनुस्मृतेश्च ॥ दयां चाप्यविधानेन च्छेदयेन कदाचनेति कुलार्णवे । क्षेत्र ॥ रत्नाकरे ॥ दयते रक्षत्यनया । दय दानगतिहिंसारक्षणेषु । भिदादित्वादङ् ॥ टाप् ॥

दयाकूर्च्चः । पुं । बुद्धे ॥ इति हेमचन्द्रः ॥

दयालुः । त्रि । करुणे । कारुणिके । दयायुक्ते । परदुःखप्रहाणपरे ॥ अहो वकीयं स्तनकालकूटं जिघांसया ऽपाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ दयते । दय० । स्पृहिगृहीत्यालुच् ॥ दयालोरसमर्थस्य दुःखा त्तैर्दयालुता ॥

दयाशूकः । त्रि । सदये ॥

दयावान् । त्रि । परदुःखहरणेच्छौ ॥

दयितः । पुं । पत्यौ ॥ त्रि । प्रिये ॥ दय्यतेस्म । दय० । क्तः ॥

दयिता । स्त्री । भार्यायाम् ॥ प्रियायाम् ॥ रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ टाप् ॥

दर । अ । अल्पार्थे । ईषदर्थे ॥ यथा । दरदलितनीलोत्पलवनेति ॥

दरः । पुं । न । शङ्खे । भये । दर इति भाषा ॥ गर्त्ते । गदा इति भाषा ॥ गह्वरे ॥ यथा । अ उत्सङ्गेऽपि घन सोदरी हरौ प्युत्कमस्थाभ्यरोरय भोगिसेति ॥ दीर्यन्त्यस्मात् । दृ भये । क्त्यादेरप् ॥ दरणम् दीर्यते वा । दृ भये । दृ विदारणे वा । अप् । प्र- त्ययस्त्रियामप् वा ॥

दरकः । त्रि । भीरौ । दरपोक इति भाषा ॥ दृ० । कृञादिभ्यो वुन् ॥

दरकण्टिका । स्त्री । शतावर्य्याम् ॥

दरणिः । पुं । कूलभङ्गे । कूलघट्टे ॥

दरत्-द् । स्त्री । प्रपाते ॥ भये ॥ पर्वते ॥ म्लेच्छजातौ ॥ हृदये ॥ कूले तीरे ॥ दरणम् दीर्यते वा दृ भयेऽदिः ॥

दरदः । पुं । देशविशेषे [illegible]

साम्येन यत्र दर्भाः परिकीर्त्तिताः ॥ दृभ्यते । दृभी ग्रन्थे । घञ् ॥ यद्वा । दृणाति । दृ० । दृदलिभ्यां भः ॥

दर्भटः । पुं । न । निभृतगृहे ॥ इति त्रिकाण्डशेषः ॥

दर्भपत्रः । पुं । काशे ॥ इति राज० ॥

दर्भमूली । स्त्री । ओषधीभेदे ॥ पाक काले तिन्तीडीह ॥

दर्भाह्वयः । पुं । मुञ्जे ॥ इति राज० ॥

दर्वः । पुं । राक्षसे ॥ दृणाति सर्वान् । दृ० । शृगृदृभ्यो वः ॥

दर्वटः । पुं । दण्डधारिणि ॥

दर्विः । स्त्री । खजाकायाम् । दर्व्याम् ॥ दृणाति । दृ० । अदृभ्यामिनुः ॥ उ खमुकदर्वि होममिमं इति विधौ ॥

दर्विकः । पुं । दर्व्याम् । व्यञ्जनादिदा तके । कौंचा इतिभाषा ॥

दर्विका । स्त्री । दर्व्याम् । खजाकायाम् ॥ गोजिह्वायाम् । दार्विकायाम् ॥

दर्विहोमः । पुं । अप्रकृतिविकृति होमे ॥ येन कस्यचित् प्रकृतित्वेन विकृतित्वेन वा वर्त्तते स दर्विहोम इतिव्याख्यातारः ॥

दर्वी । स्त्री । कंव्याम् । खजाकायाम् । कर्छी इतिभाषा ॥ दृणाति । दृ० । दृभ्यामिन् । कृदिकारादक्तिन इति ङीष् ॥



दर्वीकरः । पुं । उरगे । दीर्घपृष्ठे । सर्पे ॥ रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः । ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ दर्व्याकारः फणएव करो यस्य । महारसाग्न्यत्वात् । दर्वीं फणां करोति । कृञो टः ॥

दर्वीसङ्क्रमणम् । न । तीर्थविशेषे ॥

दर्शः । पुं । अमावास्यायाम् । सूर्येन्दुसङ्गमे ॥ अवलोकने । दर्शने ॥ अमावास्यायागे ॥ दर्शे अमावास्यायां क्रियमाणत्वात् उपचाराद्दर्शशब्देनोच्यते । तयोर्गमयात्मकः । यथा । आग्नेयाष्टाकपालैन्द्रदध्येन्द्रपयोयागद्वयो ऽमावास्यायां तथा यजेत् । कर्त्तव्यः कौण्डपायिनां यो मासमायज्येति ॥ दृश्यते अत्रेण । पुंसित्वमार्षः ॥

दर्शकः । त्रि । द्वारपाले ॥ प्रतीहारे ॥ दर्शयितरि ॥ प्रवीणे । निपुणे ॥ पश्यति । दृशिर् । ण्वुल् ॥

दर्शतः । पुं । सोमे ॥ सूर्ये ॥ पश्यति । दृशिर् । भृमृदृशियजीत्यादिना ऽतच् ॥

दर्शनम् । न । नयने ॥ स्वप्ने ॥ बुद्धौ ॥ धर्मे ॥ उपलब्धौ ॥ शास्त्रे ॥ दर्पणे ॥ ईक्षणे ॥ षट्दर्शनेषु । वैशेषिकन्या

दशव | दशमी

दश । त्रि । सङ्ख्याविशेषे । द्विगुणितपञ्चसु ॥ तत्सङ्ख्या विशिष्टे ॥ दशन्ति दश्यन्ते वा । दंश दशने । बाहुलकात् कनिन् ॥

दशनः । पुं । शिखरे ॥ दन्ते ॥ न । कवचे ॥ दंष्ट्राव्यापारे ॥ दश्यते ऽनेन । दंश० । करणेति ल्युट् । दशदशे ॥ तिनिर्देशात् क्वचिदनुकृत्यनिमित्तो पः ॥ यद्वा । कर्तरि ल्युट् ॥

दशनवासः । न । ओष्ठे । उत्तराधरो ष्ठमात्रे ॥ दशनानां वाससीव आवरकत्वात् ॥

दशनाङ्कः । पुं । दन्तक्षते ॥

दशनाढ्या । स्त्री । चुक्रिकायाम् । चाङ्गेर्याम् ॥

दशनोच्छिष्टः । पुं । नि:श्वासे ॥ अधरे ॥ चुम्बने ॥ त्रि । दन्तक्षते ॥

दशपारमितावरः । पुं । बुद्धे ॥

दशपुरम् । न । कुटन्नटे । कैवर्तीमुस्तके ॥ मालवदेशे कश्चन्दे ॥ पुरविशेषे ॥ दशपिपर्ति । पृपालनपूरणयोः । मूलकः । उत्तम् । दशपुरो ऽस्त्यत्र । नक्पूरिति समासान्तः ॥

दशपूरम् । न । वानेये । कैवर्तीमुस्तके ॥ दशपूरयति । पूरपूर्तौ । कर्मण्यण् ॥

दशबलः । पुं । बुद्धमुनौ ॥ दशबलान्य-

स । यदाहुः । दानशीलक्षमावीर्यध्यानप्रज्ञाबलानिच । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै ॥

दशभुजा । स्त्री । दुर्गायाम् ॥ यथा । इतिहत्तं पुराकल्पे मनोः स्वायम्भुवेन्तरे । प्रादुर्भूता दशभुजा देवी देवहिताय वै ॥ इतिकालिकापुराणम् ॥

दशभूमिगः । पु । बुद्धे ॥

दशभूमीशः । पुं । बुद्धे ॥

दशमः । त्रि । दशानाम् पूरणे । दसवां इतिभाषा ॥ तस्यपूरणेडट् । नान्तादसङ्ख्यादेर्मट् ॥

दशमी । त्रि । वर्षीयसि । अतिवृद्धे ॥ नवतेरूर्ध्वं दशमी ऽवस्थाविशेषो ऽस्ति । वयसि पूरणादितीनिः ॥

दशमी । स्त्री । नवत्यधिकावस्थायाम् ॥ शताब्दानां दशधाविभागे कृते दशम्यवस्था नवत्यधिका भवति ॥ तिथिविशेषे ॥ साचन्द्रस्य दशमकलाक्रियारूपा तदुपलक्षितकालपरावा ॥ तत्रजातस्य फलम् । यथा । विद्याविनोदी धनपुत्रयुक्तः प्रलम्बकाहो मदनाधिकार्थी । उदारचित्तः सुमना दयालुः प्रसूतिकाले दशमी यदि स्यादिति ॥ ङीप् ॥

दशमीस्थः । त्रि । नष्टवीर्ये । क्षीणरागे ॥ स्ताशक्ते ॥ नवत्यधिकवयसि

स्थविरे ॥ स्मृतिहीने ॥ कामवशान्मरणावस्थां प्राप्ते कामिनि ॥ नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥ दशम्यां कामावस्थायां तिष्ठति । ष्ठा० । सुपिस्थ इति कः ॥

दशमुखः । पुं । रावणे ॥ दशमुखान्यस्य ॥ जितकामिनि ॥ दश इन्द्रियाणि मुखानि भोगद्वाराणि यस्य सः ॥

दशमुखान्तकः । पुं । रामे ॥ दशमुखस्यान्तकः ॥

दशमूत्रकम् । न । हस्तिमहिष्युष्ट्रगोऽजैडकाश्वगर्दभमानुषमानुषीणां मूत्रे ॥ इति राजनिर्घण्टः ॥ दशानां मूत्राणां समाहारः ॥

दशमूलम् । न । पाचनविशेषे । पञ्चमूलद्वये ॥ यथा । बिल्वश्योनाकगम्भारीपाटलागणिकारिका । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ॥ उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम् ॥ दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः । तन्द्राशोथज्वरानाहपार्श्वपीडारुचीर्हरेत् ॥ वातपित्तहरं पथ्यं कनीयः पञ्चमूलकम् ॥ उभयं दशमूलन्तु सन्निपातज्वरापहम् । कासे श्वासे कण्ठग्रहायां पार्श्वशूले च शस्यते ॥ पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनमिति ॥

दशयोगभङ्गः । पुं ॥ संस्कारकर्मणि मलनवेधविशेषे । खर्जूरवेधे ॥

दशरथः । पुं । रामताते ॥

दशरथप्रभवः । पुं । रामे ॥ रामादिषु ॥ दशरथः प्रभवो यस्य येषां वा ॥

दशरूपभृत् । पुं । विष्णौ ॥

दशवदनः । पुं । रावणे ॥ दश वदनानि यस्य सः ॥

दशवाजी । पुं । चन्द्रे ॥ दश वाजिनो रथे यस्य सः ॥

दशशतलोचनः । पुं । इन्द्रे ॥ दशशतानि सङ्ख्यायेषु तानि लोचनानि यस्य ॥

दशहरा । स्त्री । गङ्गाजन्मदिने ॥ यथा । ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् । पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्याः पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्येति शेषः ॥ अपि च । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यञ्चापि सर्वशः । असम्बद्धप्रलापश्च वा

दुर्मेयं स्त्रीष्वतुविधम् ॥ परद्रव्येष्व-
भिध्यानं मनसानिष्टचिन्तनम् । वित-
थाभिनिवेशश्च मानसं त्रिविधं स्मृत-
म् ॥ एतानि दशपापानि हर त्वं म-
म जाह्नवि ॥ दशपापहरा यस्मात्त-
स्माद्दशहरा स्मृता ॥ ज्येष्ठे मासि सि-
ते पक्षे दशम्यां बुधहस्तयोः । गरानन्दे
व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥ दश-
योगे नरः स्नात्वा सर्वपापैः प्रमुच्यते
इति स्कान्दपुराणे काशीखण्डः ॥
अथ बुधयोः कालभेदेन व्यवस्था
ज्ञेया ॥ सेतुबन्धरामेश्वरयोः प्रति-
ष्ठादिने ॥ यथोक्तं स्कान्दे सेतुमा-
हात्म्ये ॥ ज्येष्ठे मासि सिते पक्षे द-
शम्यां बुधहस्तयोः । गरानन्देव्यतीपा-
ते कन्याचन्द्रे वृषे रवौ ॥ दशयोगे
सेतुमध्ये लिङ्गरूपधरं हरम् । रामो
वै स्थापयामास शिवलिङ्गमनुत्तम-
मिति ॥ अतोऽस्यां तु विशेषेण पूजा
कार्या हितार्थिभिः ॥ * ॥ अथ संकल्पवा-
क्यः सामायगखण्डे २१५ अध्याये ।
यथा । अद्यहस्ते तु न च पे दशम्यां ज्ये-
ष्ठके सिते । दशपापहराधाय अदत्ता-
दानकर्मणम् ॥ विरुद्धाचरणं हिंसा
परदारोपसेवनम् । पारुष्यानृतपैशु-
न्यमसम्बद्धं च भाषणम् ॥ परद्रव्या-
भिध्यानञ्च मनसानिष्टचिन्तनम् ।



एतद्दशाघघाताय गङ्गास्नानं करोम्य-
हमिति ॥

दशा, स्त्री । अवस्थायाम् ॥ दीपवर्त्या-
म् ॥ चेतसि ॥ दशति । दंश दशने ।
भू०कः । पचाद्यच् । अपभ्रंशदंश-
केति निर्देशात् किप्यपि लोपः ॥ य-
था । दृश्यते गुरोश्चेष्टा ॥ कसी-
न्द्रायी यो ज्ञातुधः स्यांपदष्टमभो-
ग्याद्धभागविशेषे ॥ इति देवताः
॥ शरीरस्य दशदशा यथा । गर्भवासः
१ । जन्म २ । बाल्यम् ३ । कौमारम्
४ । पौगण्डम् ५ । यौवनम् ६ । स्था-
विर्यम् ७ । जरा ८ । प्राणरोधः ९ ।
नाशः १० इति ॥ * ॥ कामजदश
दशा यथा । चक्षूरागस्तदनु मनसः स-
ङ्गतिर्भावनाथ व्यावृत्तिः स्यात् तद-
नु विषयग्रामतश्चेतसोऽपि । निद्राच्छे-
दस्तदनु तनुता निस्त्रपत्वं ततोऽनुन्मा-
दो मूर्च्छा तदनु मरणं स्युर्दशाः प्रका-
मेष्विति ॥

दशाकर्षः । पुं । प्रदीपे ॥

दशाकर्षी । पुं । प्रदीपे ॥

दशाङ्गधूपः । पुं । त्रिदोषघ्ने अवग्रहपि-
शाचकादिनाशके धूपविशेषे ॥ यथा
। वासवेदाद्दशाङ्गेन त्रिदोषघ्नेन चा-
र्कम् । नश्यन्ति चक्षुधूपेन अवग्रह-
पिशाचकाः ॥ पञ्चांशागन्धपाषाणा

तु तावन्महिषगुग्गुलुः । चतुरंशं च-न्दनञ्च जटामांसीच तावती ॥ त्रि-भागःसर्ज्जकासारः स्यादेवं विराज-कम् । उशीरन्तु-द्विभागं स्यात् इत्तभू ष्टं नखं समम् ॥ कर्पूरो मृगनाभि-श्च एकभागौ प्रकीर्त्तितौ । एकोदशाङ्ग धूपस्तु वह्न्यापि मनोहरेद्दिति ॥ पु ष्पदानोत्तरं देवायदीयमाने धूपवि शेषे ॥ यथा । मधुमुस्तं घृतं गन्धोगु ग्गुल्वगुर्वशैलजम् । सर्ज्जं सिद्ध सिद्धार्थ । दशाङ्गोधूपउच्यतइति ॥ अन्यच्च । कर्पूरं कुष्ठमगुरुं गुग्गुलु र्मलयोद्भवम् । केशरं बालकं पर्वत्व क् चाली कोषमुत्तमम् ॥ सर्वमेतद् घृतयुतं दशाङ्गोधूपईरित इति ॥

दशाङ्गुलम् । न । खर्बूजे ॥ त्रि । दशा ङ्गुलमिते ॥

दशाननः । पुं । रावणे ॥

दशान्तिकः । पुं । दन्तीवृक्षे ॥

दशानीकिनी । स्त्री । सेनाविशेषे ॥

दशापवित्रम् । न । वासःखण्डे ॥

दशारुहा । स्त्री । कैवर्त्तिकायाम् ॥

दशार्णः । पुं । देशविशेषे ॥ सविन्ध्य स्यपूर्वदक्षिणस्यां दिशि वर्त्तते ॥ इ ति राधाकान्तः ॥

दशार्णा । स्त्री । नदीविशेषे ॥

दशार्हः । पुं । सुगते । बुद्धे ॥ यदुदेशे ॥

दशार्हाः । पुं भूम्नि । दशार्हदेशस्थे ॥

दशावतारः । पुं । विष्णौ ॥ दशअवता रायस्य सः । तेयथा । शेते सं चिरतय यने मम मीनकूर्मकोलो ऽभनृह रिर्वामनजामदग्न्यः । यो ऽभूदभूव मरतार्ग्रजकृष्णबुद्धः कल्की सताम्भ विता प्रहरिष्यते ऽरीनितिवोपदेवः ॥

दशाश्वः । पुं । चन्द्रे ॥ दशअश्वारथे य स्य सः । रथस्त्रिचक्रःसोमस्य कुन्दाभा स्तत्र वाजिनः । वामदक्षिणतोयुक्ता दश तेन चरन्त्यसौ ॥

दशाश्वमेधिकः । पुं । तीर्थविशेषे ॥

दशास्थितिः । स्त्री । अवस्थायाम् ॥

दशास्यः । पुं । दशानने ॥ दश आस्या नि यस्य सः ॥

दशास्यजित् । पुं । श्रीरामचन्द्रे ॥ द शास्यं जयति । जि । क्विप् तुक् ॥

दशाहः । पुं । दशदिनसमुदाये ॥ द-शानामह्नां समाहारः । तद्धितार्थेति समासः । समाहारस्यैकत्वादेकवच नम् । राजाहःसखिभ्यष्टच् । रात्रा ह्नाहाः पुंसि ॥

दशेन्धनः । पुं । प्रदीपे ॥ दशाइन्धनं यस्य ॥

दशेरः । पुं । हिंस्रे ॥ दशति । दंश । पसिकठिकुठिगडिगुडिदंशिभ्यएरक् । अनिदितामिति नलोपः ॥

दशेरकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति हेमचन्द्रः ॥

दशेरकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति भूरिप्रयोगः ॥

दशैकादशिकः । पुं । वार्द्धुषिके ॥ एकादशार्थत्वादेकादश वस्तुतोऽस्य ये दश दत्ता एकादश भविष्यन्ति ते दशैकादशाः । निपातनात् समासान्तोऽकारः । दशैकादशान् प्रयच्छति । कुसीददशैकादशात् ष्ठन्ष्ठचौ इति ष्ठन् ॥ स्त्री । ङीपि दशैकादशिकी ॥

दष्टः । त्रि । दंशिते । दंशयुक्ते ॥ दंशेः क्तः ॥

दस्मः । पुं । यजमाने ॥ चौरे ॥ हुताशने ॥ खले ॥ दस्यति । दसु उपक्षये । इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ दर्शनीये ॥

दस्युः । पुं । मलिम्लुचे । चौरे ॥ रिपौ ॥ महासाहसिके ॥ दस्यति । दसु० । यजिमनिशुन्धिदसिजनिभ्यो युच् । बा० अनादेशाभावः । अनुनासिकयोरित्युक्तत्वाद्वा नानादेशः ॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥ मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥ ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना याः पौण्ड्रकाश्चौड्रद्रविडाद्यास्त्वादिनोक्ता जातयो बाह्या जाताः म्लेच्छभाषायुक्ता आर्यभाषोपेता या ते दस्यवः सर्वे स्मृता इत्यर्थः ॥

दस्रः । पुं । खरे ॥ अश्विनीसुते ॥

दस्रौ । पुं । द्विवचनान्तः । नासत्ययोः । अश्विनीसुतयोः । स्वर्वैद्ययोः ॥ दस्यतः क्षिपतो रोगान् । दसु० । स्फायितञ्चीति रक् ॥

दस्रदेवता । स्त्री । अश्विनीनक्षत्रे ॥ दस्रौ देवते यस्याः ॥

दस्रसूः । स्त्री । सूर्ययोषिति । संज्ञायाम् ॥

दहनः । पुं । चित्रके ॥ भल्लातके ॥ अग्नौ ॥ कपोते ॥ चतुष्कलप्रभेदे (ऽऽ।) ॥ न । दाहे । भस्मीकरणे ॥ त्रि । दुष्टचेष्टिते ॥ दहति दह्यते वा । दह भस्मीकरणे । ल्युः ल्युट् वा ॥

दहनकेतनः । पुं । धूमे ॥ दहनः केतनं यस्य ॥

दहनप्रिया । स्त्री । स्वाहायाम् ॥ दहनस्याग्नेः प्रिया ॥

दहनागुरु । न । दाहागुरुणि ॥

दहनारातिः । पुं । जले ॥

दहनीयः । त्रि । दहनार्हे । दाह्ये ॥

दहनोपमः। पुं। } सूर्यकान्तमणौ॥
दहनोपलः। पुं। }

दहनोल्का। स्त्री। अग्निकुक्कुटे॥

दहरः। पुं। मूषिकायाम्॥ स्वल्पे। कनिष्ठे भ्रातरि॥ बालके॥ हृदयाकाशे॥ अल्पे॥

दहराकाशः। पुं। चिदाकाशे॥ ईश्वरे॥ दहरश्चासावाकाशश्च॥

दहः। पुं। दावानले॥ वह्नौ॥ दहति। दह०। स्फायितञ्चीति रक्॥ हृदयाकाशे॥ जठरे॥

दा। स्त्री। शोधने॥ दाने॥ छेदे॥ उपतापे॥ रक्षायाम्॥ दानम्। डुदाञ्०। सम्पदादित्वात् क्विप्॥

दाकः। पुं। यजमाने॥ दातरि॥ ददाति। डुदाञ्०। कृदाधारेतिकः॥

दाक्षः। त्रि। दक्षसम्बन्धिनि॥ दक्षस्यायम्। अण्॥

दाक्षायणयज्ञः। पुं। आदित्यायुक्ते दर्शपूर्णमासात्मके यज्ञे॥ दक्षस्येमे दाक्षाः। तेषां अयनमावृत्तिरिति तन्निर्वचनम्॥

दाक्षायणी। स्त्री। अपर्णायाम्॥ उमायाम्। सत्याम्॥ अश्विन्यादिसप्तविंशतिभेषु॥ रोहिण्याम्॥ दन्तीवृक्षे॥ मानवे दक्षकपीठाधिष्ठात्रिदेव्याम्॥ दक्षस्यापत्यम्। वामाघेयस्त्रीति दक्षसंज्ञायाम् उदीचां वृद्धादगोत्रादिति फिञ्। गौरादित्वात् ङीष्॥

दाक्षायणीपतिः। पुं। एकलिङ्गे। चन्द्रे॥ शिवे॥ दाक्षायण्याः पतिः॥

दाक्षायणीरमणः। पुं। चन्द्रे॥

दाक्षाय्यः। पुं। गृध्रे॥ दक्षते। दक्षवृद्धौ शीघ्रार्थे च। श्रुदक्षिस्पृहिगृहिभ्य आय्यः। दक्षाय्यस्त्वयम्। तस्येदमित्यण्॥

दाक्षिः। पुं। दक्षस्यापत्ये॥ अतइञ्॥

दाक्षिणम्। न। दक्षिणानां समूहे॥ भिक्षादिभ्योऽण्॥

दाक्षिणात्यः। पुं। नारिकेले॥ त्रि। दक्षिणदिग्भवे॥ दक्षिणाभवः। दक्षिणापश्चात्पुरसस्त्यक्॥

दाक्षिणिकः। पुं। बन्धविशेषे॥ सचेष्टापूर्तेन भवति। पुरुषस्तस्यानभिद्रोहि इष्टापूर्तकारी कामोपपन्नता बध्यते॥

दाक्षिण्यम्। न। आनुकूल्ये॥ त्रि। दक्षिणार्हे॥

दाक्षी। स्त्री। पाणिनिमुनेर्मातरि॥ दक्षस्य गोत्रापत्यं स्त्री। अतइञ्। इतोमनुष्यजातेरिति ङीष्॥

दाक्षीपुत्रः। पुं। पाणिनिमुनौ॥ दाक्ष्याः पुत्रः॥

दाक्षेयः । पुं । पाणिनिमुनौ ॥ दाक्ष्या अपत्यम् । स्त्रीभ्यो ढक् ॥

दाक्ष्यम् । न । कौशले । दक्षतायाम् ॥ सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तौ ॥ दक्षस्य कर्म भावो वा । ष्यञ् ॥

दाघः । पुं । दाहे ॥ दह्यतेऽनेन । दह भस्मीकरणे । करणे घञ् । न्यङ्क्वादित्वात् कुत्वम् ॥

दाडकः । पुं । दन्ते ॥ इति शब्दार्थकल्पतरुः ॥

दाडिमः । त्रि । एलायाम् ॥ पुं । करके । वृत्तफले । शुकवल्लभे ॥ करकदाडिमावित्यमरः ॥ तत्फलं त्रिविधं स्वादु स्वाद्वम्लं केवलाम्लकम् । तत्र स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम् ॥ हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलं लघु । कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् ॥ स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु । अम्लन्तु पित्तजनकमुष्णं वातकफापहमिति भावप्रकाशः ॥ * ॥ तापहारि मधुरं लघु पथ्यमिति राजनिर्घण्टः ॥ दलनं दालः । दल विशरणे । घञ् । दालेन निर्वृत्तः । भावप्रत्ययान्तादिमप् । डलयोरैक्यम् ॥

दाडिमपुष्पः । पुं । रोहितकद्रुमे ॥ दाडिमस्य पुष्पमिव पुष्पमस्य ॥ न । करकपुष्पे ॥

दाडिमपुष्पकः । पुं । रोहितकवृक्षे ॥ दाडिमस्येव पुष्पाणि यस्य ॥

दाडिमप्रियः । पुं । शुकखगे ॥

दाडिमभक्षणः । पुं । कीरे ॥

दाडिमादिचूर्णम् । न । चूर्णविशेषः ॥ पले दाडिमादष्टौ खण्डाद् व्योषपलत्रयम् । त्रिसुगन्धिपलमेकं चूर्णमेकत्र कारयेत् ॥ तच्चूर्णं भक्षयेद्भुक्तमरोचकहरं परम् । दीपनं पाचनं ख्यातं पीनसज्वरकासजित् ॥

दाडिमी । स्त्री । दाडिमे ॥

दाडिमीरसः । पुं । व्यञ्जनोपस्करान्तरे ॥ दाडिमं घृतसम्भृष्टे तक्रपाके विनिःक्षिपेत् । ततः पक्वं पटे पूतम् इति स्याद्दाडिमीरसः ॥

दाडिमीसारः । पुं । दाडिमे ॥ इति राजनिर्घण्टः ॥

दाडिम्बः । पुं । दाडिमे ॥ इति त्रिकाण्डशेषः ॥

दाढा । स्त्री । दंष्ट्रायाम् ॥ अभिलाषायाम् ॥ समूहे ॥ इति शब्दार्थकल्पतरुः ॥

दाढिका । स्त्री । दंष्ट्रिकायाम् ॥

दाण्डपाता । स्त्री । तिथिविशेषे ॥ दण्डपातोऽस्यां वर्त्तते । घञः सास्यां क्रि

येतिञः ॥

दाण्डमाथिकः । त्रि । दण्डमाथं धावति । आथोत्तरपदेतिठक् ॥

दाण्डा । स्त्री । क्रीडाविशेषे । घटा दृतिभाषा ॥ दण्डः प्रहरणमस्यां क्रीडायाम् । तदस्यां प्रहरणमितिणः ॥

दाण्डाजिनिकः । पुं । मायाजीविनि । सदम्भे ॥ दण्डाजिनेन दम्भेनार्थान् न्विच्छति । अयःशूलदण्डाजिनाभ्यामितिठञ् ॥

दाण्डिनायनः । पुं । दण्डिनोगोत्रापत्ये ॥ नडा० फक् । दाण्डिनायनहास्तिनायनेत्यादिना टिलोपाभावः ॥

दातः । त्रि । लूने । छिन्ने ॥ दायते स्म । दाप् लवने । क्तः ॥ शुद्धे ॥ दायति । दैप् शोधने । कर्त्तरि क्तः ॥

दाता । त्रि । दानशीले । सुचिरे ॥ दानकर्त्तरि ॥ ददाति । सुदाप्० । तृच् ॥

दात्यूहः । पुं । कालकण्ठके । खगे ॥ चातके ॥ जलकाके ॥ मेघे ॥ दाति । दाप्० । क्तिन् । दातिं नाशं मूहते । ऊह० । अण् ॥ यद्वा । दित्यौहो यम् । अण् । देविकाशिंशपेत्यात्वे वाच्ये तठिं शकन्ध्वादिः ॥

दात्यौहः । पुं । दात्यूहे ॥ दित्यौहो ऽयम् । अण् । देविकाशिंशपेत्यादि

नाथे सम्प्रसारणम् । वृद्धिः ॥

दानम् । न । छेदनमस्त्रे । खनित्रे ॥ दानेनेन । दाप्० । दाम्नीत्यादिना ष्ट्रन् ॥ दादिभ्यश्छन्दसीतिवचनात् ॥

दात्री । स्त्री । दानशीलायाम् ॥ ऋन्नेभ्यो ङीप् ॥

दात्रः । पुं । दातरि ॥ ददाति । सुदाप्० । अनिदेत्यादिना ददातेस्त्रन् ॥

दादः । पुं । दाने ॥ दद्यते । ददः दाने । कर्मणि घञ् ॥

दाधिकम् । त्रि । दधिसंस्कृतद्रव्ये ॥ दधिसंस्कृतम् । दध्नष्ठक् ॥ दध्ना संस्कृतं वा । प्राग्वहतेष्ठक् ॥ दध्ना चरति । चरतीतिठक् । दध्ना संसृष्टं वा । संसृष्टेठक् । दध्नोपसिक्तं वा । व्यञ्जनैरुपसिक्ते इतिठक् ॥

दानम् । न । मजमदे ॥ पालने । रक्षणे ॥ छेदे ॥ शुद्धौ ॥ विश्राणने । त्यागे । परस्वत्वापत्तिपर्यन्तस्वत्यागे । देशेकालेश्रद्धया यथाशक्त्यान्यायार्जितार्थानां सत्पात्रे समर्पणे । स्वस्वत्वास्पदानामन्नादीनां यथाशक्ति शास्त्रोक्तसंविभागे । असङ्कोचेनविप्रेषु स्वस्वत्वपरित्यागेन परस्वत्वापादने । स्वमदानस्वत्वापादकद्रव्यत्यागे ॥ * ॥ अर्थानामुदिते पात्रेश्रद्धया प्रतिपादनम् । दानमित्यभिनिर्दिष्टं व्याख्या

दानम्

मं तस्य चर्च्यते ॥ दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्मयुक् । देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥ मनसा पात्रमुद्दिश्य भूमौ तोयं विनिःक्षिपेत् । विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥ परोक्षे कल्पितं दानं पात्राभावे कथं भवेत् ॥ गोत्रजेभ्यस्तथा दद्यात् तदभावेऽस्य बन्धुषु ॥ यद्दातुं न सकुल्याः स्युः बान्धवानामथाभवाः ॥ दद्यात् । स्वजातिशिष्येभ्यस्तदभावेऽप्सु निःक्षिपेत् ॥ शास्त्रानुक्ते समे देशे गोमयेनोपलेपिते । वसित्वा वसनं शुद्धं दानं दद्यात् तद्दर्शयम् ॥ दानं चतुर्विधं प्रोक्तमृषिभिर्धर्मकोविदैः ॥ नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ॥ अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तस्मात् ब्राह्मणाय तु नित्यकम् ॥ यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥ अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते । दानं तत् काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥ ईश्वरप्रीणनार्थाय ब्रह्मवित्सु प्रदीयते । चेतसा सत्त्वयुक्तेन दानं तद्विमलं स्मृतम् ॥ * ॥ गत्वा यद्दीयते दानं त

दानम्

थापात्रे विधानतः । तदनन्तफलं विद्धि मर्वस्था पितयेन्नृप ॥ * ॥ तच्च सात्त्विकादि भेदात् त्रिविधम् । यथा । दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥ असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ * ॥ यदेवविमेदमितिविशेषं जानानः परस्वत्वापत्तये स्वामी त्यजति परश्चविशेषेण ददमेतिस्वत्वं प्रत्येतीति, व्यवहारे ॥ * ॥ अस्य विधिर्यथा । स्नानसन्ध्यावमनान्निकृत्वा नारायणनवग्रहगुरून् सम्पूज्य देयद्रव्यं वामहस्तेन धृत्वा दक्षिणहस्तेन शिरभ्यर्च्य तद्द्रव्याधिपतिदेवतां सम्प्रदानञ्चार्चयित्वा सङ्कल्प्यकुशतिलजलत्यागपूर्वकं दद्यादिति ॥ विवेकज्ञानशुद्धौ ॥ देयमोघमद्रव्यस्माद्दातोर्दानपदं व्युत्पद्यते । यद्दाक्षपतञ्जलिः । विवेकख्यातिरविप्लवा दुःखनयस्य हानोपाय इति । अविप्लवा शुद्धिः । साचसवासन संशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थानम् । साच न मि

खाततामाख्यः पञ्चलेषा यथेरिताः ।
दीर्घसत्रेष्विवरुजा यस्य दक्षेषु याय
ते । दाल्भ्यो नाम स वाभिसदागति
र्निमित्तजः ॥ १२ ॥

दावरः । पुं । स्थावरविषभेदे ॥

दावा । स्त्री । संहाकाले । किम्पाके ॥

दाविः । स्त्री । हरितेमुनीधान्ये । दाख
इति भाषा ॥

दाविका । स्त्री । महाकोषातक्याम् ।
किम्पाके ॥

दाविमः । पुं । दाडिमे ॥ इति भरतः ॥

दाली । स्त्री । दलिते समीधान्ये । दा
ल इति भाषा ॥ देवदालीलतायाम् ॥

दाल्भ्यः । पुं । मुनिविशेषे ॥ चैकिता
यने ॥ वकाख्यर्षौ ॥ दल्भस्य गोत्रा
पत्यम् । गर्गादिभ्यो यञ् ॥

दाल्मी । पुं । इन्द्रे ॥ इति त्रिकाण्डशेषः ॥

दावः । पुं । वनानले ॥ वने ॥ उपतापे
॥ दुनोति । टुदु उपतापे । दुन्योर
नुपसर्गे इति णः ॥

दावाग्निः । पुं । वनवह्नौ । दावे ॥ दाव
स्य वनस्याग्निः ॥

दावानलः । पुं । दवाग्नौ ॥

दाविकः । त्रि । देविकानद्युद्भवे ॥ देवि
कायां भवः । तत्र भव इत्यण् । देवि
काशिंशपेत्यादावात्त्वम् । स्त्रि
यां टिड्ढेतिङीपि दाविकी ॥



दाशः । पुं । धीवरे ॥ दशति मत्स्यान्
। दंश दशने । दंशेष्टनौ न विः प्रा
दंशेश ॥ यद्वा । दाश्यते मूल्यमस्मै
। दाशृ दाने । घञ् ॥

दाशतयी । स्त्री । ऋचां संहिताया
म् ॥ दशमण्डलानि अवयवा यस्याः ।
संख्याया अवयवे तयप् । ङीप् ॥

दाशपुरम् । न । कैवर्तीमुस्तके । दश
पुरे । मोथा इति भाषा ॥ दाशान्
कैवर्तान् पिपर्ति । पृ पालनपूरण
योः । मूलकः । उदोष्ठ्यपूर्वस्येत्यु
त्वम् ॥

दाशपूरम् । न । दाशपुरे ॥

दाशफली । स्त्री । ओषधिविशेषे ॥ पा
ककर्णेति ङीष् ॥

दाशरथः । पुं । श्रीरामचन्द्रे ॥ दशर
थस्यायम् । तस्येदमिति सम्बन्धेऽर्थे
ऽण् । सम्बन्धश्चात्र पितापुत्रलक्षणः ॥
पुरा भरतमुख्येषु रौचितविभानि न
यामपुंसानुहृढांश्च पानस्रेशा । प्रजास्य
मोघान् विशिखान् प्रधावते प्रदीय
तां दाशरथाग्रमैथिली ॥

दाशरथिः । पुं । श्रीरामे ॥ दशरथस्य
अपत्यम् । अत इञ् ॥

दाशार्हः । पुं । विष्णौ ॥ दाशदाने ॥ दा
श्यते इति दाशो दानम् । तदर्हति
। अर्हपूजायाम् । अच् ॥ दशार्हकु

कः । उदात्तपूर्वस्येत्वम् ॥

दासपूरम् । न । दासपुरे ॥ दासान् पूरयति । पूर्यते । कर्मण्यण् ॥

दासिका । स्त्री । प्रीतजिष्ण्याम् ॥ भुजिष्यायाम् ॥ चेट्याम् ॥ दासीव । स्वार्थे कः । केण इति ह्रस्वः ॥

दासी । स्त्री । चेट्याम् ॥ भुजिष्यायाम् ॥ वायायाम् । जिष्ण्याम् ॥ काकजङ्घायाम् ॥ नीलाम्लाने ॥ नीलझिण्ट्याम् ॥ पीतझिण्ट्याम् ॥ वेश्याम् ॥ शूद्रायाम् ॥ कैवर्तभार्यायाम् ॥ दस्यते । दस उपक्षये । कर्मणि घञ् । गौरा० ङीष् ॥

दासीफली । स्त्री । ओषधिविशेषे ॥ पाककर्णेतिङीष् ॥

दासीसभम् । न । दासीनां सभायाम् ॥ दासीनां सभा । अशालाचेति नपुंसकत्वम् ॥

दासेयः । पुं । धीवरे ॥ भृत्ये ॥ दासीतनये ॥ दास्या अपत्यम् । क्षुद्राभ्यो वेति ढ्रगभावपक्षे स्त्रीभ्यो ढक् ॥

दासेयी । स्त्री । सत्यवत्याम् । व्यासजनन्याम् ॥ ङीप् ॥

दासेरः । पुं । क्रमेलके । उष्ट्रे ॥ धीवरे ॥ त्रि । चेटे । दासीपुत्रे ॥ दास्या अपत्यम् । क्षुद्राभ्यो वेति ढ्रक् ॥

दासेरकः । पुं । दासेरार्थेषु ॥ स्वा०-



कन् ॥

दास्यम् । न । दासत्वे । दासभावे ॥ दासस्य भावः । ष्यञ् ॥

दास्यमानः । त्रि । भविष्यद्दानसम्बन्धिवस्तुनि ॥

दास्रम् । न । अश्विनीनक्षत्रे ॥ दस्रयोरिदम् । तस्येदमित्यण् ॥

दास्रभम् । न । अश्विनीनक्षत्रे ॥ दास्रं भम् ॥

दाहः । पुं । दहने । भस्मीकरणे ॥ गात्रसन्तापे ॥ दहनम् । दह भस्मीकरणे । घञ् ॥

दाहकः । पुं । चित्रके ॥ रक्तचित्रके ॥ त्रि । दाहकर्तरि ॥ दह० । ण्वुल् ॥

दाहज्वरः । पुं । देहदाहयुक्ते ज्वरे ॥ यथा । पीतं दधिप्लुकम् वस्तु पर्युषितं जलेन वै । सार्द्धं विनाशयेद्दाहज्वरं च परमेश्वरेति गारुडे १९३ अध्यायः ॥

दाहनम् । न । भस्मीकरणाय प्रेरणे । दाहकरावना इति भाषा ॥ यङन्ताद्धेर्ल्युट् ॥

दाहसरः । पुं । श्मशाने ॥

दाहहरणम् । न । वीरणमूले ॥ त्रि । दाहघ्ने ॥

दाहागुरुः । पुं । गन्धविशेषे ॥ यथा । देवदार्वं गुरुकृष्णागुरुसारागुरुचन्दनाः

दितः । त्रि । छिन्ने ॥ दीयतेस्म । दोअवखण्डने । क्तः । द्यतिस्यतीतीत्वम् ॥

दितिः । स्त्री । दैत्यजनन्याम् ॥ खण्डने ॥ दोअवखण्डने । क्तिच्क्तौ चसंज्ञायामिति क्तिच् । द्यतिस्यतीतीत्वम् ॥

दितिजः । पुं । दैत्ये ॥ दितेर्जातः । जनी० डः ॥

दितिसुतः । पुं । दैतेये ॥ दितेः सुतः ॥

दिती । स्त्री । दैतेयमातरि ॥ कृदिकारादितिङीष् ॥

दित्सा । स्त्री । दातुमिच्छायाम् ॥ डुदाञ्० । सनिमीमेत्यादिना इसादेशः । अत्रलोपोऽभ्यासस्येत्यभ्यासलोपः । अप्रत्ययात् इत्यकारप्रत्ययः ॥

दिदृक्षमाणः । त्रि । द्रष्टुमिच्छति ॥ दृशेः सन्नन्तात् शानच् ॥

दिदृक्षा । स्त्री । द्रष्टुमिच्छायाम् ॥ दृशेः सन्नन्तादप्रत्यये टाप् ॥

दिदृक्षु । त्रि । द्रष्टुमिच्छति ॥ सनाशंसभिक्ष उः ॥

दिद्युत् । त्रि । द्योतनशीले ॥ द्योतते इत्येवंशीलः । द्युत दीप्तौ । द्युतिगमिजुहोतीनां द्वे चेति क्विप् ॥

दिधिषाय्यः । पुं । मन्त्रे ॥ दधाति आह्लादम् धीयते वा । डुधाञ्० । दिधिषाय्य इति साध्यः धातोर्द्वित्वमित्वं षुक् चनिपात्यते ॥ श्रायेऽपि तमन्त्रौ । मित्रद्वयो दिधिषाय्यः ॥

दिधिषुः । पुं । द्विरूढास्वामिनि । पुनर्भूपतौ ॥ दिधिषूमात्मन इच्छति । सुप आत्मनः क्यच् क्विप् । बाहुलकात् ह्रस्वः ॥ स्त्री । द्विरूढायाम् ॥

दिधिषूः । स्त्री । द्विरूढायाम् । पुनर्भूः ॥ दधाति धापुम् धियते वा । डुधाञ्० धिषशब्दे वा । अन्दूदृम्भू इति साधुः ॥ यद्वा । दिधिं धैर्यं स्यति । षो० । क्विप् ॥ मनुस्तु । ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रे दिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृतेत्याह ॥ पुं । पुनर्भूपतौ ॥

दिधिषूपतिः । पुं । द्विरूढायाः पत्यौ ॥ भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः । धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

दिनम् । न । सूर्यकिरणावच्छिन्ने काले । अहनि । घस्रे । वासरे ॥ तत्तु मनुष्यमाने षष्टिदण्डात्मकम् । पितृमाने गौणचान्द्रमासात्मकम् । देवासुरमाने वत्सरात्मकम् । ब्रह्ममाने दिव्यद्विसहस्रयुगात्मकम् ॥ * ॥ मनुष्यमाने ब्रह्मणो दिनस्य संख्या । ८६४०००००००। इति

पितरि ॥

दिवीपराट् । पुं । दिवीपे ॥ इ० चि ॥

दिवीरम् । न । गोमयच्छत्रिकायाम् । शिलीन्ध्रके ॥

द्यौः । स्त्री । स्वर्गे ॥ आकाशे ॥ दीप्यन्त्यस्याम् । दिवु० । भा० दिवेर्डिविः । द्यौः दिवौ दिवः । द्युभ्याम् ॥

दिवम् । न । स्वर्गे ॥ आकाशे ॥ वने ॥ दीव्यन्त्यस्मिन् । दिवु० । इगुपधेति कः ॥

दिवसः । पुं । न । दिने ॥ सावनादिप्रभेदेन दिवसोपि चतुर्विधः । नाक्षीपष्टिसमस्तत्र सावनो दिवसः स्मृतः ॥ चिंशांशभागार्कराशेर्दिवसः सौर उच्यते । चान्द्रस्तु तिथ्यवच्छिन्नो भावधिक्षभूः स्मृतः ॥ दीव्यन्त्यत्र । दिवु० । दिवःकित्सस ॥

दिवसकरः । पुं । सूर्ये ॥

दिवसमुखम् । न । प्रभाते ॥

दिवस्पतिः । पुं । वासवे । इन्द्रे ॥ दिवः पतिः । तत्पुरुषे कृतीत्यषष्ठ्या अलुक् षष्ठ्याः अकृत्यपि अलुक् इति मुकुटः । तन्न । पतिर्हितिरित्यादिसूत्रस्य सत्वात् । वस्तुतस्तु । षष्ठ्याः पतिपुत्रेति सत्वविधानसामर्थ्याल्लोके वेदसाधारण्येन लुगभावितः कस्कादित्वात् सः । यत्तु षष्ठ्याः पतिपुत्रेति सत्वमिति मुकुटेनोक्तं तन्न । तत्र छन्दोधिकारात् ॥

दिवस्पृथिव्यौ । स्त्री । द्यावापृथिव्योः ॥ द्यौश्च पृथिवी च । दिवसश्च पृथिव्यामिति दिवो दिवसादेशः ॥ दिवसनान्तः ॥

दिवा । अ० । दिवसे ॥ दीव्यन्त्यत्र । दिवु० । कामप्रत्ययः ॥

दिवाकरः । पुं । भास्करे । सूर्ये ॥ अर्कपुष्पे ॥ दिवा दिनं करोति । दिवाविभेति टः ॥ काके ॥ पुष्पविशेषे ॥ इति शब्दचन्द्रिका ॥

दिवाकीर्त्तिः । पुं । नापिते ॥ रात्रौ क्षुरकर्मनिषेधं तु । दिवाकीर्त्तिरत्र ॥ अन्त्यावसायिनि । चण्डाले ॥ दिवाचरेयुः कार्यार्थे चिह्निता राजशासनैः इति चण्डालेषु नियमात् ॥ उलूके ॥ इति हेमचन्द्रः ॥

दिवाटनः । पुं । काके ॥

दिवातनः । त्रि । दिनभवे ॥

दिवान्धः । पुं । पेचकादौ ॥ यथा । दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे । केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः इति देवीमाहात्म्यम् ॥

दिवान्धकी । स्त्री । छुच्छुन्दर्याम् ॥

दिवान्धा । स्त्री । वल्गुलापक्षिणि ॥

दिवाभीतः । पुं । कुम्भिले । चोरे ॥

उलूके ॥ कुमुदाकरे ॥

दिवाभीतिः । पुं । पेचके ॥ दिवा दिवसे भीतिर्भयं यस्य ॥

दिवामणिः । पुं । सूर्ये ॥ दिवा दिवसस्य मणिरिव ॥

दिवामध्यम् । न । दिनार्द्धे । मध्याह्ने ॥

दिवाशयः । त्रि । दिनेशयनकर्त्तरि ॥ दिवाशेते स्वपितीति । अधिकरणे शेतेरित्यच् ॥

दिवास्वाप । पुं । दिननिद्रायाम् ॥ दिवास्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः । ग्रीष्मवर्जेषु कालेषु दिवास्वापो निषिध्यते ॥ उचितोऽपि दिवास्वापो नित्यं येषां शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥ * ॥ येषामुचितस्ताभ्यां व्यायामाध्ययनव्यवायभरताक्रान्तातीसारिणः शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् । क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो रात्रौ जागरितान् नरान् निरशनान् कामं दिवा-स्वापयेदिति ॥

दिवास्वापा । स्त्री । दिवान्धायाम् ॥

दिवि । पुं । चाषखगे ॥

दिविज । त्रि । स्वर्गीये ॥

दिविषत् । पुं । देवे ॥ दिवि स्वर्गे सी-



दतिवसतीति । षद्लविशरणगत्यवसादनेषु । सत्सूद्विषेति क्विप् । तत्पुरुषे कृतीति सप्तम्या अलुक् । सुषामादित्वात् षत्वम् ॥

दिविष्ठः । त्रि । स्वर्गस्थे ॥

दिवी । स्त्री । उपजिह्विकाकीटे ॥

दिवेदिवे । अ । प्रत्यहनि ॥

दिवौकाः । पुं । दिवौकसि ॥ द्यौरोकोऽस्येति विग्रहः ॥

दिवोदासः । पुं । चन्द्रवंशीयभीमरथनृपस्य पुत्रे । काशिराजे ॥ दिवर्द्यनेन तात्पर्यात् देवाः । तेषाम् दिवः स्वर्गस्य वा दासः । दिवस्तत्पुरुषे इति षष्ठ्या अलुक् ॥

दिवोद्भवा । स्त्री । एलायाम् ॥ त्रि । दिविजाते ॥

दिवौकः पुष्करिणी । स्त्री । तीर्थविशेषे ॥

दिवौकाः । पुं । देवे ॥ द्यौः दिवि वा ओकोऽस्य । पृ० ॥ यद्वा । दिवमोकोऽस्येत्यन्तेन विग्रहः ॥ चातके ॥

दिव्यम् । न । लवङ्गे ॥ हरिचन्दने ॥ शपथे ॥ तद्भेदाः यथा । घटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमम् । षष्ठञ्च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकम् ॥ अष्टमं फालमित्युक्तं नवमं धर्मजमुतम् । दिव्यान्येतानि सर्वाणि

दिव्य

...निर्दिष्टानि स्वयम्भुवा॥ गङ्गातोयस्य गर्भपूर्वकश्रये तत्सम्बन्धकथने दोषो यथा। गङ्गातोयमुपस्पृश्यमिथ्यां यदिवदेज्जनः। सयातिकालसूत्रञ्च यावदेवेन्द्राश्चतुर्दश इतिब्रह्मवैवर्त्तपुराणम्॥ पानीयप्रभेदे॥ यथा। दिव्यंचतुर्विधंप्रोक्तंधाराजं करकाभवम्। तौषारञ्चतथाहैमं तेषुधारं गुणाधिकमिति॥ पुं। गुग्गुलौ॥ यवे॥ आगमोक्ते भावविशेषे यथा। दिव्यस्य देवताप्रायो शुद्धान्तःकरणः सदा। द्वन्द्वातीतो वीतरागः सर्वभूतसमःक्षमीति॥ नायकविशेषे॥ त्रि। खोत्पात्मके मनुष्येतरसाध्ये सर्वप्रमप्रख्याती ते अत्यद्भुते अप्राकृते॥ दिविचोतमानात्मन्यःदिवभवः। दिविपरलेश्योभिस्वत्वत्वमेवामवः। भुप्राग्यागुदक्प्रतीचोयत्॥ मनोज्ञे॥ दिविभवे॥

दिव्यकुण्डम्। न। कामरूपे चोभकाद्रिपूर्वभागस्थे पुष्करिणी विशेषे॥

दिव्यगन्धः। पुं। गन्धके॥ न। लवङ्गे॥

दिव्यगन्धा। स्त्री। स्थूलैलायाम्॥ महाचञ्चुशाके॥

दिव्यगायनः। पुं। गन्धर्वे। स्वर्गगायके॥

दिव्यचक्षुः। पुं। सुगन्धसारप्रभेदे॥ मर्कटे॥ त्रि। अन्धे॥ सुलोचने॥

दिव्यसा

न। आनातके नेत्रे॥

दिव्यतेजाः। स्त्री। ब्राह्मीम्॥

दिव्यदृष्टिः। स्त्री। निमेषशून्यायां दृष्टौ॥ दिव्याचासौ दृष्टिश्च॥

दिव्यदोहदम्। न। मनोराज्यस्य सिद्धये देवेभ्योदीयमाने द्रव्ये। उपयाचिते॥ यद्दीयतेतु देवेभ्योमनोराज्यस्यसिद्धये। उपयाचितकं दिव्यदोहदंतद्विदुर्बुधाइतिहारावली॥

दिव्यपञ्चामृतम्। न। मिलितगव्याज्यगव्यदधिगव्यक्षीरमाक्षिकशर्करारूपे॥ इतिराजनिर्घण्टः॥

दिव्यपुष्पः। पुं। करवीरे॥

दिव्यपुष्पा। स्त्री। महाद्रोणायाम्॥

दिव्यपुष्पिका। स्त्री। लोहितमर्कवृक्षे॥

दिव्यप्रभा। स्त्री। कामरूपे दमनिकायानद्याः पूर्वभागस्थे नदीविशेषे॥

दिव्यरत्नम्। न। चिन्तामणौ॥

दिव्यरथः। पुं। देवविमाने। व्योमयाने॥

दिव्यरसः। पुं। पारदे॥

दिव्यलता। स्त्री। मूर्वालतायाम्॥

दिव्यवस्त्रः। पुं। सूर्यशोभायाम्॥ न। शुभांशुके॥ दिविभववस्त्रे॥ त्रि। सुन्दरवस्त्रवति॥

दिव्यसारः। पुं। शालवृक्षे॥

दिक् गु                                                                 दिष्टिः

दिव्यस्त्री । स्त्री । अप्सरः प्रभृतौ ॥
दिव्या । स्त्री । आमलक्याम् । भव्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ शतावर्याम् ॥ महामेदायाम् ॥ ब्राह्म्याम् ॥ स्थूलजीरके ॥ श्वेतदूर्वायाम् ॥ हरीतक्याम् ॥ पुरायाम् । गन्धनद्याम् ॥
दिव्यादिव्या । स्त्री । उपदेवी विशेषे ॥
दिव्योदकम् । न । आकाशजले । खवारिणि ॥
दिव्योपपादुकः । त्रि । अमरे । निर्जरे ॥ मातृपित्रादिदृष्टकारणमिरपेक्षा अदृष्टवशकृतेभ्योजाता ये देवास्ते दिव्योपपादुकाउच्यन्ते ॥ दिविभवः । युप्रागपागितियत् । उपपद्यते । मद्गतौ । उपपत्पदेण्युकञ् । दिव्यश्चासावुपपादुकश्च ॥
दिव्यौघः । पुं । गुरुविशेषे ॥
दिव्यौषधिः । स्त्री । मनःशिलायाम् ॥
दिक्-गु । स्त्री । ककुभि । आशायाम् । काष्ठायाम् । प्राच्यादिव्यवहारहेतौ । कृत्वैकमवधिं तस्मादिदं पूर्वंच पश्चिमम् । इति देशोनिदिश्येत यया सादिगितिस्मृतेतिव्युत्पत्तेः कार्यमात्रनिमित्तकारणे ॥ सात्वेकापि व्याविभ्वी चेतिन्यायमतम् ॥ सादशधः । यथा । पूर्वा आग्नेयी दक्षिणाच नैर्ऋती पश्चिमा तथा । वायवी चोत्तरैशानी ऊर्ध्वा चाधोदिशोदश । तिर्यगाद्युपगमम् ॥ दिशत्यवकाशम् । दिशअतिसर्जने । ऋत्विगिति दिना निपातनात् क्विन् ॥ दिश्यते इतीवा । दिशेःकर्मणिक्विन् ॥ दृश्ये समतविशेषे ॥ दिग्दृष्टे वर्तुलाकारे इति वैजयन्ती ॥
दिशा । स्त्री । दिशि ॥ भागुरिमतेन टाप् ॥ यथा अकारादयः संज्ञा चोक्ता । यथा । अकारवी दिगुरवि विप्रयुक्ता यशारवि विष्ठतिसा प्रदीप्ता । प्रधूमिता याश्चतिर्याहिने मः शेषाः प्रशस्ताःशुभदाःस्वताःस्युः ॥
दिश्यम् । त्रि । दिग्भवेवस्तुनि ॥ दिग्भिभवम् । दिगादिभ्योयत् ॥ दिगन्तरादागते ॥
दिष्टः । पुं । काले ॥ दारुहरिद्रायाम् ॥ न । भाग्ये । दैवे । भागधेये ॥ त्रि । आदिष्टे । उपदिष्टे ॥ दिशति । दिशअतिसर्जने । क्तिच्क्तौचसंज्ञायामितिक्तः ॥ दृश्ये ॥
दिष्टान्तः । पुं । मरणे ॥ दिष्टस्य दैवस्य अन्तः ॥
दिष्टिः । स्त्री । मुदि । हर्षे ॥ माने ॥ परिमाणे ॥ दिशति । दिशः क्तिच् क्तौचेतिक्तिच् ॥

दिष्ट्या । अ । हर्षे ॥ मङ्गले ॥ भाग्येने त्यर्थे ॥ देशनम् । दिश । सं० क्विप् । दिशंस्त्यायति वा । स्त्यै शब्दस ङ्घातयोः । क्विप् । ष्टुत्वम् । संज्ञा पूर्वकत्वात् सम्प्रसारणं न ॥ यद्वा । दिशति । अघ्न्यादिष्यश्चेति यक् ॥

दिग्धः । त्रि । दातरि ॥

दीक्षणीया । स्त्री । इष्टिभेदे । वैश निक्याम् ॥

दीक्षा । स्त्री । नियमे ॥ य० । एताश्चा न्याश्च सेवेत दीक्षा विप्रो वनेवस न्निति ॥ गुरुमुखात् स्वेष्टदेवस्य मन्त्र ग्रहे ॥ क्रियावती कलात्मा च वागुद्दश्चा नस संज्ञकाः । दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्त्तिताः ॥ दीक्षा च द्वि विधा प्रोक्ता बाह्याभ्यन्तरभेदतः । क्रियादीक्षा भवेद्बाह्या वेधाख्याभ्य न्तरी भवेत् ॥ दिव्यभावप्रदानाच्च क्षालनात् किल्बिषस्य च । दीक्षेति कथिता सद्भिर्भवबन्धविमोचनी ॥ दीयते सकलं देवि गुरवे प्राणसंयुत म् । धनं तच सुवर्णादिपट्टवस्त्रसम न्वयम् ॥ चयं प्राप्नोति सद्भावाच्च नापापस तु चय । तस्माद्दीक्षेतिना मास्याः सर्वशास्त्रेषु सुव्रते ॥ दीयते विमलं ज्ञानं चीयते कर्मवासना । ते न दीक्षेति सा प्रोक्ता मुनिभिर्वेदवे



दिभिः ॥ क्रियाविशेषे ॥ दीक्षा च तृ तीयं जन्म ब्राह्मणादेः । यथाह मनुः । मातुरग्रेधिजननं द्वितीयं मौञ्जिब न्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादिति ॥

दीक्षागुरुः । पुं । मन्त्राद्युपदेशकर्त्तरि । दैशिके ॥

दीक्षान्तः । पुं । अवभृथे ॥ प्रधानया गोदीक्षा तस्या अन्तःसमापको योऽ परीयज्ञोन्यूनत्वादिदोषशान्त्यर्थं प्र धानयागस्य पूरणार्थं प्रतिष्ठार्थं क्रिय ते सोऽवभृथो दीक्षान्तोप्युच्यते ॥

दीक्षितः । त्रि । संजातदीक्षे । स्वीकृ तदीक्षे ॥ य० । अदीक्षितो वि प्रर श्चे रौरवं नरकं व्रजेत् । तस्माद्दी- क्षां प्रयत्नेन सदा कुर्यात्तान्त्रिका दिति ॥ अपि च । अदीक्षितस्य मर्त्त्य रौरवाय प्रकल्पते । न पूजाधि कारोस्ति विना दीक्षां वरानने इति ॥ दीक्षणीयेष्टिकृति ॥ सोमपानाच्च रान्विते । सोमपानवति यागे ध्यादे ष्टरि ॥ दीक्षतेस्म । दीक्षमौण्ड्ये ज्योपनयननियमव्रतादेशेषु । गत्य र्थेतिक्तः ॥ यद्वा । दीक्षासंजाताऽस्य । ता० इतच् ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभव त्पूर्वकंत्वेन मभि भाषेत धर्मविद्-

धरः ॥

दीपनः । पुं ॥ कासमर्द्दे ॥ पलाण्डौ ॥ मयूरशिखायाम् ॥ शालिञ्चशाके ॥ न । तगरमूले ॥ कुङ्कुमे ॥ त्रि । दीपयितरि ॥

दीपनी । स्त्री । पाठायाम् ॥ मेथिकायाम् ॥ यवान्याम् ॥

दीपनीयः । पुं । यवान्याम् ॥ औषधवर्गविशेषे ॥ यथा ॥ पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । दीपनीयः स्मृतो वर्गः कफानिलगदापहः इति वैद्यकम् ॥ त्रि । दीपनयोग्ये ॥

दीपपुष्पः । पुं । चम्पकवृक्षे ॥

दीपमाला । स्त्री । दीपशृङ्खलायाम् । दीपालयाम् ॥ दीपानां माला ॥

दीपमालिका । स्त्री । दीपान्वितायाः अमावास्यायाम् । दीपालयाम् । यथा शब्दौ ॥ दीपमालैव । स्वार्थे कः । इत्यमरः ॥

दीपलक्षणम् । न । प्रज्वलितदीपस्य शुभाशुभफलाय तत्स्वरूपनिरूपणम् ॥ तत्राशुभफलम् । वामावर्त्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिःक्षिप्रं नाशं व्रजति विमलस्नेहवर्त्यन्वितोऽपि । दीपः पापं कथयति फलं शब्दवान् वेपनश्च व्याकीर्णार्च्चिर्विशलभमरुन्नाशमायाति ॥ १ ॥ शुभफलम् । दीपः संहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान् निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्य्यहेमद्युतिः । लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते शेषं लक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः ॥ इति वाराही ८२ ॥

दीपवती । स्त्री । कामाख्यायां नदीविशेषे ॥ यथा ॥ रम्याश्च हिमवज्जाता स्निग्धा दीपवत् सदा । तेन देवमनुष्येषु नदी दीपवती स्मृतेति कालिकापुराणम् ॥

दीपवृक्षः । पुं ॥ दीपाधारे । दीपतरौ ॥ दीवटइतिभाषा ॥ यथा ॥ दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैश्च भैरव । वृक्षेषु दीपोदानम् तु भूमौ कदाचन ॥ सर्वसहा वसुमती सहते न त्विदंद्वयम् । अकार्य्यपादघातञ्च दीपतापं तथैव च ॥ तस्मात् यथा तु पृथिवी तापं नाप्नोति वै तथा ॥ दीपं दद्यात्तु महादेव्यै अन्येभ्योऽपि च भैरवेति ॥

दीपवृक्षकः । पुं । दीपवृक्षे ॥

दीपशिखा । स्त्री । प्रदीपज्वालायाम् ॥

दीपशृङ्खला । स्त्री । दीपमालिकायाम् ॥

दीपाग्निः । पुं । अर्कनिष्कासनाय वह्नि

विशेषे ॥ यथा । ताभ्यां तस्य चतुर्थीभ्यां योगिन् दीपाग्निरुच्यते । तत्तका छस्येत्यर्थः ॥

दीपान्विता । स्त्री । दीपाल्याम् ॥ सा च मुख्यचान्द्रेणाश्विनस्य । गौणया त्वेतत्कार्त्तिकस्यामावास्या । यथा । चेयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि । तस्यां देया नृपे हर्षात् विष्टार्यावैष्णवालये ॥ तत्कर्माणि यथा । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्य्याः शक्त्या देवगृहेष्वपि ॥ चतुष्पथे श्मशानेषु नदीपर्व्वतसानुषु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥ वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् ॥ ब्राह्मणान् भोजयित्वादौ विभोज्य च बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥ स्निग्धै र्मुग्धै र्विदग्धैश्च बान्धवै र्भृत्यकैः सहेति ॥ पद्मपुराणोत्तरखण्डम् ॥

दीपाली । स्त्री । दीपान्वितायाममायाम् । यक्षरात्री । दिवाली इति भाषा ॥ दीपमालायाम् ॥

दीपिका । स्त्री । प्रकाशिकायाम् ॥ रागविशेषे ॥ हिन्दोलरागस्य रागिण्याम् ॥ प्रदोषकाले गायनसम्मिता प्र-



दीपहस्ता ऽरुणगात्रवस्त्रा । सीमन्तसिन्दूरविराजमाना सुरक्तमाल्यान्वितदीपिकेयमिति ध्यानम् ॥ गानकालः सायाह्नः ॥

दीपितः । त्रि । प्रकाशिते ॥ उज्ज्वलिते । निखारा इतिभाषा ॥ प्रदीप्ते ॥

दीपिता । त्रि । दीप्तिकर्त्तरि ॥

दीपोत्सवः । पुं । दीपान्वितायाममायाम् ॥

दीप्तः । पुं । निम्बूके ॥ सिंहे ॥ न । स्वर्णे ॥ हिङ्गुनि ॥ त्रि । ज्वलिते ॥ दग्धे ॥ निर्भासिते ॥ दीप्तिमति ॥ दीप्यते स्म । दीपीदीप्तौ । क्त । श्वीदितो निष्ठायामितिनेट् ॥

दीप्तकम् । न । स्वर्णे ॥

दीप्तजिह्वा । स्त्री । उल्कामुख्याम् ॥ दीप्ता ज्वलन्ती जिह्वा यस्याः । शिवानां वाशितेन जिह्वाज्वलतीति प्रसिद्धिः ॥

दीप्तपिङ्गलः । पुं । सिंहे ॥

दीप्तरसः । पुं । किञ्चुलुके ॥

दीप्तलोचनः । पुं । विडाले ॥

दीप्तलोहम् । न । कांस्ये ॥

दीप्ता । स्त्री । लाङ्गलिकायाम् । अग्निशिखौषधौ ॥ ज्योतिष्मत्याम् ॥ सातलायाम् ॥

दीप्ताक्षः । पुं । मार्जारे ॥

दीप्ताग्नि । पुं । अगस्त्यमुनौ ॥ त्रि । तीक्ष्णजठरानलयुक्ते ॥

दीप्ताङ्गः । पुं । मयूरे ॥

दीप्तिः । स्त्री । प्रभायाम् । रुचि । त्विषि ॥ प्रभाप्रसरे ॥ दीप्यतेऽनया । दीपी० क्तिचावादिभ्यः ॥ लाक्षायां गन्धमृत्तिकायाम् ॥ स्त्रियाः अयत्नजगुणे ॥ कान्तिरेव वयोभोगदेशकालगुणादिभिः । उद्दीपितातिविस्तारं प्राप्ता चेद्दीप्तिरुच्यते ॥ लाक्षायाम् ॥ कांस्ये ॥

दीप्तिकः । पुं । दुग्धपाषाणवृक्षे ॥

दीप्तोपल । पुं । सूर्यकान्तमणौ ॥

दीप्य. । पुं । यमान्याम् ॥ लोचमस्तके ॥ जीरके ॥ न । गुञ्जजीरे ॥ दीपनम् । दीपी० भावे घञ् ॥ दीपेस्तापुषी । तवसाधुरितियत् ॥ त्रि । दीपनीये ॥ दीपायहितम् । अपूपादिभ्यात् पचेयत् ॥

दीप्यक. । पुं । अलङ्कारे ॥ यमान्याम् ॥ लोचमस्तके ॥ न । अजमोदायाम् ॥ यवान्याम् ॥ बर्हिचूडायाम् । रन्दजटेति गौडभाषा ॥

दीप्यमानः । त्रि । प्रकाशमाने ॥

दीप्या । स्त्री । यवान्याम् ॥

दीप्रः । त्रि । दीप्तिमति ॥

दीयमान. । त्रि । वर्त्तमानदानसम्बन्धिवस्तुनि ॥

दीर्घः । पुं । शालाशालवृक्षे ॥ इत्कटे ॥ रामशरे ॥ उष्ट्रे ॥ द्विमात्रवर्णे । गुरुवर्णे ॥ त्रि । आयते ॥ दृणाति । दृविदारणे । घोरुचलात्वृधम् ॥

दीर्घकण्टा । स्त्री । गौरजीरके ॥

दीर्घकण्टकः । पुं । बर्बुरे ॥

दीर्घकण्ठः । पुं । बके ॥

दीर्घकन्दकम् । न । मूलके ॥

दीर्घकन्दिका । स्त्री । मुषल्याम् ॥

दीर्घकन्धरः । पुं । बकपक्षिणि ॥

दीर्घकाण्डः । पुं । गुण्डतृणे । त्रिकोणवर्षे ॥

दीर्घकाण्डा । स्त्री । तिक्ताक्षायाम् ॥

दीर्घकीलः । पुं । } अङ्कोठवृक्षे । निकोचके ॥
दीर्घकीलकः । पुं । }

दीर्घकूरकम् । न । आन्ध्रदेशोद्भवेशालिविशेषे । राजान्ने । धान्यश्रेष्ठे ॥

दीर्घकेशः । पुं । भल्लूके ॥ त्रि । आयतकेशे ॥

दीर्घकोशा । स्त्री । दुर्नामायाम् ॥ दीर्घ.कोशोयस्याः ॥

दीर्घकोशिका । स्त्री । दुर्नामायाम् । झिनुक इति गौडभाषा प्रसिद्धे जलजन्तुविशेषे । सीपीइतिदेशभाषा ॥ दीर्घ.कोशोयस्याः । जातेरित्तिङीष् । संज्ञायां कन् । केय इति ह्रस्वः ॥

दीर्घकोषा । स्त्री । } दीर्घकोषिकायाम् ॥
दीर्घकोषिका । स्त्री । } प्रक्रियापूर्ववत् ॥
दीर्घगतिः । पुं । उष्ट्रे ॥ श०रत्ना० ॥
दीर्घग्रन्थिः । पुं । गजपिप्पल्याम् ॥
दीर्घग्रीवः । पुं । उष्ट्रे ॥ दीर्घा ग्रीवा यस्य सः ॥ नीलक्रौञ्चे ॥ असितामरे ॥
दीर्घघाटिकः । पुं । उष्ट्रे ॥ इतिशब्दमाला ॥
दीर्घच्छदः । पुं । इक्षौ ॥ दीर्घा च्छदा यस्य सः ॥
दीर्घजङ्गलः । पुं । भङ्गानमत्स्ये ॥
दीर्घजङ्घः । पुं । बके ॥ उष्ट्रे ॥ त्रि । दीर्घप्रसृतावति ॥
दीर्घजिह्वः । पुं । सर्पे ॥
दीर्घतरुः । पुं । ताले ॥
दीर्घतिमिषा । स्त्री । कर्कव्याम् ॥
दीर्घतुण्डा । स्त्री । छुछुन्दर्याम् ॥
दीर्घतपाः । पुं । पल्लिवाहे ॥
दीर्घदण्डः । पुं । एरण्डवृक्षे ॥ गुल्मे रुबे ॥
दीर्घदण्डी । स्त्री । गोरक्ष्याम् ॥
दीर्घदर्शी । पुं । पण्डिते । विदुषि ॥ गृध्रे ॥ भल्लूके ॥ त्रि । दूरदर्शके ॥ आगामिकार्यज्ञे ॥ दीर्घं दीर्घादि पश्यति । दृशिर्० । ग्रहादित्वात् णिनिः । सुपीति वा ॥
दीर्घदृष्टिः । पुं । दीर्घदर्शिनि ॥ दूरावलोकनाय यन्त्रविशेषे । दूरवीचणे ॥ दीर्घादृष्टिर्यस्य येन वा ॥
दीर्घद्रुः । पुं । तालवृक्षे ॥
दीर्घद्रुमः । पुं । शाल्मलिवृक्षे ॥
दीर्घनादः । पुं शङ्खे ॥
दीर्घनालः । पुं । यावनाले ॥ रक्तगुण्डे ॥ न । दीर्घरोहिषके ॥
दीर्घनिद्रा । स्त्री । मरणे ॥ कतया निद्रया राजन् दीर्घनिद्राभविष्यति ॥
दीर्घपत्रः । पुं । कलिङ्गे । धुन्धुटवसौ ॥
दीर्घपटोलिका । स्त्री । धुंदुल इति गौडभाषाप्रसिद्धे लताफलविशेषे ॥
दीर्घपत्रः । पुं । जलजमधूलके ॥ रसोनभेदे । राजपलाण्डौ ॥ विष्णुकन्दे ॥ हरिदर्भे ॥ कुन्दरे ॥ ताले ॥ कुपीलौ ॥
दीर्घपत्रकः । पुं । एरण्डे ॥ रक्तलशुने ॥ विज्जले ॥ वेतसे ॥ करवीरवृक्षे ॥ जलजमधूके ॥ लशुने ॥ दीर्घाणि पत्राणि यस्य सः । स्वार्थे कः ॥
दीर्घपत्रा । स्त्री । अल्पजम्बूवृक्षे ॥ शालपर्ण्याम् ॥ दमन्याम् ॥ चेंचूशाके ॥ चिरपर्णिकायाम् ॥ केतक्याम् ॥ गन्धपत्रायाम् ॥ डोडीचुपे ॥ दीर्घाणि पत्राणि यस्याः ॥
दीर्घपत्रिका । स्त्री । घृतकुमार्याम् ॥

शालपर्ण्याम् ॥ श्वेतवचायाम् ॥

दीर्घपत्री । स्त्री । पलाशीलतायाम् ॥ महाचञ्चुशाके ॥

दीर्घपर्णी । स्त्री । पृश्निपर्ण्याम् ॥

दीर्घपल्लवः । पुं । शणवृक्षे ॥ न । आयतच्छदे ॥ त्रि । दीर्घच्छदवति ॥

दीर्घपात् । पुं । कङ्कपक्षिणि ॥

दीर्घपादः । पुं । कङ्कपक्षिणि ॥ दीर्घौ पादौ यस्य ॥

दीर्घपादपः । पुं । ताले ॥ पूगे ॥

दीर्घपृष्ठः । पुं । सर्पे ॥ दीर्घपृष्ठमस्य ॥

दीर्घफलः । पुं । आरग्वधे ॥ दीर्घाणि फलान्यस्य ॥

दीर्घफलकः । पुं । अगस्त्यवृक्षे ॥

दीर्घफला । स्त्री । कपिलद्राक्षायाम् ॥ जतुकायाम् ॥

दीर्घमारुतः । पुं । हस्तिनि ॥ दीर्घो मारुतो वायुर्यस्य ॥

दीर्घमूलः । पुं । मोरटलतायाम् ॥ विल्वान्तरवृक्षे ॥ न । लामज्जके ॥

दीर्घमूलकम् । न । मूलके ।

दीर्घमूला । स्त्री । शालपर्ण्याम् ॥ श्यामलतायाम् ॥ दीर्घमूलं यस्याः ॥

दीर्घमूली । स्त्री । दुरालभायाम् ॥

दीर्घरदः । पुं । शूकरे ॥ दीर्घौ रदौ यस्य ॥ त्रि । आयतदन्ते ॥

दीर्घरसनः । पुं । सर्पे ॥ दीर्घा रसना जिह्वा यस्य ॥

दीर्घरागा । स्त्री । हरिद्रायाम् ॥

दीर्घरात्रम् । न । चिरकाले ॥

दीर्घरोमा । पुं । भल्लूके ॥

दीर्घरोहिषकम् । न । कत्तृणविशेषे । हृद्यकाण्डे ॥

दीर्घवंशः । पुं । नले ॥ आयते कुले । दृढध्वजे च ॥

दीर्घवक्त्रः । पुं । हस्तिनि ॥

दीर्घवल्ली । स्त्री । पलाश्याम् ॥ पातालगरुडीलतायाम् ॥ महेन्द्रवारुण्याम् ॥ आयतायां लतायाम् ॥

दीर्घवाला । स्त्री । चमर्याम् ॥

दीर्घवृन्तः । पुं । श्योनाकद्रुमे ॥ दीर्घं वृन्तमस्य ॥

दीर्घवृन्तकः । पुं । श्योनाकभेदे ॥

दीर्घवृन्ता । स्त्री । इन्द्रचिर्भिट्याम् ॥

दीर्घवृन्तिका । स्त्री । एलापर्ण्याम् ॥

दीर्घशरः । पुं । यावनाले ॥

दीर्घशाखः । पुं । शणवृक्षे ॥ शालवृक्षे ॥

दीर्घशाखिका । स्त्री । नीलाम्लीक्षुपे ॥

दीर्घशिम्बिकः । पुं । चणे ॥ इति राजनिर्घण्टः ॥

दीर्घशूकः । पुं । शालेर्जात्यन्तरे ॥

दीर्घशूककम् । न । राजान्ने ॥

दीर्घसत्रम् । न । यज्ञविशेषे ॥ तीर्थविशेषे ॥

दीर्घसुरतः । पुं । कुक्कुरे । शुनि ॥ दीर्घसुरतंमैथुनमस्य ॥

दीर्घसूत्रः । त्रि । चिरक्रिये । दीर्घकालेन क्रियानुष्ठातरि ॥ दीर्घसूत्रंव्यवसायस्य ॥ अदीर्घसूत्रश्च भवेत् सर्वकर्मसु पार्थिवः । दीर्घसूत्रस्य नृपतेः कर्महानि र्ध्रुवं भवेत् ॥ रागे दर्पेच मानेच द्रोहे पापेच कर्म्मणि ॥ अप्रियेचैवकर्त्तव्ये दीर्घसूत्रः प्रशस्यते इतिमत्स्यपुराणम् ॥ न । विस्तृततन्तौ ॥

दीर्घसूत्री । त्रि । दीर्घसूत्रे । निरन्तरयज्ञानसम्पन्नकलुषितान्तःकरणत्वेनातिमन्थरप्रवृत्तौ । यद्घकर्त्तव्यं तन्मासेनापि करोति नतेनदीर्घसूत्री ॥

दीर्घसोमः । पुं । सोमयागविशेषे ॥

दीर्घस्कन्धः । पुं । तालवृक्षे ॥

दीर्घा । स्त्री । पृश्निपर्ण्याम् ॥ दीर्घप्रमाणायाङ्गयि ॥

दीर्घाध्वगः । पुं । लेखहारे । धावडिया० इति गौडभाषा ॥ उष्ट्रे ॥

दीर्घायुधः । पुं । कुन्तास्त्रे ॥ दीर्घमायुधमस्य ॥ शूकरे ॥ दीर्घमायुधोऽस्य ॥

दीर्घायुष्यः । पुं । श्वेतमन्दारके ॥

दीर्घायुः । पुं । शाल्मलिद्रुमे ॥ वायसे ॥ जीवकवृक्षे ॥ मार्कण्डेयमुनौ ॥ त्रि । आयुष्मति । चिरजीविनि ॥ दीर्घमायुर्यस्य ॥

दीर्घार्क्कः । पुं । श्वेतमन्दारे ॥

दीर्घिका । स्त्री । वाप्याम् । अधिकायतायांचतुरस्रायां वाप्याम् ॥ विश्वतधनुः परिमिते जलाशये इतिगौडाः ॥ दीर्घैव । संज्ञायांकन् ॥

दीर्घिमा । पुं । दीर्घत्वे ॥ दीर्घस्यभावः । इमनिच् ॥

दीर्घौषधः । पुं । उज्जयीम् ॥ इ०राजि० ॥

दीर्णः । त्रि । विदारिते ॥ भीते ॥

दीविः । पुं । किकीदिवौ ॥

दुःकूलः । पुं । चोरनामगन्धद्रव्ये ॥

दुःखम् । न । संसारे ॥ मनोधर्मविशेषे ॥ न्यायमते आत्मगुणभेदे ॥ तत्तु अधर्मजन्यं सर्वेषां प्रतिकूलतसिति भा० प० ॥ पीडायाम् । बाधायाम् । कष्टे । सर्वेषांप्रतिकूलवेदनीये ॥ बाधनालक्षणं दुःखम् । २१ ॥ बाधनापीडा तदेव लक्षणंस्वरूपं यस्य । तथाचानुभवसिद्धदुःखत्वजातिरेवलक्षणं शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् । सुखेचदुःखानुषङ्गात् दुःखव्यवहारो गौण इति । वस्तुनोऽसत्सत्त्वहमेचित्तस्यराजसे परिणामे बाधनालक्षणे ॥ तद्दुःखंत्रिविध

म् । आध्यात्मिकं शारीरं मानसञ्च व्याधिवशात् कामादिवशाच्च भवति । आधिभौतिकं व्याघ्रादिजनितम् ॥ आधिदैविकं ग्रहपीडादिजनितम् ॥ * ॥ अधर्म्मसाधारणकारणके प्रतिकूलवेदनीये ॥ निरुपाधिद्वेषविषयीभूतचित्तवृत्तिरधर्म्मासाधारणकारणिका दुःखम् ॥ इष्टवियोगानिष्टसंयोगजे अध्यात्मादिनिमित्ते ॥ ता स्वाखिन्न्यां पीडायाम् ॥ रजसि ॥ न दुःखं पञ्चभिः सह ॥ दुष्टानि खान्यस्मिन् ॥ यथा । दुर्मिन्द्रियं खनति । खनु० । अन्ये० डः ॥ यद्वा । दुःखयति । सुखदुःखतत् क्रियायाम् । चु० । पचाद्यच् ॥ दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः यदाघात् प्राणिनस्तदुपघाताय प्रवर्त्तन्ते ॥

दुःखग्रामः । पुं । संसारे ॥

दुःखत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकस्वरूपे ॥ तत्राध्यात्मिकं द्विविधम् । शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिमित्तम् । सर्व्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा । आधिभौतिकम् आधिदैविकञ्च । तत्राधिभौतिकम् मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकम् यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम् ॥ प्रत्यात्मवेदनीयो रजःपरिणामभेदो दुःखम् । दुःखानां त्रयम् ॥

दुःखत्रयाभिघातः । पुं । दुःखत्रयसम्बन्धे ॥ दुःखत्रयं प्रत्यात्मवेदनीयो रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम् । तदनेन दुःखत्रयेणान्तःकरणवर्त्तिना प्रतिकूलतया चेतनाशक्तेरभिसम्बन्धोऽभिघातः ॥

दुःखदिरः । पुं । दुष्खदिरे । मेदासारे ॥

दुःखदोह्या । स्त्री । दुर्द्दरगव्याम् । कष्टायाम् ॥ दुःखेन दुह्यते । दुह० । खल्लोपश्चेत् ॥

दुःखावसानम् । न । दुरन्ते ॥

दुःखितः । त्रि । दुःखिनि ॥ संसारिणि ॥ दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः । तस्य त्यागः कृतो येन स सुखी नापरः प्रिये इति कुलार्णवतन्त्रम् ॥ ईर्ष्यादियुक्ते । यथोक्तं महाभारते । ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिता इति ॥ * ॥

त्यक्ता तु सुखभोगेच्छां सर्वसत्त्वसुखैषिणः । भवन्ति परदुःखेन साधवो नित्यदुःखिताः इति वह्निपुराणम् ॥ दुःखं सञ्जातमस्य । ता० इतच् ॥

दुःखी । त्रि । दुःखान्विते । यथात्मादिदुःखवर्त्ति ॥ दुःखमस्त्यस्य । सुखादिभ्यश्चेतीनिः ॥ उपाधिजनितोयोऽयं चिदाभासोऽवभासते । दुःखाद्यनुभवं सम्यक् तत्रैव विनिवेशितः ॥ दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् । दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ॥ नर्त्तेऽस्यादिक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ शरीरेन्द्रियसङ्घात आत्मत्वेनाभिमानिनाम् । चिदाभासयुतां बुद्धिं विभिषन्ति सुखादयः ॥

दुःखक्रमम् । न । अशुभसूचके निमित्ते ॥ यथा । कन्याचर्मसु पाणिसपक्षपवाङ्गारेन्धनक्षीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः । नग्नाभ्यक्तविमुक्तकेशपतितव्यङ्गक्षुधार्त्ता असृक् स्त्रीपुष्पं शरटप्रवेशदहनं मार्जारयुद्धं क्षुतम् ॥ कापायी गुडतक्रपङ्कविधवाः कुब्जाः कुटुम्बे कलिर्वस्त्रादेः स्खलनं लुलापसमरं कृष्णानि धान्यानि च । कार्पासं वमनञ्च गर्दभरवो दक्षेऽतिरुट् गर्भिणी मुण्डार्द्राम्बरदुर्वचोऽन्धबधिरोदक्यानदृष्टाःशुभाः ॥ कृष्णाम्बराङ्गधविवेषनाशा कृष्णस्रजं मूर्द्धनि धारयन्ती । दृष्टाप्रकोपाय दिकृष्णवर्णा नारी नरैः स्वादिपदो भवन्तीति ॥

दुःशासनः । पुं । दुर्योधनात्मजे भारतप्रसिद्धे क्षत्रिये ॥ दुःखेन शास्यते । शासु० भाषायां शासियुधीतियुच् ॥

दुःशीलः । त्रि । दुष्टस्वभावे ॥ दुष्टं शीलं यस्य सः ॥

दुःषमम् । अ । गर्ह्ये । निःषममिव्यर्थे ॥ दुष्टं समम् । तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावत्वम् । सुविनिर्दुर्भ्य इति षत्वम् ॥

दुःसमम् । अ । असमञ्जसे ॥

दुःसहः । त्रि । असह्ये ॥

दुःसहा । स्त्री । नागदमन्याम् ॥

दुःसाक्षी । त्रि । कूटसाक्षिणि ॥

दुःसाधी । पुं । दौःसाधिके । द्वारपाले ॥

दुःसाध्यः । त्रि । दुःखनिष्पाद्ये ॥ दुःखेन साध्यते निष्पाद्यते । साध० । यत् ।

दुःस्थः । त्रि । दुर्गते ॥ मूर्खे ॥ दुःखेन तिष्ठति । सुपिस्थ इतिकः ॥ लुब्धे ॥

दुःस्थितः । त्रि । अनवस्थिते ॥ ष्ठा० । क्तः । चलितस्थतीत्युत्वम् ॥

दुग्धम्

दुःस्पर्शः । पुं । धवासा । इतिजवासा इति चप्रसिद्धे धन्वयासे । दुरालभायाम् ॥ खराकरञ्जे ॥ त्रि । खरस्पर्शे ॥ दुःखे नस्पृश्यते । स्पृशस्पर्शने । ईषद्दुरिति खल् ॥

दुःस्पर्शा । स्त्री । कण्टकार्याम् ॥ आकाशवल्ल्याम् ॥ कपिकच्छ्वाम् ॥ दुरालभायाम् ॥ टाप् ॥

दुःस्फोटः । पुं । शस्त्रभेदे ॥ इतिहेम० ॥

दुकूलम् । न । सूक्ष्मवाससि । सूक्ष्मवस्त्रे ॥ चौमाम्बरे ॥ दुष्ट कूलति । कूलआवरणे । दगुपधेतिकः । पृ० ॥ यद्वा । दवति । दुगतौ । पिबा० उलच् । धातोः कुक् ॥

दुगूलम् । न । दुकूले ॥ इतिहेमचन्द्रः ॥

दुग्धम् । त्रि । प्रपूरिते ॥ कृतदोहे ॥ न । चीरे । पीयूषे । ऊधस्ये । स्तन्ये । पयसि । अमृते । बालजीवने ॥ विदाहीन्यन्नपानानि यानिभुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थंभोजनान्ते पय:पिबेत् ॥ दुग्धतेस्म । दुहप्रपूर्णे । क्तः ॥ दुग्धं सुमधुरं स्निग्धं वातपित्तहरं सरम् । सद्यःशुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम् ॥ जीवनं बृंहणं बल्यं मेध्यं वाजीकरं परम् । वयःस्थापकमायुष्यंसन्धिकारि रसायनम् ॥ विरेकवान्तिव

दुग्धम्

स्तीनां तुल्य मोजो विवर्द्धनम् । जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च ॥ ग्रहण्यां पाण्डुरोगेच दाहे तृषि हृदामये । शूलोदावर्त्तगुल्मेषु वस्तिरोगे गुदाङ्कुरे ॥ रक्तपित्ते ऽतिसारेच योनिरोगे श्रमे क्लमे । गर्भस्रावे चसततं हितं मुनिवरैः स्मृतम् ॥ बालवृद्धचतक्षीणाः चुद्व्यवायकृशाश्चये । तेभ्य: सदातिशयितं हित मेतदुदाहृतम् ॥ * ॥ धारोष्णं गो:पयो बल्यं लघु शीतं सुधासमम् । दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् ॥ धारोष्णं शस्यते गव्यंधाराशीतन्तु माहिषम् । शृतोष्णमाविकंपथ्यं शृतशीतमजाप्रयः ॥ आमंचीरं अभिष्यन्दि गुरु श्लेष्मामवर्द्धनम् । ज्ञेयं सर्वमपथ्यं तद्गव्यमाहिषवर्जितम् ॥ नारीचीरन्त्वाममेवहितंनतुशृतंहितम् । शृतोष्णंकफवातघ्नं शृतशीतन्तुपित्तनुत् ॥ * ॥ यदुष्णं चीरशेषं सामाल्लघुतरं पयः ॥ * ॥ जलेनरहितं दुग्धं मतिपक्वं यथायथा । तथातथा गुरु स्निग्धं वृष्यं बलविवर्द्धनम् ॥ * ॥ मेयूषञ्च किलाटश्चचीरशाकंतथैवच । तक्रपिण्ड इमे सर्व्वा बृंहणा बलवर्द्धना ॥ गुरवः श्लेष्मलाश्चैतावातपित्तविना

ग्रनाः। दीप्ताग्नीनां विनिद्राणां च वायेचातिपूजिताः॥ * ॥ मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत्। लघुर्वलकरोऽत्युष्णोऽमीरटःस्यात् सितायुतः॥ खण्डेन सहितं दुग्धं कफकृत् पवनापहम्। सितासितोपलायुक्तं शुक्लदं त्रुमिलापहम्॥ सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं स्मृतम्॥ *॥ रात्रौ चन्द्रगुणाधिक्या व्यायामाकरणा तथा। प्राभातिकं पयः प्रायःप्रादोषात् गुरु शीतलम्॥ दिवाकरकरांतापा व्यायामकरणात् पयः। प्राभातिका त्तुप्रादोषं लघु वातकफापहम्॥ *॥ पूर्वाह्णे दंहण वन्हिदीप्तिजनकं पूर्वाह्णकाले पयोमध्याह्नेसुवलावहं कफहरं पित्तापहं दीपनम्। बालेवृद्धिकरं क्षये क्षयहरं वृद्धेषु रेतोवहं रात्रौ क्षीरं मनेकदोषशमनं पथ्यं सदाचक्षुषोः॥ * ॥ यद्रक्ति पर्थ्य निशिकेवलं पयोऽभोज्यं न तेनेश्वसहोदनादिकम्। अजीर्णं भयमीतशर्वरी चीरस्य पीतस्य नशोप शुतम्जेत्॥ * ॥ विदाहीन्यन्नपानानि दिवाभुक्तानि यत्नरः। तद्दिदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदापिवेत्॥ * ॥ दीप्तानले कृशे पुंसि बाले वृद्धे पयःप्रिये। मतं



हिततमं दुग्धं सद्यःशुक्रकरं यतः॥ * ॥ मथितदुग्धगुणाः। क्षीरं गव्यमथाजं वा कोष्णं दण्डाहतं भवेत्। लघु वृष्यं ज्वरहरं वातपित्तकफापहम्॥ * ॥ दुग्धफेनगुणाः। गोदुग्धप्रभवं किंवा ह्यजीदुग्धसमुद्भवम्। भवेत्फेनं त्रिदोषघ्नं रोचनं बलवर्द्धनम्॥ वह्निवृद्धिकरं पथ्यं सद्यस्तृप्तिकरं लघु। अतिसारेऽग्निमान्द्ये च ज्वरेजीर्णे प्रशस्यते॥ * ॥ विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः। वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद्यतः॥ ग्राम्यानूपफलमिथ्याककुलत्थलवणादिभिः। करीरदधिमाषैश्च प्रायः क्षीरविरुध्यते॥ * ॥ केषाञ्चित् पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः। देशान्तशीतं महिषीपयस्यं गव्यन्तु धारोष्णमिदं प्रशस्तम्॥ *॥ वृष्यं वृंहण मग्निवर्द्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने वलदायकं रतिकरं कृच्छ्राश्मविच्छेदनम्। बाल्येवह्निकरं ततोबलकरं वार्धप्रदं वार्द्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा॥ * ॥ क्षीरं मुहूर्त्तपितयोषितं यद्दशसमेतद्विगुतिं प्रयाति। पयान्तु दोषं गुरुतेतदूर्द्धं विषोपमं स्याद्दुषितं टयात्॥ ई.

म् ॥ * ॥ जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् । तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥ * ॥ चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्त्तितमुत्तमं तत् । सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम् ॥ * ॥ गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् । क्षीरं समर्थं पथ्यं यद्वा सात्म्यञ्च सर्वदा ॥ * ॥ क्षीरं न भुञ्जीत कदाप्यसंसं लवणेन सार्द्धम् । पिष्टान्नसन्धानकमाषमुद्गकोषातकीकन्दफलादिकैश्च ॥ * ॥ मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवरसादिमिश्रितं मारयत्यबुधमाशु सर्पवत् ॥ * ॥ स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ * ॥ नित्यं तीक्ष्णाग्निना सेव्यं सुपक्वं माहिषं पयः । पुष्यन्ति धातवः सर्वे वपुःपुष्टिविवर्द्धनम् ॥ क्षीरं गवाजकादेः मधुरं क्षारं नवप्रसूतानाम् । रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते ॥ * ॥ मधुरं विदोषशमनं क्षीरं मध्यप्रसूतानाम् । लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ गुणहीनं निःसारं,

क्षीरं प्रथमप्रसूतानाम् । अध्यवयसां रसायनमुक्तमिदं दुर्बलानां वृद्धानाम् ॥ तासां मासत्रयादूर्द्ध्वं गुर्विणीनाञ्च यत्पयः । तद्वाष्कयणं क्षीरं मधुरं पित्तशोषकृत् ॥ * ॥ दुग्धांशं शीतलं स्वादु वृष्यं बलकरं गुरु । वातपित्तापहं रुच्यं हंसं बलवर्द्धनम् ॥ यद् भिषग्वराः प्राहुस्तथ्यं न संशयः ॥

दुग्धकन्दगणः । पुं । अश्वगन्धादिषु ॥ अश्वगन्धा च मुसली विदारी च शतावरी । क्षीरवाराहिका चेति दुग्धकन्दगणस्त्वयम् ॥

दुग्धकूपिका । स्त्री । पक्वान्नविशेषे ॥ यथा । तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन । दृढकूपिकां विदध्यात् ताञ्च पचेत् सर्पिषा सम्यक् ॥ कथितां केशरितसिताघनपयसा पूर्णगर्भाञ्च । मृष्टकमुद्रितवदनां तस्य हुतेन पक्ववदनाञ्च ॥ अतिपाण्डुखण्डपाके क्षपयेत् कर्पूरवासिते कुशलः ॥ अथ दुग्धकूपिका साऽबल्या पित्तानिलापहा हृद्या । शीता पुष्ट्या गुर्वी शुक्रकरी तर्पणी रुच्या । विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम् ॥

दुग्धतालीयम् । न । दुग्धाग्रे ॥ क्षीर

फेने ॥ दुग्धाग्रे ॥

दुग्धपाचनम् । न । वत्सके । दुग्धपाकपात्रे ॥ इतिहारावली ॥

दुग्धपाषाणः । पुं । दुग्धपाषाणके ॥

दुग्धपाषाणकः । पुं । शिरगोला इति गौडभाषा प्रसिद्धे वृ० विशेषे । चीर्योस् । गोमेदसन्निभे । वज्राभे ॥

दुग्धपुच्छी । स्त्री । दुग्धपेया इतिगौडभाषाप्रसिद्धे वृ० विशेषे । सेवकाली । मत्स्याक्षीम् ॥ इतिशब्दचन्द्रिका ॥

दुग्धफेनः । पुं । सशर्करदुग्धफेने । चीरविषाणीरे । शार्करे ॥ इतिराजनि० ॥

दुग्धफेनकः । पुं । दुग्धफेने ॥

दुग्धफेनी । स्त्री । चुद्रक्षुपविशेषे । पयः फेन्याम् । गोजापर्णीम् ॥

दुग्धाब्धितनया । स्त्री । लक्ष्म्याम् ॥

दुग्धाश्मा । पुं । दुग्धपाषाणे ॥

दुग्धिका । स्त्री । चीराण्याम् । स्वादुपर्णीम् । दुद्धी इति ख्यातायाम् ॥ दुग्धमस्याः । अतइनिठना वितिठन् ॥ दुग्धिकोष्णा गुरू रूक्षा वातला पुष्टदायिनी । स्वादुचीरा कटु स्निग्धा सृष्टमूत्रमला पटुः ॥ स्वादी विष्टम्भिनी दृष्या कफकुष्ठकृमिप्रणुत् ॥ गन्धिका इति गौडभाषाप्रसिद्धायामुत्तमफलिन्याम् । युग्मफलायाम् ॥

दुग्धिनिका । स्त्री । रक्तापामार्गे ॥

दुग्धी । स्त्री । दुग्धिकायाम् । चीराव्याम् । दुद्धी इति भाषा ॥ दुग्धपाषाणे ॥

दुच्छकः । पुं । गन्धद्रव्याम् । मुराभागन्धद्रव्ये ॥ विशाराद्यवकायके ॥

दुडिः । स्त्री । कच्छप्याम् ॥ इतिमुकुटः ॥

दुष्पकः । त्रि । दुष्टचित्ते ॥

दुष्पुभः । पुं । कुक्कुभसर्पे ॥

दूनः । त्रि । पीडिते ॥ टुदुउपतापे । स्वादिः । कर्मणि क्तः ॥

दुद्रुमः । पुं । हरितपलाण्डौ पलाण्डौ । श्यामाण्डे ॥ दुष्टोद्रुमः ॥

दुधुक्षन् । त्रि । दोग्धुमिच्छति ॥ दुहेः सन्नन्ताच्छतृः पृषादेशः । घत्वधत्वे ॥

दुन्दमः । पुं । दुन्दुभौ ॥ इतिशब्दरत्नावली ॥

दुन्दुः । पुं । वसुदेवे ॥ दुन्दुभिवाद्ये ॥

दुन्दुभिः । पुं । वरुणे ॥ दैत्यभेदे ॥ शकटुन्दुकायाम् । भेर्याम् । आनके ॥ वर्तुलमुखमर्वदहकाननो दुन्दुभिरुच्यते । इतिकेचित् ॥ दुन्दुइतिशब्देनो भाति । उभपूरणे । इगुपधात्किदिती न् । शकन्ध्वादिः ॥ यद्वा । दुन्दइति एतच्छब्देनानुकरणम् ॥ यद्वा । दामभतिशब्देन । उभ० । सर्वधातुभ्यइन् । पृ० ॥ रत्नभेदे ॥ विषे ॥ चट्

पञ्चाशत्तमे वत्सरे ॥ सुभिक्षं जायते लोकः सर्वोपद्रववर्जितः । प्राणिनां जायते हर्षो दुन्दुभौ वत्सरे ध्रुवम् ॥ स्त्री । अक्षे । पाशके ॥ अक्षविन्दुचिह्नद्वये ॥ अक्षविन्दुचिह्नवन्दे ॥ विन्दुत्रितयचतुष्कादिस्वर्णगूढादि-मयचतुःलोपकरणे पाशटी इति गौड-भाषा प्रसिद्धे इति केचित् ॥

दुन्दुमारः । पुं । धुन्धुमारे ॥

दुम्बकः । पुं । मेदःपुच्छे एडके । दुम्बा इति ख्याते मेषविशेषे ॥

दुर् । अ । निषेधे ॥ दुष्टे ॥ निन्दायाम् । अवक्षेपणे ॥ दुःखे ॥

दुरक्षः । पुं । कपटपाशके ॥

दुरतिक्रमः । त्रि । दुरत्यये ॥ दुःखेनातिक्रमो यस्य ॥

दुरत्ययः । त्रि । दुरतिक्रमे । दुर्गमनीये ॥ दुस्तरे ॥ दुःखेनात्ययो यस्य ॥

दुरदृष्टम् । न । दुर्भाग्ये ॥

दुरधिगमः । त्रि । दुर्ग्रहे । दुःखेनाधिगन्तुमशक्ये ॥ दुष्प्रापे ॥ दुर्बोधे ॥ दुःखेनाधिगमोऽस्य ॥

दुरध्यः । त्रि । दुष्प्रापे ॥ दुःखगताविच्यस्मात् कृच्छ्रार्थे खल् ॥ अध्येतुमशक्ये ॥ इङ् अध्ययने । अस्मात् खलि दुरध्येय इत्येव रूपम् ॥

दुरध्वः । पुं । कुपथे । निन्दावर्त्मनि ॥ दुष्टोऽध्वा । प्रादयो गताद्यर्थे इति समासः । उपसर्गादध्वन इत्यच् ॥

दुरन्तः । त्रि । मृगयादिव्यसनेषु । दुःखावसानेषु ॥ तेच आदौ सुखयन्ति अन्ते दुःखानि कुर्वन्ति । दुर्लभोऽन्तो यस्य वा । नहि व्यसनी तेभ्यो निवर्त्तयितुं शक्यते ॥

दुरन्तभावः । त्रि । गभीराभिप्राये ॥

दुरभिग्रहः । पुं । अपामार्गे ॥ त्रि । दुःखग्राह्ये ॥

दुरभिग्रहा । स्त्री । कपिकच्छ्वाम् ॥ दुरालभायाम् ॥

दुराकः । पुं । म्लेच्छभेदे ॥

दुराग्रहः । पुं । युक्तिरहितेऽभिनिवेशे ॥ त्रि । तद्वति ॥

दुराचारः । पुं । विरुद्धाचरणे ॥ त्रि । निन्दिताचारवति ॥ दुर्दुष्टः शास्त्रविहितः आचारो यस्य ॥ दुराचाराद्दुर्धिचेष्टाद्दुष्प्रज्ञाः प्रियसाहसाः । असन्त इति विख्याताः सन्तश्चाचारलक्षणाः इति महाभारतम् ॥

दुरात्मा त्रि । दुष्टचित्ते ॥

दुराधर्षः । पुं । गौरसर्षपे ॥ त्रि । अधर्षणीये ॥ दुष्प्रापे ॥ दैत्यादिभिर्धर्षयितुमशक्यायां परदेवतायाम् ॥ दुःखेन आईषदपि धर्षयितुमशक्यः । धृष प्रसहने । आङ्पूर्वादस्मादीप-

दुःसुषुवृक्ष्वाकृच्छ्रार्थेषु खलितिकर्म-णिखल् ॥

दुराधर्षा । स्त्री । कुटुम्बिनीवृक्षे ॥

दुरानमः । त्रि । आनमयितुमशक्ये ॥ नमेर्ण्यन्तात्खल् ॥

दुरापः । त्रि । दुर्लभे ॥

दुरारुहः । पुं । विल्वे ॥ नारिकेले ॥

दुरारुहा । स्त्री । खर्ज्जूर्याम् ॥

दुरारोहः । पुं । शरटे ॥ त्रि । दुःखेना रोहणीये ॥

दुरारोहा । स्त्री । शाल्मलिद्रुमे ॥ श्री वह्ल्याम् ॥ खर्ज्जूर्याम् ॥ दुष्टोदुःखेन वा आरोहणीयस्याः ॥

दुरालभा । स्त्री । यवासप्रभेदे । दुस्पर्शायाम् ॥ यवासस्य गुणै स्तुल्या बुधैरुक्ता दुरालभा ॥ त्रि । दुःखेन स्पर्शार्हे॥ दुःखेन आलभ्यते । दुःल भष् ० । ईषद्दुःसुष्वितिखल् । आग मशासनस्यानित्यत्वान्नुम् ॥

दुरालम्भा । स्त्री । दुरालभायाम् ॥ दुःखेन आलभ्यते । दुःलभ० । ईषद्दुः सुष्वितिखल् । नुम् ॥

दुरालापः । त्रि । गालिप्रदे ॥ पु । दुष्ट भाषणे ॥

दुराशय । त्रि । दुष्टाभिप्राये ॥

दुरासम् । त्रि । आसितुमशक्ये ॥ आसेरकर्मकात् ईषद्दुरित्यादिनाखल्



तयोरेवकृच्छ्रयुक्ता खलर्था इतिनियमात् ॥

दुरासदः । त्रि । दुष्प्रापे । दुःखेनासादनीये । दुष्टत्वने ॥ दुर्द्धर्षे ॥

दुरितम् । न । पापे ॥ यथा । निषद्यनैमित्तिकैरेवकुर्व्वाणोदुरितक्षयमिति ॥ इलोभावेक्त. । दुष्टमितगमनमनेन ॥

दुरितदमनी । स्त्री । पापनाशिन्याम् ॥ शम्याम् ॥ दुर्गायाम् ॥

दुरिष्टकृत् । पु । अभिचारकार्त्तरि ॥ यथा । दैवसित्पिकृदेष्टा रक्षदूपयिता चैव । सयाति कृमिभक्षं मैत्रैग्रीमे च दुरिष्टकृदिति विष्णुपुराणम् ॥

दुरीश. । त्रि । दुष्टप्रभौ ॥

दुरीषणा । स्त्री । शापे ॥ इतिशब्दार्थ माल्पतरू. ॥

दुरुक्तम् । न । शापे ॥

दुरुच्छेदः । त्रि । दुर्वारे ॥

दुरुत्तर. । त्रि । दुस्तरे ॥

दुरुदाहर । त्रि । दुर्वचे॥ हरते खल्॥

दुरुधरा । स्त्री । द्वितार्के सुनफा ऽन फादुरुधरास्वान्यो भयस्थैर्ग्रहैः शीतांशोरितियुक्तेयोगविशेषे ॥ एतदेवस्पष्टीकृतं कल्याणवर्म्मणा । रविवर्ज्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधराके

महुमसंचितोतोन्य इति ॥

दुरुपसदः । त्रि । दुःसहे ॥

दुरूहः । त्रि । दुर्विज्ञेये ॥

दुरोणः । पुं । कलशे ॥ यज्ञगृहे ॥

दुरोदरः । पुं । द्यूतकारे ॥ पणे ॥ अक्षे ॥ न । द्यूतभेदे । पाशकक्रीडायाम् ॥ दुष्ट मासमन्तात् उदरमस्य ॥ दुष्ट मुदरमस्य वा । पृ० ॥

दुर्ग्गः । पुं । असुरभेदे ॥ यंहत्वाचण्डिकायास्तु दुर्गानामबभूवह ॥ गुग्गुलौ ॥ न । गिर्य्यादिभि र्दुर्गमे पुरे । कोट्टे । गड इति कोट इतिच भाषाप्रसिद्धे राज्ञां वासस्थाने ॥ तत्षड्विधं यथा । धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेवचा । नृदुर्गं गिरिदुर्गञ्च समाश्रित्य वसेत् पुरम् । इत्युक्तेः ॥ एषां त्रिधा बहुगुणत्वेन गिरिदुर्गं विशिष्यते ॥ तत्र । श्रीण्याद्यान्याश्रिता स्तेषां मृगगर्त्ताश्रयाप्चराः । श्रीण्युत्तराणिक्रमशः प्लवङ्गमनरामराः ॥ यथा दुर्गाश्रयानेतान् नोपहिंसन्ति शत्रवः । तथारयो न हिंसन्ति नृपंदुर्गं समाश्रितम् ॥ एकः शतंयोधयतिप्राकारस्थोधनुर्द्धरः । शतंदशसहस्राणि तस्माद्दुर्गंविधीयते ॥ तत् स्यादायुधसम्पन्नं धनधान्येन वाहनैः । ब्राह्मणैः शिल्पिभि र्यन्त्रै र्यवसेनोदकेन च ॥ तस्यमध्ये सुपर्य्याप्तं कारयेद्गृहमात्मनः । गुप्तंसर्वर्त्तुकं शुभ्रंजलवृक्षसमन्वितमितिमनुः ॥ अपिच । दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् । शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥ गोपुरं सकपाटञ्च तत्र स्यात् सुमनोहरम् । सपताकं गजारूढो येन राजाविशेत् पुरमितिमात्स्ये ॥ १९१ अध्यायः ॥ अस्यावश्यकत्वं शुभाशुभञ्चोक्तं कालिकापुराणे ८५ अध्याये राजनीतिविशेषे ॥ त्रि । दुर्गमे । दुर्गमप्रदेशे । उच्छ्रिते । दुःसम्पाद्ये । कोटादौ । प्राकारे ॥ दुस्तरे ॥ कामक्रोधादिसंसार दुःखसाधने ॥ दुःखेनगच्छत्यनेनेतिविग्रहे सुदुरोरधिकरणइति दुरुपपदाद्गमेर्डः प्रत्ययः ॥ दुःखाद्गम्यते वा ॥ दुःखेनगम्यतेप्राप्यते । अन्यत्रापिदृश्यत इतिडः ॥

दुर्ग्गकारकः । त्रि । दुर्गकर्त्तरि ॥ न । वृक्षविशेषे ॥

दुर्ग्गतः । त्रि । दरिद्रे ॥ दुर्गच्छतिस्म । गम्लृ० । गत्यर्थेतिक्तः ॥

दुर्ग्गतिः । स्त्री । नरके ॥ नैःस्वे । दारिद्र्ये ॥ दुष्टागतिः ॥

दुर्ग्गतिनाशिनी । स्त्री । दुर्गादेव्याम् ॥

दुर्ग्गन्धः । पुं । पूतिगन्धे । दुष्टगन्धे ॥ प

खाण्डौ ॥ न । सौवर्चल लवणे ॥ दुष्टो गन्धः ॥

दुर्गन्धी । त्रि । दुर्गन्धयुक्ते ॥

दुर्गपुष्पी । स्त्री । गौड भाषायां केशपुष्टा इति ख्याते वृक्षविशेषे । मानस्याम् । केशधारिण्याम् ॥

दुर्गमः । त्रि । दुर्गे ॥ दुःखेन गम्यते प्राप्यते । गम्॰ । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ दुर्गमनीयस्थानादौ ॥ यथा । दुर्गमः पन्थाः ॥ पुं । हिरण्याक्षान्वये जाते हरेः पुत्रे महादैत्ये ॥

दुर्गसञ्चमः । पुं । उष्ट्रे ॥ दुर्गं दुःसम्पाद्यं सञ्चमनं यस्य ॥ त्रि । दुःखेन सञ्चमनीये ॥

दुर्गसञ्चरः । पुं । सङ्क्रमे । दुर्गदेशप्रवेशक्रियायाम् ॥ सञ्चरणम् । च र॰ । पुंसीतिघः । दुर्गस्य सञ्चरः ॥

दुर्गा । स्त्री । ओषधिविशेषे । नील्याम् ॥ अपराजितायाम् ॥ दुष्प्रापायाम् ॥ श्यामायाम् । पीतकीलके ॥ अमरेशमहापीठदेवतायाम् ॥ उमायाम् । कात्यायन्याम् । गौर्याम् । काल्याम् । हैमवत्याम् । शिवायाम् ॥ दुःखेन गम्यते ध्यायते ऽस्याम् । सुदुरोरधिकरणे इति डे टाप् ॥ दुःखेन गीयते स्तूयते । गैशब्दे । आतश्चोपसर्गे इत्यङ् । टाप् वा ॥ यद्वा । दुर्गं गिरिं वनं वा वासत्वेनास्याः सकीयत्वेनास्त्यस्याश्च । टाप् ॥ दुर्गनामासुरवधाद्वा । यथा । तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गादेवीति विख्यातं तन्मे नाम भविष्यतीति ॥ अपिचास्या नाम्नो व्युत्पत्तिः । दुर्गो दैत्ये महाविघ्ने भवबन्धे कुकर्मणि । शोके दुःखे च नरके यमदण्डे च जन्मनि ॥ महाभये ऽतिरोगे चाप्याशब्दो हन्तृवाचकः । एतान्हन्त्येव यादेवी सा दुर्गा परिकीर्त्तिता ॥ * ॥ अपि च । दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः । उकारो विघ्ननाशस्य वाचको वेदसम्मतः ॥ रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः ॥ स्मृत्युक्तिश्रवणाद्यस्या एते नश्यन्ति निश्चितम् । ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता ॥ दुर्गेति दैत्यवचनो ऽप्याकारो नाशवाचकः । दुर्गं नाशयति या नित्यं सा दुर्गा परिकीर्त्तिता ॥ विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता ॥ * ॥ अस्याः स्थानं कृष्णावेणीतुङ्गभद्रयोर्मध्यभागे सह्याद्रेरीषत्प्राच्यां प्रसिद्ध

म् । अयमवतारोऽस्मिन्कल्पेऽस्या पिनजातः । श्वेतवाराहकल्पात्प्राक्तनकल्पेषु मन्वन्तरयुगभेदेनजातए व । ततश्चतत्तत्कुलदेवतात्वेनार्चन मधुनातनानामपिसङ्गच्छतेइतिगुप्तवत्यांभास्कररायः ॥ * ॥ सर्वस्वरूपिणीशक्तिःसादुर्गेतिचपठ्यते । यथामुण्डमालायाम् । भूतानिदुर्गा भुवनानिदुर्गा नराः स्त्रियश्चापि सुरासुरादिकम् । यद्यद्दृश्यं खलु सैवदुर्गा दुर्गास्वरूपादपरंनकिञ्चिदिति ॥

दुर्गाध्यक्षः । पुं । दुर्गरक्षके ॥ तल्लक्षणं यथा । अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः । दुर्गाध्यक्षः स्मृतोराजन्सुयुक्तः सर्वकर्मसु ॥ इति मत्स्यपुराणम् ॥

दुर्गानवमी । स्त्री । आश्विनशुक्लनवम्याम् । महानवम्याम् ॥ कार्त्तिकशुक्लनवम्याम् ॥ सात्रेतायुगाद्या । तत्र जगद्धात्रीपूजाकर्त्तव्येति तान्त्रिकाः ॥ कार्त्तिकेऽमलपक्षेतु नवम्यान्तुविशेषतः । प्रगेआश्वजगद्धात्रीं पूजयेद्दीपमालयेतियोगिनीतन्त्रम् ॥

दुर्गास्मरणम् । न । दुर्गानामादिदं सर्वं दुर्गासर्वस्यकारणम् । अस्य दुर्गेत्येवं यत् तद्दुर्गास्मरणंविदुः ॥

दुर्गाह्वः । पुं । भूमिजगुग्गुलौ ॥

दुर्ग्रहः । त्रि । दुरासदे ॥ दुर्द्धर्षे ॥ दुःखेनग्रहोऽस्य ॥

दुर्ग्रहा । स्त्री । अपामार्गे ॥

दुर्घटः । त्रि । दुःसम्पाद्ये ॥

दुर्घोषः । पुं । भल्लूके ॥ निन्दितरवे ॥ त्रि । तद्वति ॥

दुर्जनः । त्रि । खले ॥ दुष्टोजनः । कुगतीतिसमासः ॥ दुर्जनःपरिहर्त्तव्यो विद्ययाभूषितोपिसः । मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

दुर्जयः । पुं । असुरविशेषे ॥ कार्त्तवीर्यवंशोद्भवानन्तपुत्रे ॥ त्रि । दुर्जेये ॥ दुःखेनजीयते । जीजये । खल् ॥

दुर्जरः । त्रि । दुःखेनजीर्य्यति ॥ जूष० । अच् ॥

दुर्जरा । स्त्री । ज्योतिष्मतीलतायाम् ॥

दुर्ज्जातम् । न । व्यसने ॥ यथा । दुर्जातबन्धुः आपद्बन्धुरितितदर्थः ॥ त्रि । असम्यग्जाते ॥ असमञ्जसे ॥

दुर्दर्शः । पुं । काद्रवेयविशेषे ॥ दुःखेन दर्शनमस्य । दुःखेदृश्यते इतिवा ॥ त्रि । दुर्विज्ञेये ॥ द्रष्टुमशक्ये ॥ दुःखेनद्रष्टुंयोग्ये ॥

दुर्दान्तः । पुं । कलहे ॥ वत्सतरे ॥ त्रि । अशान्ते ॥ दुःखेनदान्तः ॥

दुर्द्दिनम् । न । मेघच्छन्नेह्नि ॥ दिवानिशिचवर्षणे ॥ मेघान्धकारे ॥ मे

घान्धकारिते ऽह्नीतिरात्रेरप्युपलक्ष
णम् । तेनरात्रावपितया दुर्द्दिनं क
थितमिति ॥ * ॥ घनान्धकारे च
दृष्टाच दुर्द्दिनं कवयोविदुरिति साध्यः
॥ दुर्द्दिनं जलदध्वान्ते इतिरत्नकोषः
॥ द्यतितमः इतिदिनम् । दो अवख
ण्डने । द्यतेरिति इनच् । दुष्टंदिनं
दुर्द्दिनम् । दुष्टत्वञ्चतमोनाशकत्व
रूपधर्मत्वात् । लक्षणयातु कालाति
रिक्तेपिदुर्द्दिनपदप्रयोगः ॥ यदुक्तम्
कथाचापरसपीयूषवर्जितम् । तद्दि
नं दुर्द्दिनं मन्ये मेघाच्छन्नं नदुर्द्दि-
नम् ॥

दुर्द्दुरूटः । पुं । नास्तिके । दुरुडुतुत्सेधे
। दुःपूर्वः । औणादिकः कूटप्रत्ययः
। बहुलमन्यत्रापीतिणिलुक् । रलयो
रेकत्वस्मरणात् ॥ पलाण्डौ ॥

दुर्द्दिता । स्त्री । लताविशेषे ॥

दुर्द्धरः । पुं । नरकान्तरे ॥ ऋषभौष
धौ ॥ पारदे ॥ भल्लातके ॥ महिषा
सुरस्यसेनापतिविशेषे ॥ श्रीहरौ
॥ पृथिव्यादीनि धारकाणि अन्यैर्द्धा
रयितुमशक्यानि धारयन्स्वयमन्यकै
र्नधारयितुंशक्यते इति दुःखेनमु
मुक्षुभिर्हृदयेधार्यते वेतिनिरुक्तेः ॥
त्रि । दुर्द्धर्षे ॥ दुःखधार्ये ॥ दुःखेनध्रि
यते दुरुपपदाद्धरतेः खल् ॥

दुर्द्धर्षः । त्रि । अप्रधृष्ये । तिरस्कर्त्तुम
शक्ये ॥ अप्रधोष्ये ॥

दुर्द्धर्षा । स्त्री । कन्थारीवृक्षे ॥ नागद
मन्याम् ॥ त्रि । दुःखधर्षणीये ॥

दुर्द्रुमः । पुं । हरित् पलाण्डौ । लतार्के
। हरिद्वर्णपलाशे पलाण्डौ ॥ दुष्टो
द्रुमः ॥

दुर्धावः । त्रि । दुःशोधे ॥

दुर्नामकम् । न । अर्शसि । गुह्यरोगे ॥
दुष्टंनामास्य पापरोगत्वात् । बहुव्री
हित्वात्कप् ॥

दुर्नाम । न । अर्शोरोगे ॥ दुष्टंनामा-
स्य पापरोगत्वात् ॥ बहु० नत्वम् ॥

दुर्नामा । स्त्री । दीर्घकोशिकायाम् ॥
दुर्निन्दितं नामास्याः । डाबुभाभ्या-
मिति डाप् ॥

दुर्नामारिः । पुं । शूरणे ॥

दुर्नाम्नी । स्त्री । दुर्नामायाम् ॥ अनउ
पधेति पाक्षिकोङीप् ॥ बहु० मयः ॥

दुर्निमितः । त्रि । सम्भ्रमादुत्क्षिप्ते ॥

दुर्निष्प्रयतरम् । त्रि । दुःखतरनिस्स-
रणे ॥

दुर्बलः । पुं । अनाहतमेदुरणौ ॥
त्रि । बलशून्ये । अमांसे ॥ दुष्टंबल
मस्य ॥

दुर्बला । स्त्री । अम्बुशिरीषिकायाम् ॥

दुर्बोधः । त्रि । दुर्बुद्धे ॥ बोद्धुमशक्ये ॥

दुःखेनबुध्यते । बुध० । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥

दुर्भगः । त्रि । अनिष्टे ॥

दुर्भगा । स्त्री । विरक्तायाम् ॥ पतिस्नेहरहितायाम् ॥ दुष्टोभगो भाग्यं यस्याः ॥

दुर्भाग्यम् । न । दुरदृष्टे ॥

दुर्भिक्षम् । न । भिक्षायाअप्राप्तिकाले । अकाल इति काल इतिच भाषा प्रसिद्धे समयविशेषे ॥ यद्देशे यत्काले तद्देशतत्कालयोग्यसस्यादिकं न जायते तदातद्देशोपाय्यमानद्रव्याभावात् दुर्भिक्षं जातमितिव्यवह्रियते ॥ अथ चाणक्येन मुनिना नवधृत्यउक्ताः । तथाहि । शकटः शाकिनी गावो जाल मस्पन्दनं वनम् । अनूपं पर्व्वतोराजा दुर्भिक्षेनवदृत्तय इति ॥ अस्यार्थः शाकिनीशब्देद्रष्टव्यः ॥ भिक्षाया अभाव इत्यर्थे ऽव्ययीभावः ॥ द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । दातायस्तु दुर्भिक्षे सुभिक्षे यश्च हेमदः ॥ दुर्भिक्षमत्यंसरणं चिराय ॥

दुर्म्मतिः । त्रि । विवेकप्रतिबन्धकपापेन मलिनमतौ ॥ दुष्टामतिर्यस्य ॥ वत्सरविशेषे । यथा । दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते । मन्वे मध्यमावृष्टिर्दुर्मतौ समुपस्थिते ॥ ५५ ॥

दुर्म्मदः । त्रि । अतिमत्ते ॥

दुर्म्मनाः । त्रि । अन्तर्मनसि । विमनसि । चिन्तादिव्याकुलचित्ते ॥ क्रियास्वस्थिरे ॥ दुःस्थितं मनोऽस्य ॥ स्त्री । मतावर्थाम् ॥

दुर्म्मरः । पुं । दुर्मृतौ ॥ मरणंमरः । दुष्टोमरः ॥

दुर्म्मरा । स्त्री । श्वेतदूर्वायाम् ॥ कृष्णदूर्वायाम् ॥

दुर्म्मर्षयः । त्रि । मर्षितुमशक्ये ॥ दुःखेनमृष्यते । मृष० । भाषायांशासियुधीतियुच् ॥

दुर्म्मिलका । स्त्री । मात्रादृत्तभेदे ॥ यथा । द्वात्रिंशन्मात्रं फणिपतिजल्पितसकलविभूषणदत्तवरम् दशवसुभुवनैर्यति रवप्रभवतिकविकुलहृदयानन्दकरम् । यदष्टचतुष्कगणामिमितपदमितिदुर्म्मिलकानामवरम्नरपतिवरतोषणचन्द्रिविभूषणभुवनविदितसन्तापहरम् ॥ यथा । यमुनाजलकेलिविलोलविलोचनगोपीजनहृतवसनवरम् तटजातविशालतमालतलागतदुर्गमशाखारोहपरम् । निजभुजमदमत्तभोजपतिमानससम्भृतदम्भविनाशकरम् कारक-

नजुमयूखमुषितकमलं नैस खीला मानुषवेषधरम् ॥

दुर्लिखा । स्त्री । दुर्भिक्षकाले ॥

दुर्मुखः । पुं । कपिविशेषे ॥ नागभेदे ॥ वाजिनि ॥ गणेशमूर्द्धन्तरे ॥ महिषासुरस्य सेनापतिविशेषे ॥ उत्तरद्वारे नवमगृहे ॥ वत्सरविशेषे ॥ तुष धान्यधेयो दिव्रसर्वसस्यमहार्घता । व्यवहाराश्च नश्यन्ति दुर्मुखे दुर्मुखाः प्रजाः ॥ त्रि । मुखरे । अवद्रमुखे । अप्रियवादिनि ॥ दुर्निन्दितं मुखमस्य ॥

दुर्मेधाः । त्रि । मन्दमतौ । विवेकासमर्थे ॥ दुष्टा मेधा यस्य सः । नित्यमसिच प्रजामेधयोः ॥

दुर्मोहः । पुं । काकतुण्ड्याम् ॥

दुर्मोषा । स्त्री । कौवाडोडी इति भाषा प्रसिद्धे वृक्षे । काकादन्याम् ॥

दुर्योधनः । पुं । धृतराष्ट्रतनये । कौरव्यभूपतौ । सुयोधने ॥ दुःखेन युध्यते । युध० । भाषायां शासियुधीति युच् ॥

दुर्ललितका । स्त्री । छन्दोभेदे ॥ यथा । वसुभिश्च रसै रथदिग्भि यदीरितसयतिका विदिताहि यदा सगणा ष्टकभषितसञ्चरणा जितदुर्नयदुर्ललितेति सदा । फणभृत्सुखमण्डमना सकलागवरप्रथिता सुकृतां सुखदा यशसन्तपरा धियगौ उकुलोज्ज्वलता मवधेहि हृदि च रुदा ॥

दुर्लभः । पुं । कच्छुरे ॥ द्राविडके । कर्पूरे ॥ त्रि । दुष्प्रापे ॥ यथा । दुर्लभं त्रयमेवैतत् देवानुग्रहहेतुकम् । मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः इति विवेकचूडामणिः ॥ अतिप्रशस्ते ॥ प्रिये ॥ दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः । दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ दुःखेन लभ्यते । लभ० । ईषद्दुःसुष्विति खल् ॥

दुर्लभा । स्त्री । भक्तौ ॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ इति व्यासवचनम् ॥ दुरालभायाम् ॥ श्वेतकण्टकार्याम् ॥

दुर्वच. । त्रि । वक्तुमशक्ये । दुःखकथ्ये ॥

दुर्वचः । न । मन्दवाक्ये ॥ असद्धं दुर्वचो मातैर्मघान्तरितरोदनम् ॥

दुर्वर्णम् । न । रजते । रूप्ये ॥ सुवर्णापेक्षया दुष्टोवर्णोऽस्य ॥ एलवालुके । ऐलेये ॥ त्रि । असद्वर्णे ॥

दुर्वर्णकम् । न । रजते ॥ इति हेमचन्द्रः ॥

दुर्वाक् । स्त्री । दुष्टायां वाचि ॥ त्रि । कटुवदे ॥ दुष्टवागस्य ॥

दुर्वाच्यम् । त्रि । अवाच्ये ॥

दुर्वादः । पुं । दुरुक्तौ । निन्दितवाक्ये ॥ दुष्टोवादः ॥ स्तुतिपूर्वकदुर्वाक्ये ॥

दुर्वासाः । पुं । अत्रितनये शङ्करांशा-त्जाते मुनिविशेषे । कुमारगौ ॥ त्रि । कुत्सितवस्त्रयुक्ते ॥

दुर्विज्ञेयः । त्रि । दुर्ज्ञेये ॥ दुःखेनविज्ञेये ॥

दुर्विधः । त्रि । दरिद्रे ॥ दुष्टा विधा प्रकारः समृद्धिर्वास्य ॥ खले ॥ मूर्खे । वालिशे ॥

दुर्विनीतः । पुं । शूकले । अशिक्षिताश्वे ॥ त्रि । अविनीते ॥

दुर्विभाव्यः । त्रि । अवितर्क्ये ॥

दुर्वृत्तः । त्रि । दुर्जने । दुष्टे । ऐन्द्रजालिककितवादौ ॥ दुष्टवृत्तमस्य ॥

दुर्व्यसितः । त्रि । दुष्टकर्मणिवर्त्तमाने ॥ दुष्टेषुकर्मणिवृत्तिः दुराचारस्थितिर्यस्य ॥

दुर्हृत्-द् । त्रि । वैरिणि । शत्रौ ॥ दुष्टं हृदयमस्य । सुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातनात् हृदयस्यहृद्भाव ॥

दुर्हृदयः । त्रि । दुष्टान्तःकरणे ॥

दुलिः । पुं । मुनिविशेषे ॥ स्त्री । कच्छप्याम् ॥ दोलति । दुलउत्क्षेपे । इगुपधात्कित्इतिइन् ॥

दुली । स्त्री । कमठ्याम् ॥ कृदिकारादितिङीष् ॥

दुश्चरः । पुं । भल्लूके ॥ शम्बूके ॥ त्रि । दुस्तरे ॥

दुश्चरितम् । न । श्रुतिस्मृत्यविहिते पापकर्मणि ॥ दुष्टंचरितम् ॥

दुश्चर्मा । पुं । अच्छचर्मेदुश्चर्मणि । शिपिविष्टके ॥ कोठरोगे ॥ दुष्टंचर्मास्य ॥

दुश्चिक्यम् । न । लग्नात् तृतीयभवने । सहजे ॥

दुश्च्यवनः । पुं । इन्द्रे ॥ दुःखेन दुष्टं दैत्येषु वा च्यवनं पतनमस्य ॥ च्यवनमुनिनैकदाजितत्वात् दुस्सहः च्यवनो यस्येति वा ॥

दुष्करम् । न । दुःखेनकरणे ॥ आकाशे ॥ त्रि । दुःखेननिष्पाद्ये ॥ कष्टसाध्ये ॥ अपियत् सुकरंकर्म तदप्येकेनदुष्करम् ॥ दुःक्रियते । ईषद्दुःसुष्विति खल् ॥

दुष्कर्म । न । पापे ॥

दुष्कुलम् । न । दुष्टकुले ॥ त्रि । दुष्टकुलजे ॥

दुष्कुलीनः । पुं । चोराख्यगन्धद्रव्ये ॥ त्रि । दौष्कुलेये ॥ दुष्कुलस्याऽपत्यम् । दुष्कुलाड्ढगितिपक्षे खः ॥

दुष्कृतम् । न । पापे ॥ तत् तत्कर्त्तुं संसर्गानन्तरं तेनसहगच्छतीत्युक्तं वह्निपुराणे । गुदादर्शा निवर्त्तन्ते

श्मशानादपि वान्यथा । सुकृतं दुष्कृतं लोके गच्छन्तमनु गच्छति ॥ तस्माद् वित्तं समासाद्य दैवाद् वा यौवना द्वय । दद्यात् सम्यग् द्विजातिभ्यः कीर्त्तमानिव कारयेदिति ॥ दुष्कृतं करणमनेन । रघुकुपथस्य प्रत्ययस्येति षः ॥ त्रि । तद्वति ॥

दुष्कृतात्मा । त्रि । पापकृदये । पापबुद्धौ ॥

दुष्कृती । त्रि । पापकारिणि । पापेन सज्जनित्यये योगिनि ॥ वेदमार्गविरोधिनि ॥ दुष्कृतमस्यास्त्यस्यां इनिः ॥

दुष्क्रीतः । त्रि । महार्घे ॥ यथा । क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतमिति नारदः ॥

दुष्खम् । न । दुःखे ॥

दुष्खदिरः । पुं । खदिरभेदे । सत्तासारे । गोरटे । खदखदिरे ॥

दुष्टम् । न । कुष्ठौषधौ ॥ त्रि । अधमे ॥ दूषिते ॥ वञ्चके ॥ दोषयुक्ते ॥ यथा । दुष्टः शब्दः स्वरतो वर्णतो वेति भाष्यम् ॥

दुष्टकालः । पुं । केत्वाद्युत्पातदर्शने ॥ गुरुशुक्रास्तादौ ॥

दुष्टचारिणी । स्त्री । स्वैरिण्याम् ॥

दुष्टयोगः । पुं । व्यतीपातादौ ॥

दुष्टवृषः । पुं । गलौ ॥ शक्तोऽप्यधुर्वहो योहि वृषो गलिरुदाहृतः ॥

दुष्टा । स्त्री । दुःशीलायाम् । पुंश्चल्याम् ॥ दुष्टाभार्या शठंमित्रं भृत्याश्चोत्तरदायकाः । ससर्पे च गृहेवासो मृत्युरेव न संशयः ॥ दुर्वचनायाम् ॥

दुष्टान्तः । पुं । कदन्ताख्ये ॥

दुष्टु । न । निकृष्टे । निन्दायाम् ॥ दुःस्थानम् । छा० । अपदुःसुषु स्थ इति कः । ष० पत्वम् ॥

दुष्टुः । त्रि । अविनीते ॥

दुष्पत्रः । पुं । चोराभिधगन्धद्रव्ये ॥ चण्डालुके ॥ दुष्टानि पत्राण्यस्य ॥

दुष्पूरः । त्रि । पूरयितुमशक्ये ॥

दुष्प्रधर्षणी । स्त्री । वार्त्ताक्याम् । वनभण्टा इति भाषा ॥ दुःखेन प्रधृष्यते । धिषृधा प्रागल्भ्ये । कर्मणि ल्युट् ॥

दुष्प्रधर्षा । स्त्री । दुरालभायाम् ॥ खर्जूर्याम् ॥

दुष्प्रधर्षिणी । स्त्री । वार्त्ताकौ ॥ कण्टकार्याम् ॥ रक्तायाम् ॥ पुनः पुनर्दुःखे न प्रधृष्यते । धिषृधा० । आभीक्ष्ण्ये णिनिः ॥

दुष्प्रवृत्तिः । स्त्री । दुर्वार्त्तायाम् ॥

दुष्प्रवेशा । स्त्री । कन्थारीवृक्षे ॥

दुष्यन्तः । पुं । चन्द्रवंशीयनृपतिविशेषे । शकुन्तलापतौ । भरतपितरि ॥

दूङ । य । दुःखे ॥ कोपे ॥ दुःखभावने ॥ दोषे ॥

दूलटः । त्रि । दुःखेनोत्तर्त्तुं शक्ये । तरितुमशक्ये ॥ ईषद्दुःसाप्यतिरस्कृ ॥

दूलर्कः । पुं । शुष्कतर्के ॥ दूलर्कात् सुविरम्यताम् ॥

दूलभः । त्रि । दुर्गमे ॥ मूर्खे ॥ दुःखेन तिष्ठति ॥ डा० । सुपिस्थइतिकः ॥

दुस्पर्शः । त्रि । दुःस्पर्शे ॥

दूस्पर्शा । स्त्री । दुःस्पर्शायाम् ॥

दूहितुः पतिः । पुं । जामातरि ॥ विभाषा स्वसृपत्योरिति वा ऽलुक् ॥

दूहिता । स्त्री । सुतायाम् । कन्यायाम् ॥ दोग्धि । दुहप्रपूरणे । नप्तृनेष्टृत्वष्टृ होतृपोतृभ्रातृजामातृमातृपितृदुहितृ इति दुहेस्तृच् इट्गुणाभावश्च निपातितः ॥ दूहसिया । दूहभस्री करणे । तया साधुः । स्वस्रादित्वान्न ङीप् ॥

दूतः । पुं । सन्देशहरे । वार्त्ताहरे ॥ दूतं चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान् वीतभीर्व्वाग्मी दूतो राज्ञः प्रशस्यते ॥ अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया । नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्य्ययौ ॥ दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् । दूतस्तत् कुरुते कर्म्म भिद्यन्ते येन वा नवा ॥ स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः । आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥ बुद्ध्वा च सर्व्वं तत्त्वेन परराजचिकीर्षितम् । तथा प्रयत्नमातिष्ठेद् यथात्मानं न पीडयेदिति मनुः ॥ अस्य लक्षणं यथा । यथोक्तवादी दूतः स्याद्देशभाषाविशारदः । शक्तः क्लेशसहो वाग्मी देशकालविभागवित् । विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः ॥ वक्ता नयस्य यः काले स दूतो नृपतेर्भवेदिति मत्स्यपु० ॥ मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतोऽभिधीयते इति वा अक्यम् ॥ अस्यावध्यत्वं यथा । वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्ष्मनिवेशनं वा । एतान्यवधाईति कृत्यवादी शास्त्रेषु दूतस्य वधो न दृष्ट इति ॥ दवति । दु गतौ । दुतनि स्यादीर्घं श्चेतिक्त ॥ यद्वा । दूयतेऽस्मात् । दूङ् परितापे । गत्यर्थेति क्तः ॥ दुनोतीति वा । टुदु उपतापे । पूर्व्ववत् ॥

दूतघ्नी । स्त्री । कदम्बपुष्प्याम् ॥

दूतागारम् । न । पत्रगृहे । डाक इति यावद् इतिचेतरभाषा ॥

दूतिः । स्त्री । दूतिकायाम् ॥ दूयते । दूङ्०। क्तिच् ॥

दूतिका । स्त्री । सञ्चारिकायाम् ॥

दूती । स्त्री । स्त्रीपुंसोःसन्देशप्रापिकायाम् । सञ्चारिकायाम् ॥ गौ० ङीष् ॥

दूतीका । स्त्री । सञ्चारिकायाम् ॥

दूत्यम् । न । दूतस्वभावे ॥ दूतभावे ॥ दूतकर्मणि ॥ दूतस्यभावःकर्मवा । दूतवणिग्भ्यां चेतियः ॥

दून: । त्रि । अध्यादिनाग्लाने ॥ दूयते स्म । दुगतौ क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥ अकर्मकत्वात् कर्तरि-क्तः ॥ सन्तप्ते ॥ पिष्टेनदूने रसने सितापि तिक्तायते हंसकुलावतंसेतिनैषधम् ॥

दूर: । त्रि । विप्रकृष्टे ॥ महताध्वनैवाप्ये समाने ॥ कष्टगोचरे ॥ दुःखेनैयते प्राप्यते । दुरीणोलोपश्चेतिसाधुः ॥

दूरदर्शनः । पुं । गृध्रे ॥

दूरदर्शी । पुं । पण्डिते दूरं दूराद्वा पश्यति । दृशिर् । ग्र० णिनिः ॥सुपी तिवा ॥ गृध्रे ॥ त्रि । दीर्घदर्शके ॥

दूरदृक् । पुं । पण्डिते ॥ गृध्रे ॥ त्रि । दीर्घदर्शके ॥ दूरावलोकनार्थयन्त्रविशेषे । दूरवीक्षणे । दूरबीनइतिभाषा ॥ दूरे दृग् दर्शनं येन ॥

दूरमूल: । पुं । मुञ्जतृणे ॥

दूरवर्त्ती । त्रि । महताध्वनैव वर्त्तनशीले ॥ यथा । किन्तया दूरवर्त्तिन्या श्रिया राक्षसपुङ्गव । अयोर्या नयद्यस्मिन्मनुभिर्या न भुज्यतइतिरामायणे विभीषणंप्रतिरामवाक्यम् ॥

दूरवीक्षणम् । न । दूरबीन इतिभाषिते दूरदृशि यन्त्रे ॥

दूरवेधी । पुं । दूरापातिनि । दूरनिक्षेप्याक्षे ॥

दूरभिन्नः । त्रि । अत्यन्तविश्लिष्टे ॥

दूरस्थ: । त्रि । विप्रकृष्टस्थिते ॥ योजनशताद्यन्तरिते ॥ दूरेतिष्ठति । ष्ठा० । सुपिस्थ इति कः ॥

दूरापाती । पुं । दूरवेधिनि ॥

दूरेत्यः । त्रि । दूरेआगतादौ ॥ पथिके ॥ दूरादेत्यः ॥

दूरेरितेक्षणः । त्रि । केकरे ॥

दूर्व्यम् । न । शय्याम् ॥ विष्ठायाम् ॥

दूर्वा । स्त्री । शतपर्विकायाम् । नीलदूर्वायाम् । तिक्तपर्वायाम् ॥ श्वेतदूर्वायाम् । गोलोम्याम् ॥ नीलश्वेतविभेदेनदूर्वेद्वेसमुदाहृते ॥ रक्तपित्तकफच्छत्त्यन्दोषनाशिनीयमिति राजवल्लभः ॥ दूर्वति दूर्व्यते वा । दुर्वी हिंसायाम् । अच् घञ्वा । उपधाया

ष्वोतिदीर्घः ॥

दूर्वाकाण्डम् । न । दूर्वाणांसमूहे ॥ दूर्वादिभ्यः काण्डः ॥

दूर्वाष्टमी । स्त्री । भाद्रशुक्लाष्टम्याम् ॥

दूलिका । स्त्री । }
दूली । स्त्री । } नील्याम् ॥

दूषकः । त्रि । पांसने । दोषोत्पादके ॥ पुं । शालेर्धान्यान्तरे ॥ दूषयति । दुष० । णिजन्तः । ण्वुल् । दोषोण्यादिष्यत्वम् ॥

दूषणः । पुं । राक्षसविशेषे । रावणभ्रातृखरसेनापतौ ॥ न । दोषे ॥ दूषयति । दुषवैकृत्ये । णि० ल्युः ॥

दूषणारिः । पुं । श्रीरामे ॥

दूषिः । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । णिजन्तः । दोषोण्यादित्यूत्त्वम् । अचइः ॥

दूषिका । स्त्री । तूलिकायाम् ॥ लोचनयमले । पिच्चोडके । गीड इति भाषा ॥ दूषयति । दुष० । णिजन्त. । ऊत्त्वम् । ण्वुल् ॥ यद्वा । दूषयते र चइ रिति इप्रत्यय ॥ ऊत्त्वम् । स्वार्थे कन् ॥

दूषितः । त्रि । अभिशस्ते । धारिते । घात्ये । प्रासदोषे ॥

दूषिता । स्त्री । दोषप्राप्तायां कन्यायाम् । सम्वेदायाम् ॥

दूषी । स्त्री । नेत्रमले ॥ कृदिकारादक्तिनइतिङीष् ॥

दूषीका । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । णिजन्तः । ऊत्त्वम् । कपिद्विभाषीकम् ॥ स्वार्थे कन्वा ॥

दूषीविषम् । न । औषधादिभिरवीर्यीकृतविषे । आदिना दावाग्निवायुरौद्रशोषिते विषे ॥ जीर्णं विषघ्नौषधिभि र्हतंवा दावाग्निवातातपशोषितं वा । स्वभावतोवा गुणविप्रहीनं विषं हिदूषीविषतामुपैतीतिमाधवः ॥

दूष्यम् । न । वस्त्रे ॥ वस्त्रगृहे ॥ पूये ॥ त्रि । दूषणीये ॥ यथा । दूष्यंवचोमम पुनर्निपुणं विभाव्यभावावबोधविहितोमदुनोति दोषइति ॥ दूष्यते । दुष० । णिजन्तादचोयत् । दोषोण्यादित्यूत्त्वम् ॥ दूषयितुमर्हो वा । अर्हेकृत्यतृचश्च ॥

दूष्या । स्त्री । कक्षायाम् । वरत्रायाम् । गजमध्यबन्धनरज्ज्वाम् ॥ दूष्यतेऽनया । दुष । यत् । टाप् ॥

दृक्कम् । न । छिद्रे ॥ इतिसंक्षिप्तसारोणादिवृत्तिः ॥

दृक्काणः । पुं । द्रेष्काणे ॥

दृक्कर्णः । पुं । सर्पे ॥ दृशौ कर्णौयस्य ॥

दृक्काणः । पुं । द्रेष्काणे । लग्नत्रिभागे ॥

दृक्प्रसादा । स्त्री । कुलत्थायाम् ॥ कुलत्थाञ्जने ॥

दृक्प्रिया । स्त्री । शोभायाम् ॥

दृक्श्रुतिः । पुं । सर्पे ॥

दृक्स्थितिः । स्त्री । दृष्टेःस्थैर्ये ॥ दृक्स्थितिः ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् । सादृष्टिः परमोदारा न नासाग्रविलोकिनी ॥ दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रविलोकिनी ॥ व्याख्यार्थः ॥

दृगध्यक्षः । पुं । सूर्ये ॥

दृग्गोलः । पुं । खगोलान्तर्गते गोलविशेषे ॥

दृग्भूः । स्त्री । सर्पे ॥ वज्रे ॥ भास्करे ॥

दृग्विषः । पुं । नागे ॥

दृढम् । न । लौहे ॥ अतिशये । नितान्ते ॥ क्रियाविशेषणेऽस्त्रीमस्त्वंद्रव्यविशेषणेषु वाच्यलिङ्गता ॥ पुं । रूपकभेदे ॥ यथा । दृढाख्यः स्यात् धुवन्दं तालेन हंसलीलके । चतुर्थाक्षरैर्युक्तः शृङ्गारे परिकीर्त्तितः । इति सङ्गीतदामोदरः ॥ त्रि । स्थूले ॥ प्रगाढे । अप्रशिथिले ॥ बलवति । शक्ते ॥ कठिने ॥ दृंहति दृंहतिस्म वा । दृह दृहि वृद्धौ । क्तप्रत्यये । दृढः स्थूलबलयोरिति क्तस्य इमावः नलोपश्च निपात्यते ॥

दृढकण्टकः । पुं । क्षुद्रफलकवृक्षे । घोला आँकड़ा इति गौडभाषा ॥

दृढकाण्डः । पुं । वंशवृक्षे ॥ न । दीर्घरोहिषके ॥

दृढकाण्डा । स्त्री । पातालगरुडीलतायाम् ॥

दृढकारी । त्रि । प्रारब्धकर्मसम्पादयितरि ॥

दृढधुरा । स्त्री । वल्वजायाम् ॥

दृढगात्रिका । स्त्री । मत्स्यण्ड्याम् ॥

दृढग्रन्थिः । पुं । वंशे ॥

दृढच्छदम् । न । दीर्घरोहिषके ॥

दृढतरुः । पुं । धववृक्षे ॥

दृढदलः । पुं । मुञ्जतृणे ॥

दृढदला । स्त्री । वल्वजायाम् ॥

दृढत्वक् । पुं । यावनालशरे ॥

दृढदंशकः । पुं । चांगर इति प्रसिद्धे याद्सि ॥

दृढनिश्चयः । त्रि । स्थिरमते ॥ दृढः कुतार्किकैरभिभवितुमशक्यतया स्थिरो निश्चयोऽहमस्म्यकर्त्ताऽभोक्ता सच्चिदानन्दादित्येवं ब्रह्मोच्यध्यवसाय शीले संसारादुपरतेमुनौ ॥

दृढनीरः । पुं । नारिकेलवृक्षे ॥

दृढपत्रः । पुं । वंशे ॥

दृढपर्णी । स्त्री । वल्वजायाम् ॥

दृढपादा । स्त्री । यवतिक्तायाम् ॥

दृढपादी । स्त्री । भूम्यामल्याम् ॥

दृढप्ररोहः । पुं । प्लक्षवृक्षे ॥

दृढफलः । पुं । नारिकेरे ॥ दृढानि फलानि यस्य सः ॥

दृढबन्धिनी । स्त्री । श्यामालतायाम् ॥

दृढभूमिः । त्रि । विषयसुखवासनया चालयितुमशक्ये ॥

दृढमुष्टिः । पुं । खड्गादौ ॥ त्रि । कृपणे ॥ दृढा मुष्टिर्यस्य ॥

दृढमूलः । पुं । मुञ्जतृणे ॥ मन्थानकतृणे ॥ नारिकेले ॥

दृढरङ्गा । स्त्री । स्फट्याम् ॥

दृढलता । स्त्री । पातालगरुड्याम् ॥

दृढलोमा । पुं । शूकरे ॥ त्रि । कठिनलोमयुक्ते ॥ दृढानि लोमानि यस्य ॥

दृढवल्कलः । पुं । पूगे ॥ लकुचे ॥

दृढवल्का । स्त्री । अम्बष्ठायाम् ॥

दृढवीजः । पुं । चक्रमर्दे ॥ वदरे ॥ वर्बुरे ॥

दृढव्रतः । त्रि । अचालकसङ्कल्पे । फलपर्यन्तं प्रारब्धव्रतापरित्यागशीले ॥ सर्वथाभगवानेव भजनीयः सचैवं रूपएवेतिप्रमाणावनिताऽप्रामाण्यशङ्काशून्यविज्ञाने ॥ दृढानि प्रतिपक्षैश्चालयितुमशक्यानि अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादीनि व्रतानि नियमा यस्यसतथा । यमदमादिसाधनसम्पन्न इतियावत् ॥

दृढसन्धिः । त्रि । संहते । निश्छिद्रे ॥ दृढःसन्धिःसन्धानमस्य ॥

दृढसूत्रिका । स्त्री । मूर्वायाम् ॥

दृढस्कन्धः । पुं । क्षीरिकावृक्षे ॥

दृढाङ्गम् । न । हीरके ॥

दृता । स्त्री । जीरके ॥

दृतिः । पुं । चर्मपुटे । चर्मनिर्मिततैलादिपात्रे ॥ मत्स्ये ॥ दृणाति । दृविदारणे । दृणातेर्ह्रस्वश्चेति तिः ॥ शरीरावयवविशेषे ॥ उदकनोदनचर्मयन्त्रे ॥

दृतिधारकः । पुं । आकनूपाता इति गौडभाषाप्रसिद्धे वृक्षे ॥

दृतिहरिः । पुं । पशौ ॥ दृतिंहरतीति विग्रहे दृत्युपपदाद्धरतेःपशौकर्त्तरि इन्प्रत्ययः ॥

दृन् । अ । दृढार्थे ॥ हिंसायाम् ॥

दृन्भूः । स्त्री । सर्पे ॥ चक्रसर्पे ॥ पुं । वज्रे ॥ अग्निभूपतौ ॥ तक्षसर्पजातौ ॥ कवौ ॥ सन्दर्भकर्त्तरि ॥ कथके ॥ सूर्ये ॥ दृभति । दृभीग्रन्थे । अन्दूदृन्भूजम्बितिकूप्रत्यये निपातनान्नुम् अनुस्वाराभावोपि । हूहूवद्रूपाणि ॥ दृढशब्दउपपदेभुवःकूप्रत्यय उप

परेश्चाद्दृग्भावादेशो निपातनादिति माधवः ॥ यद्वा । दृगिति नान्तमव्ययं दृढार्थकमुपपदम् । वर्षाभूवद्रूपमस्येत्याहुः ॥

दृप्तः । त्रि । उद्धते । गर्विते ॥ दृप्यते । दृप हर्षविमोहनयोः । अस्मात् त्वन्यर्थाकर्मकेभ्य इति नाकर्त्तरि क्तः ॥

दृप्रः । त्रि । बलवति ॥ दृप्यति । दृप० । स्फायितञ्चीति रः ॥

दृब्धः । त्रि । ग्रथिते ॥ दृभ्यते स्म । दृभी ग्रन्थे । क्तः ॥

दृम्भिः । स्त्री । गुम्फे ॥

दृक् । स्त्री । दर्शने ॥ नेत्रे ॥ नेत्रेऽपि रूपं व्याप्यते दृग्यमिवाद्दम् ॥ बुद्धौ ॥ ज्ञाने ॥ रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक् तु मानसम् । दृश्याधीवृत्तयः साक्षीदृगेव न तु दृश्यते ॥ त्रि । बीक्षके ॥ अध्यक्षे ॥ ज्ञातरि ॥ पश्यति दृशिर् प्रेक्षणे । क्विप् ॥ यद्वा । दृश्यते दर्शनमनया वा । सं० क्विप् । क्विन् प्रत्ययस्येति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । त्यदादिषु दृशः क्विनो विधानात् ॥ शाङ्के ॥

दृशत् । स्त्री । दृषदि ॥

दृशद्वती । स्त्री । दृषद्वत्याम् ॥

दृशा । स्त्री । चक्षुषि ॥

दृशाकाङ्क्ष्यम् । न । पद्मे ॥

दृशानः । पुं । विरोचने । सूर्ये ॥ आचार्ये ॥ लोकपाले ॥ न । ज्योतिषि ॥ पश्यति । दृशिर्० । युधिबुधिदृशः किच्चेत्यानच् ॥

दृशिः । स्त्री । चक्षुषि ॥ दर्शने ॥ गोपीदृगुत्सवदृशिःप्रविवेश गोष्ठम् ॥

दृशिस्वरूपः । त्रि । चैतन्यघने ॥

दृशी । स्त्री । नेत्रे ॥

दृशोपमम् । न । सिताम्भोजे ॥

दृश्यम् । न । अनात्मस्वरूपे । ममेदंबोधं ममेदमनहमित्यादिममतास्पदत्वेनात्मनउपसर्जनभूते स्थूलदेहादौ ॥ दृष्टिदर्शित्वाद्दृश्यमितिप्रसिद्धम् ॥ त्रि । द्रष्टव्ये । दर्शनीये ॥ द्रष्टुं योग्यम् । दृशेर्कृहलोर्ण्यत् ॥ ऋदुपधाच्चाकॢपिचृतेरिति क्यप् वा ॥

दृश्वतारम् । न । मुखजायके ॥

दृषद् । स्त्री । निष्पेषणशिलापट्टे । शिल् इति भाषा ॥ पाषाणे । प्रस्तरे ॥ दृणात्यनेन । दृविदारणे । दृणातेः षुग्घ्रस्वश्चेत्यदिः ॥

दृषद्वती । स्त्री । नदीविशेषे ॥ दृषदः सन्त्यस्याम् । मतुप् । झयइति मस्य वः ॥ कात्यायन्याम् ॥

दृष्टम् । न । मन्त्रीभुजां स्वपरचक्रोत्थभये ॥ स्वराष्ट्राच्चौराटविकादेर्भयम् । परराष्ट्राद्दायविलोपादेर्भयम् ॥ प्रति

विपयाध्यवसाये ॥ त्रि । साक्षात्कृते । प्रत्यक्षे । अक्षिगोचरे । ईक्षिते ॥ अग्निचित् कपिला सत्री राजा भिक्षु र्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः ॥ दृश्यते स्म । दृशिर् + क्तः ॥ ज्ञाते ॥ दर्शने ॥

दृष्टपृष्ठः । त्रि । पलायमाने ॥

दृष्टप्रत्ययः । त्रि । दृढविश्वासे ॥

दृष्टरजाः । स्त्री । मध्यमायाम् । प्रथमं प्राप्तरजस्कायां नार्याम् ॥ दृष्टं रजो यस्याः ॥ प्रौढायाम् ॥

दृष्टान्तः । पुं । मरणे ॥ शास्त्रे ॥ उदाहरणे ॥ प्रतिपाद्यप्रतिपादकयोर्यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ तथाच गौतमसूत्रम् । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति ॥ लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः प्रतिपाद्य इति फलितोऽर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादक इति फलितोऽर्थः ॥ तथाच प्रतिपाद्यप्रतिपादकयोरिति पर्यवसन्नम् । बहुवचनं कथाबहुत्वमभिप्रेत्य बुद्धेः साध्यसाधनोभयविषयिण्याः स्वरूपतो विषयितया वा साम्यमविरोधो यस्मिन्नर्थे सोऽर्थो दृष्टान्तः । वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभाववद्वयप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति पर्यवसितोऽर्थः ॥ * ॥ अलङ्कारविशेषे । दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ एतेषां साधारणधर्मादीनां दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः । त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् । आलोके हि हिमांशो र्विकसति कुसुमं कुमुद्वत्याः ॥ एष साधर्म्येण । वैधर्म्येण । तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगु र्दधत्यवाते स्थिरतां हि पांशवः ॥ * ॥ उपमाने ॥ दृष्टः अन्तो निश्चयो यत्र । दृष्टमन्तः सादृश्यबलेन प्रकृतार्थनिर्णयो येन वा ॥

दृष्टिः । स्त्री । बुद्धौ ॥ लोचने ॥ दर्शने ॥ ज्ञाने ॥ अस्याः कारणमुक्तम् ॥ चक्षुर्जन्यमनोवृत्ति श्चक्षुष्मा रूपभासिका । दृष्टिरित्युच्यते द्रष्टा दृष्टेः कर्त्तेति लौकिकैः ॥ दर्शनम् । दृशिर् + क्तिन् । दृश्यतेऽनया वा करणे क्तिन् ॥ * ॥ अथ ग्रहाणां दृष्टिकथनं यथा । तृतीये दशमे चैव पाददृष्टिरुदाहृता । अर्द्धदृष्टिश्च नवमे पञ्चमे च प्रकीर्त्तिता ॥ चतुर्थे चाष्टमे चैव पादोना परिकीर्त्तिता । सप्तमे

परिपूर्णांच फलमेवं प्रकल्प्यते ॥ तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमजान् कुजः ॥ सुतमदनवान्ये पूर्णदृष्टिः सुरारेः युगलदशमराशौ दृष्टिपादत्रयार्द्धः। सहजरिपुचतुर्थे व्यष्टमेचार्द्धदृष्टिः क्षितिभवनमपान्त्यं नैवदृश्यंविराद्यैः ॥ स्वस्मात् च द्वितीयञ्च षष्ठ मेकादशं तथा। द्वादशाख्यं नपश्यन्ति शेषंपश्यन्ति ते ग्रहाः॥

दृष्टिकृत् । न । } स्थलपद्मे ॥
दृष्टिकृतम् । न । }

दृष्टिगुणः । पुं । बाणाद्यैर्लक्ष्ये ॥

दृष्टिबन्धुः । पुं । खद्योते ॥ खाञ्जने ॥

दृष्टिरोगिः । पुं । ईर्ष्यके ॥

दृष्टिविक्षेपः । पुं । कटाक्षे ॥

दृष्टिविषः । पुं । सर्पविशेषे ॥

दृष्ट्वा । अ । विलोक्येत्यर्थे ॥

दृषित. । वि । वृद्धिप्राप्ते ॥

देदीप्यमानः । वि । ज्वल्यमाने । अतिशयदीप्तिविशिष्टे । अःपुनःपुनरतिशयेनवा दीप्यते तत ॥

देयम् । त्रि । दातव्ये ॥ दातुंयोग्यम् । डुदाञ्० । अचोयत् । ईद्यतिगुणः ॥ न । धनविशेषे ॥ यथा । अपरावाध मक्लेशं प्रयद्येनार्जितं धनम् । स्वल्पं वा बहुलंवापि देयमित्यभिधीयते ॥ अपरावाधम् परपीडारहितम् । अक्लेशं पापक्लेशाजनकम् ॥

देवः । पुं । वसुरुद्रादौ । ब्रह्मविष्णुशिवसूर्याग्निगणपतिदुर्गादौ। सुरे । अमरे ॥ एतेपर्याया यथा । आदित्याः सवितारस्तेषां विरिञ्चमतास्तथा । अश्विनौ वसूतौ मुद्रौ सपसुप्रेसमा क्षितौ ॥ अमृतास्वाभिरसादेवा ग्रहाणारति निघण्टुः इति ॥ आमातिशयशालिनियोतनात्मके आत्मनि ॥ दीव्यति क्रीडति स्वर्गादिभिः-विजिगीषते असुरादीन् व्यवहरति सर्वभूतेष्वात्मतया द्योतते स्तूयते स्तुत्यैः सर्वगच्छतिवा तस्माद्देवः ॥ दीव्यतेः पचाद्यच् ॥ दीव्यते स्तूयते इतिद्विवेः कर्मणिघञ्वा ॥ दीव्यते क्रीडतेयस्माद्रोचते द्योततेदिवि। तस्माद्देवइतिप्रोक्तः स्तूयते सर्वदैवतैः ॥ मेघे ॥ राज्ञि ॥ नाट्योक्त्याभूमिपाले ॥ पारदे ॥ वराटीके ॥ देवदारुणि ॥ न । इन्द्रिये ॥ वि । पूज्ये ॥ दीप्तिमति ॥

देवकः । पुं । यदुवंशीये नृपविशेषे । श्रीकृष्णस्य मातामहे ॥ दीव्यति । ण्वुल् ॥

देवकर्दमः । पुं । सुगन्धिद्रव्यविशेषे ॥

सतुश्रीखण्डो गुरुकर्पूरकुङ्कुममि-
श्रितैर्भवति ॥ इति राजनिर्घण्टः ॥

देवकल्पः । त्रि । देवतुल्ये ॥ ईषदूनो देवः । ईषदसमाप्ताविति कल्पप् ॥

देवकात्मजा । स्त्री । देवक्याम् ॥

देवकार्य्यम् । न । देवानुद्दिश्य क्रियमाणे ॥

देवकाष्ठम् । न । देवदारुणि ॥

देवकिरी । स्त्री । मेघरागस्य भार्यायाम् ॥ यथा । ललिता मालती गौरी नाटी देवकिरी तथा । मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः ॥ अस्याः स्वरूपं यथा । आमर्णी नन्दने स्यामा पुष्पप्रचयतत्परा । ख्याता देवकिरी घोषाकरार्पित सखीकरा ॥

देवकी । स्त्री । वसुदेवभार्यायाम् । श्रीकृष्णमातरि ॥ मथुरायां यादवेन्द्रेयाम् ॥ देवकमाचष्टे इति णिच् तादृचइः । ततो ङीप् ॥ यद्वा । देवकस्यापत्यम् । स्त्री । संज्ञापूर्वकत्वात् वृद्ध्यभावः । इतो मनुष्यजाते रिति ङीष् ॥ यद्वा । देवकशब्दस्तत्पत्न्ये लक्षणया वृत्तौ पुंयोगादिति ङीष् । नहितत्र दाम्पत्यलक्षण एव पुंयोगः किन्तु जन्यजनकत्वादपीति हरदत्तादयः । अतएव प्राक् केकयी तोभरतस्ततो ऽमृदितिभट्टिः । एवं रैवतीरमणोपि ॥



देवकीनन्दनः । पुं । श्रीकृष्णे ॥ देवक्यानन्दनः पुत्रः ॥

देवकीसूनुः । पुं । श्रीकृष्णे ॥ देवक्याः सूनुः ॥

देवकुरम्बा । स्त्री । महाद्रोणायाम् ॥

देवकुलम् । न । प्रासादे । देवल इति भाषा प्रसिद्धे आयतने ॥

देवकुल्या । स्त्री । सरिति ॥

देवकुसुमम् । न । लवङ्गे ॥ देवानां कुसुमम् ॥ कुसुमेषु देववधा । राज० ॥ देवयोग्यं कुसुमं वा । भा० ॥

देवकूटम् । न । तीर्थविशेषे ॥

देवखातः । पुं । न । अकृत्रिमजलाशये ॥ देवेनखातः ॥ देवद्वारस्थजलाशये । देवसम्बन्धिखे नर्मस्थिते सरसि ॥ स्त्री । न । गुहायाम् ॥

देवखातकम् । न । अखाते देवखाते ॥ देवे न खातम् । स्वा० कः ॥

देवखातबिलम् । न । गुहायाम् ॥

देवगन्धा । स्त्री । महामेदायाम् ॥

देवगर्भा । स्त्री । कङ्कालपीठाधिष्ठात्री देवतायाम् ॥

देवगान्धारी । स्त्री । श्रीरागस्य भार्यायाम् ॥ यथा । गान्धारी देवगान्धारी मालवश्रीस्तथारवी । रामकीर्य्यपि रागिण्यः श्रीरागस्य प्रियाइमे ॥ अस्या गानसमयः शिशिरर्त्तौ तृतीयप्रहरः

वधिराव्यर्द्धपर्य्यन्तमिति गानविदः ॥

देवगायनः । पुं । गन्धर्व्वे ॥

देवगिरिः । पुं । भारतवर्षस्य पर्व्वतवि-
शेषे ॥

देवगिरी । स्त्री । रागिणीविशेषे ॥ सा
च सोमेश्वरमते वसन्तरागस्य भार्य्या
वसन्तर्त्तौ सदा गेया । भरतमते
हिन्दोलरागपुत्रस्य नागध्वने र्भार्य्या
॥ सङ्गीतदर्पणमते तु नटकल्याणभा
र्य्या ॥ अस्याः स्वरूपं यथा । अत्यभि
रामतनुः उत्तुङ्गपीनस्तनी चारुच-
न्द्रभूषणा स्त्रीपङ्क्तिमध्यस्था मत्त
चकोरनयना शुभकम्बुग्रीवा । अस्या
गानसमयो हेमन्ते दिवाचतुर्थप्रह
रावधिराव्यर्द्धपर्य्यन्तम् ॥

देवगुरुः । पुं । सुराचार्य्ये ॥ देवानां गुरुः ॥

देवगुह्यम् । न । मरणे ॥ तद्धि प्राणि
नां वैराग्योदयाय देवैर्गोप्यते ॥

देवगृहम् । न । देवालये ॥ सूर्य्यचन्द्रा
दीनां ज्योतिर्मण्डलेषु ॥

देवचिकित्सकौ । पुं । अश्विनीकुमार
यो. ॥ इति हलायुधः ॥

देवच्छन्दः । पुं । शतयष्टिहारे ॥ देवै
श्छन्द्यते । छदि° । घञ् ॥

देवजग्धम् । न । देवजग्धके ॥

देवजग्धकम् । न । कत्तृणे ॥ देवैरद्यते
क्ष । अद° । कः । घटोऽजघ्धिर्य्यपति



किति ॥

देवजनविद्या । स्त्री । गन्धयुक्तिनृत्यगी
तवाद्यशिल्पादिविज्ञानेषु ॥

देवटः । त्रि । शिल्पिनि ॥ दीव्यति । दि
वु° । शकादिभ्योऽटन् ॥

देवट्टी । स्त्री । गङ्गाविट्यायाम् ॥

देवतरुः । पुं । मन्दारादिवृक्षेषु ॥ प-
ञ्चैते देवतरवो मन्दारः पारिजात
कः । सन्तानः कल्पवृक्षश्च पुंसि वा ह
रिचन्दनम् ॥ देवानां तरुः ॥ चैत्य
वृक्षे ॥

देवता । स्त्री । अमरे । सुरे ॥ देव एव
। स्वार्थे तल् ॥ विग्रहादिप्रतिमाया
म् ॥ त्यज्यमानद्रव्ये उद्देश्यविशेषे ॥
॥ मन्त्रस्तुत्यायाम् ॥ तस्याः सङ्ख्या
यथा । तदाराविबुधाः सर्व्वेस्वानां स्वा
नां गणैःसह । त्रैलोक्ये तत्त्रयस्त्रिंश
त्कोटिसंख्या यथाभवेति पाद्मोत्तर
खण्डम् ॥

देवताडः । पुं । सैंहिकेये । राहौ ॥
जीमूते । खराग्नौ । देताड इति
गौडभाषा प्रसिद्धे वृक्षे ॥ अग्नौ ॥
देव मिन्द्रियं ताडयति । तडआघा-
ते । कर्म्मण्यण् ॥

देवताडकः । पुं । देवताडे ॥ स्वार्थे कः ॥

देवताधिपः । पुं । इन्द्रे ॥

देवत्वम् । न । देवभावे । देवसायुज्ये ॥

देवसभावः कर्मधा । सस्त्रभोवस्त्व- तसौ ॥

देवदण्डा । स्त्री । नागबलायाम् ॥

देवदत्तः । पुं । अर्जुनस्य शङ्खे ॥ बुद्धानुजे ॥ जृम्भकरे वायुविशेषे ॥ मिताक्षरायां देवदत्तः शुद्धस्फटिकसन्निभः ॥ देवाएनं देयासुः ॥ क्तिच्क्तौ चसंज्ञायामिति क्तिच् । देवदृ- घोरित्ति त्र्यादेश ॥ भिन्न सुरापिते ॥ देवायदत्तः ॥ ग्रामविशेषे ॥

देवदत्ताग्रजः । पुं । बुद्धे । शाक्यमुनौ ॥

देवदामनी । स्त्री । वलिमोटायाम् ॥

देवदारु । न । स्वनामप्रसिद्धे वृक्षविशेषे । भद्रदार्वणि ॥ पूतिकाष्ठे ॥ देवदारु ॥ देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च । विबन्धाध्मानशोथा- मतन्द्राहिक्काज्वरास्रजित् ॥ प्रमेह- पीनसश्लेष्मकासकण्डुसमीरनुत् ॥ पुं । यथा । अमुं पुरः पश्यसि देवदारु मितिरघुः ॥

देवदालिका । स्त्री । महाकाली ॥

देवदाली । स्त्री । लताविशेषे । जीमूतके ॥ कष्टफलायाम् । घघरबेल इति सोनैया इति च भाषा ॥ देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः । नाशयेद्वामनी तिक्ता च यक्ष्म कृमिज्वरान् ॥ देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम् । स्रंसनं गुल्मशूलघ्नं सर्वार्शं वातजित् परम् ॥ * ॥ देवदालीदलं तक्रे स्विन्नं खण्डितं भृशम् । येतत्यायुर्स साध्वे भर्जितं चिक्कणा दृढम् ॥ पीनापरा खरस्पर्शा विषघ्नी गरनाशिनी ॥ इत्य- परा देवदाली ॥

देवदासी । स्त्री । वनबीजपूरे ॥ वेश्यायाम् ॥

देवदीपः । पुं । लोचने ॥

देवदुन्दुभिः । पुं । गन्धपर्णासे । रक्तसुलसायाम् ॥ देवानां दुन्दुभिर्वाद्ये ॥

देवदूती । स्त्री । मध्यमायाम् । वनबीजपूरके ॥

देवदेवः । पुं । शिवे । महेश्वरे ॥ ब्रह्मणि ॥ देवानां देवेषु वा देवः ॥

देवदेवाधिपः । पुं । नेमिचक्रवर्तौ ॥

देवद्रोणी । स्त्री । देवयात्रायाम् ॥

देवद्यज् । त्रि । देवपूजके ॥ देवान् यजति । यज् । ऋत्विगादिनाकिन् ॥ विष्विग्देवयोरित्यद्र्यादेशः ॥

देवधनम् । न । देवस्वे ॥

देवधान्यम् । न । जूर्णाह्वये । देवताले । बीजपुष्पिकायाम् । जुन्हरी इति जुवार इति च भाषा ॥

देवधूपः । पुं । गुग्गुलौ ॥ राले ॥

देवनः । पुं । पाशके ॥ दीव्यतेऽनेन-

। दिवु० । भावकरणादौ ल्युट् ॥ न ॥ व्यवहारे ॥ जिगीषायाम् ॥ क्रीडा-
याम् ॥ लीलोद्याने ॥ पद्मे ॥ दीप्तौ ॥
देवनदी । स्त्री । गङ्गायाम् ॥ यमुना-
याम् ॥
देवनन्दी । पुं । इन्द्रद्वारपाले ॥
देवनलः । पुं । नलोत्तमे । महानले ॥
देवना । स्त्री । क्रीडायाम् ॥ सेवायाम् ॥
देवनालः । पुं । स्थूलदण्डे । देवनले ॥
देवनिर्मिता । स्त्री । गुडूच्याम् ॥
देवपतिः । पुं । इन्द्रे ॥
देवपत्नी । स्त्री । मध्वालुके ॥ देवना-
र्याम् ॥
देवपथः । पुं । सुरवर्त्मनि । छायापथे ॥
सोमधारायाम् ॥ देवैरर्षिभिरादिभि
र्गमयितृत्वेनाधिकृतो यः पन्थास्तत्प-
न्था देवपथउच्यते ॥ देवानामिन्द्राः
। स्वर्गपुरुषः ॥ न । तीर्थविशेषे ॥
देवपरः । त्रि । मूर्खे ॥ यज्ञविघ्ने ॥ दे
वः परः उत्कृष्टोऽस्य ॥
देवपर्णम् । न । सुरपर्णे ॥
देवपुत्रिका । स्त्री । एलायाम् ॥
देवपुत्री । स्त्री । देवकन्यायाम् ॥ एला-
याम् ॥
देवपूः । स्त्री । अमरावत्याम् ॥
देवपुरी । स्त्री । अमरावत्याम् ॥ दे-
वानां पुरी ॥

देवपुरोधाः । पुं । बृहस्पतौ ॥
देवप्रश्नः । पुं । उपश्रुतौ । ग्रहनक्षत्रा-
दिघटितजिज्ञासायाम् ॥
देवप्रियः । पुं । पीतभृङ्गराजे ॥ बक-
पुष्पे ॥
देवबला । स्त्री । त्रायमाणायाम् ॥ सह-
देव्याम् ॥
देववल्लभः । पुं । पुन्नागवृक्षे ॥
देवब्रह्मा । पुं । नारदमुनौ ॥
देवब्राह्मणः । पुं । देवपूजकेब्राह्मणे ॥
शा० मध्यमपदलोपः ॥
देवभवनम् । न । बोधिद्रुमे । अश्वत्थे ॥
नाके । स्वर्गे ॥ देवानां भवनम् ॥
देवभूः । पुं । देवे ॥ स्वर्गे ॥
देवभूतिः । स्त्री । मन्दाकिन्याम् ॥ सु-
रैश्वर्ये ॥
देवभूयम् । न । देवत्वे । देवसायुज्ये ॥
देवस्य भावः । भुवोभावइतिक्यप् ॥
देवमणिः । पुं । भर्गे । हरे । शिवे ॥
अश्वस्य कण्ठावर्ते । अश्वरोमावर्ते ॥
आवर्त्तो रोमजो देवमणिरित्यभिधीय-
ते ॥ विष्णुवक्षोमणौ । कौस्तुभे ॥
महामेदायाम् ॥
देवमाता । स्त्री । अदित्याम् ॥ देवा-
नां माता ॥
देवमातृकः । पुं । वृष्ट्यम्बुसम्पन्नव्री-
हिपालिते देशे ॥ देवो माताऽस्य

। नचूमवचेतिकप् ॥

देवमानकः । पुं । कौस्तुभमणौ ॥

देवमासः । पुं । गर्भाष्टमे । गर्भस्याष्टमे मासि ॥ मनुष्यमानेनत्रिंशद्वर्षात्मके देवानांमासे ॥

देवयजनम् । न । यज्ञभूमौ ॥ कृत्वचे ॥ देवा ईज्यन्ते यस्मिन् ॥

देवयजिः । पुं । देवपूजके । मुनौ ॥

देवयज्ञः । पुं । होमे । देवोद्देश्यक यागे ॥

देवयाजी । त्रि । कामनापुरस्सरं देवान् यजमाने । यःफलकाम नयादेवान्यजते सः ॥ देवयाजिभ्यात्मयाजीश्रेयान् ॥

देवयाचा । स्त्री । देवद्रीपक्षाम् । देवगमने ॥ देवोत्सवादौ ॥

देवयानः । पुं । न । विद्यावतोमार्गविशेषे । तत्रस्थविदुरितिविद्या तया प्रतिपत्तव्योमार्ग ॥ न । देवरथे । देवविमाने ॥

देवयानी । स्त्री । शुक्राचार्यस्यपुत्र्याम् । ययातेर्ज्येष्ठपत्न्याम् ॥

देवयुः । त्रि । धार्मिके ॥ लोकयात्रिके ॥ पुं । देवे ॥ देवान् याति । याप्रापणे । स०कुः ॥

देवयोनिः । पुं । विद्याधरादिषु ॥ तेषदश । यथा । विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमीदेवयोनयः ॥ देवोयोनिः उत्पत्तिस्थानंयस्यसः द्वन्वीसरूपार्थः ॥

देवरः । पुं । देवरि । पतिभ्रातरि ॥ देवते । देवृदेवने । अर्त्तिकमिभ्रमी त्यरन्चित् ॥ पत्युःकनिष्ठभ्रातरि पतिस्वामी । ज्येष्ठस्तुभ्रतुरस्येतिस्मृत्यादयः ॥ पतिश्वशुरताज्येष्ठे पतिदेवरतानुजे । इतरेषुसपीण्डेषु यथा पितरं भतम् ॥

देवरथः । पुं । पुष्पकादौदेवानांविमाने ॥

देवराजः । पुं । इन्द्रे ॥ मरुत्पति ॥ देवानांराजा । राजाहःसखिभ्यष्टच् ॥

देवरातः । पुं । परीक्षिति । अभिमन्युसुते नृपतिविशेषे ॥

देवर्षिः । पुं । नारदादिषु ॥ देवाएवसन्तो ये मन्त्रदर्शित्वेन ऋषित्वं प्राप्तास्तेदेवर्षयउच्यन्ते ॥ सप्तमीदाशरतोर्थद्वये ॥

देवलः । पुं । मुन्यन्तरे । व्यासशिष्ये वैश्यर्षेर्ज्येष्ठभ्रातरि ॥ देवरे ॥ देवाजीवे ॥ धार्मिके ॥ सुरर्षौ ॥ दीव्यति । दिवु० । वृषा०कलः ॥ देवान् जीविकार्थंलाति आदत्ते । लाआदाने । आतोनुपेतिकः ॥

देवबकः । पुं । अर्चनार्थकत्वेनमतिमाप रिचारके । पुजारी इतिभाषा ॥ चि कित्सकान् देवलकान् मांसविक्रयि यस्तथा । विपखेनचखीवन्तो, वर्ज्याः स्युर्हव्यकव्ययोः ॥ देवकोषोपजीवी चनामा देवलकोभवेत् ॥ स्वा० का ॥
देवलता । स्त्री । नवमल्लिकायाम् ॥
देवलाङ्गुलिका । स्त्री । वृश्चिकाल्याम् ॥
देवलोकः । पुं । स्वर्गे ॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्तिता इतिमत्स्यपुराणम् ॥
देववर्त्म । नी । यज्ञे ॥ देवानांवर्त्म ॥
देववर्द्धकिः । पुं । विश्वकर्मणि ॥
देववल्लभः । पुं । पुन्नागे । गुणैर्देवप्रसन्नेप्रदा इतिप्रसिद्धे ॥ देवानांवल्लभः ॥
देववित् । चि । देवताकाङ्क्षीये ॥ सर्वे त्वं कल्पयति । सर्वेन्द्रादयोदेवास्तत्फलदातारो नेश्वर स्सर्वेति । तच्चकल्पनामात्रम् । अस्मदादिप्रयासमेव्य फलदातृत्वे तेषां भूत्येभ्यो विशेषाभावप्रसङ्गात् । स्वातन्त्र्ये पकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात् तत्प्रसादस्याकिञ्चित्करत्वात् ॥
देवविद्या । स्त्री । निरुक्ते ॥
देवर्च्छः । पुं । सप्तपर्णे ॥ मन्दारादि देवतरौ । गुग्गुलौ ॥ देवानां वृक्षः ॥
देवव्रतः । पुं । भीष्मपितामहे ॥ भीष्मोहि पितरिशन्तनौमृते स्वसराज्याधिकारसत्त्वेपि पितरं शन्तनुं प्रतिज्ञां राज्यं विवाहं चाकरिष्यामि त्वं सत्यवतीं वृणु इतिसत्यवती विवाहसमये प्रतिज्ञातवान् विवाहं च राज्यं तोऽचेष्टपुत्रमेव राज्येस्थापयामास । ताहृशसत्यव्रतपक्ष देवानां व्रतं परिपाल्यमाहेवव्रतनामा भवत् इति पुराणप्रसिद्धेः ॥ देवानां व्रतं ॥
देवश्रेष्ठः । पुं । दमनके ॥
देवश्रुतः । पुं । ईश्वरे ॥ शास्त्रे ॥ नारदे ॥
देवश्रेणी । स्त्री । मूर्वायाम् ॥
देवसखः । पुं । पर्वतान्तरे ॥
देवसभा । स्त्री । सुधर्मायाम् ॥ सदभ्यन्तराम् । सभाराजेतिनिपातनाद् ड् । देवानां सभा आस्थानगृहम् ॥
देवसभ्यः । चि । क्रीडासंसद्गते । सभिके ॥
देवसर्षपः । पुं । द्रव्यविशेषे । अस्यार्थे । रक्तमूलकेः । सूक्ष्मदले ॥ द्र० गुणाः ॥
देवसहा । स्त्री । दण्डोत्पलौषधौ ॥ भिन्नाहृषे ॥
देवसात् । अ । देवाधीने ॥ देवदेये ॥

देवसायुज्यम् । न । देवभूये । देवत्वे ॥ युनक्ति । युजिर्० । इगुपधेतिकः । युजेनसह । तेनसहेति बहुव्रीहिः । वोपसर्जनस्येति सहस्य सः ॥ यद्वा । योजनंयुक् । सं० क्विप् ॥ सहयुजा सयुक् । सयुजस्य सयुजोवा भावः । ष्यञ् । देवस्य सायुज्यम् ॥

देवसृष्टा । स्त्री । मद्ये ॥ इतिहेमचन्द्रः ॥ देवेन सृष्टा ॥

देवसेना । स्त्री । मातृकाविशेषे । इन्द्रस्य सुतायाम् । षष्ठ्याम् । स्कन्दस्य पत्न्याम् ॥ षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता ॥ देवतानां सेनाम् ॥

देवसेनापतिः । पुं । स्कन्दे ॥

देवस्वम् । न । यज्ञशीलानां धने ॥ यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥ प्रतिमादिदेवतार्थमुत्सृष्टधने ॥ देवानां स्वम् । यथाऽस्वच्च गुरोर्द्रव्यं देवस्वञ्चहरे सुतः । कन्यां ददातियुक्तेन समेतो जायते खल इतिमहाभारते पञ्चमेतोपाख्यानम् ॥

देवहूः । पुं । वामकर्णे ॥ पितृहूर्दक्षिणः कर्ण उत्तरोदेवहूः स्मृतः ॥

देवहूतिः । स्त्री । स्वायम्भुवमनोःकन्यायाम् ॥ यथा । आकूतिः प्रथमाकन्या द्वितीयादेवहूतिका । तृतीयाचप्रसूतिर्विख्यातालोकपाविनी ॥

देवह्रदः । पुं । तीर्थविशेषे ॥

देवा । स्त्री । आरम्भामोषधौ । पद्मचर्पट्याम् ॥

देवागारिकः । त्रि । देवागारे नियुक्ते ॥ अगारान्ताट्ठन् ॥

देवाजीवः । त्रि । देवले । प्रतिमापरिचारके । पुजारीबाम्हन् इति भाषा ॥ देवमाजीवो ऽस्य ॥

देवाजीवी । त्रि । देवले ॥ देवैराजीवितुंशीलमस्य । सुप्यजातौणिनि-स्ताच्छील्ये ॥

देवाटः । पुं । हरिहरक्षेत्रे ॥ देवानामटनात्क्षेत्रं देवाट इतिसंज्ञितम् ॥

देवात्मा । पुं । अश्वत्थवृक्षे ॥

देवानांप्रियः । पुं । छागे ॥ त्रि । मूर्खे ॥ मूर्खाहि देवानां प्रीतिंजनयन्ति देवपशुत्वात् ॥ षष्ठ्या अलुक् ॥

देवापिः । पुं । असुरविशेषे ॥ देवाना प्नोति । आप्लृ० । फलेग्रहिरात्मम्भरिश्चेतिचकारादिन् ॥ प्रतीपराजस्य-पुत्रे ॥ ससुमेरुसमीपे कलापग्रामे योगीभूत्वा आस्ते । सकलौ कुरुंच त्रवंशं पुनः सत्ययुगे भावयिष्यति ॥

देवाभीष्टा । स्त्री । ताम्बूल्याम् ॥

देवायतनम् । न । देवालये ॥ न देवायतनं गच्छेत् कदाचिद्वाऽप्रदक्षिण

म् । नपीडयेद्वा वस्त्राणि नदेवायतने ष्वपीतिकूर्मपुराणम् ॥

देवायुधम् । न । शक्रधनुषि ॥ देवाना मस्त्रे ॥

देवारातिः । पुं । दैत्ये ॥

देवार्य्यः । पुं । वर्द्धमानाख्ये ऽर्हद्भेदे ॥

देवार्हम् । न । सुपर्णे ॥ त्रि । देवयोग्ये ॥

देवार्हा । स्त्री । सहदेवीलतायाम् ॥

देवालयः । पुं । देवगृहे ॥ देवस्यालयः ॥ स्वर्गे ॥ देवानामालयः ॥

देवाला । स्त्री । रागिणीविशेषे ॥

देवावासः । पुं । अश्वत्थवृक्षे ॥

देवाश्वः । पुं । इन्द्राश्वे । उच्चैःश्रवसि ॥

देविका । स्त्री । सरिद्भेदे ॥ दीव्यति । दिवु० । ण्वुल् ॥ अर्द्धयोजनविस्तारां पञ्चयोजन मायताम् । एतावद्विकाया तुदेवर्षिपरिषेविता मितिपाद्मे भूमिखण्डम् ॥ धुस्तूरे ॥

देविलः । त्रि । धार्मिके ॥ अनुकम्पितो देवदत्तः । घनिलचौ वेतीलच् ॥

देवी । स्त्री । कृताभिषेकायाम् । महिष्याम् ॥ नटोक्त्याभिषिक्तराजपत्न्याम् ॥ पृक्कायाम् ॥ मूर्वायाम् ॥ आदित्यभक्तायाम् ॥ लिङ्गिन्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ आखिपर्ण्याम् ॥ महाद्रोण्याम् ॥ पाठायाम् ॥ नागरमुस्तायाम् ॥ स्पृक्कायाम् ॥ हरीतक्याम् ॥ श्यामानामपक्षिजातौ ॥ दुर्गायाम् । पार्वत्याम् ॥ देव्याः पादोदकमाहात्म्यमुक्तं देवीभागवते । सकृत्कृत्वा महापूजां देवीपादजलं पिबन् । नमातुर्जननीगर्भे गच्छेदिति विनिश्चयः इति । दीव्यति यद्वा । देवयति सर्वान् ॥ प्रकृतिमिह व्युपदेशेन यथाधिकारं व्यवहारयति । दिवु० । पचादौ देवडिति निपातनान्ङीप् ॥ सामान्यतो देवपत्न्याम् ॥ ब्राह्मण्यादीनां मातृष्वपि ॥ देव्यन्ताः क्षत्रियाः सर्वा दासान्ताः शूद्रयोनयः ॥

देवीकोटः । पुं । बाणपुरे ॥

देवीभक्तः । त्रि । शाक्ते ॥ यथा । अपराधं परं कृत्वा देवीभक्तस्य कोजनः । सुखं लभेत यद्यपि भवेत् धाताभिवःस्वयमितिभागवतम् ॥

देवा । पुं । देवरे ॥ दीव्यति । दिवु० । द्विवर्णः । देवरो देवः इत्यादिप्रयुक्तम् ॥

देवेज्यः । पुं । बृहस्पतौ ॥ देवानामीज्यः ॥

देवेशः । पुं । श्रीसदाशिवे ॥ देवानामिन्द्रादीनामीशो नियन्ता ॥ विष्णौ ॥

देवेशी । स्त्री । दुर्गायाम् ॥

देवेष्टः । पुं । गुग्गुलौ ॥ महामेदायाम्

...लेन जाते ॥ दैवप्रमाणके । दैवप रे ॥ दिष्टंभागधेय मितिमतिर्यस्य । अस्तिनास्तिदिष्टंमतिरिति ठक् । कालस्वरे दैष्टिकतां न निषीदति पौरुषे ॥

दैहिकः । त्रि । देहसम्बन्धिनि ॥

दोः शिखरम् । न । स्कन्धे ॥

दोःसहस्रभृत् । पुं । कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

दोग्धा । पुं । अर्थोपजीविकवौ ॥ गोपाले ॥ वत्से ॥ त्रि । दोहनकर्त्तरि ॥

दोग्ध्री । स्त्री । गवि ॥

दोधः । पुं । गोवत्से ॥

दोधकः । पुं । दोधकवृत्ते ॥

दोधकवृत्तम् । न । त्रिष्टुप्छन्दःप्रभेदे ॥ यथा । भवितयं यदिकर्णसमेस पञ्चगराजसुभाषितमेतत् । पण्डितम एवखिकाक्षमचित्तं भामिनिभाषय दोधकवृत्तम् ॥ यथा । फुल्लकदम्बवनमालो निर्मलदिन्दुमयीरुचिजालः । एषउपैतघनाघनकालः पान्थवधूजनदर्शितकालः ॥

दोधूयमानः । त्रि । पुनःपुनरतिशयेन वाकम्पविशिष्टे ॥ नवयेपिदोधूयमानःपरमाणव स्तिष्ठन्तीशिशिरो मयिः ॥

दोरः । पुं । डोर इति भाषाप्रसिद्धा यां रज्जौ ॥

दोरकः । पुं । वीणातन्तुबन्धनरज्जौ ॥

दोर्गडुः । पुं । कुत्सितहस्ते । बाहुकुण्ठे ॥

दोर्दण्डः । त्रि । प्रभासे । बलवति ॥ भुजस्याग्रहयो ॥ भुजस्य व्यथायाम् ।

दोर्हस्तः । पुं । बाहुरूपदण्डे ॥

दोर्मध्यम् । न । बाहुमध्यभागे । बाजू० इति भाषा ॥

दोर्मूलम् । न । कक्षे । भुजकोटरे । काख० इति भाषा ॥

दोलः । पुं । दोलने ॥ श्रीकृष्णस्योत्सवविशेषे । झूला इतिभाषा ॥ दुल उत्क्षेपे । भावे घञ् ॥

दोलनम् । न । आन्दोलने । कम्पने ॥

दोला । स्त्री । शील्याम् ॥ शिबिकायाम् । डोली इतिभाषा ॥ उद्यानादिषु श्रीडार्थं काष्ठादिरचिते हिन्दोले । हिंडोला इतिभाषा ॥ यन्त्रविशेषे । स्वेदने ॥ दोलति दोलयति, दोल्यते वा । दुल० ॥ अच् घञ् वा ॥

दोलायमानः । त्रि । दोलनविशिष्टे ॥ यथा । दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते इत्युक्तवाक्यम् ॥

दोलायुद्धम् । न । अन्यतरजयपराजये ॥

दोलिका । स्त्री । हिन्दोलायाम् ॥ चिं डोला इतिभाषा ॥ दोलैव । स्वार्थे कन् ॥

दोलिकाचक्रम् । न । दोलारोहणमुहूर्त्तोपयोगिनक्षत्रविचारार्थचक्रे ॥ यथा । दोलारोहे ऽर्कभात् पञ्चशरपञ्चेषुसप्तभैः । नैरुज्यमरणं काश्यं व्याधिः सौख्यं क्रमाच्छियोः ॥

दोलितः । त्रि । आन्दोलिते । कम्पिते ॥

दोली । त्रि । दोलनयति ॥ दोलादोलनमस्त्यस्याः इनिः ॥

दोली । स्त्री । दोलायाम् ॥ डोली इति भाषा ॥

दोलोत्सवः । पुं । चैत्रशुक्लतृतीयायां कर्त्तव्यत्वेनोक्ते उत्सवविशेषे ॥ अस्यविधिस्तु देवीपुराणादौ द्रष्टव्यः ॥

दोः । पुं । भुजे । प्रकोष्ठे ॥ दाम्यत्यनेन । दम । दमेर्डोसिः । पत्वंशासिद्धत्वात् उत्वविसर्गौ सिद्धौ ॥

दोषः । पुं । दूषणे ॥ सकोपिदोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ पापे ॥ आचमनं विना भक्षणे दोषाभावो यथा । मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे । फलमूले चेक्षुदण्डे न दोषं प्राह वै मनुः ॥ अदातारं प्रदोषेण वर्मदोषाद्दरिद्रता । उन्मादोमातृदोषेण पितृदोषे



ण मूर्खता ॥ वातपित्तकफेषु ॥ वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः । विकृताविकृता देहं घ्नन्ति ते वर्द्धयन्ति च ॥ तेऽव्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः ॥ धातवश्च मलाश्चापिदुष्यन्त्येभिर्यतस्ततः । वातपित्तकफास्ते त्रयो दोषा इतिस्मृताः ॥ ऋतुभेदेन विकारादिनाचैषां च यप्रकोपप्रशमा नियताः । ग्रीष्मेसञ्चीयते वायुः प्रावृट्काले प्रकुप्यति । प्रायेणोपशमं याति स्वयमेव सन्मीरणः ॥ शरत्कालेव सन्तेच, पित्तं प्रावृषि तौ कफः । चयकोपशमान् दोषा विहाराहारसेवनैः ॥ समानैर्यान्त्यकालेपि विपरीतैर्विपर्यय इति ॥ वातपित्तश्लेष्मस्वभावादिपरिपूर्णत्वेन कायगुणस्थितत्वे ॥ काव्यगुणेतरस्मिन् ॥ स च रसापकर्षकः । यथा । मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ॥ दोषं स्थयति ॥ प्रवर्त्तनालक्षणादोषाः ॥ १८ ॥ दोषाइतिन्यायसूत्रं रागद्वेषमोहात्मकलक्षणापनाय । प्रवर्त्तनाप्रवृत्तिजनकत्वम् तद्देषलक्षणं दोषाणाम् । यद्यपीदं शरीरादष्टेश्वरेच्छादावतिव्याप्तं तथापि लौकिकप्रत्यक्षविषयकत्वस्वीतिविशेषणीयम् । योगादिगोच

रप्रमार्थोदयात्र प्रामाण्यमस्त्वेवसतीति-विशेषयन्ति ॥ दुष्यति अनेनवा । दु पर्वेकृत्य । अथ अकर्त्तरिचकारक इत्यनेनकरणेघञ् ॥

दोषग्राही । त्रि । पुरोभागिनि । खले ॥ विहाय सर्वदोषान् गुणान् गृह्णन्ति साधवः । दोषग्राही गुणत्यागी चालनीवहि दुर्जनः ॥ दोषं गृह्णाति । ग्रह० । णिनिः ॥

दोषज्ञः । त्रि । विपश्चिति । पण्डिते ॥ चिकित्सके ॥ दोषविषयकज्ञानयुक्ते ॥ दोषंजानाति । ज्ञा० । कात इतिकः ॥

दोषत्रयम् । न । वातपित्तकफेषु ॥

दोषवान् । त्रि । दुष्टे ॥

दोषा । अ । रात्रौ ॥ रात्रिमुखे ॥ दुष्यत्यत्र । दुष० । बाहुलकात् आप्रत्ययः ॥

दोषा । स्त्री । रात्रौ ॥ भुजे ॥ दाम्यत्यनेन । दम० । दमेर्डोसिः । आगुरितितेनटाप् ॥

दोषाकरः । पुं । चन्द्रे ॥ त्रि । दोषाणामाकरे ॥

दोषाक्लेशी । स्त्री । वनबर्बुरिकायाम् ॥ इतिराजनिर्घण्टः ॥

दोषातनः । त्रि । रात्रिभवे ॥ सायंचिरमितिट्युः ॥

दोषातिलकः । पुं । प्रदीपे ॥

दोषास्यः । पुं । प्रदीपे ॥

दोषिकः । पुं । रोगे ॥

दोषी । त्रि । अपराधिनि । दोषयुक्ते ॥

दोषैकदृक् । त्रि । पुरोभागिनि । खले ॥ दोष एवैकस्मिन् नतुगुणे दृक् ज्ञानं यस्य ॥

दोस्थः । पुं । क्रीडायाम् ॥ क्रीडके ॥ सेवायाम् ॥ सेवके ॥ त्रि । दोःस्थिते ॥

दोहः । पुं । दोहनमात्रे ॥ दुग्धे ॥ दुग्धपात्रे ॥ दुग्धप्रपूरणे । कर्मणिघञ् ॥

दोहनम् । न । दुग्धे ॥

दोहडिका । स्त्री । भाषावृत्ते पद्धतिकाप्रभेदे ॥ भाषापद्योर्दश्कयदि पूर्वं लघुकपरिविरामि । पठपुनरेकादशं दोहडिकाद्विगुणेन ॥ प्राकृतेप्रचारः । यथा । राईदोहडिपठन सुनि हाँसिओकाज्ञगोपाल । वृन्दावनघनकुञ्ज चलिओकमलरसाल ॥ अस्यार्थः । क्रमात् दोहडिकापाठंश्रुत्वाकृष्णोगोपालो हसित्वा कमलरसालं चलितः कुत्र वृन्दावनघनकुञ्जे । वृन्दावनस्य निविडनिकुञ्जे । माइइतिकश्चित्पाठ स्तन्मतेन राधिकायादोहडिकापाठं श्रुत्वा ॥ गुरुलघुव्यत्ययेनवहुविधाभवति ॥

दोहदः । पुं । न । गर्भे ॥ गर्भिण्याभि

भिलाषे । लालसायाम् ॥ गर्भिण्यास्तत्तदिच्छायां विशेषेण प्रयुज्यते । दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥ देयमप्यहितं तस्यै हितायहितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव च ॥ चिह्ने । गर्भलक्षणे ॥ न । स्पृहायाम् ॥ दोहमाकर्षं ददाति । डुदाञ्० । आतोनुपेतिकः ॥

दोहदलक्षणम् । न । वयःसन्धौ ॥ गर्भे ॥

दोहदवती । स्त्री । श्रद्धादिद्रव्यविशेषाभिलाषवत्यां गर्भवत्याम् । श्रद्धालाम् ॥ अथास्य गर्भिण्याः कर्त्तव्याकर्त्तव्यमुक्तं मत्स्यपुराणे । दित्यां गर्भमाधाय कश्यपः प्राह तां पुनः । त्वया यत्नो विधातव्यो ह्यस्मिन् गर्भे वरानने ॥ संवत्सरशतं त्वेकमस्मिन्नेव तपोवने । सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा । नोपस्करेषु निविशेन्मुषलोलूखलादिषु ॥ जलञ्च नावगाहेत शून्यागारञ्च वर्जयेत् । वल्मीकेषु न तिष्ठेत न चोद्विग्नमना भवेत् ॥ विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना । न शयालुः सदा तिष्ठेद् व्यायामञ्च विवर्जयेत् ॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् । वर्जयेत् कलहं लोकैर्गात्रभङ्गञ्च वर्जयेत् ॥ न मुक्तकेशा तिष्ठेत नाशुचिः स्यात् कदाचन । न शयीतोत्तरशिरा न चापरशिराः क्वचित् ॥ न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती । नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत् ॥ कुर्य्याच्च गुरुशुश्रूषां नित्यं माङ्गल्यतत्परा । सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा । तिष्ठेत् प्रसन्नवदना भर्त्तुः प्रियहिते रता ॥ दानशीला तृतीयायां पार्वण्यां नक्तमाचरेत् । इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ॥ यस्तु तस्या भवेत् पुत्रः शीतायुर्वृद्धिसंयुतः । अन्यथा गर्भपतनमवाप्नोति न संशयः ॥ तस्मात् त्वमनयाद्यास्मिन् गर्भेऽस्मिन् यत्नमाचरेति ॥ दोहदो गर्भिण्यभिलाषोऽस्त्यस्याः । मतुप् । ङीप् ॥

दोहदान्विता । स्त्री । दोहदवत्याम् ॥

दोहदिनी । स्त्री । दोहदवत्याम् ॥ तां द्विहृदयां नारीमाहुर्दोहदिनीं बुधाः ॥ दोहदोऽस्त्यस्याः । अत इनिः । ङीप् ॥

दोहनम् । न । स्तनाद्दुग्धनिःसारणे ॥

दोहनी । स्त्री । दोहनपात्रे । पार्य्याम् ॥

याम् । दोहदे ॥ दुर्जनत्वे ॥ दुर्हृदः कर्मभावो वा । युञ् ॥

दौलेयः । पुं । कच्छपे ॥ दुल्या अपत्यम् । इतश्चानिञ इति ढक् ॥

दौवारिकः । पुं । द्वाःस्थे । क्षेमधरे ॥ द्वारे नियुक्तः । सर्वनियुक्त इति ठक् ॥

दौवारिकी । स्त्री । प्रतीहार्याम् ॥ ङीप् ॥

दौष्कुलेयः । त्रि । दुष्कुलीने ॥ दुष्कुलस्यापत्यम् । दुष्कुलाद् ढक् ॥

दौष्ठवम् । न । दुष्टुभावे ॥ उद्धत्वम् ॥

दौष्यन्तिः । पुं । भरतनृपे ॥ दुष्यन्तस्यापत्यम् । अतइञ् ॥

दौहित्रः । पुं । कुतुपे ॥ दुहितुः सुते ॥ दुहितुरपत्यम् । अनन्तरानन्तर्ये विदादिभ्योञ् ॥ न । त्रीणि आहुः पवित्राणि दौहित्रं कुतपं तिलाः । दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः ॥ कपिलायाघृतञ्चैव दौहित्रमिति चोच्यते ॥ इति मार्कण्डेयपु० ॥ पौत्रदौहित्रयोर्लोके विशेषो नास्ति कश्चन । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः इति दायभागः ॥ दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति मनुः ॥

द्य । अ । हिंसायाम् ॥ प्रातिलोम्ये ॥ दादपूर्वो ॥

द्यावाक्षमे । स्त्री । द्वि० । भूदिवोः । स्वर्गपृथिव्योः ॥ द्यौश्च क्षमा च । दिवो द्यावा ॥

द्यावापृथिवीयम् । न । द्यावापृथिव्योर्हविरादौ ॥ द्यावापृथिव्यौ देवते अस्य । द्यावापृथिवी त्यादिनाछः ॥

द्यावापृथिव्यम् । न । द्यावापृथिव्योर्हविरादौ ॥ द्यावापृथिव्यौ देवते अस्य । द्यावापृथिवीत्यत आयत् ॥

द्यावापृथिव्यौ । स्त्री । द्वि० । स्वर्गपृथिव्योः ॥ द्यौश्च पृथिवी च । दिवसश्च पृथिव्यामिति चाद्दिवो द्यावा ॥

द्यावाभूमी । स्त्री । द्वि० । द्यावापृथिव्योः ॥ द्यौश्च भूमिश्च । दिवो द्यावेति देवता द्वन्द्वे द्यावादेशः ॥

द्युः । पुं । अग्नौ ॥ न । अह्नि ॥ गगने ॥ स्वर्गे ॥ अव्युत्पन्नप्रातिपदिकोयम् ॥

द्युगः । पुं । पक्षिणि ॥ इति राजनिर्घण्टः ॥

द्युगणः । पुं । अहर्गणे ॥

द्युत् । पुं । किरणे ॥ द्युत० । क्विप् ॥

द्युतिः । स्त्री । रश्मौ ॥ शोभायाम् ॥ प्रकाशे ॥ प्रभायाम् ॥ द्युतिरङ्गता कान्तिरित्यप्यार्थाः ॥ द्योतते । नदा द्युतदीप्तौ । इगुपधादितीन् ॥

द्युतिकरः । पुं । ध्रुवे ॥ त्रि । शोभाकरे ॥

द्युतितम् । त्रि । दीप्तिविशिष्टे । द्योतिते ॥

द्युतिमान् । त्रि । प्रशस्तकान्तिमति ॥

द्युती । स्त्री । शोभायाम् ॥ कृदिकारादितिङीष् ॥

द्युनम् । न । लब्धात्संसमराशी ॥

द्युनिशम् । न । अहोरात्रे ॥ भवति किं द्युनिशं द्युनिवासिनाम् ॥

द्युनिवासी । पुं । देवे ॥

द्युपतिः । पुं । भानौ । हंसे ॥

द्युभ्वाद्यायतनम् । न । दिवोभुवश्चाय ये ब्रह्मणि ॥

द्युमणिः । पुं । हंसे । सूर्ये ॥ दिवो मणिरिव ॥ अर्कवृक्षे ॥ मारितेताम्रे ॥

द्युमयी । स्त्री । सूर्यस्य भार्यायाम् । विश्वकर्मणःपुत्र्याम् ॥

द्युम्नम् । न । वित्ते । धने ॥ बले ॥ दिवंमनति । म्नाअभ्यासे । आतोनुपे तिकः ॥

द्युवा । पुं । मित्रे । सूर्ये ॥ द्यौति । द्यु अभिगमने । कनिन् युवृषितक्षिराजीत्यादिना कनिन् ॥

द्युवन्दः । पुं । अपवर्गे ॥

द्युषत् । पुं । देवे ॥ दिविसीदतीति वर्त्तते । षद्लृ० । सत्सूद्विषेति क्विप् । तत्पुरुषे कृतिबहुलमितिङेर्लुक् । सुषामादित्वात्षत्वम् ॥

द्युसत् । पुं । देवे ॥ दिविसीदतीति । स त्सूद्विषेति क्विप् । पूर्वपदादिति षत्वन्तु न भवति । छन्दसीत्यनुवृत्तेः । तथाचमाघः । मनस्सु येन द्युसदां न्यधीयतेति ॥

द्यूतः । पुं । न । अक्षादिक्रीडायाम् । कैतवे । प्राणिकरणकखेलायाम् ॥ अप्राणिभिर्यस्क्रियते तल्लोकेषु स उच्यते । जूआ इति भाषा ॥ द्यूते तत् पुराकल्पे दृष्टं वैरकरं महत् । तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ * ॥ मत्स्यमांसस्य कर्त्तुर्या सम्बन्धिद्यूतमक्षदेवनादिकमधर्मं सर्वस्वापहरणकरं भगवतो विभूतिः ॥ देवनम् । दिवु० । भावे क्तः ॥

द्यूतकरः । त्रि । जुआरी इति भाषाप्रसिद्धे । द्यूतकर्त्तरि । दुरोदरे धूर्त्ते । कितवे ॥

द्यूतकारः । त्रि । द्यूतकारयितरि । सभिके ॥ द्यूतंकारयति । डुकृञ्० । कर्मण्यण् ॥

द्यूतकारकः । त्रि । द्यूतकारे ॥ स्वार्थे कः ॥ कारयति । कृ० । ण्वुल् । द्यूतस्य कारको वा ॥

द्यूतकृत् । त्रि । अक्षधूर्त्ते । द्यूतकरे ॥ द्यूतंकरोति । डुकृञ्० । क्विप् । तुक् ॥

द्यूतपूर्णिमा । स्त्री । कोजागरपूर्णिमा-

पृथ्वादेर्वधोः । टेर्लोपः ॥

द्रढिष्ठः । त्रि । द्रढीयसि ॥ अयमनयो रेषां वा अतिशयेन दृढः । इष्ठन् ॥

द्रढीयः । त्रि । दृढतरे ॥

द्रप्सम् । न । घनेतरदधिनि । द्रप्से ॥ दृप्यन्त्यनेन । दृपहर्षमोदे । अनुदात्तस्याचेप्यम् । बाहुलकात्सः ॥

द्रप्स्यम् । न । द्रप्से ॥ दृप्यन्त्यनेन । दृप प्रीणने । अघ्न्यादयश्चेति निपातितः ॥

द्रम्मः । पु । पणानां षोडशके ॥ वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः । ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः ॥

द्रवः । पु । प्रद्रावे । पलायने ॥ नर्मणि ॥ रसे ॥ गतौ ॥ आसवे ॥ वेगे ॥ द्रवणम् । द्रु गतौ । ऋदोरप् ॥ त्रि । द्रवयति ॥ आपोद्रवाः । सर्वाणि द्रवाणि जुहुयात् स्रुवेण जुहोतीत्यादि प्रयोगात् ॥

द्रवजः । पु । गुडे ॥ त्रि । द्रवजातवस्तुमात्रे ॥

द्रवणम् । न । अनुतापे ॥ क्षरणे ॥ गमने ॥ द्रु । ल्युट् ॥

द्रवत्वम् । न । द्रवतायाम् । जलवत्स्यन्दनासमवायिकारणे । तच्च पृथिवीजलतेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकनैमित्तिकभेदात् । तत्र सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् तैजसे सुवर्णादौ च ॥ तदुक्तम् । सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमुदाहृतम् । सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥ परमाणौ जले नित्यमन्यत्रानित्यमुच्यते । नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ॥ द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् । इति भाषापरिच्छेदः ॥

द्रवत्पत्री । स्त्री । शिम्बडीवृक्षे ॥

द्रवद्रव्यम् । क्ली । दुग्धदध्याज्यतक्रासवजलतैलमध्वादिद्रवीयेषु ॥

द्रवन्ती । स्त्री । निवाम् ॥ मूषिकपर्ण्याम् । शतमूलिकायाम् ॥ द्रवति । द्रु । शतृ । उगितश्चेति ङीप् ॥ शिखरिणीप्रभेदे ॥ यथा । शुभ्रमखण्डा युक्तं निर्नीरं द्विगुणं दधि । आम्रमुद्धनदेयमेतन्मानं बुधैः स्मृतम् ॥ दत्त्वाम्बुरहितं पात्रे खण्डदुग्धेन गालितम् । कर्पूरमरिचोन्मिश्रं द्रवन्तीपरिकीर्त्तिता ॥ द्रवन्ती मधुरा वृष्या बल्या पुष्टिकरी हिमा । वातपित्तहरा स्वाद्वी किञ्चित्कफकरा स्मृता ॥

द्रवमूर्त्तिः । त्रि । द्रवद्रव्यकाठिन्ये ॥

घ्रवेति यथा ॥

द्रव्यकः । त्रि । द्रव्यं हरति वहति आवहति वा । वस्नद्रव्याभ्यां ठन्कनावित्यार्हीयः कन् ॥

द्रव्यकल्कः । पुं । वैद्यशास्त्रप्रसिद्धेषु कल्कादिपञ्चसु ॥ द्रव्यकल्कः पृथग्धा-स्यात् कल्कचूर्णं रस स्तथा । तैलमर्कः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये ॥

द्रव्यनिश्चयः । पुं । द्रव्याणां मेषाद्यधिपतिज्ञानेन शुभाशुभनिश्चये ॥ तस्माद्विभागप्रदर्शनार्थमाह । ये येषां द्रव्याणामधिपतयो राशयः समुद्दिष्टाः । मुनिभिः शुभाशुभार्थं नानागमतः प्रवक्ष्यामि ॥ १ ॥ वस्त्राविककुतपानां मसूरगोधूमरालकयवानाम् । स्थलसम्भवौषधीनां कनकस्य च कीर्त्तितो मेषः ॥ २ ॥ गवि वस्त्रकुसुमगोधूमशालियवमहिषसुरभितनयाः स्युः । मिथुने धान्यशारदवल्लीशालूककार्पासाः ॥ ३ ॥ कर्किणि कोद्रवकदलीदूर्वाफलकन्दपत्रचोचानि । सिंहे तुषधान्यरसाः सिंहादीनां त्वचः सगुडाः ॥ ४ ॥ षष्ठेऽतसीकलायाः कुलत्थगोधूममुद्गनिष्पावाः सप्तमराशौ माषा यवगोधूमाः ससर्षपाश्चैव ॥ ५ ॥ अष्टमराशाविक्षुः सैक्यं लोहान्यजाविकञ्चापि । नवमेतु तुरगलवणाम्बराणि तिलधान्यमूलानि ॥ ६ ॥ मकरे तरुगुल्माद्यं सैक्यमिक्षुसुवर्णकृष्णलोहानि । कुम्भे सलिलजफलकुसुमरत्नचित्राणि रूपाणि ॥ ७ ॥ मीने कपालसम्भवरत्नान्यम्बुद्भवानि वज्राणि । स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजाताश्च ॥ ८ ॥ एतेषां द्रव्याणां शुभाशुभज्ञानार्थमाह । राशेस्तुदेशार्थौ यस्तनवपञ्चमस्थितो । १० । २ । ११ । ७ । ९ । ५ । जीवः । एकादशदशपञ्चाष्टमेषु २ । ११ । १० । ५ । ८ । शशिजस्तु वृद्धिकरः ॥ ९ ॥ षट्सप्तमगो ६ । ७ । हानिं वृद्धिं शुक्रः करोति शेषेषु । उपचयसंस्थाः ३ । ६ । ११ । १० । क्रूराः शुभदाः शेषेषु १ । २ । ४ । ५ । ७ । ८ । ९ । १२ । हानिकराः ॥ १० ॥ * ॥ अथ विशेषमाह । राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः । तस्य द्रव्याणां महार्घता दुर्लभत्वञ्च ॥ ॥ ११ ॥ इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम् । तद्द्रव्याणां वृद्धिः सामर्घ्यं सुलभत्वञ्च ॥ १२ ॥ गोचरपीडायामपि राशिर्बलिभिः शुभग्रहैर्दृष्टः । पीडां न करोति तथा क्रूरैरेवं विपर्यासः ॥ इति वारा

ख्याम् ३९ ऽध्यायः॥

द्रव्यमययज्ञः । पुं । ज्ञानविहीनेयज्ञे ॥ द्रव्यमयः द्रव्योपलक्षितो ज्ञानशून्यो योयज्ञः ससंसारफलः ॥

द्रव्ययज्ञः । त्रि । पूर्त्तदत्ताख्यस्मार्त्तकर्म्मपरे ॥ द्रव्यत्यागएव यथाशास्त्रं यज्ञोयस्य ॥

द्रष्टव्यः । त्रि । द्रश्ये । दर्शनार्हे ॥

द्रष्टा । त्रि । विचारकुशले ॥ साक्षिचेतने ॥ चेतनोहिद्रष्टा भवति नाचेतनः ॥ द्रष्टेःकर्त्तरि । दृष्टिमति । आत्मनि ॥ चक्षुर्जन्यमनोवृत्ति र्विषयज्ञानरूपभासिका । दृष्टिरित्युच्यते-द्रष्टादृष्टेः कर्त्ताभिधीयते ॥ पश्यति । दृशिर्७ । तृन् ॥

द्रष्टृता । स्त्री । शब्दादिविषयप्रकाशतायाम् ॥ भावे तल् ॥

द्राक् । अ । द्रुते । शीघ्रे । झटित्यर्थे ॥ ॥ द्राति । द्राकुत्सायांगतौ । बा॰ कः॥

द्राक्षा । स्त्री । मृद्वीकायाम् । गोस्तन्याम् । मनक्काद्राक्ष इतिभाषा ॥ द्राक्षा भावे ॥ द्राक्षा पक्वा सरा शीता चक्षुष्या वृंहिणी गुरुः । स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् ॥ कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातास्रकामलान् ॥ कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । आमा साऽल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत् ॥ वृष्या स्याद् गोस्तनीद्राक्षा गुर्वीच कफपित्तनुत् । अबीजान्यास्वल्पतरा गोस्तनीसदृशी गुणैः ॥ द्राक्षा पर्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत् । द्राक्षापर्वतजा यादृक् तादृशी करमर्द्दिकेतिभावप्रकाशः ॥ द्राक्षायाः फलम् । हरीतक्यादिभ्यश्चेतिविकारावयवप्रत्ययस्यलुप् ॥ यद्वा । द्राङ्क्षयते । द्राक्षिकाङ्क्षायाम् । धर्मेस्थि घञ् । आगमशासनमनित्यम् ॥ यद्वा । गुरोश्चहलइत्य प्रत्ययः । यवादिगणेपाठान्नलोपः । अतएव द्राक्षामान् इत्यमतोर्वत्वं भवति । अयथादिभ्यश्च्युक्तः ॥

द्राक्षासवः । पुं । माधव्याम् ॥ यथा । पीत्वा द्राक्षासवं मिष्टं सूक्ष्म मादायसत्वरमिति ॥

द्राघिमा । पुं । दीर्घत्वे । दैर्घ्ये ॥ दीर्घस्यभावः । पृथ्॰ इमनिच् । प्रियस्थिरेत्यादिनादीर्घस्यद्राघ्यादेशः ॥

द्राघिष्ठः । त्रि । दीर्घतमे । अतिदीर्घे ॥ अतिशयेन दीर्घः । इष्ठन् । प्रियस्थिरेतिसाधुः ॥

द्राघीयान् । त्रि । दीर्घतरे ॥ अयमनयो रतिशयेन दीर्घः । ईयसुन् । प्रि

यच्चिरेति साधुः ॥

द्राणः । त्रि । सुप्ते ॥ पलायिते ॥ द्रातेः कर्मणिक्तः ॥

द्रापः । पुं । पङ्के ॥ आकाशे ॥ कपर्दिनि ॥ मूर्खे ॥ इतिशब्दार्थकल्पतरुः ॥

द्रामिलः । पुं । चाणक्यमुनौ ॥ इति हेमचन्द्रः ॥

द्रावः । पुं । गमने ॥ क्षरणे ॥ अनुतापे ॥ द्रवणम् । द्रुगतौ । घञ् ॥

द्रावकः । पुं । ग्रावप्रभेदे । चन्द्रकान्तमणौ ॥ विदग्धे ॥ चोरके ॥ विटे । पिङ्गे ॥ रसभेदे ॥ न । सिक्थके ॥ मूत्ररोगस्यौषधे ॥ त्रि । हृदयग्राहिणि ॥ द्रवकारके ॥

द्रावककन्दः । पुं । तैलकन्दे ॥

द्रावकरम् । न । श्लेष्मटङ्कणे ॥

द्रावणम् । न । कतकफले । निर्मली इतिभाषा ॥ विद्रावणे ॥ पुं । कामवाणविशेषे ॥

द्राविका । स्त्री । लालायाम् । लाल इतिभाषा ॥

द्राविडः । पुं । द्रमिडदेशजे ॥ संख्यान्तरे ॥ वेधमुख्ये । कर्पूरे ॥ स्वनाम्ना प्रसिद्धे देशे ॥ द्राविडाः पञ्च । तेयथा । कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः । आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः इतिस्कन्दपुराणम् ॥ त्रि । तद्देशजाते ॥ द्रविडेजातः । अण् ॥

द्राविडकः । पुं । द्राविडार्थे ॥ वेधमुख्यके । जिआंयघणी इतिगौडभाषा । कचूर इतिभाषा ॥ न । विडलवणे ॥ स्वार्थेकन् ॥

द्राविडभूतिकः । पुं । वेधमुख्ये । कालपके । कचूर इतिप्रसिद्धे ॥

द्राविडी । स्त्री । सूक्ष्मैलायाम् ॥ द्रविडेजाता । अण् । ङीप् ॥

द्रावितः । त्रि । द्रवीकृते ॥

द्राव्यः । त्रि । अवश्यद्रावणीये क्षरणीये अनुतपनीये ॥

द्रिमीतीर्थम् । न । श्रीमेतीर्थप्रभेदे ॥

द्रुः । पुं । पादपे ॥ वृक्षे ॥ द्रवत्यूर्ध्वम् । द्रुगतौ । मित० डुः ॥ बा० कुर्वा ॥ स्त्री । गतौ ॥ शाखायाम् ॥

द्रुकिलिमम् । न । देवदारुवृक्षे ॥ किलति । किलश्वैत्यक्रीडनयोः । बाहुलकात् किमच् । द्रुणांकिलिमम् ॥

द्रुघणः । पुं । मुद्गरे ॥ लौहमुद्गरे । स्वचपारादीनां मुद्गराकारे लौहमया स्त्रप्रभेदे ॥ द्रुहिणे । ब्रह्मणि ॥ परशवधे ॥ भूमिचम्पके ॥ द्रुः संसारद्रोवा हन्यते ऽनेन । करणे ऽयोवि द्रुष्विति हन्तेः करणे ऽप् घनादेश-

घ । पूर्वपदादिति णत्वम् ॥

द्रुणः । पुं । वृश्चिके ॥ भृङ्गे ॥ त्रि । पिशुने ॥ न । चापे ॥ कृपाणे ॥ द्रुणति । द्रुण हिंसागतिकौटिल्येषु । इगुपधेति कः ॥

द्रुणसः । त्रि । दीर्घनासिकायुक्ते ॥

द्रुणहः । पुं । खड्गपिधाने ॥ इति हारावली ॥

द्रुणा । स्त्री । ज्यायाम् ॥ इति हेमचन्द्रः ॥

द्रुणिः । स्त्री । कूर्म्याम् ॥ जलद्रोण्याम् ॥ द्रुणति । द्रुण + इगुपधात् किदितीन् ॥

द्रुणी । स्त्री । जलद्रोण्याम् ॥ कच्छप्याम् ॥ कर्णजलौकायाम् ॥ द्रुणेरिन्नन्तात् कृदिकारादक्तिन इति ङीष् ॥ इगुपधेति को जातेरिति ङीष् गौरादित्वाद्वा ॥

द्रुतः । पुं । द्रुमे ॥ न । शीघ्रे । त्वराविषयकर्मोपगमने ॥ त्वरया गतिसमायेषु द्रवन्तिशीघ्रं गच्छन्ति समुदायगतिप्रदर्शनार्थं करादयोऽथ तत् द्रुतम् । अधिकरणोक्तः ॥ शीघ्रलये ॥ त्रि । शीघ्रे ॥ विलीने । जातद्रवीभावे घृतसुवर्णादौ ॥ विद्राणे ॥ पलायिते ॥ द्रवति स्म । द्रु + गत्यर्थेति कर्त्तरि क्तः ॥ द्रूयते स्मेति वा । कर्मणि क्तः ॥ शीघ्रार्थे क्रियाविशेषणत्वे तु क्तस्य वर्त्तमाने क्लीवम् । द्रव्ये तु त्रिलिङ्गम् ॥

द्रुतविलम्बितम् । न । जगतीच्छन्दोभेदे ॥ द्रुतविलम्बितमाह नभौभरौ । यथा । तरणिजापुलिने नवपल्लवीपरिषदा सह केलिकुतूहलात् । द्रुतविलम्बितचारुविहारिणं हरिमहं हृदयेन सदा वहे ॥ सुन्दरीत्यप्यस्यैव संज्ञा ॥

द्रुमखः । पुं । कण्टके ॥ द्रोर्द्रुमस्य नखः ॥

द्रुपदः । पुं । चन्द्रवंशीये नृपविशेषे । शिखण्डिधृष्टद्युम्नद्रौपदीनां जनके । पञ्चालदेशाधिपतौ ॥

द्रुपदपुत्रः । पुं । धृष्टद्युम्ने ॥ शिखण्डिनि ॥

द्रुपदपुत्री । स्त्री । द्रौपद्याम् ॥

द्रुमः । पुं । महीरुहे । वृक्षे ॥ पारिजाते ॥ कुबेरे ॥ द्रुः शाखा सोऽस्यास्ति जनकतया । यद्वा । समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते इति न्यायात् द्रुः शाखा स स्यास्ति । द्रुद्युम्भ्यां मः ॥

द्रुमनखः । पुं । कण्टके ॥ द्रुमस्य नख इव ॥

द्रुमरः । पुं । कण्टके ॥

द्रुमव्याधिः । पुं । लाक्षायाम् ॥

द्रुमशीर्षम् । न । कुट्टिमप्रभेदे ॥ कपिशीर्षं द्रुमशीर्षं तथा चार्द्धकपीर्षकम् । इति कुट्टिमभेदाः स्युः प्रासादैः समुदाहृताः इति शब्दरत्नाव

स्त्री ॥ इत्याद्ये ॥

द्रुमश्रेष्ठः । पुं । तालवृक्षे ॥

द्रुमामयः । पुं । लाक्षायाम् ॥

द्रुमारिः । पुं । गजे । हस्तिनि ॥

द्रुमाश्रयः । पुं । सरटे ॥ त्रि । वृक्षाश्रितमात्रे ॥

द्रुमिणी । स्त्री । द्रुमाणां समूहे ॥ खलादिभ्य इनिर्वक्तव्यः ॥

द्रुमेश्वरः । पुं । चन्द्रमसि ॥ इति हरिवंशः ॥ तालतरौ ॥ इति शब्दार्थकल्पतरुः ॥

द्रुमोत्पलः । पुं । कर्णिकारे । कठचम्पा इतिभाषा ॥ द्रुमे उत्पलं तदाकारं पुष्पमस्य ॥

द्रुवयम् । न । पात्रे । पौतवे । मानार्थं परिमाणे ॥ द्रोर्विकारभूतं प्रस्थादिपरिमाणम् । मानेवयः ॥

द्रुसल्लकः । पुं । पियाले ॥

द्रुहः । पुं । पुत्रे ॥ इति शब्दार्थकल्पतरुः ॥

द्रुहणः । पुं । ब्रह्मणि । सुरज्येष्ठे ॥ इति द्विरूपकोषः ॥

द्रुहिणः । पुं । स्रष्टरि । प्रजापतौ । ब्रह्मणि ॥ कामक्रोधादिभ्यो दुष्टेभ्यो वा द्रुह्यति । द्रुह जिघांसायाम् । बहुलमन्यत्रापीति इनन् । बाहुलकात् गुणाभावः ॥

द्रुही । स्त्री । दुहितरि ॥ इति शब्दार्थकल्पतरुः ॥

द्रूः । पुं । हिरण्ये । स्वर्णे ॥ द्रवति । द्रुगतौ । क्विब्वचीति क्विब्दीर्घौ ॥

द्रूघणः । पुं । द्रुघणे ॥ इति द्विरूपकोषः ॥

द्रूणः । पुं । द्रुणे ॥ इति शब्दार्थकल्पतरुः ॥

द्रेक्कः । पुं । द्रेक्काणे ॥

द्रेक्काणः । पुं । लग्नविभागे ॥

द्रेक्काणाधिपः । पुं । लग्नविभागाधीशे ॥ स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः । ते द्रेक्काणाधिपा राशौ द्रेक्काणा स्त्रय एव हि ॥

द्रोणः । पुं । द्रोणाचार्ये । पाण्डुगुरौ । पुराणप्रसिद्धे धनुर्विद्यासम्प्रदायप्रवर्त्तकाचार्यविशेषे ॥ द्रोणकाके ॥ वृश्चिके ॥ पर्वतविशेषे ॥ चतुःशतधनुष्परिमिते जलाशये ॥ मेघनायकविशेषे ॥ यथा । विद्युते म्लाकवर्षेतु चतुर्भिःशोभितःक्रमात् । आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥ आवर्त्तो निर्जलोमेघः संवर्त्तश्च बहूदकः । पुष्करो दुष्करजलो द्रोणःसस्यप्रपूरकः ॥ श्वेतवर्णक्षुद्रपुष्पवृक्षविशेषे । घलघसिया इति हलकसिया इति च गौडभाषा ॥ पुं । न । आढकपरिमाणे ॥ आढकाय चतुष्ट

ये । आढकचतुष्टये ॥ ३२ सेर इति लौकिकमाने । घटे । कलसे । उन्माने । इति वै० प० ॥ खार्य्याः षोडशांशे ॥ द्रोणस्तु खार्य्याः खलु षोडशांशः । इति ली० ॥ आढको भवेद्द्रोण इति केचित् ॥ चिपतंद्रोण इति कुल्लूकभट्टः ॥ द्रुणति । द्रुण० । पचाद्यच् ॥ द्रवति । द्रु० । कृवृजृसिद्रुपन्यनिस्वपिभ्यो निदिति नः ॥

द्रोणकाकः । पुं । वनकाके । कृष्णकाके ॥ द्रोणाख्यःकाकः ॥

द्रोणक्षीरा । स्त्री । द्रोणदुघायांगवि ॥ द्रोणपरिमितं क्षीरं यस्याः ॥

द्रोणगन्धिका । स्त्री । रास्नायाम् ॥

द्रोणघा । स्त्री । द्रोणक्षीरायाम् ॥

द्रोणदुग्धा । स्त्री । } द्रोणक्षीरायाम् ॥
द्रोणदुग्धिका । स्त्री । }

द्रोणदुघा । स्त्री । द्रोणमितदुग्धायां गवि । द्रोणक्षीरायाम् ॥ द्रोणं दोग्धि । दुह० । दुहःकप्घश्चेति कप् घश्चान्तादेशः ॥

द्रोणपर्णी । स्त्री । भूमिकन्दल्याम् ॥

द्रोणपुष्पी । स्त्री । गुमा इति ख्याते क्षुपे । कुम्भयोनौ । खर्वपत्रायाम् ॥ द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत् । सक्षारलवणा स्वादुपाका कट्वी च भेदिनी ॥ कफामकामलाशोथतमकश्वासजन्तुजित् ॥ घलघसिया इति गौडेषु प्रसिद्धे गोशीर्षकक्षुपे ॥ कफार्शःकामलाकृमिशोथनाशित्वमित्यस्याः गुणाः ॥

द्रोणपुष्पीदलम् । न । गुमाख्यशाके ॥ द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तकृत् । भेदनं कामलाशोथमेहज्वरहरं कटु ॥

द्रोणमाना । स्त्री । द्रोणदुघायाम् ॥

द्रोणमुखम् । न । चतुःशतग्राममध्ये-मनोहरग्रामे ॥ इति हारावली ॥

द्रोणा । स्त्री । द्रोणपुष्पिकायाम् ॥

द्रोणाचार्य्यः । पुं । भारद्वाजे । कीर्त्तिमाणि । अश्वत्थामःपितरि । कृपीपतौ । पाण्डवानामस्त्रविद्यागुरौ ॥ द्रोणश्चासावाचार्य्यश्च ॥

द्रोणिः । स्त्री । द्रोण्याम् ॥ द्रवति । द्रुगतौ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो-निदिति निः ॥

द्रोणिका । स्त्री । नीलीवृक्षे ॥

द्रोणी । स्त्री । देशविशेषे ॥ शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः ॥ काष्ठाम्बुवाहिन्याम् । काष्ठादिकृतच्छिद्रायनौकाकृत्यम्बुसेचन्याम् ॥ गवादन्याम् ॥ नौकाप्रभेदे ॥ शैलविशेषे ॥ नीलीवृक्षे ॥ नदीविशेषे ॥ शैलयोः सन्धौ ॥ इन्द्रचिर्भिण्याम्-

॥ द्रोणीश्रवणे ॥ द्विसूर्पपरिमाणे । द्रोणयाम् । १२८ सेर इति भाषा । इति, वै प० ॥ काष्ठरचितस्नानपात्रे ॥ यथा । ह्रीवेरपद्मकोशीरचन्दनाम्बुसधारिणा । सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः इति ॥ नितम्ब्य यान्तादुद्भवतः क्षुद्रिकारादित्वात् ङीप् । गौरादित्वाद्वा ॥

द्रोणीदलः । पुं । केतकीपुष्पे ॥

द्रोणीमुखम् । क्ली । द्रोणमुखे ॥ इति भूरिप्रयोगः ॥

द्रोणीश्रवणम् । क्ली । उपकर्णाटदेशप्रसिद्धे जनपदविशेषे । त्रिकूटलवणो। पार्श्विभवे ॥

द्रोणिलः । पुं । चाणक्यमुनौ । जम्बुले ॥

द्रोहः । पुं । जिघांसायाम् । अनिष्टचिन्तने । अपक्रियायाम् ॥ देवद्रोहाद्गुरोर्द्रोहः कोटिकोटिगुणाधिकः इति कूर्मपुराणम् ॥ परजिघांसया शस्त्रग्रहणादौ ॥ छद्मवधे ॥ हिंसा तु द्रोहजन्या परे तु हिंसामेव द्रोहं मन्यन्ते ॥

द्रोहचिन्तनम् । क्ली । परानिष्टविभावने । व्यापादे ॥ द्रोहस्य चिन्तनम् । ल्युट् चेति भावे ल्युट् ॥

द्रोघाटः । पुं । गाथाप्रभेदे ॥ मृगलुब्धके ॥ वैदाश्मतिके ॥ इति मेदिनी ॥

द्रोही । त्रि । द्रोहके । परानिष्टचिन्तके ॥

द्रौणायनः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । फक् । द्रोणपर्वतेति सूत्रे अनादिरिह द्रोणशब्दस्य उक्तो भारतप्रसिद्धेऽनन्तरापत्येऽश्वत्थाम्नि द्रौणायन इति प्रयोगस्तु प्रचाराद्बोध्यः ॥

द्रौणिः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । अत इञ् ॥ एकोनविंशसमाप्ते द्रौणिर्व्यासो भविष्यति ॥

द्रौणिकः । पुं । कटाहे ॥ द्रोणं स्वस्मिन् समावेशयतीत्यर्थात् ॥ त्रि । द्रोणवापक्षेत्रे । द्रोणपरिमितव्रीह्यादिवापयोग्यक्षेत्रे ॥ द्रोणस्य वापः । तस्य वाप इति ठञ् ॥ त्रि । द्रोणम् पचति । सम्भवत्यवहरति पचति इति ठञ् ॥ द्रोणेन क्रीते ॥ निष्कादित्वाट्ठक् ॥

द्रौपदी । स्त्री । कृष्णायाम् । नित्ययौवनायाम् । पाञ्चाल्याम् । याज्ञसेन्याम् । पाण्डवानां स्त्रियाम् ॥ अस्याः पञ्चस्वामित्वे हेतुर्ब्रह्मवैवर्त्ते यथा । राजा ददौ फाल्गुनाय कन्यायाश्च स्वयं वरे । पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना ॥ तमुवाच स्वयं माता गृहाण भ्रातृभिः सह । अभोगिं रोगपूर्वञ्च परमातु राज्ञया ॥ द्रौपद्याः स्वामिनस्तेन हेतुना पञ्चपा-

पञ्चा इति ॥ द्रुपदस्यापत्यं स्त्री । अण् । ङीप् ॥

द्रौपदेयः । पुं । प्रतिविन्ध्यादिषु पञ्चसु द्रौपदीतनयेषु ॥ द्रौपद्याः अपत्यम् पुमान् । स्त्री भ्योढक् ॥

द्वन्द्वः । पुं । रोगविशेषे ॥ उभयपदार्थ प्रधाने समासे । अव्ययीभावतत्पुरुषबहुव्रीहिसमासभेदानामुभयपदार्थसाम्याभावेनापकृष्टत्वात् द्वन्द्वसमासो भगवद्विभूतिः ॥ स द्विधा । इतरेतरयोगसमाहारभेदात् ॥ परस्परविरुद्धे सम्मानावमानादौ । शीतोष्णादौ ॥ यथा क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्वशब्देन वर्णिता इति ॥

न । रहस्ये ॥ कलहे । आहवे ॥ मिथुने । युग्मे ॥ द्वौ द्वौ सहाभिव्यक्तौ इति द्वन्द्वम् । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिष्विति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम् भावो ऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु । चार्थे द्वन्द्व इति निर्देशात् पुंस्यपि ॥ दुर्गे ॥ यथा । राज्ञो बलं न हि बलं द्वन्द्वमेव बलं बलम् । अप्यल्पबलवान् राजा- स्थिरो द्वन्द्वबलाद्भवेदिति ॥

द्वन्द्वगदः । पुं । रागद्वेषादिरूपे द्वन्द्वरोगे ॥ यथा । अहं हरिः सर्वमिदं जनार्द्दनो नान्यत्ततः कारणकार्यजातम् । ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्तीति विष्णुपुराणम् ॥



द्वन्द्वचरः । पुं । ⎫ चक्रवाके ॥ द्वन्द्वं च-
द्वन्द्वचारी । पुं । ⎭ रति । चर० । पचाद्यच् ॥ ताच्छील्ये णिनिः ॥

द्वन्द्वजः । पुं । द्विदोषजरोगे ॥ अस्य पूर्वरूपम् । रूपै रन्यतराभ्यान्तु संसृष्टै द्वन्द्वजं विदुरिति । अन्यतराभ्यां कुम्भनैषदाहाभ्यां कुम्भान्दानविभ्यां नैषदाहान्दानविभ्यां वा संसृष्टैरूपैः श्रमादिभि र्द्वन्द्वजं पूर्वरूपं विदुर्ज्ञानीयुः ॥

द्वन्द्वयुक्तिः । पुं । दुर्गविचारग्रन्थे ॥ स यथा । राज्ञो बलं नहि बलं द्वन्द्वमेव बलं बलम् । अप्यल्पबलवान् राजा स्थिरो द्वन्द्वबलाद् भवेत् ॥ तत्राच । एकः शतं योधयति प्राकारस्थो धनुर्द्धरः । शत दशसहस्राणि तस्माद् दुर्गं विशिष्यते ॥ अकृत्रिमं कृत्रिमञ्च तत् पुन र्द्विविधं भवेत् । यद् दैवरचितं द्वन्द्वं गिरिनद्यादिसंस्थितम् ॥ अकृत्रिम मिद ज्ञेयं दुर्गं दुष्प्र मरिमूभुजाम् । प्राकारपरिखारचसंमयं यद् भवेदिह । कृत्रिमं नाम विज्ञेयं सङ्ख्याकद्वय

न्तु वैरिणाम् ॥ तत्राकृत्रिमदुर्गयुक्ति र्यथा । अभ्युच्चविस्तीर्णगिरिर्दुरारोहः सकाननः । सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः ॥ सुखनिःसरणो दुर्गः पर्वताख्यो मही भुजाम् । नद्यो गभीरविस्तीर्णा स्तद्दिक्षु च यत्र स्थिताः ॥ तन्मध्ये भूप्रदेशो यो नदी दुर्गः स उच्यते । यदन्यच्च चिरकालीनं दुर्लङ्घ्यविपिनादिकम् ॥ तन्मध्यरचिता भूमि र्दुर्गत्वेनो पतिष्ठते । वनदुर्गमितिख्यातं यथा पूर्वं महत्तरम् ॥ * ॥ कृत्रिमदुर्गयुक्तिर्यथा । यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः । तस्यमध्ये मधीपाल. कृत्रिमं दुर्ग मारभेत् ॥ गर्त्तैरलङ्घ्या विस्तीर्णा गम्भीराःपूर्णवारयः । दुर्गत्वेन समादिष्टाः परिखा बहुयादसः ॥ विशालशालं सुघनं बहुकण्टकिसङ्कटम् । दुर्गत्वेन समादिष्टं विस्तीर्णं विषमं वनम् ॥ अधोऽधो वर्द्धमानोपि कन्दरोल्पजलस्रवम् । दुर्गत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम् ॥ सर्वतः परिखां कृत्वा निवध्योपरि कन्दरम् । तज्जलप्लुतदेशत्वात् जलदुर्गं तदुच्यते ॥ एषा सभावे निम्नस्य भूप्रदेशस्य वन्धनात् । वर्षासु

प्लुते वारि जलदुर्गं ततो भवेत् ॥ एतयो रपि संमिश्रात् संमिश्रं दुर्ग माचरेत् । आश्रित्य कृत्रिमं दुर्गं बलवद्वैरिणो द्विषि ॥ अन्यथ कृत्रिमं दुर्गं कृत्वा नरपति र्वसेत् । रथपति र्यदा वैरी स्थलदुर्गं तदाचरेत् ॥ गजाश्वनायको वैरी जलदुर्गं तदाचरेत् । गिरिदुर्गं नृपः सेवेत् यस्य स्याद् विविधो रिपुः ॥ सर्वोहि विविधो युद्धः समासा दुपदिश्यते । प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च ॥ राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत् स्वयम् । गुप्ते स्त्रीकोषसम्भारं संरक्षे दिति निश्चयः ॥ * ॥ अथ सामान्यतो गुणाः ॥ तथा हि नीतिशास्त्रम् । सप्रवेशापसरणं दुर्ग मुत्तम मुच्यते । अन्यत्र बन्दिशालेव न तादृग् बहु मान्नयेत् ॥ धनुर्दुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यदुर्गसंसर्गं वनदुर्गञ्च तानि षट् ॥ * ॥ अन्येतु । न दुर्गं दुर्ग मित्याहुर्यो दुर्गं प्रकीर्त्तितम् । योर्द्धशून्यं हि यद् दुर्गं स्तनकायसमं हि तत् ॥ * ॥ अथान्यच्चापि । यावत् प्रमाणं नगरं हि राज्ञां ततो भवे दुत्तममध्यमाभ्याम् । त्रिंशत्त दर्द्धाष्टगुणोत्तरेणत्रिदेशजानां परि

द्वन्द्वाभ | द्वात्रिंश

सीपतीनाम् ॥ गर्गेषु । यद्वन्यद्वृत्ति विधं द्वन्द्वं प्रोच्यते परस्त्रीभुजाम् । ताभ्यां मेवातिरिच्येत मन्मद्वन्द्वं विशेषतः ॥ अन्येषु दैवाद् भिन्नेषु मन्मद्वन्द्वात् जयेन्नृपः । मन्मद्वन्द्वे हि भिन्ने हि प्रधान्यत् कार्यकारकम् ॥ भोजस्तु । यदैव वैरिदुर्लङ्घ्यं विस्तीर्णं विपुलञ्च तत् । समवेक्ष्य समरं तद् द्वन्द्वमुत्तमं विदुरिति॥

द्वन्द्वातीतः । त्रि । द्वन्द्वैरक्षुभितचित्ते ॥ द्वन्द्वानि क्षुत्पिपासाशीतोष्णवर्षादीनि अतीतो ऽतिक्रान्तः। समाधिदशायां तेषामस्फुरणात् व्युत्थानदशायां स्फुरणेपि परमानन्दाद्वितीयात्मभीक्षात्मप्रत्ययेन बाधात् तैर्द्वन्द्वैरुपहन्यमानोऽप्यक्षुभितचित्त उच्यते ॥

द्वन्द्वाभयः । पुं । अग्निभयादिव्यातमन्नवेशे ॥ अग्निकृतदाहेन तथा द्विजसमानेन सामवस्त्रवृष्टिपातेन वा क्षुद्रेन राज्ञा पातितस्तेनेव योग्यनाथ स्नहृद यदापुनः सम्पादितस्मिन् यः प्रवेशः सद्वन्द्वाभय इत्युच्यते । अन्वर्थसंज्ञेयम् । शीतोष्णरूपद्वन्द्वात् पुनरुत्थापनेन यद्भयं तत् द्वन्द्वाभयं विद्यतेऽस्मिन्निति मत्वर्थीयः प्रत्ययः ॥

द्वयम् । न । द्वितये । युग्मे ॥ द्वावनयवा यस्य । सङ्ख्याया अवयवेतयप् । द्वित्वस्यायच्चा ॥

द्वयाग्निः । पुं । माहिद्रुमे । चित्रके । चीता इतिभाषा ॥

द्वयातिगः । त्रि । रजस्तमोविहीने । त्रिरजस्तमसि । सत्त्वगुणयुक्ते ॥ द्वयम तिगच्छति । गम्० । अन्यो० डः ॥

द्वाःस्थः । पुं । प्रतीहारे ॥ नन्दीश्वरे ॥ द्वारितिष्ठति । स्था० । सुपीतिकः ॥

द्वाःस्थितः । त्रि । द्वारके । द्वारपाले ॥ द्वारितिष्ठतिस्म । स्था० । गत्यर्थाकर्मकेति क्तः ॥

द्वाःस्थितदर्शकः । पुं । द्वाःस्थितदर्शी । पुं । } द्वारपाले । प्रतीहारे ॥

द्वाचत्वारिंशत् । स्त्री । द्विचत्वारिंशति । बेयालीस इतिभाषा ॥

द्वात्रिंशत् । स्त्री । सङ्ख्याविशेषे । बत्तीस इतिभाषा ॥ तत्सङ्ख्येये ॥ द्वौ चर्विंशच । द्वाधिकाः त्रिंशद्वा । द्यष्टनः सङ्ख्यायामिच्यात्वम् ॥

द्वात्रिंशद्यत्तरी । स्त्री । ग्रन्थे ॥ इतिविकाण्डशेषः ॥ विद्याविशेषे ॥

द्वात्रिंशल्लक्षणोपेतः । पुं । महापुरुषे ॥ तल्लक्षणानियथा । राग: सप्तसु पञ्च षट्सु समित्रिषोरक्त्वलंतुङ्गता विस्तारस्त्रिषु खर्वता त्रिषु तथागम्भीर

साचविषु। दैर्घ्यं पञ्चसु किञ्च पञ्चसु
सूक्ष्मे सम्प्रोच्यते सद्भिर्द्वात्रिंशद्
लक्षणः कथमसौ गोपेषु सम्भाव्यते
इति श्रीहरिभक्तिरसामृतसिन्धुः ॥
सप्तसु नेत्रान्तपादकरतलतालुधरो
ष्ठनिखानखेषु । षट्सु वक्षःस्कन्धन
खनासिकाकटिमुखेषु । त्रिषु कटिल
लाटवक्षःसु । केचित्कटिस्थाने शि
रः पठन्ति । त्रिषु ग्रीवाजङ्घामेहने
षु । पुनस्त्रिषु नाभिस्वरसत्त्वेषु । प
ञ्चसु नासाभुजनेत्रहनुजानुषु । पुनः
पञ्चसु त्वक्केशरोमदन्ताङ्गुलिपर्वसु ॥
द्वात्रिंशदेतानि सत्सलक्षणेभ्योऽन्येभ्यो
विशिष्टानि लक्षणानि यस्य सः, गोपे
षु कथमिति भगवदवतारादिष्वप्ये
तादृशस्याश्रवणादिति भावः । इति
श्रीमद्बलेश्वरं प्रति कस्यचित्सवयसो
गोपस्याश्चर्यसूचकं वचनम् ॥

द्वादश । त्रि । द्वादशानां पूरणे ॥ तस्य
पूरणे डट् ॥

द्वादश । त्रि । सङ्ख्याभेदे ॥ सङ्ख्ये
ये ॥ द्वौ च दश च । द्व्यधिका दशेति वा
। द्व्यष्टनः सङ्ख्यायाम् ॥

द्वादशकरः । पुं । षडानने । कार्त्तिके
ये ॥ वृहस्पतौ ॥ द्वादश कराः अस्य ॥

द्वादशपत्रकम् । न । वामनपुराणोक्ते
देवस्य योगविशेषे ॥

द्वादशलोचनः । पुं । कार्त्तिकेये ॥ द्वा
दश लोचनान्यस्य ॥

द्वादशांशः । पुं । स्वस्वद्वादशांशे ॥ मेषा
दीनां तु राशीनां स्वराशेर्द्वादशांश
काः । यथा । मेषे प्रथमद्वादशांशे
कांशो मेषस्य । द्वितीयो वृषस्य । तृती
यो मिथुनस्य । तथा कर्कसिंहकन्या
तुलावृश्चिकधनुर्मकरकुम्भमीनानां
क्रमादेकैकांशा ज्ञेयाः ॥ वृषादिष्वप्ये
वं स्वराशिमारभ्य द्वादशांशा ज्ञेयाः ॥

द्वादशांशाधिपः । पुं । राशीनामधिपा
एव द्वादशांशाधिपास्तु ते ॥ ये मेषा
दीनामधिपास्त एव द्वादशांशाधिपा
ज्ञेयाः ॥

द्वादशार्चिः । पुं । वृहस्पतौ ॥

द्वादशाक्षः । पुं । स्कन्दे ॥ वुद्धमुनौ ॥ इ
ति हेमचन्द्रः ॥

द्वादशाख्यः । पुं । वुद्धे ॥ इति त्रिकाण्ड
शेषः ॥

द्वादशाङ्गः । पुं । धूपविशेषे ॥ यथा । गु
ग्गुलुश्चन्दनं पद्मं कुष्ठञ्चागुरुकुङ्कु
मम् । जातीकोषञ्च कर्पूरं जटामां
सीञ्च वालकम् ॥ त्वग्भीरश्च धूपो
ऽसौ द्वादशाङ्गः प्रकीर्त्तित इति ॥

द्वादशाङ्गुलः । पुं । वितस्तौ ॥ द्वादश
अङ्गुलयः प्रमाणमस्य । तद्धितार्थे द्वि
गुः । द्विगोर्नित्यमिति मात्रचो लु

क् । तत्पुरुषस्याङ्गुलेरित्यच् ॥

द्वादशात्मा । पुं । दिवाकरे ॥ द्वादश आत्मानो मूर्त्तयो यस्य ॥ अर्कवृक्षे ॥

द्वादशायुः । पुं । कुक्कुरे ॥

द्वादशार्च्चिः । पुं । बृहस्पतौ ॥

द्वादशी । स्त्री । तिथिविशेषे ॥ सा च चन्द्रस्य द्वादशकलाक्रियारूपा । सा च विष्णोस्तिथिः ॥ मार्गशीर्षशुक्लद्वादशी मत्स्यद्वादशी । पौषी कूर्मद्वादशी । माघी वराहद्वा० । फाल्गुनी नृसिंहद्वा० । चैत्री वामनद्वा० । वैशाखी जामदग्न्यद्वा० । ज्यैष्ठी रामद्वा० । आषाढी कृष्णद्वा० । श्रावणी बुद्धद्वादशी । भाद्री कल्किद्वा० । आश्विनी पद्मनाभद्वा० । कार्त्तिकीनारायणद्वादशी ॥ एतासां नाम धरणीव्रतम् ॥ इति वाराहपुराणम् ॥ द्वादशीजातस्य फलम् । बहुप्रजः सर्वजनानुरागी भूपालमान्यः स्वतिथिप्रियः स्यात् । चेद्द्वादशी यस्य जनस्य सूतौ प्रवासशीलो धनवान् दयालुः ॥

द्वापरः । पुं । संशये । सन्देहे ॥ त्रेतायुगानन्तरयुगे ॥ भाद्रकृष्णत्रयोदश्यां गुरुवारे ऽस्योत्पत्तिः ॥ अस्य परिमाणं यथा । अष्टौ शतसहस्राणि वर्षाणां द्वापरं युगमिति ॥ तद्धर्मा मत्स्यपुराणादौ द्रष्टव्याः ॥ ततोपि द्वापरे प्राप्ते मृत्युत्पत्युकृतोद्भिते । धर्माद्धलोपे मनुजे आधिव्याधिसमाकुले ॥ संहिताद्युपदेशेन त्वयैवोद्धारिता नराइति श्रीमहानिर्वाणतन्त्रे प्रथमोल्लासः ॥ तत्तारकब्रह्मनाम । हरे मुरारे मधुकैटभारे गोपालगोविन्द मुकुन्द शौरे । यज्ञेश नारायण कृष्ण विष्णो निराश्रयं मां जगदीश रक्षेति ॥ द्वौ परौ प्रकारौ यस्याच् सा । सर्वे नाम सङ्ख्ययोरिति द्विशब्दस्य पूर्वनिपातः । पृ० त्वम् ॥ द्वाभ्यां परो वा ॥ द्वापराये ॥

द्वापरायः । पुं । द्यूतक्रीडासाधनीभूताक्षस्य यत्रभागे द्वावङ्कौ भवतस्तस्मिन्भागे ॥ द्वापरनामको ऽयः ॥

द्वामुष्यायणः । पुं । औद्दालकौ । गौतमे ॥

द्वाः । स्त्री । निर्गमने । प्रतीहारे ॥ उपाये ॥ यथा ज्ञानद्वारा भवेन्मुक्तिरिति ॥ द्वारयति । दृवरणे । णिजन्तः । क्विप् ॥ यद्वा । द्वार्यते । सं क्विप् ॥

द्वारम् । न । अभ्युपाये ॥ निर्गमने ॥ यथा । गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च । न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥ मुखे ॥ बाह्येन्द्रिये उपनीतं विषयं मनो द्वारा बुद्धिर्यस्मात् तद्विषयमवगा

एते ऽ वतिष्ठन्ते, तस्मात् बाह्यानीन्द्रियाणि द्वाराणि भवन्ति । द्वारयन्ति । वृ । कर्त्तरि च्च् । द्वार्यन्तेऽपि वा ॥

द्वारकः । पुं । द्वारकापुर्याम् ॥ इति शब्दरत्नावली ॥ द्वारे मार्गसंगमस्थाने ॥

द्वारकण्टकः । पुं । कपाटे ॥

द्वारका । स्त्री । द्वारवत्याम् । अब्धिनगर्याम् ॥ सर्वतीर्थपराश्रेष्ठा द्वारका बहुपुण्यदा । यस्याः प्रवेशमात्रेण नराणां जन्मखण्डनम् ॥ स्नानञ्च द्वारकायाञ्च श्रीकृष्णदेवपूजनम् । चतुर्गुणञ्च तीर्थानां गङ्गादीनाञ्च भूमिषेषि ब्र० वै० पु० ॥

द्वारकेशः । पुं । श्रीकृष्णे ॥ द्वारकाया ईशः ॥

द्वारताली । स्त्री । द्वारयन्त्रे ॥

द्वारदारु । पुं । मरदारौ । भूमीसहद्वे ॥ इति भावप्रकाशः ॥

द्वारदुर्गक्रिया । स्त्री । कीलखननजलौघवनादिभिर्दुर्गमत्वकरणे ॥

द्वारपः । त्रि । प्रतीहारे । द्वास्थे ॥ द्वारं पाति । पा० । आत इति कः ॥

द्वारपालः । पुं । द्वाररक्षके । प्रतीहारे ॥ द्वारं पालयति । पालरक्षणे । कर्मण्यण् ॥

द्वारपालकः । पुं । दौवारिके । द्वारपे ॥ स्वार्थे कन् ॥

द्वारपिण्डी । स्त्री । देहल्याम् ॥

द्वारयन्त्रम् । न । द्वारताल्याम् । ताले । ताला इति भाषा ॥ द्वारस्य द्वारेषां यन्त्रम् ॥

द्वारवती । स्त्री । अब्धिपुर्याम् । द्वारकायाम् ॥ सान्तःकरणायां बुद्धौ ॥ नकेवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः अपितु ये अपि अहङ्कारमनसी द्वारे ते अप्यपेक्ष्य बुद्धिः प्रधानम् ॥

द्वारवलिभुक् । पुं । बके ॥

द्वारस्थः । पुं । नेत्रिषि । दौवारिके ॥ द्वारेतिष्ठति । स्था० । कः ॥

द्वारावती । स्त्री । सप्तमोक्षिण्याम् । द्वारिकायाम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरीद्वारावतीचैव सप्तैता मोक्षदायिकाः ॥ एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन । पुरीद्वारावती विष्णोः माध्यजन्योपरिस्थिता ॥ मुक्तिदा एताः सर्वाश्च एकत्र गणिताः सुरैः । यानि यानिच क्षेत्राणि काशीप्रासिकराणि पठिति भूतशुद्धितन्त्रम् ॥

द्वारि । न । प्रधाने । प्रकृतौ ॥ सान्तःकरणा बुद्धिः सर्वं विषय अवगाहते यस्मात् । तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणीति साङ्ख्याः ॥

द्वारिका । स्त्री । द्वारावत्याम् ॥ इ० शेष० ॥

द्वारी । त्रि । द्वारपाले ॥ द्वारमस्यास्ति । इनिः ॥

द्वात्रिंशतिः । स्त्री । द्व्यधिकविंशतौ ॥

द्वासप्ततिः । स्त्री । द्विसप्ततौ ॥ द्व्यधिकासप्ततिः ॥

द्वास्थः । त्रि । प्रतीहारे ॥ द्वारितिष्ठति । स्था० । सुपीतिकः । खर्परेशरि वा विसर्गलोपोवक्तव्यः ॥

द्वास्थितः । त्रि । द्वारपाले ॥ द्वारितिष्ठति । स्था० । गत्यर्थाकर्मकेति क्तः । पाक्षिको विसर्गलोपः ॥

द्वास्थितदर्शकः । त्रि । दौवारिके ॥

द्वि । त्रि । दो इति भाषाप्रसिद्धायां सङ्ख्यायाम् ॥ सङ्ख्येये ॥ यथा । द्वौविप्रौ ॥

द्विकः । पुं । काके ॥ कोके ॥ द्वौ कौ वर्णविशेषौ यस्यनाम्नीत्यर्थः ॥ द्वितीयके ॥ द्वितीयेनरूपेण ग्रहणं ग्रन्थस्य । तावतिथं ग्रहणमितिलुग्वेति कन् पूरणप्रत्ययस्यच वा लुक् । ग्रन्थस्याप्रयोगः ॥ न । द्वये ॥

द्विककार. । पुं । वायसे । काके ॥ द्वौ ककारौ यस्य ॥

द्विककुत् । पुं । उष्ट्रे ॥ इति हेमचन्द्रः ॥

द्विगुः । पुं । सङ्ख्यापूर्वे तत्पुरुषावान्तरसमासविशेषे ॥ सत्रिविधः । तद्धितार्थः समाहारः उत्तरपदपरश्चेतिभेदात् । तद्धितार्थोपिद्विविधः । । तद्धितप्रत्ययमात्रस्यजादेर्वंसादेर्वार्थे विषये इत्येकः । अपत्यार्थेष्यादिकं त्यक्त्वा अजादेस्तद्धितार्थे वाच्ये इत्यपरः । तद्धितार्थविषयो यथा । द्वयोर्मात्रोरपत्यं द्वैमातुरः । पञ्चानां नापितानामपत्यम् पाञ्चनापितिः ॥ तद्धितार्थेवाच्योयथा । पञ्चभिर्गोभिःक्रीतः पञ्चगुः ॥ समाहारो यथा । त्रयाणां सखीनां समाहारः त्रिसखम् । समाहारे अदन्तानां स्त्रीत्वं पात्रादेस्तुक्लीबत्वम् ॥ उत्तरपदपरो यथा । पञ्चगावोधनं यस्य पञ्चगवधन इत्यादिः ॥ इति मुग्धबोधटीकायां दुर्गादासः ॥

द्विगुणः । त्रि । द्वाभ्यां पूरणे । अङ्कस्य अभ्याघाते ॥ द्वौगुणौ आवृत्तौ यस्यसः ॥

द्विगुणाकृतम् । त्रि । द्विःशष्टक्षेत्रे । मार्द्दयकृष्टक्षेत्रे ॥ द्विगुणं कृतम् । सङ्ख्यायाश्च गुणान्तायाः इतिडाच् ॥

द्विगुणितः । त्रि । द्विरावृत्तकृते ॥

द्विजः । पुं । ब्राह्मणे ॥ क्षत्रिये ॥ वैश्ये ॥ जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेनच । एभिर्युक्तोहि यस्तिष्ठेन्नित्यं स द्विजउच्यते ॥ नजातिर्नैकुलं राजन् नस्वाध्यायः श्रुतंनच । कार

रणानि द्विजत्वस्य हत्तमेवतु कारणम् ॥ इति वह्नि पुराणे वशिष्ठ वाक्यम् ॥ दन्ते ॥ अण्डजे ॥ द्विर्जायते । जनी° । अन्येष्वपीति डः ॥ तुम्बुरुवृक्षे ॥

द्विजकुत्सितः । पुं । श्लेष्मातके । सेपा तके ॥ द्विजै: कुत्सितः ॥

द्विजदासः । पुं । शूद्रे ॥ षि । द्विजानां दासे ॥

द्विजदेव । पुं । ब्राह्मणे ॥ द्विजेषु देव इव ॥ कर्पूरे ॥ इति श्रीधरस्वामी ॥

द्विजन्मा । पुं । विप्रे ॥ दन्ते ॥ द्वेजन्मनी यस्य ॥ ब्राह्मणादिवर्णे ॥ खगे ॥

द्विजपतिः । पुं । चन्द्रे ॥ द्विजानांपतिः ॥

द्विजप्रपा । स्त्री । पक्षिणां जलपाना र्थं विचितकूपान्तिकस्थाने । सक्रे आलवाले ॥ द्विजानां प्रपा ॥

द्विजप्रिया । स्त्री । सोमलतायाम् ॥ द्वि । द्विजस्यप्रियत्त्वात् ॥

द्विजबन्धु । पुं । नैर्गुण्यकाधमे ॥ द्वि जा बन्धवो यस्य स ॥

द्विजब्रुवः । पु । जातिमात्रोपजीविनि ब्राह्मणे । ब्राह्मणब्रुवे ॥

द्विजराज । पु । चन्द्रे ॥ अनन्ते ॥ गरु डे ॥ द्विजानांराजा । राजाह. सखि भ्यष्टच् ॥ कर्पूरे ॥

द्विजलिङ्गी । पुं । क्षत्रिये ॥ षि । विप्र चिह्नधारिणि ॥

द्विजवरः । पुं । द्विजोत्तमे ॥ द्विजेषु द्वि जानां वा मध्ये वरः ॥ चतुष्पञ्चाशप त्रके (॥।) पर्याये ॥

द्विजवर्य्यः । पुं । विप्रश्रेष्ठे ॥

द्विजव्रणः । पुं । दन्तार्बुदे ॥

द्विजशमः । पुं । राजमाषे । बरवटी इ तिगौडभाषा प्रसिद्धे ॥ षि । द्विजैः शमे ॥

द्विजसेवकः । पुं । शूद्रे ॥ षि । द्विजानां सेवाकर्त्तरि ॥

द्विजा । स्त्री । भार्ग्याम् ॥ हरेण्यां । रे णुकानामगन्धद्रव्ये ॥ टाप् ॥

द्विजाङ्गी । स्त्री । कटुकायाम् ॥

द्विजातिः । पुं । विप्रे ॥ वेदाध्ययनादि तुल्यधर्मत्वाद् ब्राह्मणादित्रिके ॥ ब्रा ह्मणः क्षत्रियो वैश्य स्त्रयोवर्णाद्वि- जातयः । चतुर्थएकजातिस्तु शूद्रो ना स्तितु पञ्चम इतिमनुः ॥ शूद्रादि जातिभिर्जातो न भूमेर्भोगमर्हति इतिस्मृतिः ॥ द्वे जातो जन्मनी यस्य स. ॥ मातुरग्रेधिजननं द्वितीयं मौ ञ्जिबन्धने इत्युक्तेः ॥ पक्षिसर्पाद्य ण्डजेषु ॥

द्विजायनी । स्त्री । यज्ञोपवीते ॥ इति शब्दरत्नावली ॥

द्विजालय. । पु । कोटरे ॥ द्विजानां गृहे ॥

द्विजावलिः । स्त्री । दन्तपङ्क्तौ ॥

द्विजिह्वः । पुं । सर्पे ॥ त्रि । खले ॥ द्वे जिह्वे यस्य सः ॥ चौरे ॥

द्विजोत्तमः । पुं । ब्राह्मणे ॥

द्विट्सेवी । त्रि । शत्रुसेविनि ॥

द्वितयम् । न । युग्मे । द्वये ॥ द्वाववयवौ अस्य । सङ्ख्याया अवयवेतयप् ॥

द्वितयी । स्त्री । युग्मायाम् ॥ टिड्ढे- ङीप्

द्वितीयः । त्रि । द्वयोः पूरणे । द्विपूरके ॥ द्वयोः पूरणः । द्वेस्तीयः ॥ द्वितीयेभागे ॥ पूरणाद्भागेतीयादन् ॥ पुं । पुत्रे ॥

द्वितीयकः । पुं । ज्वरविशेषे ॥ द्वितीये अहनि भवः । कालप्रयोजनाद्रोग इतिकन् ॥ द्विके ॥ द्वितीयेनरूपेण ग्रहणम् । तावतिथं ग्रहणमिति लुग्वे तिकन् ॥

द्वितीया । स्त्री । तिथिभेदे । चन्द्रमसोद्वितीयकलाक्रियारूपायाम् ॥ सा अश्विनीकुमारयोर्जन्मतिथिः ॥ अत्रजातस्य फलम् । निखिलगुणगभीरो ज्ञानशीलो दयालु स्वकुलकुमुदचन्द्रः स्वच्छचित्तोतिशूरः । निजभुजबलगर्वोच्छादितारातिवर्गो भवतिविपुलकीर्त्तिर्योद्वितीयाप्रसूतः ॥ अनध्यायद्वितीया यथा । प्रेकोचै



चा द्वितीयास्ताः प्रेतपक्षेगरेतथा । याच कोजागरेजाते चैत्रास्याःपरे पिया ॥ चातुर्मास्येसमाप्तेच द्वितीया या भवेत्तिथिः । परास्वेतास्वनध्यायःपुराणैःपरिकीर्त्तितः ॥ पत्न्योर्माघमासस्यद्वितीयांपरिवर्जयेदिति ॥ सहधर्मिण्याम् । पत्न्याम् ॥ अन्यस्मात् अस् इतिनिके ॥ टाप् ॥

द्वितीयाकृतम् । त्रि । द्विगुणाकृते । वारद्वयकृष्टे क्षेत्रे ॥ द्वितीयं कृतम् । कृञोद्वितीयेतिडाच् ॥

द्वितीयाभा । स्त्री । दारुहरिद्रायाम् ॥

द्विदन् । त्रि । दन्तद्वययुक्तोरपादौ ॥ द्वौदन्तावस्य । वयसिदन्तस्यदतृ ॥

द्विदाम्नी । स्त्री । रज्जुद्वययुक्तायांगवि ॥

द्विदेहः । पुं । श्रीगणेशे । विनायके ॥ द्वाभ्यांदेहोऽस्य ॥

द्विदै-ः । पुं । विश्वाखानचत्रे ॥

द्विदादशम् । न । योगविशेषे ॥ कन्या या द्वादशेभर्त्ता भर्त्तुः कन्या द्वितीयगा । द्विद्वादशं विजानीयात् वर्जितं विदुषैरपि ॥

द्विधा । अ । द्विप्रकारे ॥

द्विधागतिः । पुं । कुम्भीरे ॥ त्रि । द्विप्रकारगतिविशिष्टे ॥

द्विधातु. । पु । गजानने । हेरम्बे ॥ न । धातुद्वये ॥

द्विधात्मकम् । न । जातीकोषे । जाय फल इतिभाषा ॥
द्विधालेख्यः । पुं । छिन्नारुहचे ॥ त्रि । द्विप्रकारलेखनीये ॥
द्विनग्नकः । पुं । दुश्चर्मणि ॥
द्विपः । पुं । इभे । हस्तिनि ॥ द्वाभ्यां मुखशुण्डाभ्यां पिबति । पा० । सुपी-तियोगविभागात्कः ॥ नागकेशरे ॥
द्विपघातः । पुं । हस्तिघातके ॥
द्विपथम् । न । चतुष्पथे । पथद्वये ॥ द्वयोः पथोः समाहारः । तद्धितार्थेति समासः । ऋक्पूरितिसमासान्तो ऽः ॥
द्विपदः । पुं । मनुजे । देवे ॥ पक्षिणि ॥ राक्षसे ॥ यथा । द्विपदेविचतुर्भेदः स्वदेवपक्षिराक्षसाः । द्विपदाख्ये ॥
द्विपदराशिः । पुं । द्विपदाख्ये ॥
द्विपदा । स्त्री । ऋग्विशेषे ॥ द्वौपादौ यस्याः । सङ्ख्यासुपूर्वस्येति पादस्यान्त्यलोपः । टाबृचीतिटापि पादःपत् ॥
द्विपदाख्यः । पुं । द्विपदराशौ ॥ मिथुन तुलाघटकन्या द्विपदाख्या धनुःपूर्वभागश्च ॥
द्विपदी । स्त्री । मात्रावृत्तान्तरे ॥ आदौ षट्कलसङ्गतमेतत् तदनु पञ्च चतुष्कलम् । गुर्वन्तं द्विपदी भवतीह-विंशत्यष्टकलंकम् ॥ यथा । ध्वज

द्विमुखा

मधिमयिविनिवेश्चितविशिखानिमधुकरमर्दविमोचने । विषमायुधविषमायुधशासनविकले सुमुखिलोचने ॥ द्वौपादावस्याः । सङ्ख्यासुपूर्वस्येति पादशब्दस्यान्त्यलोपः । पादोन्यतरस्यामितिङीविभक्त्वात् पादःपत् ॥
द्विपमदः । पुं । हस्तिमदे ॥
द्विपरार्द्धावसानम् । न । ब्रह्मकाले ॥ द्वितीयस्यपरार्द्धस्य अवसानम् ॥
द्विपर्णी । स्त्री । वनकोल्याम् ॥ आकमर्षपृश्निपर्ण्योः ॥ त्रि । पर्णद्वययुक्ते ॥
द्विपात् । त्रि । पादद्वययुक्ते ॥ द्वौपादौ यस्य ॥
द्विपाद्यम् । न । द्विगुणदण्डे ॥ द्वौपादौ परिमाणमस्य । पणपादमाषशताद्यत् । इत्र पादः पदितिन । यस्येतिलोपस्यास्थानिवत्त्वात् । पद्यतदर्थे इत्यपि न । प्राण्यङ्गार्थस्य तत्रग्रहणात् ॥
द्विपारी । पुं । हस्तिनि । गजे ॥
द्विपुटः । पुं । सुगन्धिश्वेतपुष्पे । दूडा इति पर्वतीय भाषा प्रसिद्धे ॥
द्विपृष्ठः । पुं । राजप्रभेदे । ब्रह्मसम्भवे ॥
द्विमातृकः । पुं । गणेशे ॥
द्विमुखः । पुं । राजसर्पे ॥ त्रि । मुखद्वययुक्ते ॥ द्वौमुखौयस्य ॥
द्विमुखा । स्त्री । कर्कर्याम् । गडुआ गडू आरी नधनी इत्यादि भाषा ॥

जलौकायाम् ॥ द्वे मुखे यस्याः ॥

द्विमुखाहिः । पुं । सर्पभुजि । राजसर्पे ॥ द्विमुखश्चासावहिश्च ॥

द्विमुखोरगः । पुं । राजसर्पे ॥

द्विमूर्द्धः । त्रि । मस्तकद्वययुक्ते असुरविशेषे ॥ द्वौ मूर्द्धानौ यस्य । द्वित्रिभ्याञ्च मूर्द्धः इति षः ॥

द्विमूर्द्धा । पुं । असुरविशेषे ॥

द्विरः । पुं । भ्रमरे ॥ द्वौ रेफौ नाम्नि यस्य ॥

द्विरदः । पुं । गजे । हस्तिनि ॥ द्वौ रदौ यस्य ॥ स्त्रियां टापि द्विरदा ॥

द्विरदान्तकः । पुं । सिंहे ॥

द्विरशनम् । न । वारद्वयभोजने ॥ मुनिभि र्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः इति तिथ्यादितत्त्वम् ॥

द्विरसनः । पुं । सर्पे ॥ द्वे रसने यस्य सः ॥

द्विरागमनम् । न । वधूप्रवेशानन्तरं परावृत्त्या पितृगृहमागताया वध्वाः पुनर्भर्तृगृहप्रवेशे ॥ तदुक्तम् । हस्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति । पुनरागमनं वध्वा द्विरागमनं विदुरिति ॥

द्विरापः । पुं । हस्तिनि ॥ इति शब्दमाला ॥

द्विराषाढः । पुं । मिथुनस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासद्वये ॥ स चाषाढमलमासे भवति । यथा । मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ अपिच । माघादिषु षट्कोषु मासि दर्शद्वयं यदा । द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युत इति मलमासतत्त्वम् ॥

द्विरुक्तः । त्रि । विषादादिना द्विवारमुच्चारिते ॥ विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे । प्रसादने सम्भ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यतीति ॥

द्विरुक्तिः । स्त्री । द्विवारकथने ॥

द्विरूढा । स्त्री । पुनर्भ्वाम् । द्विवारविवाहितायाम् ॥

द्विरूपः । पुं । कोषधिविशेषे ॥ द्वे रूपे यस्य ॥ त्रि । रूपद्वयविशिष्टे ॥

द्विरेफः । पुं । भ्रमरे ॥ त्रि । बर्बरे ॥ द्वौ रेफौ नाम्नि यस्य ॥

द्विवचनम् । न । येन पदेन द्वावर्थावुच्येते तस्मिन् ॥ द्वयोरर्थयोर्वचनम् । वचेः करणे ल्युट् । कर्मणि षष्ठ्या समासः ॥

द्विवर्षा । स्त्री । द्विहायन्याम् ॥ द्वे वर्षे वयःप्रमाणं यस्याः । आर्हीयठक् । अहार्हे तिलुक् ॥

द्विवर्षिका । स्त्री । द्विवर्षायाङ्गवि ॥

देवर्षं वयो यस्याः सा दिवर्षा । दि वर्षैव । स्वार्थेकः । प्रत्ययस्थादिती त्वम् ॥

दिवार्षिकः । त्रि । दिवर्षभवे ॥

दिवार्षिका । स्त्री । देहायाम् ॥

द्विविदः । पुं । वानरविशेषे ॥ यो बल रामेण हतः॥ समुद्रस्योत्तरतीरे द्वि विदोनाम वानरः । ऐकाहिकज्वरं हन्ति तस्य नामानुकीर्त्तनात् ॥

दिवेशरा । स्त्री । कघुरवे । लम्बाम्॥

द्विशफः । पुं । द्विखुरेपशौ ॥ यथा । गौ रजोमहिषः कृष्ण. शूकरोगवयोरु रुः । द्विशफाः पशवश्चेमे अविरुष्ट्र-: श्चसप्तमः ॥ इति श्रीभागवतम् ॥

द्विशठ । त्र । द्वयोर्द्वयोः ॥ द्वौ द्वौ ददा तीतिद्विश' । संख्यैकवचनाच्चवीप्सा यामितिशस् ॥

द्विट् । पुं । शत्रौ ॥ त्रि । द्वेष्टरि ॥ द्वेष्टि । द्विष अप्रीतौ । क्विप् ॥

द्विषन् । त्रि । शत्रौ ॥ द्वेष्टि । द्विष० । द्विषो ऽमित्रे इति शतृ ॥

द्विषन्तपः । त्रि । शत्रुतापने ॥ द्विषन्तं तापयति । तप० । ण्यन्त. । द्विषत् परयोस्तापेरितिखच् । खचिह्रस्वः । मुम् ॥

द्विष्ट. । त्रि । द्वेषविषये ॥

द्विष्ठ. । त्रि । उभयस्थे ॥ तयोयस्तद्विष्ठ तयेति जगदीशः ॥ द्वयोस्तिष्ठति । ष्ठा० । कः ॥

द्विष्ठ । त्रि । क्रियाद्वयगमाने ॥ यथा । द्विः शरंनाभिसन्धत्ते द्विःस्थापयति नाश्रि तान् । द्विर्ददातिनचार्थिभ्यो रामो द्विर्नाभिभाषत इति ॥ द्विवारमित्य र्थे द्वित्रिचतुर्भ्यः सुच् ॥

द्विसप्ततिः । स्त्री । द्व्यधिकसप्तत्याम् ॥

द्विसहस्राक्षः । पुं । अनन्ते । नागराजे ॥

द्वितीयम् । त्रि । द्विगुणाकृते । द्विवा र कृष्टक्षेत्रे ॥ द्विवारं सीतया सम्मि तम् । तीयवयोधर्मे स्यादिनायंत् ॥

द्विस्त्रिशम् । नं । सिद्धतण्डुले । उस् नाचाउर इतिभाषा ॥ द्वि स्विन्नम न्नं पृथुकं गुरुदेवविशेषकैं । नाद्य मस्मकं विप्राणां भक्षयेत्तनिवेदने ॥ अभक्ष्यं तदतीनाञ्च विधवाब्रह्मचा रिणाम् । ताम्बूलञ्चयथा प्रज्ञान् त मैते वस्तुनी ध्रुवमिति ब्र०वै० ब्रह्म खण्डम् ॥

द्विहा । पुं । गजे । हस्तिनि ॥ नाम्नः ॥ इतिशब्दरत्नावली ॥

द्विहल्यम् । त्रि । द्विसीत्ये । द्विगुणाकृ ते ॥ द्विवारं हलेन कृष्टम् । सतज महल्यादितियत् ॥

द्विहायनी । स्त्री । द्विवर्षायाङ्गवि ॥ द्वौहायनौ यस्याः । दामहायनान्ता

चेति ङीप् ॥

द्विहृदया । स्त्री । दौहृदिन्याम् ॥ स्व-हृदयेन गर्भहृदयेनच द्विहृदयागर्भिणी भवति ॥

द्वीन्द्रियग्राह्यः । पुं । इन्द्रियद्वयग्रहणीयेगुणे ॥ सतुसङ्ख्यादिसप्तद्रवत्वस्नेहरूपः । यथा । सङ्ख्यादि रपरत्वान्तो द्रवत्वं स्नेह एवच । एतेतु द्वीन्द्रियग्राह्या अथस्पर्शान्तशब्दकाः ॥ इति भाषापरिच्छेदः ॥ द्वीन्द्रियग्राह्याः ॥ चाक्षुषप्रत्यक्षत्वाचप्रत्यक्षयो र्विषया इत्यर्थः ॥

द्वीपः । पुं । न । जलमध्यस्थस्थले । अन्तरीपे ॥ पुराणादिप्रसिद्धेषु सप्तसु ॥ तेचयथा । जम्बूशाककुशक्रौञ्चशाल्मगोमेदपुष्कराः । लक्षादिद्विगुणा द्वीपाः क्षाराद्यब्धिभिरावृताः ॥ द्विर्गता आपोऽत्र । ऋक्पूरित्यः समासान्तः । द्यन्तरुपसर्गेभ्योपईत् इत्यपईत् ॥ भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥ शाकं ततः शाल्मलमत्रकौशं क्रौञ्चञ्च गोमेदकपुष्करेच । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति ॥ इति सिद्धान्तशिरोमणिः ॥

द्वीपकर्पूरजः । पुं । चीनकर्पूरे ॥

द्वीपखर्ज्जूरस् । न । }
द्वीपजम् । न । } मध्यापारेवते ॥

द्वीपवान् । पुं । नदे ॥ अब्धौ ॥ द्वीपमस्त्यस्य । मतुप् ॥

द्वीपवती । स्त्री । भूमौ ॥ नद्याम् ॥ द्वीपमस्त्यस्याम् । मतुप् । ङीप् ॥

द्वीपशत्रुः । पुं । शतावर्याम् ॥

द्वीपान्तरवचा । स्त्री । चोपचीनी इति भाषा प्रसिद्धे द्रव्ये ॥

द्वीपिका । स्त्री । शतावर्याम् ॥

द्वीपी । पुं । व्याघ्रे । बघेरा इतिभाषा ॥ चित्रके । चीता इतिभाषा ॥ द्वावर्णावीयते । ईङ् गतौ । घा० पः । द्वीपं चर्मास्त्यस्य । अतइनिठनाविति निः ॥

द्वीपिनखः । पुं । व्याघ्रनखे ॥

द्वीपिशत्रुः । पुं । शतमूल्याम् ॥

द्वीशः । पुं । विशाखानक्षत्रे ॥ द्वौ इन्द्राग्नी ईशौयस्य सः ॥

द्वेधा । अ । द्विप्रकारे ॥ सङ्ख्याया विधार्थे धा । एधाच्चेतिसूत्र एधाचादेशः ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

द्वेषः । पुं । शत्रुतायाम् । द्वेषणे । वैरे । विरोधे । दुःखसाधने विद्यमाने

किमपि दुःखं मेमाभूदिति विपर्य्यय
विशेषे तामिस्रे ॥ स चाष्टादशविध
स्तामिस्रो द्रष्टव्यः ॥ दुःखमनुशेते
श्चिद्वीदृत्तिविशेष क्रोधानुगतरजः
परिणामः । ईदृशं सर्वं सर्वदा मेमा
भूदिति । तच्च शत्रुव्याघ्रादिषु सत्
सु न निवारयितुं शक्यम् । न च सर्वे
ते दुःखहेतवो हन्तुं शक्यन्ते अतः
सद्वेषः सदा हृदयं दहति । यदा तु
स्वस्येव परेषां सर्वेषामपि दुःखं मा
भूदिति करुणां दुःखिषु भावयेत्
तदा वैर्य्यादिद्वेषनिवृत्तौ चित्तम्प्रसी
दति । यद्वा पुण्यपुरुषेषु मुदि
तां भावयेत् तदा तद्वासनाभावात्
स्वयमेवाप्रमत्तो ऽशुक्लाकृष्णे पु-
ण्ये प्रवर्त्तते । तथा पापपुरुषेषूपे-
क्षां भावयन् स्वयमपि तद्वासनाभा
वात् पापान्निवर्त्तते । ततः पुण्या
करणपापकरणनिमित्तस्य पश्चात्ता
पस्याभावे चित्तं प्रसीदति । एवं सु
खिषु मैत्रीं भावयतो न केवलं रा-
गो निवर्त्तते किन्त्वसूयेर्ष्यादयोऽपि
निवर्त्तन्ते । तथा दुःखिषु करुणां
भावयतः शत्रुवधादिकरो द्वेषो यदा-
निवर्त्तते तदा दुःखिप्रतियोगिकत्व
सुखित्वप्रयुक्त ईर्ष्यादिर्निवर्त्तते ॥ ए
वं दोषान्तरनिवृत्तिरप्यूहनीया ॥



दुःखेन तत्साधनेषु इदं मे मा भूदिति-
स्मृत्यनुरोधिनी चित्तवृत्तिः क्रोध
इति ईर्ष्येति चोच्यते द्वेषणम् ।
द्विष् । घञ् ॥ * ॥ द्वेषश्चात्मनो
विशेषगुण इति सि० मु० ॥ द्वेषस्य
शत्रुत्वनिषेधो यथा । इन्द्रियस्ये
न्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । त
योर्न वशमागच्छेत् तौ ह्यस्य परिप
न्थिनौ । इति भगवद्गीता ॥ अस्य का
रणं द्विष्टसाधनताज्ञानम् । इति
भाषा प० ॥

द्वेषणः । त्रि । शत्रौ ॥ द्वेषशीलः । क्रु
धमण्डार्थेभ्यश्चेति युच् ॥ न । द्वेषे ॥

द्वेषपक्षः । पुं । क्रोधेर्ष्यासूयाद्रोहाम
र्षाभिमानेषु ॥ द्वेषस्य पक्षः ॥

द्वेषी । त्रि । वैरिणि । शत्रौ ॥ द्वेष्टि
तच्छीलः । द्विष् । सम्पृचेति घि
नुण् ॥

द्वेष्टा । त्रि । विद्वेषकर्त्तरि ॥

द्वेष्यः । त्रि । द्वेषविषये । द्वेषकर्मणि
स्वकृतापकारमपेक्ष्य अपकारकर्त्तरि
॥ अप्रियगते ॥ द्वेष्टुमर्हः ॥ यत् ॥

द्वै । अ । विसर्गे ॥

द्वैगुणिकः । त्रि । वार्द्धुषौ । वृद्ध्याजीवे
॥ द्विगुणार्थं द्रव्यं द्विगुणम् । तत्प्रयच्छ
ति द्विगुणं यास्यति एकगुणं दाद्रति ।
प्रयच्छति गर्ह्यमिति ठक् ॥

द्वैतवा

द्वैतम् । न । युगले । द्वये । द्वैधीभावे ॥ द्विधा इतं द्वीतम् । तस्य भावः । युवा दित्वादण् स्वार्थे वा ॥ द्वैताद्वैतयोः प्रमाणभूतवेदप्रसिद्धत्वात् कथमसत्यत्वं कथं सत्यत्वमित्याऽऽकांक्षायामाहुराचार्याः ॥ अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम् । रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥ आरोपितवस्त्वाद्द्वैतं वस्तुनि द्वैते । युक्तं नैव तदा स्यात् सत्यैक्यात् भवत्यसत्यानाम् ॥ यत्रारोपणमुभयोः सत्यातिरिक्तस्य कस्यचिद्भावः । आरोपणं न भून्ये तस्माद्द्वैतसत्यता प्राप्ता ॥ प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् । द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वादिति ॥ प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थत इति ॥

द्वैतवनम् । न । शोकमोहादिरहिते तपोवने ॥ द्वे रते यस्मात् तद्वीतम् । द्वीतमेव द्वैतम् । तच्च तद्वनञ्च ॥

द्वैतवादी । त्रि । जीवेश्वरयोर्भेदवादिनि । ईश्वरातिरिक्तजीववक्तरि ॥ तन्मतं यथा । परमात्मनो जीवात्मा पृथक् तन्मध्ये केषाञ्चिन्मते प्रकृतिरतिरिक्ता केषाञ्चिन्मते प्रकृतिरदृष्टमात्रे पर्यवसिता एवं जीवस्य पृथक्त्वे प्रमाणम् । जन्मकर्ममरणानां प्रतिनियमा दयुगपत् प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवेति साङ्ख्यार्थी ॥ अस्यार्थः । पुरुषबहुत्वं सिद्धम् । कस्मात् । जन्ममरणकरणानां प्रतिनियमात् भिकायविशिष्टाभिरपूर्वाभि र्देहेन्द्रियबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् । तेषामेव देहादीनां मृपात्तानां परित्यागो मरणम् नत्वात्मनोविनाशस्तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानाम् प्रतिनियमोव्यवस्था । सा खल्विय सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते । तदाखल्वेकस्मिन् जायमाने सर्वेजायेरन् म्रियमाणे वा म्रियेरन् । अन्धादौ चैकस्मिन् सर्व एवान्धाः एकस्मिन् विचित्ते सर्वएव विचित्ता स्युरित्यव्यवस्था प्रतिक्षेत्र पुरुषभेदे तु भवति व्यवस्था । नचैकस्यापि पुरुषस्य देहोपधानभेदात् व्यवस्थेति युक्तम् । पाणिस्तनाद्युपधानभेदेनापिजन्ममरणादिव्यवस्थासम्भवात् ।

॥ स्त्रियांदेव्या ॥

द्वैमातुरः । पुं । गणाधिपे । विघ्नराजे ॥ द्वयोर्मात्रो रपत्यम् । मातुस्तस्य उत्वेऽप्युत्त्वंरपरत्वञ्च । दुर्गापार्वत्योः पालितत्वात् । गजमुखत्वाच्च क्लिन्नापत्यत्वात् ॥ गङ्गाया अपत्यत्वाद्वा ॥ जरासन्धे ॥ त्रि । द्विमातृजे ॥

द्वैमातृकः । पुं । नदीवृष्टिजलोद्भूतधान्यभृतदेशे ॥

द्वैपायनी । स्त्री । नागवल्लीप्रभेदे ॥

द्व्यक्षः । पुं । त्रिस्वभावरामौ ॥

द्व्यङ्गुलम् । त्रि । अङ्गुलिद्वयपरिमिते ॥ द्वे अङ्गुली परिमाणमस्य ॥ न । अङ्गुलिद्वयमात्रे ॥ द्वयोरङ्गुल्योः समाहारः ॥

द्व्यञ्जलः । त्रि । अञ्जलिद्वयपरिमिते ॥ द्वावञ्जली परिमाणमस्य ॥ न । अञ्जलिद्वयमात्रे ॥ द्वयोरञ्जल्योः समाहारः ॥

द्व्यणुकम् । न । परमाणुद्वयसंयोगाद्दुत्पन्ने । परमाणुसमवेतद्रव्ये । परमाणुद्वयात्मके ॥ तच्च प्रत्यक्षादिविषयम् । यथा । विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृत ॥ तस्य परिमाणमनित्यम् । यथा । अनित्ये द्व्यणुकादौ तु सङ्ख्याजन्यमुदा

हृतमितिभाषापरिच्छेदः ॥

द्व्यन्यः । त्रि । द्वाभ्यामन्यस्मिन् ॥ द्वेऽन्ये यस्य वा ॥ न । द्वयोरन्ययोः समाहारे ॥

द्व्यर्थः । त्रि । अर्थद्वययुक्ते शब्दादौ ॥

द्व्यष्टम् । न । ताम्रे । शुल्वे ॥ द्वे द्वे अङ्के अष्टौ यस्य ॥ ताम्रं ॥ गन्धर्वे- तिरक्तः ॥

द्व्याहः । पुं । अहर्द्वये ॥ द्वे अहनी समाहृते । राजाहःसखिभ्यः ष्टचिः ॥

द्व्यात्मकः । पुं । मिथुनकन्याधनुर्मीनराशिषु ॥ यथा । चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः । इति ॥

द्व्यामुष्यायणः । पुं । तवममचायमिति परिभाषया धर्मतः परिगृहीते ॥ अमुष्य प्रसिद्धस्यापत्यमामुष्यायणः । द्वयो रामुष्यायणः ॥ उभयोरप्यसौ पिण्डदाता भवति । यतः सुतो जायते ये जनार्थं धर्मतोऽगृह्यते तयोः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः । इति स्मृतेः ॥

द्व्याह्निकः । त्रि । द्विदिनद्वयभवे ॥ द्व्याहे भवः ॥

वेन्नैनसायुज्यते हिनस्ति ॥ धनं ति । धनधान्ये । पक्षाद्यच् ॥ भेदार्थे ॥ धनिष्ठानक्षत्रे ॥

धनकेलिः । पुं । कुबेरे । राजराजे ॥

धनच्छूः । स्त्री । पक्षिविशेषे । करेट व्यायाम् ॥ इ०वि० ॥

धनञ्जयः । पुं । अर्जुने । युधिष्ठिरराजसूयार्थे दिग्विजये सर्वान् राज्ञोजित्वा धनमाहृतवानिति संज्ञाप्रभावे पाण्डवानां मध्ये भगवद्विभूतौ ॥ वह्नौ ॥ धनमिच्छेदुताशनात् ॥ नागप्रभेदे ॥ अयञ्च जलाशयाधिपतिः ॥ पेशमध्यहरे देहवर्त्तिवायौ ॥ जनहाति मृतस्यापि सर्वव्यापी धनञ्जयः ॥ ककुभतरौ ॥ चित्रकवृक्षे ॥ प्रलेषप्रभेदे ॥ यथा । मांसकूष्माण्डकदली वृक्षवैरादि साधयेत् । प्रलेषविधिना चायं प्रलेष्ठोयं धनञ्जयः ॥ धनञ्जयति जयति । अस्मात् संज्ञायां भृतवृजिधारिसहितपिदमः इतिखच् । अरुर्द्विषदितिमुम् ॥

धनदः । पुं । कुबेरे ॥ धनं दयते । देङ्पालने । आतइति कः ॥ चित्रकवृक्षे ॥ त्रि । धनदातरि ॥ धनं ददाति । डुदाञ्० । आतइतिकः ॥

धनदा । स्त्री । देवीविशेषे ॥ टाप् ॥

धनदाची । स्त्री । जनाकृत्ये ॥

धनदानुचरः । पुं । यक्षे ॥ धनदस्यानुचरः ॥

धनदानुजः । पुं । दशास्ये । रावणे ॥ धनदस्यानुजः ॥

धनदायी । पुं । अग्नौ ॥ आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् । ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ॥ त्रि । रिक्थप्रदे ॥

धनन्दा । स्त्री । जिनशक्तिविशेषे ॥

धनपतिः । पुं । कुबेरे । त्र्यम्बकसखे ॥ धनस्य धनानां वा पतिः ॥ त्रि । धनान्विते ॥

धनपिशाचिका । स्त्री । ⎫ धनाशायाम्

धनपिशाची । स्त्री । ⎭ । तृष्णायाम् । धनलोभे ॥

धनप्रिया । स्त्री । काकजङ्घाम् ॥

धनमानमदान्वितः । त्रि । धननिमित्तो योमान आत्मनि पूज्यत्वाध्यासः स निमित्तोयोमदः परस्मिन् गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्विते ॥

धनलोलुपः । त्रि । धनविषये अतिलुब्धे ॥ यथा । यदासुम्लेच्छजातीयाराजानोधनलोलुपाः । भविष्यन्ति महाप्राज्ञ तदैवप्रबलः कलिरितिश्री महानिर्वाणतन्त्रम् ॥

धनवान् । त्रि । धनिनि । धनविशिष्टे ॥ धनमस्यास्मिन्वा । तदस्यास्तीति

मतुप् ॥ धिगस्त्वेता विद्या धिगपि कविता धिक्सुजनता वयोरूपं धिक् धिगपि च यशो निर्धनवताम् । अमी जीयादेकः सकलगुणहीनोऽपि धनवान् यद्द्वारे यस्य तृणसमाः सन्ति गुणिन इति विवेकिन. खेदोक्तिः ॥

धनवती । स्त्री । धनिष्ठानक्षत्रे । ङीप् ॥

धनश्यकः । पु । गोक्षुरे ॥ इति शब्दचन्द्रिका ॥

धनस्वामी । त्रि । उत्तमर्णे ॥

धनहरी । स्त्री । चण्डालुमे । चोरनामगन्धद्रव्ये । गणहासके ॥ त्रि । धनहारिणि ॥ धनं हरति । हृञ् । हरतेरनुद्यमनेऽच् ॥ गौ० ङीप् ॥

धनहारी । त्रि । धनहारके ॥

धनागारम् । न । भाण्डागारे ॥

धनाढ्यः । त्रि । धनसंयुक्ते । धनेनाढ्यः ॥

धनाधिकृत. । त्रि । धनाध्यक्षे । खजान्ची इति भाषा ॥

धनाधिप. । पुं । कुबेरे । गुह्यकेश्वरे । धनदे ॥ धनानामधिपः ॥

धनाधिपतिः । पुं । कुबेरे ॥ धनानाम् अधिपतिः ॥

धनाध्यक्ष. । पु । कुबेरे । धनदे ॥ धनाऽधिकृते । खजान्ची इति भाषा ॥ अस्यलक्षणं यथा । लोहवस्त्राजिनादीनां रत्नानाञ्च विधानवित् । वि-



ज्ञाता फल्गुसाराणां अनाहार्यः शुचिः सदा ॥ निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥ आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः । व्ययद्वारेषु चरणा कर्त्तव्याः पृथिवीक्षिता ॥ इति मत्स्यपुराणम् ॥

धनाशा । स्त्री । धनलोभे ॥ जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः । जीविताशा धनाशा च जीर्य्यतोऽपि न जीर्य्यति ॥

धनाश्री । स्त्री । रागिणी विशेषे ॥

धनिकः । पुं । धन्याके ॥ वणिक्सार्थ्यैकगोमिनिरामनिर्धृष्टः । पुंलिङ्ग इति मेदिनी ॥ धवे ॥ त्रि । साधौ ॥ धनिनि ॥ धनमस्यास्ति । अतइनिठनाविति ठन् ॥

धनिका । स्त्री । साधुभार्य्याम् ॥ वध्वाम् ॥ युवत्याम् ॥ प्रियङ्गुद्रव्ये ॥

धनी । त्रि । आढ्ये ॥ बहुधनमस्यास्ति । अतइनिठनाविति इनि ॥

धनिष्ठा । स्त्री । श्रविष्ठायाम् । त्रयोविंशतितमे नक्षत्रे ॥ अतिशयेन धनवती । इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् ॥ अत्रजातस्य फलम् । आचारज्ञाता दरचारशीलो धनाधिशाली बलवान् दयालुः । यस्य प्रसूतौ च भवेद्धनिष्ठा महत् प्रतिष्ठा सहितो नरः

स्यात् ॥

धनीका । स्त्री । युवत्याम् ॥

धनीयकम् । क्ली । धान्याके ॥

धनुः । पुं । पियालवृक्षे । राशिभेदे ॥ शरासने । हस्तचतुष्टयमाने ॥ एष्विति । धारयति धनति वा । धन० । भृमृशीङ्तृचरित्सरितनिधनिमिम स्जिभ्य उरिति उः ॥

धनुःपटः । पुं । पियालतरौ ॥ धनुषः पटो विस्तारो ऽस्य ॥

धनुःशाखा । स्त्री । मूर्वायाम् ॥

धनुःश्रेणी । स्त्री । मूर्वायाम् ॥ महेन्द्र वारुण्याम् ॥

धनुरधिपः । पुं । बृहस्पतौ ॥ धनुषः अधिपः ॥

धनुर्गुणः । पुं । ज्यायाम् । मौर्व्याम् ॥ धनुषो गुणः ॥

धनुर्गुणा । स्त्री । मूर्वायाम् ॥

धनुर्द्रुमः । पुं । वंशे ॥

धनुर्धरः । त्रि । धनुष्मति । धन्विनि ॥ धरतीति । धृञ्० । अच् । धनुषो धरः ॥

धनुर्द्धारी । त्रि । धनुर्द्धरे । निषङ्गिणि । चापिनि ॥ तल्लक्षणं यथा । शूरस्य बलयुक्तस्य गजाश्वरथकोविदः । धनुर्द्धारी भवेद्राज्ञः सर्वक्लेशसहः शुचिरिति मत्स्यपुराणम् ॥

धनुर्भृत् । पुं । धनुर्द्धरे । धानुष्के ॥

धनुर्माध्यम् । क्ली । वक्रत्वे ॥ धनुर्मध्यम् ॥

धनुर्मार्गा । स्त्री । मूर्वायाम् ॥

धनुर्व्यासः । पुं । प्रवासे ॥

धनुर्लता । स्त्री । सोमवल्ल्याम् ॥

धनुर्वृक्षः । पुं । धन्वनवृक्षे ॥ भल्लातके ॥ वंशे ॥ अश्वत्थे ॥

धनुर्वेदः । पुं । अस्त्रशस्त्रप्रयोगोपसंहारमतिपादके मन्त्रसहिते पादचतुष्टयात्मके यजुर्वेदस्योपवेदे ॥

धनुष्करः । पुं । धानुष्के ॥ धनुः करेऽस्य ॥ यद्वा । धनुः करोति । दिवाविभेति टः ॥

धनुष्पटः । पुं । पियालवृक्षे ॥ धनुषइव पटो विस्तारो ऽस्य ॥

धनुष्मान् । पुं । धानुष्के । धनुर्द्धारिणि ॥ धनुरस्यास्ति । मतुप् । तदीयफलं यथा इति मत्स्यम् ॥

धनुष् । पुं । पियाले ॥ पुं । न । राशिविशेषे । तौषिके ॥ एतद्राशिजातफलं यथा ॥ बहुकलाकुशलः प्रबलो महान् विमलताकलितः सरतोऽतिभाक् । भवधरोऽपि धनुर्द्धरगो नरो धनकरो भवतीति धनव्ययम् ॥ तल्लग्नजातफलम् । धनुर्लग्नेसमुत्पन्नो नीतिमान् धनवान् सुखी । कुलमध्येप्रधानश्च प्राज्ञः सर्वस्वपोषकः ॥

शरासने । कोदण्डे । कार्मुके ॥ अ-
स्य लक्षणं यथा । धनुस्तु द्विविधं प्रो
क्तं शार्ङ्गं वांशं तथैव च । कोमलं व
र्णदृढता तयोर्गुणा उदाहृताः ॥ सुखस
म्यक्तिकरणं समभुग्नायतं धनुः ।
विपद्दोमुष्टिपैपन्ये तदङ्गभङ्गभावहे
दिति युक्तिकल्पतरुः ॥ * ॥ धनुषा
कार्यमेतावद्दासीनामभिरक्षणम् ॥
* ॥ हस्तचतुष्टयपरिमाणे । काठा ।
इति गौडभाषा ॥ यथा । चतुर्विंशा
ङ्गुलो हस्तश्चतुर्हस्तं धनुःस्मृतम् ॥
त्रि० । धनुर्धरे ॥ इधन्ति धारयति ।
धन० । उनिः प्रत्ययः ॥ यद्वा । धन
ति । धनशब्दे । कनिंपूर्वपियजित
निधनितपिभ्योनिद्दिदित्युनिः ॥
धमुष्ठ । पुं । धनुषि ॥ नयमराशौ ॥
इधन्ति । धन्यते वा । धन० । कृषि
चमितनिधनिसर्जिखर्जिभ्य उः ॥
धनेश्वरः । पुं । कुबेरे ॥ धनानामीश्वरः ॥
धन्धधन्धम् । न । कपाटे ॥
धन्यः । पुं । अश्वकर्णवृक्षे ॥ त्रि । श्ला-
घ्ये ॥ स्वनामा पुरुषोधन्यः पितृनामा
च मध्यमः । अधमो मातृनामा च मा
तृनामाधमाधमः ॥ कृतार्थे ॥ पुण्य
वति । सुकृतिनि ॥ वार्हस्पत्ये भन
सादावर्थशास्त्रे ॥ धनायहिते ॥ धन
स्य निमित्ते ॥ धनंलब्धा । धनगर्णं क



श्रोतियम् ॥ धनस्य निमित्तं संयोग
उत्पातोवा । गोद्व्यचहस्त्यादिनायत्
॥ धनंप्रयोजनमस्यवा ॥
धन्यव्रतम् । न । धनजनके व्रतविशेषे ॥
धन्या । स्त्री । आमलक्याम् ॥ धात्र्या
म् । उपमातरि । धाय इति भाषा ॥
धन्याके ॥ विष्णारकवनदेव्याम् ॥
टाप् ॥
धन्याकम् । न । कुस्तुम्बुरु
णि । वितुन्नके । धनिका इति भाषा
॥ शिलायां साधु सम्पिष्टं धन्याकं वस्त्र
गालितम् । शर्करोदकसम्मिश्रं कर्पू
रादि सुसंस्कृतम् । नवीने मृण्मये
पात्रे स्थितं पित्तहरं परम् ॥ धन्यते
अर्थार्थिभिः । धनशब्दे । पिना० साधु ॥
धन्यासरस्वती । स्त्री । तीर्थविशेषे ॥
धन्वम् । न । चापे ॥ इत्यमरटीकायां
भरतः ॥
धन्वङ्गः । पुं । धामिन् इति भाषाप्रसि
द्धे धनुर्वृक्षे । गोपवृक्षे ॥ धन्वङ्गः कफ
पित्तास्रकासघ्नः सुवरोलघुः । बृंह
णो बलकृद्रूक्षः सन्धिकृद्व्रणरोपणः ॥
इति भावप्रकाशः ॥
धन्वदुर्गम् । न । मरुवेष्टिते चतुर्दि
शं पञ्चयोजनमनुदके ॥
धन्वा । पुं । अल्पोदकदेशे ॥ मरुदेशे
॥ न । चापे ॥ स्थले ॥ धन्वते ऽस्मा

त् । धन्विःशौचोगत्यर्थः । कनिन्युवृषीतिकनिन् । धन्वेति अन्तर्भावितण्यर्थोयम् ॥

धन्वनः । पुं । धामनि इति भाषा प्रसिद्धे धनुर्वृक्षे । रक्तकुसुमे । मरुस्थले ॥

धन्वन्तरिः । पुं । देववैद्यविशेषे । नारायणांशे ॥ नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् । पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥ सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः । शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥ काशिराजे । दिवोदासे ॥ यथा । अहं हि धन्वन्तरिरादिदेवो जराहजारुक्मृत्युहरोऽमराणाम् । शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ धन्वं शल्यशास्त्रम् तस्यान्तं पारमियर्त्ति गच्छति । ऋगतौ । अचः ॥ विक्रमादित्यसभास्थवैद्याकरे ॥

धन्वन्तरिग्रस्ता । स्त्री । कटुक्याम् ॥

धन्वयवासः । पुं । दुरालभायाम् । धमासा । जौरजवासा इति भाषा ॥ धन्वनोमरुभूमेर्यवासः । तयोत्पन्नत्वात् ॥

धन्वयवासकः । पुं । दुरालभायाम् ॥

धन्वयासः । पुं । दुरालभायाम् । यवासे । जवासा इतिभाषा ॥ धन्वनोयासः मरुभवत्वात् ॥

धन्वी । पुं । अर्जुने । पार्थे ॥ ककुभद्रुमे ॥ दुरालभायाम् ॥ बकुले ॥ त्रि । छेके । विदग्धे ॥ चापिनि । धनुर्द्धरे ॥ लोलार्क्ककेशवौ कोटी गङ्गाख्यो नगरं धनुः । अस्ति वौच्यः शरो धर्मः शिवो धन्वी पुनातु माम् ॥ धनुश्चापोऽस्यास्ति । ब्रीह्यादित्वादिनिः ॥

धन्विस्थानम् । क्ली । प्रत्यालीढादिषु ॥ वैष्णवं समपादञ्च वैशाखं मण्डलं तथा । प्रत्यालीढं तथालीढं स्थानान्येतानि धन्विनाम् ॥ धन्विनां युद्धकाले स्थानम् ॥

धमः । त्रि । अग्निसंयोगकर्त्तरि ॥ शब्दकर्त्तरि ॥ धमतेः पचाद्यच् ॥

धमकः । पुं । कर्म्मकारे ॥ धमति । ध्मा शब्दाग्निसंयोगयोः । ध्मोधमश्चेति क्वुन् ॥

धमनः । पुं । नले । नडे । नरकट इति नरसल इतिच प्रसिद्धे तृणे ॥ त्रि । भस्त्राध्मापके ॥ क्रूरे ॥ धमति धम्यते वा । धम ध्माने सौत्रः । बहुलमिति युच् ॥

धमनिः । स्त्री । धमन्याम् ॥ धम्यते । धमिः सौत्रो ध्माने । अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिरित्यनिः प्रत्ययः ॥

धमनी । स्त्री । शिरायाम् । नाड्याम् ॥

कन्धरायाम् ॥ षट्टविशांसिन्याम् ॥ हरिद्रायाम् ॥ धम्यते । धमिःसौत्रः । अनिप्रत्ययः । ततः कृदिकारादक्तिन इतिङीष् ॥ नलिकायाम् ॥ पृश्निपर्ण्याम् ॥

धम्मिल्लः । पुं । संयतकचेषु । बद्धकुन्तलेषु । खोपा इतिगौड़े भाषा ॥ सचकुसुमगर्भो, मौक्तिकपद्मरागसत्तिकादिना बहिःसंयतोबद्धः केशकलाप इतिभरतः । चूड़ा इतिमाधा ॥ धमति । धमध्माने सौत्रः । विच् । मिलति । मिलसङ्गमे । अच् । धम्चासौमिलश्च । कोनेधातोरिति सौत्रेषु न भवति । पृषोदरादिः ॥

धरः । पुं । गिरौ । पर्व्वते ॥ कार्पासतूले ॥ कूर्मराजे ॥ वसुविशेषे ॥ धरति । धृञ्० । पचाद्यच् ॥

धरणः । पुं । अद्रिपतौ ॥ लोके ॥ स्तने ॥ धान्ये ॥ दिवाकरे ॥ सेतौ ॥ न । वसुविंशतिरक्तिकारूपे मानभेदे । पल्ले ॥ दशपलमाने । पलंसुवर्णाश्चत्वारः पलानिधरणंदशेतिमनुः ॥ पलदशमांशे । इतिवैद्यकम् ॥ धारणे ॥ षोडशरूप्यमाषकैः परिमिते । पुराणे ॥

धरणिः । स्त्री । भूमौ ॥ धरति । धृञ्० । ध्रियते विश्वमनया । धृङ् अवस्थानेवा । अर्त्तिसृधृधमीभ्यअनिः ॥

धरणिधरः । पुं । विष्णौ ॥ धरण्याः धरः ॥ नगे ॥

धरणिस्थः । त्रि । भूमस्थचारिणि ॥ धरण्यांतिष्ठति । ष्ठा० । कः ॥

धरणी । स्त्री । भुवि ॥ धरणीपतितंतोयं चातकानां कथास्करम् ॥ शाल्मलिद्रुमे ॥ धरति विश्वम् । धृञ्० । अर्त्तिसृभिध्यादिना अनिः । कृदिकारादित्तिङीष् ॥ नाड्याम् ॥ कन्दविशेषे । कन्दालौ । वनमान्दे ॥

धरणीकन्दः । पुं । धरणीनामकमूलविशेषे ॥

धरणीकीलकः । पुं । नगे । पर्व्वते ॥

धरणीधरः । पुं । विष्णौ ॥ पर्व्वते ॥ कच्छपे ॥ शेषदिग्गजादिरूपेण धरणींधत्ते । धृञ्० । अच् ॥ धरण्याःधरोवा ॥

धरणीपुरम् । न । चतुरस्त्रमण्डले ॥ पुं । अब्धौ ॥ धरण्याः पुरम् । धरणीपुरंयस्य ॥

धरणीपूरः । पुं । सिन्धौ । समुद्रे ॥

धरणीप्लवः । पुं । समुद्रे ॥ धरणीप्लवोऽस्मिन् ॥

धरणीश्वरः । पुं । ईश्वरे । शिवे ॥ धरण्याईश्वरः ॥ नृपे ॥

धरणीसुतः । पुं । भौमे ॥ धरण्याः-

सुतः ॥

धरणीसुता । स्त्री । सीतायाम् । जानक्याम् ॥ धरण्याःसुता ॥

धरसंस्थः । त्रि । पर्व्वताकारे । गिरिसदृशे ॥ धरस्य संस्था सादृश्यं यस्य ॥

धरा । स्त्री । भुवि । पृथिव्याम् ॥ गर्भाशये । जरायौ ॥ मेदिनि ॥ नाड्याम् ॥ महादानविशेषे ॥ धरतिविश्वम् । धृञ्० । धराः शैलाः सन्त्यस्यां वा । यद्वा । ध्रियते । धृङ्० । अच् ॥ तीर्थविशेषे ॥ यत्स्नानात् शोकनाशो भवति ॥

धराकदम्बः । पुं । धाराकदम्बवृक्षे । प्रावृष्ये । भृङ्गवल्लभे ॥

धराकदम्बकः । पुं । धराकदम्बे ॥

धरात्मजः । पुं । भौमे ॥ मङ्गलग्रहे ॥ धरायाः आत्मजः ॥

धराधरः । पुं । वराहरूपे विष्णौ ॥ शैलशेषैः शेषाशैरशेषां धरां धारयति तथा ॥ धरायाधरः ॥ पर्व्वते ॥

धरामरः । पुं । भूमिदेवे । ब्राह्मणे ॥ यथा । धरामरेन्द्रपाणिषु प्रधातुमीचसे धरांयदिच्छमादरात् सदा प्रदेहि तत्फलप्रदाम् । पयस्विनीं स्वलङ्कृतां सुवंशभुक्तिमुक्तिदां यदात दाभवेच्छ्युर्निमेदकंनिनेवहूमिति वीरवक्तः ॥

धरित्री । स्त्री । भूमौ ॥ धरतिविश्वम् । धृञ्० । अमि० इत्रः । गौ० ङीप् ॥

धरिमा । पुं । रूपे ॥ तुलायाम् ॥ यथा । तथा धरिममेयानां शतादभ्यधिके वधः ॥ ध्रियते । धृञ्० । हृभृधृसृस्तृशृभ्य इमनिच् ॥

धरिममेयः । त्रि । तुलापरिच्छेद्ये ॥

धर्त्तव्यः । त्रि । धारणीये ॥

धर्त्रम् । न । आलये । गृहे ॥ धरतिध्रियते वा । धृञ्० । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥

धर्म्मः । पुं । न । शास्त्रविहितकर्म्मानुष्ठानजन्येऽपूर्व्वे पूर्व्वमीमांसा प्रसिद्धे भाविफलाधारभूते पुण्ये । श्रेयसि । सुकृते । वृषे ॥ यथा । श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः प्रकीर्त्तित इति देवीभागवतम् ॥ स च वर्णाश्रमादिधर्म्मरूपः । यथोक्तं भविष्यपुराणे । वर्णधर्म्मःस्मृतस्त्वेक आश्रमाणामतःपरम् । वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथेति ॥ तत्र वर्णधर्म्मो नित्यं मद्यं ब्राह्मणो वर्जयेदित्यादिः । आश्रमधर्म्मोऽग्नीन्धनभैक्ष्यब्रह्मचर्य्यादिः । वर्णाश्रमधर्म्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः । गुणधर्म्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । निमित्तधर्म्मो विहि

मति भैवतु मः सततोत्थितानां स
ह्लोक एवपरलोकगतस्य बन्धुः । स्व
र्य्याः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवात्मभाव मपियान्ति नचस्थिरत्व
म् ॥ धर्म्मासनमस्थाने ॥ धरतिविश्वम्
प्रियसेवाधारयतिवा । धृञ्० । कर्त्तरि
सुसुकुसुधृञ्चि सुभायावापदियक्षि
नीभ्योमनिति मन् ॥
धर्म्मकर्म्म । न । धर्म्मकार्य्ये । शुभादृष्टप्र
तिपादकक्रियायाम् ॥ वेदप्रविहितं
धर्म्मकर्म्म तन्मङ्गलमपरमिति ब्रह्मवै
वर्त्त पुराणम् ॥
धर्म्मकथादरिद्रः । त्रि । भारतेकलिजन्म
निमानवे ॥ इतिहेमादिः ॥
धर्म्मकायः । पुं । बुद्धे ॥ इतित्रिकाण्डशे
षः ॥ धर्म्मीय कायोयस्य ॥
धर्म्मकीलः । पुं । राजशासने ॥ इ०चि० ॥
धर्म्मकीलकः । पुं । राजशासने ॥ इतिश
ब्दरत्नावली ॥
धर्म्मकेतुः । पुं । बुद्धे ॥
धर्म्मक्षेत्रम् । न । धर्म्मभूमौ । धर्म्मस्य पु
ण्यस्य अविद्यमानस्योत्पत्तेः विद्यमान-
स्य वृद्धेः निमित्ते ॥ धर्म्मक्षेत्रम् ॥
कुरुक्षेत्रे ॥ यथा । ब्रह्मवैवर्त्ते कुरुक्षे
त्र पञ्च रामहृदान्तरम् । धर्म्मक्षेत्रं कु
रुक्षेत्रं द्वादशयोजनावधि ॥ * ॥ अ
पिच । तरन्तुकारन्तुकयोर्यदन्तरं
रामहृदानाञ्च मचक्रुकस्य च । एत
त् कुरुक्षेत्र समन्तपञ्चकं प्रजापतेरु
त्तरवेदिरुच्यते ॥ त्रि । धर्म्माधारे ॥
धर्म्मगुप् । त्रि । धर्म्मरक्षके ॥ धर्म्मं गोपा
यति । गुपू० । क्विप् ॥
धर्म्मघटः । पुं । वैशाखे प्रत्यहदेया
तव्येसुगन्धोदकपूर्णकलसे ॥
धर्म्मचक्रः । पुं । बुद्धे ॥
धर्म्मचक्रभृत् । पुं । जिने ॥ इतिश० ॥
धर्म्मचारिणी । स्त्री । भार्य्यायाम् ॥
धर्म्मचिन्तनम् । न । धर्म्मचिन्तायाम् । पु
ण्यभावनायाम् ॥
धर्म्मचिन्ता । स्त्री । उपायौ । धर्म्मचिन्त
ने ॥ धर्म्मस्यचिन्ता ॥
धर्म्मजीवनः । पुं । ब्राह्मणविशेषे । या-
जनप्रतिग्रहादिना परस्य धर्म्मसुत्पा
द्य यो ब्राह्मणो जीवति तस्मिन् ॥
धर्म्मज्ञः । त्रि । धर्म्मज्ञानविशिष्टे ॥
धर्म्मणः । पुं । वृक्षभेदे । धामिनिया
इति गौडभाषाप्रसिद्धे ॥ सर्पभेदे ।
ढेमना इतिगौडभाषा ॥
धर्म्मतीर्थम् । न । तीर्थविशेषे ॥
धर्म्मत्वम् । न । हस्तिमन्त्रे । आधेयत्व
इतिवावत् । यथा । गगनादेर्वृत्ति
मत्त्वमधर्म्मत्वाभावादिति जग
दीशः ॥
धर्म्मदानम् । न । प्रयोजनमनपेक्ष्यके

वलधर्म्मबुद्ध्या पात्रेभ्योदाने ॥ यथा देवलः । पात्रेभ्योदीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्षते इति ॥

धर्म्मदुघा । स्त्री । हविर्द्दोग्ध्र्याम् ॥ धर्म्मान् दोग्धीति विग्रहे दुहेः कप् घश्चान्तादेशः ॥

धर्म्मद्रवा । स्त्री । } गङ्गायाम् ॥ सिद्ध
धर्म्मद्रवी । स्त्री । } सिन्धौ ॥ यथा । विष्णुपादार्घसम्भूते गङ्गे त्रिपथगामिनि । धर्म्मद्रवीति विख्याते पापं मे हर जाह्नवीति ॥

धर्म्मधातुः । पुं । सुगते । बुद्धे ॥

धर्म्मध्वजी । त्रि । जीविकार्थं जटादिधारिणि । बिडालव्रती ॥ यो बहुजनसमक्षं धर्म्ममाचरति स्वतः परत्र स्वलोके ख्यापयति तस्य धर्म्मः ध्वजं चिह्नमिवेति धर्म्मध्वजी । धर्म्मस्य ध्वजश्चिह्नम् । धर्म्मो ध्वजइव वा ॥ धर्म्मध्वजोऽस्यास्ति । अतइनिः ॥

धर्म्मनैपुण्यकामः । त्रि । गृहीतवेदाध्ययननियमजन्यादृष्टेच्छौ ॥

धर्म्मपत्तनम् । न । मरिचे ॥ धर्म्मपत्तने जातम् । तत्रजातस्यास्य । संज्ञापूर्व्वकत्वान्नवृद्धिः ॥ श्रावस्त्याम् । धर्म्मपुर्य्याम् ॥

धर्म्मपत्नी । स्त्री । प्रथमोढायां सवर्णायाम् ॥ कीर्त्तौ ॥ श्रियि ॥ वाचि ॥ स्मृतौ ॥ मेधायाम् ॥ धृतौ ॥ क्षमायाम् ॥ नारीणां मध्ये कीर्त्त्याद्याः सप्तधर्म्मपत्न्यो भगवद्विभूतयः । या साभासमात्रसम्बन्धेनापि जनः सर्व्वलोकादरणीयो भवति तासां सर्व्वस्त्रीषूत्तमत्वमतिप्रसिद्धमेव ॥

धर्म्मपत्रम् । न । यज्ञोडुम्बरे ॥ धर्म्मार्थं पत्रे ॥

धर्म्मपालः । पुं । यज्ञोक्तधर्म्मपालके ॥ धर्म्मम् पालयति । पाल० । कर्म्मण्यण् ॥

धर्म्मपुत्रः । पुं । युधिष्ठिरे । अजातशत्रौ ॥ धर्म्मस्य पुत्रः ॥ नरनारायणयोर्ऋष्योः ॥ धर्म्मतः कृते पुत्रे । धरम् बेटा इति भाषा ॥

धर्म्मप्रधानः । पुं । धार्म्मिके ॥ धर्म्मः प्रधानो यस्य ॥

धर्म्मभाषकः । पुं । भारतादिपाठके ॥

धर्म्ममूलम् । न । वेदादिषु ॥ यथा अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः । ब्रह्मचर्य्यं ततः सत्यमनुक्रोशः क्षमा धृतिः । सनातनस्य धर्म्मस्य मूलमेतद्दुरासदमिति मत्० पु० ॥

धर्म्ममेघः । पुं । असम्प्रज्ञातसमाधौ ॥ सर्व्वतो विरक्तस्य समाधिफलमपि सुखमनपेक्ष्यमाणस्य योगिनो दृढभूमिः सन् धर्म्ममेघ इत्युच्यते । त

क्षम । प्रसङ्ख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधिस्ततः क्लेशकर्म्मनिवृत्तिरिति ॥

धर्म्मयुक्तः । त्रि । नित्यनैमित्तिकस्य धर्म्मस्याचारिणि ॥

धर्म्मयुक् । त्रि । धार्म्मिके । धर्म्मयुक्ते ॥

धर्म्मयूपः । पुं । श्रीहरौ ॥ यूपे पशुवत् भगवत्समाराधनात्मका धर्म्मास्तत्र बध्यन्तेऽसौ धर्म्मयूपः ॥ यथा यूपः पशूनां नियोजनस्थानमेवं विष्णुः समाराधनात्मकानां धर्म्माणां स्थानमित्यर्थः ॥

धर्म्मराजः । पुं । यमे ॥ बुद्धे ॥ युधिष्ठिरनृपे ॥ धर्म्मेण राजते । राज् । पचाद्यच् ॥ धर्म्मस्य राजा वा । राजाहःसखिभ्यष्टच् ॥ धर्म्मस्यासौ राजा चेति वा ॥

धर्म्मराजपरीक्षा । स्त्री । धर्म्माधर्म्मपरीक्षायाम् ॥ यथाह बृहस्पतिः । पत्रद्वये लेखनीयौ धर्म्माधर्म्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥ आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥ समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ । ततः कुम्भात् पिण्डमेकं गृह्णीयाद्विरचिताञ्जलिः ॥ धर्म्मगृहीते शुद्धः स्यात् सम्पृक्तः परीक्षकैरिति ॥ जीवदानमन्त्रादिकं शारदायां दिव्यतत्त्वे द्रष्टव्यम् ॥

धर्म्मलक्षणम् । न । धर्म्मस्वरूपे ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥ इति मनुः ॥ अपि च । पात्रे दानं मतिः कृष्णे मातापित्रोश्च पूजनम् । श्रद्धा बलिर्गवांग्रासः षड्विधं धर्म्मलक्षणम् ॥

धर्म्मवाणिजिकः । पुं । पुण्यकर्म्मफलकामिनि ॥

धर्म्मवान् । त्रि । पुण्यवति । धर्म्मविशिष्टे ॥ धर्म्मोऽस्यास्मिन् वा । मतुप् ॥

धर्म्मवर्ग्गः । पुं । चतुर्वर्गे ॥ धर्म्मघटितो वर्गः ॥

धर्म्मवासरः । पुं । पूर्णिमायाम् ॥

धर्म्मवाहनः । पुं । श्रीसदाशिवे ॥ धर्म्मो वाहनमस्य ॥ न । धर्म्मस्य याने ॥

धर्म्मवित् । त्रि । धर्म्मज्ञे ॥

धर्म्मविप्लवः । पुं । धर्म्मव्यतिक्रमे । अधर्म्मे ॥

धर्म्मवैतंसिकः । पुं । पापकर्म्मणा धनमासाद्यात्मनो धार्म्मिकत्वख्यापनार्थं दानकर्त्तरि ॥

धर्म्मव्याधः । पुं । पापपुरुषविशेषे ॥

धर्म्मशास्त्रम् । न । मन्वाद्युक्तस्मृतौ । धर्म्मसंहितायाम् ॥ धर्म्मप्रतिपादकं शास्त्रम् ॥ धर्म्मशास्त्रप्रयोजका यथा,

। मन्वत्रिविष्णुहारीतयाज्ञवल्क्योश
नोऽङ्गिराः । यमापस्तम्बसंवर्त्ताःका
त्यायनबृहस्पती ॥ पराशरव्यासश
ङ्खलिखिता दक्षगौतमौ । शाता
तपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः
इति याज्ञवल्क्यः ॥ उशनश्शब्दपर्य्य
न्तो द्वन्द्वैकवद्भावः । नेयं परिसङ्ख्या
किन्तु प्रदर्शनार्थमेतत् । अतो बौधा
यनादेरपि धर्म्मशास्त्रत्वमविरुद्धम् ।
एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्
क्षाणां साकाङ्क्षापरिपूरणं अन्यतः
क्रियते । विरोधे तु विकल्पः ॥

धर्म्मशीलः । त्रि । धर्म्मयुक्ते । धार्म्मिके ॥
धर्म्मः शीलमस्य ॥

धर्म्मशुद्धिः । स्त्री । अधर्म्माभिष्कृत्यनिर्द्धा
रणे ॥

धर्म्मसंस्थापनम् । न । वेदमार्गपरिरक्ष
णे ॥ धर्म्मस्य सम्यक् अधर्म्मनिवारणेन
स्थापनम् ॥

धर्म्मसंहिता । स्त्री । मन्वाद्युक्तस्मृतौ ॥
धर्म्मबोधार्थं रचिता । सम्पूर्णोदया
नोःकर्म्मणिक्तो दधातेर्हिः ॥

धर्म्मसम्मूढचेताः । त्रि । धर्म्मे विषये
निर्णायकप्रमाणादर्शनात् संशयैर्व्या
सचित्ते ॥ धर्म्मे सम्मूढं चेतोऽस्य ॥

धर्म्मसावर्णिः । पुं । एकादशमनौ ॥

धर्म्मसुतः । पुं । युधिष्ठिरे ॥ धर्म्मस्य सुतः ॥

धर्म्मसूः । पुं । कालिङ्गे । धूम्याटपक्षिणि ॥

धर्म्मस्थः । पुं । प्राड्विवाके ॥ धर्म्मे तिष्ठ
ति । स्था० । कः ॥

धर्म्मस्थानम् । न । [illegible]धर्म्मभवने ॥

धर्म्माङ्गम् । न । ब्रह्मचर्य्यादिवस्तु ॥
यथा । ब्रह्मचर्य्येण सत्येन तपसा च प्र
वर्त्तते । दानेन नियमेनापि क्षमा
शौचेन वल्लभ ॥ अहिंसया सुशान्त्या
च अस्तेयेनापि वर्त्तते । एतैर्द्दशभिर
ङ्गैस्तु धर्म्ममेव प्रसूचयेदिति पा० भू० ॥

धर्म्मात्मजः । पुं । युधिष्ठिरे ॥

धर्म्मात्मा । पुं । धर्म्मस्वभावे । धर्म्मानुगत
चित्ते ॥ धर्म्मे आत्मा यस्य ॥ मुनिवि
शेषे ॥

धर्म्माधर्म्मपरीक्षणम् । न । मिताक्षरो
क्तपरीक्षाविशेषे ॥

धर्म्माधर्म्मवित् । पुं । मीमांसके ॥ धर्म्मा
ऽधर्म्मौ विधिनिषेधचोदनागम्यौ पर
मार्थाविति मीमांसकस्य कथनामा
त्रम् । देशकालादिषु धर्म्माऽधर्म्मयो
र्विप्रतिपत्तिदर्शनात् ॥

धर्म्माधिकरणः । पुं । धर्म्माध्यक्षे ॥ तल्ल
क्षणं यथा । समः शत्रौ च मित्रे च सर्व्व
शास्त्रविशारदः । विप्रमुख्यः कुलीन
श्च धर्म्माधिकरणो भवेत् ॥ इति म
त्स्य पु० ॥ न । राज्ञो विचारस्थाने ॥
यथा । धर्म्मशास्त्रानुसारेण अर्थशास्त्र

निरूपणम् । यथाविक्रियते स्थाने धर्माधिकरणं हितत् ॥ इति वी० मि० ॥ पुरुषान्तरतत्त्वज्ञाः प्राणव र्थाप्यलोलुपाः । धर्माधिकरणे कार्या जनास्तानकरानराः ॥ इति म- त्स्य पु० ॥

धर्म्माधिकारी । पुं । धर्माधिकरणाधि पिष्टे । धर्माध्यक्षे । प्राड्विवाके ॥

धर्म्माध्यक्षः । पुं । धर्माधिकरणि ॥ कु- लशीलगुणोपेतः सर्वकर्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षोऽभि- धीयते ॥ परमेश्वरे ॥ धर्मपदंवच कायाधर्माधर्मप्रतिपादकम् । तथाच धर्माधर्मौ फलदानाय काध्यचावस्थे ति तौ अध्यक्षयतीतिवा ॥

धर्म्माभासः । पुं । श्रुतिस्मृतीतरशास्त्रो- क्ते सुकृते ॥ यथा । श्रुतिस्मृतिभ्या- मुदितं यत् स धर्मः प्रकीर्त्तितः । अ- न्यशास्त्रेषु यः प्रोक्तो धर्माभासःस उ- च्यत इति देवीगीता ॥

धर्म्मारण्यम् । न । पुण्यवनविशेषे ॥ तीर्थविशेषे ॥

धर्म्मासनम् । न । राज्ञोधर्मदर्शनार्थ- मासने । विचारासने । व्यवहारासने ॥

धर्म्मास्तिकायः । पुं । पुद्गलास्तिकायाद- न्यस्मिन्नभ्युदयहेतौ ॥

धर्म्मिणी । स्त्री । रेणुकायाम् ॥

धर्म्मी । त्रि । पुण्ययुते । धर्मवति ॥ धर्मो विद्यते ऽस्य । इनिः ॥ अधिकारे प्रवृत्तौ ॥ धर्मा यागादिरूपाः श्रौताः स्मार्त्तास्तान्त्रिकाश्च भगवत्समारा- धनरूपाः प्राधान्येनप्राधान्येनवासन्त्य स्येतिधर्मी । इनिः ॥ धर्म्मे श्वे सर्वस्मात् प्रकारेतु विपर्ययः ॥

धर्म्मिष्ठः । त्रि । धार्मिके ॥

धर्म्मोत्तरः । त्रि । धर्मप्रधाने ॥

धर्म्मोपदेशकः । पुं । श्रीगुरौ ॥

धर्म्यम् । त्रि । धर्मयुक्ते ॥ धर्मादनपेत- म् । धर्मपथ्यर्थन्यायादनपेते- इति यत् ॥ धर्मसंप्राप्ये ॥ नैगमये धर्म्य- दिनाधम् ॥

धर्म्यविवाहः । पुं । ब्राह्मदैवार्षगान्धर्वप्रा- जापत्यरूपे विवाहविशेषे ॥

धर्षः । पुं । प्रागल्भ्ये ॥ अमर्षे ॥ शक्ति- बन्धने ॥ संहतौ ॥ हिंसायाम् ॥ धर्ष- णम् । धृषेर्भावे घञ् ॥

धर्षकः । त्रि । अभिभवकर्त्तरि ॥ नटे ॥

धर्षकारिणी । स्त्री । दूषितायां कन्या- याम् ॥

धर्षणम् । न । परिभवे ॥ रते ॥ धृषे- ल्युट् ॥ धर्षशब्दार्थे ॥

धर्षणी । स्त्री । अभिसारिकायाम् । असत्याम् ॥ धर्षति । ञिधृषा० । ल्युट् । ङीप् ॥

धर्षणीयः । त्रि । अभिभवनीये । धृष्ये ॥

धर्षिणी । स्त्री । पुंश्चल्याम् ॥

धर्षितम् । न । रतौ । मैथुने ॥ इति त्रिकाण्डशेषः ॥ त्रि । कृतधर्षणे । परिभूते । तिरस्कृते ॥ धृषेः क्तः । इ-ड्भावः ॥

धर्षिता । स्त्री । असत्याम् ॥ तिरस्कृतायाम् ॥

धलण्डः । पुं । इडकण्टकवृक्षे । धल-आँकडा इति गौड भाषा ॥

धलण्डकः । पुं । धलण्डे ॥

धवः । पुं । नरे ॥ धूर्त्ते ॥ पत्यौ ॥ स्वनामख्यातवृक्षे । मधुरवृक्षे । पीतफले । गौरे । शुक्लवृक्षे ॥ अस्य गुणाः । धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलञ्च मधुरं मनागिति भावप्रकाशः ॥ धवति धुवति धुनोति धुनाति वा । धूञ् धूञ् कम्पने धूञ् विधूनने वा । पचाद्यच् ॥ यद्वा । धूयते । कर्म्मणि अप् ॥

धवलः । पुं । वृषश्रेष्ठे । महोक्षे ॥ चीनकर्पूरे ॥ धववृक्षे ॥ रागविशेषे ॥ वीरवृक्षे ॥ पाण्डुप्रमेहखगे । चौता इति भाषा ॥ धवलः पाण्डु रुचि-ष्टो रक्तपित्तहरो हिमः । रसे पाके च मधुरः सङ्ग्राही वातशान्तिकृत् ॥ न । श्वेतमरिचे ॥ छन्दोभेदे ॥ यथा ॥ द्विजवरगणयुगसनगणगणयुगक-लं विमलवलयमपि च कलयस कल-जनसुखम् । फणिपतिवरभणित म-मलधवल मिह शितं दिमलकवि सु-हृदिव खवित मिति भुविविदितम ॥ यथा ॥ उपगतदृढसुरभिसमय दृ-शिसुमुखिशरे निधुवनमधिपिव सव-मधुजविवपमपदे । कमलनयन म-नुसर सखि तवरमसपर प्रियतमग्र-हगमनमुचितमनुचित मपरम् ॥ त्रि । शुक्ले । सितवर्णाच्ये ॥ सुन्दरे ॥ धावु० । वाहुलकात् कलः धातोर्ह्रस्वश्च ॥

धवलपक्षः । पुं । हंसे ॥ शुक्लपक्षे ॥

धवलपाटली । स्त्री । सितपाटलिकायाम् ॥

धवलमृत्तिका । स्त्री । खटिकायाम् ॥

धवलयावनालः । पुं । यावनालविशेषे । शारतण्डुले । माण्डवे ॥

धवला । स्त्री । शुक्लवर्णायाङ्गवि ॥ धवलवर्णयोगात् अनुदात्तत्वाभावान्-ङीप् ॥

धवलाङ्कः । पुं । प्रतापसे ॥ धवलश्चासावर्कश्च ॥

धवली । स्त्री । धवलवर्णायाङ्गवि । धवलायाम् ॥ गौरादित्वात् ङीष् ॥

पैःसोमसूर्यानिलायथा। धारयन्ति जगद्देहं कफपित्तानिलास्तथेति॥ अपिच॥ स्वर्णादौ॥ सुवर्णरूप्यताम्राणिहरितालंमनःशिला। गैरिकाञ्जनकासीससीससलोहाः सहिङ्गुलाः। गन्धकोऽभ्रकमित्याद्या धातवोगिरिसम्भवाः॥*॥ नवधातवोयथा। हेमतारारनागाश्च ताम्ररङ्गेच तीक्ष्णकम्। कांस्यकं कान्तलोहस्य धातवो नव कीर्त्तिताः॥*॥ अष्टधातवोयथा। हिरण्यं रजतं कांस्यं ताम्रं सीसकमेवच। रङ्गमायसरैत्यञ्च धातवोष्टौप्रकीर्त्तिता इतिदानसागरः॥ अपिच। सुवर्णं रजतं ताम्रं लौहं रूप्यञ्च पारदम्। अकृञ्च सीसकञ्चैवषष्ठौदैवसम्भवा इतिवैद्यकम्॥*॥ सप्तधातवो यथा। स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेवच। सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः इतिभावप्रकाशः॥*॥ वल्लीपल्लिसशालिभ्यका श्वीशल्यनरामयान्। निवार्यदेहंदधति नृणांतद्वालवोमलाः॥*॥ सप्तोपधातवो यथा। माक्षिकंतुत्थकाभ्रे नीलाञ्जनशिलाऽलकाः। रसकश्चेतिविज्ञेयाएतेसप्तोपधातवः॥*॥ शरीरस्थसप्तधातुभवसप्तोपधातवो



यथा। स्तन्यं रजश्च नारीणां काले भवति गच्छति। शुद्धमांसभवःस्नेहो यःसा सङ्कीर्त्तितैवसा। स्वेदोदन्तास्तथाकेशास्तथैवौजश्चसप्तमम्। इतिधातुभवाज्ञेयाएतेसप्तोपधातवः॥ इतिमुग्धबोधः॥*॥ लोकेषु॥ वसुनि॥ धीयते सर्वंनिःक्षिप्यते सुस्थादावस्मिन्नितिव्युत्पत्त्या आत्मनि॥ दधाति शोभां धीयते वा। तुधा कृ०। सितनिगमिमसीतितुन्॥ शरीरदूषणाद्दोषा मलिनी करणान्मलाः। धारणाद्धातवस्तेस्तु वातपित्तकफास्त्रयः॥*॥ हरितालं हरेर्वीर्यं वञ्चीवीर्यं मनःशिला। पारदं शिववीर्यं स्याद्गन्धकं पार्वतीरजः॥

धातुकाशीशम्। न। } द्रव्यविशेषे।
धातुकासीसम्। न। } कासीसे॥

धातुघ्नम्। न। काञ्जिके॥

धातुद्रावकम्। न। टङ्कणे॥

धातुनाशनम्। न। काञ्जिके॥

धातुपः। पुं। शरीरस्थप्रथमधातौ। रसइतिख्याते॥

धातुपुष्पिका। स्त्री। धातृपुष्प्याम्। धाइफूल इतिभाषा॥

धातुपुष्पी। स्त्री। धातुपुष्पिकायाम्। धातक्याम्॥

धातुभृत्। पुं। पर्वते॥ त्रि। धातुपो

पके ॥

धातुमाक्षिकम् । न । माक्षिके । पीतके ॥

धातुमारिणी । स्त्री । सर्जिकायाम् ॥

धातुराजकम् । न । रेतसि ॥

धातुवल्लभम् । न । टङ्कणे ॥

धातुवादी । पुं । कारन्धमिनि । धातुवादरते ॥

धातुवैरी । पुं । गन्धके ॥ इति प्राचं० ॥

धातुशेखरम् । न । कासीसे ॥

धातूपलः । पु । कठिनिकायाम् ॥

धाता । पुं । अजयोनौ । ब्रह्मणि ॥ उपादानत्वात् सर्वस्य कर्म्मफलजातस्य विधिवत्तथा प्राणिभ्योविभक्तरि । पोषयितरि । कर्म्मफलविधातॄणां मध्ये विश्वेशमुख्योधाता सर्वकर्म्मफलदातेश्वरविभूतिः ॥ धातुर्गतिर्विचित्राच दुर्ज्ञेयाभुवनत्रये ॥ विष्णौ । श्रीपतौ ॥ अनन्तादिरूपेण विश्वं दधाति धारयति । दधाते तृच् ॥ भृगुमुनेः पुत्रे ॥ दशमेवत्सरे ॥ यथा । निष्पत्तिः सर्वशस्यानां मध्याधातरिकीर्त्तिता ।, इक्षुक्षीरगुडादीनां प्रचलत्त्वंवरानने ॥ पञ्चाशत्सप्तमेभेदे (॥ऽ।) ॥ त्रि । पालके ॥ धारणपोषणसामर्थ्ययुक्ते ॥ धारके ॥ दधाति । डुधाञ्० । तृच् ॥

धातृपुत्रः । पुं । सनत्कुमारे ॥ ब्रह्मणः सुतमात्रे ॥

धातृपुष्पिका । स्त्री । धातक्याम् ॥ धातृपुष्पमस्याः । शैषिकःकप् ॥

धातृपुष्पी । स्त्री । धातक्याम् ॥ धातृपुष्पमस्याः । पाक्षिकःकवभावः ॥

धात्रिका । स्त्री । आमलक्याम् ॥

धात्री । स्त्री । जनन्याम् ॥ मातरि ॥ आमलक्याम् ॥ वसुमत्याम् । भुवि ॥ उपमातरि ॥ धीयते । धेट्० । धःकर्म्मणिष्ट्रन् ॥ दधातिवा । डुधाञ्० । सर्वधातुभ्यःष्ट्रन् । षित्वान् ङीष् ॥

धात्रीपत्रम् । न । आमलकीदले ॥ तालीशपत्रे ॥

धात्रीपुत्रः । पुं । नटे ॥ उपमातुः सुते ॥ धात्र्याःपुत्रः ॥

धात्रीफलम् । न । आमलकीफले । आमला इतिभाषा ॥ धात्र्याःफलम् ॥ हरीतकीसमधात्रीफलं किन्तु विशेषतः । रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् ॥ हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः । कफंरूक्षकषायत्वात् फलंधात्र्यास्त्रिदोषजित् ॥ अङ्गारपाकमृदुयत्नसुपाचितानि सिन्धूत्थहिङ्गुमरिचादिसमन्वितानि । तप्तेघृतेपुनरपिप्रतिभर्जितानि धात्रीफलानि जनयन्ति हिजाठरा-

त्विम् ॥

धाचेयिका । स्त्री । धात्र्याम् । धाय इ ति भाषा ॥ यथा । पठेद्धाचेयिकावा क्यं प्राङ्मुखो वाप्युदङ्मुख इति ॥

धात्रेयी । स्त्री । धात्रेयिकायाम् ॥

धानम् । न । पोषणे ॥ निधाने ॥ धी- यते ऽस्मिन् । ल्युट् ॥

धानकम् । न । धन्याके ॥

धाना । स्त्री । अङ्कुरी इतिभाषाप्रसि द्धे भृष्टयवे ॥ धन्याके ॥ अभिनवोद्भि न्ने । अङ्कुरे ॥ चूर्णसक्तुषु ॥ धानाः । स्त्री । धाना भृष्टयवे स्त्रिय इतिब हुवचननिर्देशात् बहुवचनान्तोपि ॥ यथास्तुमिलुषाभृष्टाः ककुताधाना इतिस्त्रियाम् । धानाः स्यु र्दुर्जरा रू क्षा स्तृट्प्रदा गुरवश्च ताः ॥ तथाभेदः कफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः ॥ दधाति दधति वा । दुधाञ्० । धा पूर्वस्यसिप्रभोमः । टाप् ॥

धानाकाः । स्त्री । धानासु ॥ नित्यंबहु वचनान्तोयमितशब्दरत्नावली ॥

धानाचूर्णम् । न । भृष्टयवचूर्णे । सक्तुषु ॥

धानी । स्त्री । पीलुवृक्षे ॥ आधारे ॥ यथा । राजधानीततः साभूत् सर्वेषा द्वसुभुजामिति ॥ धीयते ऽस्याम् ॥ करणा ऽधिकरणयोश्चेतिल्युट् । ङीप् ॥



धानुष्कः । त्रि । धनुर्द्धरे । धन्विनि ॥ ध नुः प्रहरणं मस्य । तदस्येत्यधिकृत्य प्रहरणमिति ठक् । इसुसुक्तान्तात् कः ॥ यद्वा । धनुषाजीवति । वेत० ठक् ॥ तस्मात् तृतीयभवने ॥

धानुष्का । स्त्री । अपामार्गे ॥

धानुष्यः । पुं । वंशे ॥ इति राजनि० ॥

धानेयम् । न । } धन्याके । धनिका-
धानेयकम् । न । } इतिभाषा ॥

धान्या । स्त्री । एलायाम् । पृथ्वीकाया म् । एलावची इतिभाषा इतिशब्द चन्द्रिका ॥

धान्यम् । न । धन्याके ॥ परिमेये ॥ चतु स्तिलपरिमाणे ॥ पूर्णदारुकादे ॥ व्री हिशाल्यादिनीवारादौ ॥ धान इति भाषाप्रसिद्धे सतुषसण्डकादौ । भो गार्हे । अन्ने ॥ धान्यं त्रिविधम् आशु षष्टिकशालिभेदात् । तत्रप्रावृट्का लभवमाशुः । ग्रीष्मजं षष्टिकः । हैमन्तोद्भवं शालिः ॥ * ॥ धान्यं सर्वं नवं स्वादु गुरु श्लेष्मक रं स्मृतम् । तत्तुवर्षोषितं पथ्यं य तो लघुतरं हितम् ॥ वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति । न तु त्यजति वीर्यत्वं क्रमान्मुञ्चत्य तः परम् ॥ एतेषु यवगोधूमतिल माषा नवा हिताः । पुराणा

विरसा रूक्षा न तथागुणकारि-णः ॥ पुराणावर्षद्वयादुपरिस्थिताः । यवादयोनवाः स्वस्थानमतिस्थिताः । पथ्यात्रिनाल्पुराणास्थिताः । पुराणयवगोधूमक्षौद्रजाङ्गलमूल्यमुगि-तिवसन्ते वाग्भटेनोक्तत्वात् ॥ धाने मोषणे साधु । तत्रसाधुरितियत् ॥ यद्वा । दधाति । डुधाञ्० दधाते र्यन् नुट्चेति यत्नुटौ ॥

धान्यकम् । न । धान्याके ॥ इ०रानि०॥

धान्यकोष्ठकम् । न । धान्यरक्षार्थगृहे । गोला इतिभाषा ॥

धान्यचमसः । पुं । चिपिटके ॥

धान्यत्वक् । स्त्री । तुषे ॥ धान्यसात्वक् ॥

धान्यधेनुः । स्त्री । दानार्थे धान्यनिर्मितधेनौ ॥

धान्यपञ्चकम् । न । शालिध,न्यादिपञ्चसु ॥ यथा । शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिम्बिधान्यं क्षुद्रधान्यमित्युक्तंधान्यपञ्चकम् ॥ शालयोरक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यंमुद्गाद्यंशिम्बिधान्यकम् ॥ कङ्ग्वादि-क्षुद्रधान्यं स्यात्तृणधान्यञ्चतत्स्मृतमिति ॥ अतीसारेपाचनविशेषे ॥ यथा । धान्यशाकबिल्वाब्दनागरैः पाचितं जलम् । आममूलविनाशाय चनंनिष्फलसेवितमितिभावमिश्रः ॥

धान्यमायः । पुं । धान्यविक्रयिणि ॥

धान्यराजः । पुं । यवे ॥

धान्यवर्द्धनम् । न । वार्द्धुष्ये धान्यवृद्धौ ॥

धान्यवीजम् । न । धन्याके ॥

धान्यवीरः । पुं । माषे ॥

धान्यवृद्धिः । स्त्री । धान्यवर्द्धने । मेद्य मेसावृद्धान्यदेहि ततोमासानन्तरं वर्षानन्तरं वा सपादं सार्द्धं द्विगुणंवा । दद्या मीत्येवंरूपायां वृद्धौ ॥

धान्यशीर्षकम् । न । धान्यमञ्जर्याम् ॥

धान्याकम् । न । धन्याके । तत्तुणमुक्तंयथा । धान्याकं तुवरं स्निग्धं मवृष्यं मूत्रलं लघु । तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् ॥ ज्वरघ्नं रोचनं ग्राहि स्वादुपाके त्रिदोषनुत् । तृष्णादाहवमिश्वासकासकार्श्यं क्रिमिप्रणुत् ॥ आर्द्रन्तुतद्गुणं स्वादुविशेषात्पित्तनाशनम् ॥ धान्य,मवति । मकुटिलायाङ्गतौ । अण् ॥

धान्याम्लम् । न । व्रीहिमञ्जर्याम् ॥

धान्याचलः । पुं । दानार्थधान्यनिर्मितपर्वते ॥

धान्याभ्रम् । न । अभ्रकनारणोपयोगिवस्तुनि ॥ पादांशशालिसंयुक्तं मस्तं बद्धाय कम्बले । त्रिरात्रं स्थापये नीरे तत्क्लिन्नं मर्दयेत्करैः ॥ क

स्वधादृगालितं सूक्ष्मं वासुकारञ्चि तच्चयत् । तद्धान्याम्लमितिप्रोक्तं म भ्रमारणसिद्धये इतिभावप्रकाशः ॥

धान्याम्लम् । न । काञ्जिके ॥ धान्याम्लं शालिचूर्णोत्थकोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात् प्रीणनं लघुदीपनम् । अरुचौ वातरोगेषु सर्वेष्वास्थापनेहितम् ॥ धान्येष्वभि षुतमम्लम् । शाकपार्थिवादि ॥

धान्यारिः । पुं । मूषिके ॥

धान्योत्तमः । पुं । शालिधान्ये ॥

धामकः । पुं । माषकपरिमाणे ॥ इति वैद्यकपरिभाषा ॥

धाम । न । देहे ॥ गृहे ॥ रश्मौ ॥ स्थाने । आश्रये ॥ जन्मनि ॥ प्रभा वे ॥ त्विषि ॥ ज्योतिषि । स्वप्रका शे । स्वस्वरूपे ॥ दधाति धीयते वा । डुधाञ्० । मनिन् ॥

धामनिधिः । पुं । सूर्ये ॥ धामोनिधिः ॥

धामनी । स्त्री । धमन्याम् ॥

धामवान् । त्रि । तेजस्विनि ॥

धामार्गवः । पुं । अपामार्गे ॥ घोषके । तोरली इतिप्रसिद्धे शाके ॥ नेनुर्वा ख्ये । पीतघोषाख्येपि ॥ धामार्गः । धामार्गं वाति । वा० । आतोनुपसर्गे कः ॥ यद्वा । धामऋच्छति । ऋ० । अन्ये०पिच् । धामार्गवःसैवोत्र ।

गौरत्तद्धितलुकीति टच् ॥

धायः । त्रि । धारणकर्त्तरि ॥

धायाः । त्रि । धारणकर्त्तरि ॥ पोषणक र्त्तरि ॥ यथाविश्वस्य धायाइति ॥

धाय्यः । पुं । पुरोहिते ॥

धाय्या । स्त्री । वह्निसन्धुक्षणार्थायामृ चि । सामिधेन्याम् ॥ धीयते पुष्य ते ऽग्निरनया धीयते ऽनया समि दितिवा । पाय्यसान्नाय्यनिकाय्यधा य्या मानहविर्निवाससामिधेनीष्वि ति धाञोण्यत् युगागमश्च ॥

धारः । पुं । जलधरासारवर्षणे ॥ ग्रावा न्तरे ॥ ऋणे ॥ प्रान्ते ॥ गम्भीरे ॥

धारम् । न । दिव्यपानीयभेदे ॥ धा राभिः पतितं तोयं गृहीतं स्फीत वाससा । शिलायां वसुधायांवा धौ तायां पतितञ्चयत् ॥ सौवर्णे राज ते ताम्रे स्फाटिके काचनिर्मिते । भा जने मृन्मयेवापि स्थापितं धार मु च्यते ॥ धारं नीरं त्रिदोषघ्नमनि र्देश्यरसं लघु । सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥ पाचनं म तिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् । तृष्णां हरति तत्पथ्यं विशेषात् प्रा वृषिस्मृतम् ॥ * ॥ धाराजलस्यद्विवि धंगाङ्गसामुद्रभेदतः ॥ यदाश्वा दा श्विनेमासि सूर्यः स्वातीविशाखयोः

। तदाम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ अन्यदाश्वयुजे मासि दिनचयेषु यदाम्बुदैः । अभिवृष्ट मिदं तोयं सामुद्रमितिसंज्ञितम् ॥ * ॥ गाङ्गं जलं स्वादु सुशीतलञ्च रुचिप्रदं पित्तकफापहञ्च । निर्दोषमिष्टं लघु तच्च नित्यं गुणाधिकं व्योमनिरश्चीतमाहुः ॥ सामुद्रसलिलं शीतं कफवातकरं गुरु । चिपाचा मास्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ यस्तु तं भुवि तत्तोयं गाङ्गं सामुद्रमेव वा । स्वस्वाश्रयवशाद् गच्छेदन्यदन्यद्रसादिकम् ॥ इति राजनिर्घण्टः ॥

धारकः । पुं । कलसे ॥ चि । धारणकर्त्तरि ॥

धारणः । पुं । सम्भते ॥ नीरे ॥ स्वर्लोके ॥ परमेष्ठिनि ॥ धृतौ ॥ न । विधारणे । धरणा इति भाषा ॥ धारयति । धृञ्० । नन्द्यादित्वाल्ल्युः ॥

धारणा । स्त्री । योगाङ्गे ॥ देशबन्धश्चित्तस्य धारणा ॥ १ ॥ देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धारणेत्युच्यते । अयमर्थः । मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रि-



यग्रामेण निर्बाधे प्रदेशे ऋजुकायेन जितद्वन्द्वेन योगिना नासाग्रादौ समभ्यासस्य समाधेरभ्यासार्थं चेतसः स्थिरीकरणं कर्त्तव्यमिति ॥ * ॥ यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः ॥ तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः । कुर्व्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणेति ॥ वि० पु० ॥ ध्येयेचित्तस्य स्थिरबन्धने ॥ अद्वितीयवस्तुन्यन्तरिन्द्रियस्थापनं धारणा ॥ यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् । मनसो धारणञ्चैव धारणा सा परामता ॥ मर्य्यादायाम् । सख्यायाम् । न्याय्यपथस्थितौ ॥ बुद्धौ ॥ निश्चये ॥ धारयति धर्म्मम् । धृञ् । नं० ल्युः ॥ युच्च ॥

धारणी । स्त्री । नाडिकायाम् ॥ बुद्धोक्तमन्त्रविशेषे ॥ श्रेण्याम् । पङ्क्तौ ॥

धारणीयः । त्रि । धार्य्यः । धारयितुं शक्यः ॥ धृञ्ो ऽनीयर् ॥

धारणीया । स्त्री । धरणीकन्दे ॥

धारयित्री । स्त्री । धरित्र्याम् ॥ त्रि । धारयितरि ॥

धारा । स्त्री । सैन्याग्रिमस्कन्धे ॥ घटादिच्छिद्रे । सन्ततौ ॥ द्रवद्रव्यस्य प्रपाते ॥ खड्गादेर्निशितमुखे ॥ इति

मे० ॥ उत्कर्षे ॥ इतिहेमचन्द्रः ॥ य श्रसि ॥ अतिवृष्टौ ॥ समूहे ॥ घना सारवर्षणे ॥ सदृशे ॥ इतिविश्वः ॥ पुरीविशेषे ॥ तुरङ्गगतिपञ्चके- ॥ अश्वानाम्तुगति धारा विभिन्ना सा च पञ्चधा । आस्कन्दितं धौरितकं रेचितं वल्गितंप्लुतम् ॥ धौरितंवल्गितं धाराप्लुतमुत्तेजितंक्रमात् । उत्तेजितमश्वेति पञ्चमिव्ययेत् तुरंगमतीः ॥ उत्तेजितमितिवेगाध्यो मनुष्योतिन पश्यति । धौरितंगतिमात्रे यथोजितं वल्गितंपुरः ॥ अग्रकायः समुन्नासाकुञ्चिताखंमतत्पिकम् । उत्तेजितं मध्यवेगं योजनंस्वयश्लाघा ॥ पूर्वापरोन्नमेनतः क्रमादुत्तारणं प्लुतम् ॥ अश्वशास्त्रेतु संख्यान्तरेणोक्ताः । गतिः पुत्राचतुष्का चतुरन्मध्यनवापरा । पूर्वं वेगातथाचान्या पञ्च धाराः प्रकीर्तिताः ॥ एकैका त्रिविधा धारा त्वमिश्राविधीमता । लघ्वी मध्या तथादीर्घाचत्वेतायोजयेत् क्रमादिति ॥ धार्यन्ते अश्वा अश्वा ऽनयावा । धृञ्० । यत्नन्तः । भि०क्ङ् । काहृ श्रोङ्गीतितिगुणेनिपातनाद्दीर्घोवा ॥

धाराकदम्बः । पुं । केलिकदम्ब इति गौडभाषा प्रसिद्धे कदम्बविशेषे । प्रावृषेण्ये । मेघाभे ॥

धाराङ्कुरः । पुं । नाशीरे ॥ शीकरे ॥ घनोपले ॥ इति मेदिनी ॥

धाराङ्गः । पुं । असौ । खड्गे ॥ तीर्थे ॥ इति हेमचन्द्रः ॥

धाराटः । पुं । चातके ॥ अश्वे ॥ मेघे ॥ मत्तमातङ्गे । मत्तगजे ॥ इति शब्दरत्नावली ॥

धाराधरः । पुं । जलधरे । मेघे ॥ धाराणां धरः ॥ खड्गे ॥

धारापूपः । पुं । अपूपविशेषे ॥ घतमिश्रा कनिक्का या दुग्धेनालोडितासुसा । धाराख्या पूपकं स्वाज्ये पक्वं खण्डेन योजयेत् ॥ आपूपकं सुमधुरं हृद्यं पित्तहरंपरम् । सुस्निग्धं रोचनं हृद्यमत्यर्थं वातनाशनम् ॥

धाराफलः । पुं । मदनद्रुमे ॥

धारावनिः । पुं । वायौ ॥ इतित्रिकाण्डशेषः ॥

धाराविषः । पुं । खड्गे ॥ इतित्रिकाण्डशेषः ॥

धारासम्पातः । पुं । आसारे । महावृष्टौ ॥ धाराणां सम्पातः सम्भूयपतनम् । पतेर्भावे घञ् ॥

धारास्नुही । स्त्री । त्रिधारस्नुह्याम् ॥

धारिणी । स्त्री । धरायाम् ॥ शाल्मलिद्रुमे ॥

धारितः । त्रि । धृते ॥

धारी । पुं । पीलुवृक्षे ॥ त्रि । धारविशिष्टे ॥

धारुः । त्रि । पानकर्त्तरि ॥ धयति तच्छीलः । धेट्० । दाधेट् सिशदसदोरुः ॥

धारेश्वरी । स्त्री । देवीविशेषे ॥

धारोष्णम् । न । दोहनेनोष्णधारया सद्यः पतिते दुग्धे ॥ धारोष्णन्तयस्तं पयोऽमृतवरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्द्धनमतिस्वादुत्रिदोषापहमितिराजनिर्घण्टः ॥

धार्त्तः । त्रि । धूर्त्ते । द्यूतकृति ॥ धावनम् । धाव्० । सं० क्विप् । बाहुलकात् वलोपः । धा धावने आर्त्तिः । धार्त्तिरस्यास्ति । ज्यो० अण् ॥ यद्वा । धाधावनेन आर्त्तः ॥

धार्त्तराष्ट्रः । पुं । असिताङ्गकृष्णसितच्छदहंसविशेषे । कृष्णचञ्चुचरणे सपक्षसितहंसे । गेंडिहाँस इतिगौडभाषा ॥ सर्पविशेषे । अष्टौ ॥ कौरवे । धृतराष्ट्रापत्येषु दुर्योधनादिषु ॥ धृतराष्ट्रसम्बन्धिभीष्मद्रोणादौ ॥ धृतराष्ट्रे भवः । तत्रभव इत्यण् । तस्येदमितिवा ॥

धार्त्तराष्ट्रपदी । स्त्री । हंसपद्याम् ॥

धार्त्ता । पु । धारके । धारणकर्त्तरि ॥ आगमशास्त्रस्यानित्यत्वात् आर्द्धधातुकस्येड्वलादेरितिनेडागमः ॥

धार्म्मिकः । त्रि । द्वयोः । धर्मशीले ॥ धर्मयुक्ते ॥ धर्ममधीते वेदवा । धर्मं चरतिवा । उ० ठक् । चरति रिह आसेवायाम् तत्त्वनुष्ठानमात्रे । से न दैववशाद्धर्मप्रवृत्तोऽपिदुष्टत्वाद्धार्मिक इतिनोच्यते ॥

धार्य्यः । त्रि । धारणीये ॥

धार्ष्ट्यम् । न । सामर्थ्ये ॥ प्रागल्भ्ये ॥ धृष्टस्यकर्म भावोवा । ष्यञ् ॥

धावकः । पुं । रजके ॥ कृतीनुभिन्नाभेदौ ॥ त्रि । धावनकर्त्तरि । शीघ्रगामिनि । धाउविया इतिभाषा ॥ धावति । धाव्० । ण्वुल् ॥

धावन् । त्रि । द्रुतंगच्छति ॥ धाव्० । शतृ ॥

धावनम् । न । गमने ॥ शुद्धौ ॥ धावुगतिशुद्ध्योः । ल्युट् ॥

धावनिः । स्त्री । पृश्निपर्ण्याम् । धावति । धावुगतिशुद्ध्योः । बाहुलकादनिः ॥ कण्टकार्य्याम् ॥

धावनिका । स्त्री । कण्टकारिकायाम् ॥

धावनी । स्त्री । पृश्निपर्ण्याम् ॥ कण्टकार्य्याम् ॥ कृदिकारादिति ङीष् ॥ धातक्याम् ॥

धावितः । त्रि । गते ॥ मार्जिते ॥ धोया इतिभाषा ॥

धिक् । अ । अपकारशब्दैर्भयोत्पादने । निर्भर्त्सने ॥ निन्दायाम् ॥ यथा । धिक् भस्मरचितभालं धिक्ग्रामम-शिवालयम् । धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयामिति ॥ धक्कयति । धक्कनाशने । बाहुलकाट्डिकप्रत्ययः । इत्यमरः ॥

धिक्कारः । पुं । निकारे । तिरस्कारे ॥ धिक्करणम् । कृञ० । घञ् ॥

धिक्कृतः । त्रि । अपध्वस्ते ॥ निन्दिते ॥ धिगितिकृतः । धिगकारि वा । क्तः ॥

धिक्क्रिया । स्त्री । निन्दायाम् ॥ इति हेमचन्द्रः ॥

धिग्वणः । पुं । शूद्रेण वैश्यायां सुत्पन्ना आयोगवी तस्यां ब्राह्मणादुत्पन्ने सङ्कीर्णजातिविशेषे ॥ तस्य चर्मकार्यम् ॥

धिषणाम्पतिः । पुं । मञ्जुघोषे । पूर्वजिनविशेषे ॥ इतिचि० । आत्मनि ॥

धिषणः । पुं । विद्याचार्ये । बृहस्पतौ ॥ प्रशस्ता धिषणा अस्य ॥ धृष्णोति । ञिधृषा० । धृषेर्धिष् च संज्ञायामिति क्युः ॥

धिषणा । स्त्री । बुद्धौ । मनीषायम् ॥ धृष्णुवन्त्यनया । ञिधृषा० । क्युः । टाप् ॥

धिष्ण्यः । पुं । अग्निविशेषे ॥ शुक्रे ॥ न । स्थाने ॥ अग्निसामान्ये ॥ सद्मनि ॥ शक्तौ ॥ ऋक्षे । उडुनि ॥ धिष्यते धृष्णोति वा । धिषशब्दे ञिधृषा० वा । शासिवसीदिपषीति साधु । धृषेर्ऋकारस्येकारो रपरत्वाभावो ण्यप्रत्ययश्चतेनैव निपातनात् ॥

धीः । स्त्री । प्रज्ञायाम् । मतौ ॥ आत्माहितत्वध्याने ॥ ज्ञानभेदे ॥ ध्यायत्यनया । ध्यै० । ध्यायतेःसम्प्रसारणञ्चेतिक्विप् । हलश्चेतिदीर्घः ॥

धीगुणः । पुं । शुश्रूषादिषु ॥ तेयथा । शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इति ॥ धियो गुणाः ॥

धीतः । त्रि । पीते । धीया इतिभाषा ॥

धीतिः । स्त्री । पिपासायाम् ॥ इतिहेमचन्द्रः ॥

धीदा । स्त्री । कन्यायाम् ॥ बुद्धौ । मनीषायाम् ॥ धियं ददाति । डुदाञ्० । कः । टाप् ॥

धीन्द्रियम् । न । ज्ञानेन्द्रियेषु । मनआदिषु समस्तेषु व्यस्तेषु च ॥ मनःकर्णौ तथा नेत्रे रसना च त्वचा सह । नासिकेचेति षट्तानि धीन्द्रियाणि प्रचक्षते ॥ धीसाधकमिन्द्रियम् ॥

धीमान् । पुं । बृहस्पतौ ॥ त्रि । पण्डि

ते ॥ धीर्विद्यते यस्य । मतुप् ॥ ऊशापोष्यकुशले ॥
धीमती ।.स्त्री । बुद्धिमत्याम् । प्रशस्तबुद्धियुक्तायाम् ॥ धीरस्त्यस्याः । मतुप् । उगित्वान्ङीप् ॥
धीरः । पुं । ऋषभौषधे ॥ बलिराजे ॥ धियमीरयतीतिव्युत्पत्त्या विद्याभासद्वारा धीसाहाय्यधायेन धीप्रेरके । धीसाक्षिणि ॥ न । कुङ्कुमे ॥ त्रि । धैर्यान्विते ॥ स्वैरे ॥ पण्डिते ॥ मन्दे ॥ विनीते ॥ बलयुते ॥ विवेकिनि ॥ धियंराति । रा० । आतोनुपेतिकः ॥ धियमीरयति । ईर० ॥ अण् ॥ दधाति धीयते वा । डुधाञ्० । सुसूधाग्रधिभ्यः क्रन् । सुधा स्येतीत्वम् ॥ दधात्यापत्सुचित्तमिति वा ॥ स्त्रीसन्निकर्षात् धीरोपि विक्रियां भजते खलु ॥ * ॥ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि तएव धीराः ॥ * ॥ गतस्वार्थमिमं लोकं विमुक्तो मुक्तबन्धनः । अविज्ञातगतिर्जह्यात् यद्वैधीरउदाहृतः ॥ धीरोदात्ते वक्ष्यमाणे ॥
धीरत्वम् । न । धीरतायाम् ॥ यथा । प्रागल्भ्यौदार्यमाधुर्यशोभाधीरत्वकान्तयः । दीप्तियायत्नजाभावाव हेत्व..स्त्रियोऽङ्गजाः ॥ इति हेमचन्द्रः ॥
धीरपत्री । स्त्री । धरणीकन्दे ॥
धीरस्कन्धः । पुं । महिषे ॥ इति हेमचन्द्रः ॥
धीरः । पुं । ज्ञानदेगुरौ ॥ धियंराति ददाति । रा० । विप्चेतिक्विप् ॥
धीरा । स्त्री । नायिकाप्रभेदे ॥ पण्डितायाम् ॥ काकोल्याम् ॥ महाज्योतिष्मत्याम् ॥ स्थिरायांचित्तौक्तौ ॥ अवशतुल्यायाम् ॥
धीराधीरा । स्त्री । नायिकाप्रभेदे ॥
धीलटिः ॥ स्त्री । दुहितायाम् ॥ इति शब्दरत्नावली ॥
धावा । पुं । कर्मकरे । धीवरे ॥ ध्यायति । ध्यैचिन्तायाम् । ध्याप्योः सम्प्रसारणञ्चेतिवनिप् ॥
धीवरः । पुं । दासजातौ । कैवर्त्ते ॥ दधातिमत्स्यान् । डुधाञ्० । छित्वरछत्वरधीवरेत्यादिना ष्वरजन्तोनिपातितः ॥
धीवरी । स्त्री । धीवरभार्यायाम् ॥ धीवरशब्दात्स्त्रियांषित्वान्ङीप् । दधातेःक्वनिपि वनोरचेति ङीपरौ ॥
धीव्याप्यता । स्त्री । बुद्धिव्याप्यत्वे ॥
धीशक्तिः । स्त्री । नियतकर्मे । बुद्धिसामर्थ्ये । शुश्रूषादष्टविधधीगुणेषु ॥ धियःशक्तिः ॥
धीसखः । पुं । अमात्ये । मन्त्रिणि ॥ इ॰

तिहेमचन्द्रः ॥ धियःसखा । टच् ॥

धीसचिवः । पुं । धीसखे ॥ इत्यमरः ॥ धिया धियां वा सचिवः सहायः । धी प्रधानःसचिवोवा ॥

धुः । स्त्री । कम्पने ॥ इत्येकाक्षरकोषः ॥

धुतः । त्रि । त्यक्ते ॥ कम्पिते । विधुते ॥ धुयतेस्म । धुञ् कम्पने । क्तः ॥

धुनानः । त्रि । कम्पयति ॥ धुनोतेः कर्त्तरि शानच् ॥

धुनिः । स्त्री । नदीमात्रे ॥

धुनी । स्त्री । नदीमात्रे ॥ धुनोति वेतसादीन् । धुञ्० । किप् । पृषोदरादित्वात् नक् । बाहुल्यात् ङीप् ॥

धुनीनाथः । पुं । समुद्रे ॥ धुनीनां-सरितांनाथः ॥

धुन्धुमारः । पुं । शक्रगोपे ॥ गृहधूमे ॥ पदार्थिके ॥ कुवलयाश्वे । राज्ञो बृहदश्वसुपुत्रे ॥

धुन्धुरी । स्त्री । वाद्यभेदे ॥

धूः । स्त्री । भारे ॥ चिन्तायाम् ॥ रथाग्रभागे । यानमुखे ॥ धूर्वति । धुर्वी हिंसायाम् । भ्राजभासेति क्विप् । र्वोरितिदीर्घः ॥

धुरन्धरः । पुं । धवद्रुमे ॥ त्रि । धुर्वहे । धुर्ये । भारवोढरि इत्यादौ ॥ धुरंधारयति । संज्ञायां भृतॄवृजिधारीति खच् । इति स्वामी ॥ वाचंयमपुरन्द



रौ चेति चकारस्यानुक्तसमुच्चयार्थत्वात्सः इति नव्याः । खचि ह्रस्वः । अरुर्द्विषदित्तिमुम् ॥

धुरा । स्त्री । भारे ॥

धुरीणः । त्रि । श्रेष्ठे ॥ धुर्ये । धौरेये ॥ धुरंवहति । खः सर्वधुरादित्यत्र ख इति योगविभागात्खः ॥

धुरीयः । पुं । अनडुहि ॥ इति रा० नि० ॥

धुर्य्यः । त्रि । श्रेष्ठे ॥ भारवोढरि । धौरेये ॥ कार्यनिर्वाहके ॥ धुरं वहति । धुरोयड्ढकावितियत् ॥ पुं । अनडुहि ॥ ऋषभौषधौ ॥

धुर्वहः । त्रि । भारवोढरि वृषे । धुर्ये ॥ वहतीति वहः । अच् । धुरोवहः ॥

धुवका । स्त्री । ध्रुवकायाम् । धुवा इति गौड भाषा ॥ धूञ्० । कः । ततोवाताद्वेकः । क्षिपकादित्वान्नेत्वम् ॥

धुवनः । पुं । वह्नौ ॥ धुनोति धुनाति वा । धुञ्० धूञ्० वा । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

धुवित्रम् । न । यज्ञे. सन्धुक्षणाय मृगत्वचारचिते याज्ञिकानां व्यजने ॥ धुवित्रंतालवृन्तं स्यादुत्क्षेपव्यजनञ्चतत् ॥ धूयते ऽनेन । धूविधूनने । अर्त्तिलूधूसू इति इत्रः । कुटादित्वेन ङित्त्वाद्गुणाभावादुवङ् ॥

धुस्तुरः । पुं । धुस्तूरे ॥

धुस्तूरः । पुं । धतूरा इति प्रसिद्धे क्षुपे । उन्मत्ते । कनककाह्वये । धूस्तूरे ॥

धूः । स्त्री । धूनने ॥ इति मेदिनी ॥

धूकः । पुं । पवने । वायौ ॥ धुनोतीति धुनाति वा । धुञ् ० धूञ् वा । अजियुधूञ्भ्यो दीर्घश्चेति कन् ॥

धूतः । त्रि । त्यक्ते ॥ कम्पिते ॥ भर्त्सिते ॥ तर्किते ॥ धूयते स्म । धूञ् विधूनने । धूञ् ० वा । क्तः ॥

धूनकः । पुं । यक्षधूपे । राले । वह्निवल्लभे ॥ इति त्रिकाण्डशेषः ॥

धूननम् । क्ली । कम्पने । कंपाना इति भाषा ॥ धूञोऽच्छन्ताल्ल्युट् । धूञ्प्रीञोर्नुग्वक्तव्य इति नुक् ॥

धूपः । पुं । गुग्गुल्वादिगन्धद्रव्यविशेषोत्थधूमे तद्विशेषायाञ्च । गन्धविशेषिकायाम् ॥ स च षडङ्गदशाङ्गादिभेदभिन्नोऽनेकप्रकारः ॥ विषघ्नधूपो यथा । सक्तुः सर्ज्जरसोपेतः सर्षपा एलवालुकैः । सुवर्णातस्करतरोः कुसुमैर्त्तुन्नवत्तु ॥ धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् । न तत्र कीटा न विषं दर्दुराः सरीसृपाः ॥ न कृत्या कर्मणास्तत्र धूपोऽयं यत्र दह्यते ॥ * ॥ सर्पनिर्मोचनधूपो यथा । कार्पासास्थिभुजङ्गस्य तथा निर्मोचनं भवेत् । सर्पनिर्मोचनो धूपः प्रशस्तः सततं गृहे ॥ इति मत्० पु० ॥ अष्टाङ्गधूपो यथा । गुग्गुल्वगुरुकं तेजपत्रं सर्ज्जरसम्भवम् । कर्पूरं वालकं कुष्ठं मूतनं कुङ्कुमं तथा ॥ अष्टाङ्गः कथितो धूपो गोविन्दप्रीतिदो मत इति ॥ * ॥ पञ्चाङ्गो यथा । चन्दनं कुङ्कुमं नूत्नं कर्पूरो गुग्गुलोऽगुरुः । धूपोऽयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृत इति ॥ * ॥ अदत्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति । कूपो जायते भूमौ यातुधानो न संशयः इति भूमिप्रतिवराहवाक्यम् ॥ * ॥ रोगनाशको धूपो यथा । कूर्ममत्स्याश्रुमहिषगोमृगालाश्ववानराः । बिडालबर्हिकाकाश्च वराहोलूककुक्कुटाः ॥ एषां पञ्चाशविषाणं मांसं वा रोमभोजितम् । धूपं दद्याज्ज्वरार्त्ताय उन्मत्तेभ्यश्च शान्तये ॥ एतान्येव स्थानानि धूपितानि महेश्वर । निघ्नन्ति रोगजातानि नृपसिद्धाथनिर्घेति गरुडे १९९ अध्यायः ॥

धूपनः । पुं । आवर्त्तचस्य निर्यासे । श्रीवेष्टे । सर्ज्जरसे । राल इति भा ॥ क्ली । धूपे ॥

धूपवृक्षः । पुं । सरलद्रुमे ॥

धूपागुरु । क्ली । दाहागुरुणि ॥

धूपाङ्गः । पुं । श्रीवेष्टे । सरलरसे ॥

धूपायितः । त्रि । अश्वादिनाक्रान्ते।सन्तप्ते ॥ इत्यधूपशब्दो ॥ धूप्यतेस्म । धूपसन्तापे । आयादय इतिवाआयः । क्तः । अकर्मकत्वात् कर्त्तरि-वा क्तः ॥

धूपार्हम् । न । कृष्णागुरुणि ॥ त्रि । धूपयोग्ये ॥

धूपितः । त्रि । इत्यधूपे ॥ सन्तापिते । अध्वादिनाक्रान्ते ॥ धूप्यतेस्म । धूप० । क्तः । इट् । अकर्मकत्वात् कर्त्तरिवा क्तः ॥

धूमः । पुं । आर्द्रेन्धनप्रभवे । मेघाख्यनयोर्णनके । अग्निध्वजे । अभ्रे । धूवाँ इतिभाषा ॥ सद्जभजिनवक्षभावभाजां भवति भवः प्रभवात्मनाशहेतुः-। जलधरपदवी मवाप्य धूमोज्वलनविनाश मनु प्रयाति नाशमिति श्रीकृष्णमिश्रः ॥ धूनोति । धूञ्० । इषियुधीतिमक् ॥

धूमकेतनः । पुं । केतुग्रहे ॥ कृताशे ॥

धूमकेतुः । पुं । उत्पातविशेषे ॥ वह्नौ ॥ ग्रहप्रभेदे ॥ धूमः केतुश्चिह्नमस्य ॥

धूमगन्धिकम् । न । रोहिषतृणे ॥

धूमजाङ्गजम् । न । नवक्षारे ॥

धूमध्वजः । पुं । अग्नौ ॥

धूमप्रभा । स्त्री । धूमान्धकारनरके ॥

धूममहिषी । स्त्री । कुज्झटिकायाम् ॥

धूमयोनिः । पुं । मेघे ॥ धूमो योनिरस्य । उक्तञ्चाभार्या धूमकार्यत्वं मेघराशिकैः । यतधूमोद्भवत्वं दिजामाच्छितंसदा । दावाग्निधूमसम्भूतमभ्रंवनहितं स्मृतम् ॥ मृतधूमोद्भवंत्वभ्रमशुभायभविष्यति । अभिचाराग्नि धूमोत्थंभूतनाशायवैद्विजाः ॥ इति ॥ मत्स्ये ॥

धूमलः । पुं । कृष्णलोहितवर्णे ॥ त्रि । तद्विशिष्टे ॥ धूमंलाति । ला० । कः ॥

धूमसी । स्त्री । धुवाँस इतिप्रसिद्धे माषाद्यचूर्णे ॥ यथा । माषाणां द्वाज य कोषे स्थापिता स्यक्तकञ्चुकाः । आतपेशोषितायन्त्रे पिष्टा सा धूमसीस्मृता ॥ इतिभावप्रकाशः ॥

धूमाङ्कः । पुं । अर्कनिष्कासनोपयोगिन्यग्निविशेषे ॥ विष्णुलो यो धूमशिखो धूमाङ्कः स उदाहृतः ॥

धूमाभः । त्रि । धूम्रवर्णे ॥

धूमावती । स्त्री । दशमहाविद्यान्तर्गत विद्याविशेषे ॥ तीर्थविशेषे ॥

धूमिका । स्त्री । कुज्झटिकायाम् ॥

धूमितः । त्रि । सञ्जातधूमे ॥

धूमोत्थम् । न । नवक्षारे ॥

धूमोर्णा । स्त्री । यमपत्न्याम् ॥ इति त्रिकाण्डशेषः ॥

धूमोर्णापतिः । पुं । यमे ॥ इतिहारा॰

बली ॥

धूम्या । स्त्री । धूमसमूहे ॥ धूमानां समूहः । पाशादिभ्यो यः ॥

धूम्याटः । पुं । पक्षिविशेषे । कलिङ्गे । भृङ्गे । फिङ्गा इति गौडभाषा ॥ धूम्या इव अटति । अट० । अच् ॥

धूम्रः । पुं । कृष्णरक्तमिश्रितवर्णे । धूमले । खरलोमनिभवर्णे ॥ तुरुष्के । सिह्लके ॥ त्रि । तद्वति ॥ धूमं राति । रा० । कः । पृषोदरादिः ॥

धूम्रकः । पुं । उष्ट्रे ॥

धूम्रकेशः । पुं । असुरविशेषे

धूम्रधीः । त्रि । मलिनबुद्धौ ॥ धूम्राधीर्यस्य ॥

धूम्रपत्रा । स्त्री । क्षुपविशेषे । धूम्राच्छायाम् । स्वयम्भुवायाम् ॥

धूम्रमूलिका । स्त्री । मूर्वीतृणे ॥

धूम्रलोचनः । पुं । शुम्भासुरस्य सेनापतौ ॥ कपोते ॥

धूम्रवर्णः । पुं । तुरुष्के । सिह्लके ॥ श्यामरक्तमिश्रितवर्णे । धूमले ॥ त्रि । तद्वर्णविशिष्टे ॥

धूम्रवर्णा । स्त्री । वह्नेर्जिह्वाविशेषे ॥ धूम्रो वर्णोऽस्याः ॥

धूम्रा । स्त्री । शशाण्डुल्याम् ॥

धूम्रिका । स्त्री । शिंशपावृक्षे ॥

धूर्ज्जटिः । पुं । शिवे । गङ्गाधरे ॥ धूर्भारभूता जटिर्यस्य ॥ यद्वा । जटति । जट० । सर्वधातुभ्य इन् । धूर्गङ्गा जटिष्वस्यति ॥ धुरस्त्रैलोक्यचिन्तायाः जटिः सङ्घातोऽस्य वा ॥

धूर्त्तः । पुं । धुस्तूरे । उन्मत्ते ॥ चौरके ॥ न । खण्डलवणे ॥ लौहकिट्टे ॥ त्रि । विटे ॥ वञ्चके । मायिनि ॥ यथा । स्वर्णकारः स्वर्णवणिक् कायस्थ सूत्र[illegible]र । नरेषु मध्ये धूर्त्ताः कृपाहीना महीतले ॥ हृदयं क्षुरधाराभं तेषां च नास्ति सा[illegible]रम् । प्रतेषु सज्जनः कोऽपि कायस्थो नेत[illegible]षतो ॥ बुद्धिः शिवयुक्तिश्च यावत्[illegible]धिमसानसः । नोविश्वसेत् तेषु तात स्व[illegible]नकस्याच हेतवे ॥ इति ब्रह्मवैवर्त्ते श्री[illegible]जन्मखण्डे ऽध्यायः ॥ धूर्त्तकृति ॥ धूर्वति । धुर्वी० । हसिमृग्रिणितिन[illegible]राल्लोपः । इति चेति दीर्घः ॥ धूर्व्वतेऽस्म । कर्म्मणि क्तो वा ॥ धूर्वति । मतिबुद्धिपूजार्थेभ्यश्चेति चकारात् कर्त्तरि क्तः ॥ यद्वा । धूर्वनम् । भावे क्तः ॥ तदस्यास्तीत्यर्श आद्यच् ॥

धूर्त्तकः । पुं । धूर्त्ते ॥ शृगाले ॥

धूर्त्तकृत् । पुं । धुस्तूरे ॥

धूर्त्तजन्तुः । पुं । मानुषे ॥ इति शब्दचन्द्रिका ॥

धूर्त्तमानुषा । स्त्री । रास्नायाम् ॥ इ० शब्द ॥

धूर्वहः । त्रि । धुरन्धरे । भारवोढरि ॥

धूर्वी । स्त्री । रथाग्रभागे । यानमुखे ॥

धूलकम् । क्ली । विषे ॥ इति शब्दचन्द्रिका ॥

धूलिः । स्त्री । रजसि । रेणौ । पांशौ । धूल इति भाषा ॥ धुवति धूयते वा । धू विधूनने । बाहुलकात् लिः ॥ धवनम् । धूञ्० । सं० क्विप् । धुवा लीयते । इन्‌कृष्यादिभ्यः ॥ संख्याविशेषे ॥

धूलिका । स्त्री । कुज्झटिकायाम् ॥

धूलिकेदारः । पुं । क्षेत्रे । वप्रे ॥ इति त्रिकाण्डशेषः ॥

धूलिगुच्छः । पुं । } फल्गुचूर्णे ।
धूलिगुच्छकः । पुं । } पटवासके ॥
इति त्रिकाण्डशेषः ॥

धूलिध्वजः । पुं । पवने ॥ इति त्रिकाण्डशेषः ॥

धूलिपुष्पिका । स्त्री । केतक्याम् ॥

धूली । स्त्री । धूलिः । पांशौ ॥ ङीप् ॥

धूलीकदम्बः । पुं । तिनिशे ॥ नीपे ॥ वरुणपादपे ॥

धूलीपटलः । पुं । उड्डीयमानधूलीसमूहे ॥

धूसरः । पुं । गर्दभे । खरे ॥ उष्ट्रे ॥ कपोते ॥ तैलकारे ॥ ईषत्पाण्डुरवर्णे । शुक्लपीतमिश्रितवर्णे ॥ कृष्णश्वेतवर्णे ॥ त्रि । तद्वर्णविशिष्टे ॥ धुनाति । धूञ्० । कृधूमदिभ्यः कित् इति सरः ॥

धूसरच्छदा । स्त्री । श्वेतवुह्नायाम् ॥

धूसरपत्रिका । स्त्री । हस्तिशुण्डीक्षुपे ॥

धूसरा । स्त्री । पाण्डुफलीवृक्षे ॥

धूसरी । स्त्री । किन्नरीभेदे ॥

धूस्तुरः । पुं । धूस्तूरे । कितवे । धुतुरा इति भाषा ॥ धूसयति । धूस कान्तिकरणे । क्विप् । तुरति । तुर त्वरणे । इगुपधज्ञाप्रीकिरः कः । धूसाचासौ तुरश्च ॥

धूस्तूरः । पुं । उन्मत्तवृक्षे । धत्तूरे । कनकाह्वये ॥ धूसयति । धूस० । क्विप् । तूर्यति । तूरी गतित्वरणहिंसयोः । इगुपधत्वात् कः । धूस्चासौ तूरश्च ॥ धूस्तूर धूर्त तवखेन्दुनिवासयोग्यस्थाने पिशाचपतिना विनिवेशितोऽसि । किन्त्वेष वाक्षि विकसन्ति ततः प्रयाति किं वाथि वक्ष्यति किं इव स्रवन्ति ॥

धृतः । त्रि । गृहीते । कृतधारणे । धरा इति भाषा ॥ अवलम्बिते । धृञ्० । क्तः ॥

धृतकः । त्रि । भरण्यायत्तजीवने ॥

धृतराष्ट्रः । पुं । सुराज्ञि ॥ नागभेदे ॥ दुर्योधनस्य पितरि ॥ पक्षिविशेषे ॥ धृतः राष्ट्रो येन ॥

धृतराष्ट्री । स्त्री । हंसपत्न्याम् ॥

धृतात्मा । पुं । नारायणे ॥ एकरूपेण ज
न्मादिषड्भावविकाररहिततया धृतः
आत्मा येन । यद्वा । धृङ् अवस्थाने
। गत्यर्थाकर्म्मकेत्यादिना कर्त्तरि क्तः
। धृतः एकरूपेणावस्थितः आत्मा स्व
रूपमस्येति ॥ त्रि । परमात्मनिनि-
हितचित्ते ॥ यथा । किं दुःसहन्तु
साधूनां विदुषां किमपेक्षितम् । कि
मकार्य्यं कदर्य्याणां दुस्त्यजं किं धृता
त्मनामिति ॥

धृतिः । पुं । अध्वरे । इष्टौ ॥ स्त्री । तुष्टौ ।
सन्तोषे ॥ योगविशेषे ॥ तद्योगजातफ
लं यथा । धृतियोगसमुत्पन्नः प्राज्ञःस
न्तुष्टमानसः । वावदूकः सभायाञ्च
श्रीशो विनयान्वित इति ॥ सुखे ॥ धा
रणायाम् ॥ धैर्य्ये । अखिन्नताया-
म् । अवसादेऽपि शरीरेन्द्रियसङ्घा-
ते स्तम्भनधर्म्मे ॥ अवसन्नानां देहे
न्द्रियाणां अवष्टम्भहेतुभूतप्रयत्ने ।
देहेन्द्रियेषु अवसादं प्राप्तेषु तदुत्त
म्भके प्रयत्नविशेषे । येनोत्तम्भितानि
करणानि शरीरञ्च नावसीदन्ति ॥
सा च कपिलपत्नी । यथा । धृतिः क
पिलपत्नी च सर्व्वैः सर्व्वत्र पूजिता । स
र्व्वलोका अधैर्य्याश्च जगत्सु च यया वि
नेति देवीभागवतम् ॥ ज्ञानस्य भा
र्य्यायामपि ॥ ज्ञानस्य तिस्रो भार्य्यास्तु
धृतिर्मेधा धृतिस्तथेति देवीभागवतम् ॥
उत्कृष्टसुखप्राप्तिकारणेन चापल्य
प्राप्तौ तन्निवर्त्तनशक्तौ ॥ * ॥ सत्त्वा
दिगुणभेदाद्धृतिस्त्रिविधा । यथा । धृ
त्या यया धारयते मनः प्राणेन्द्रियक्रि
याः । योगेनाव्यभिचारिण्या धृतिः
सा पार्थ सात्त्विकी ॥ यया तु धर्म्मका
मार्थान् धृत्या धारयतेऽर्ज्जुन । प्रसङ्गे
न फलाकाङ्क्षी धृतिः सा पार्थ राज-
सी ॥ यया स्वप्नं भयं शोकं विषादं म
दमेव च । न विमुञ्चति दुर्म्मेधा धृतिः
सा पार्थ तामसीति ॥ मनस्यामपि वि
पदि देहेन्द्रियसङ्घातस्यानवसादे ॥
अष्टादशाक्षरायां वृत्तौ ॥ अष्टादश
सङ्ख्यायाम् ॥ धरणम् । धृञ्० । क्तिन् ॥ पाञ्च
भौतिके मनसि धृत्यंशो भूमेर्गुणः ॥

धृतिमत् । [illegible] । सुपार्श्वाख्यविष्कम्भशैल
मूले उद्याने ॥ त्रि । सुखदुःखयोरे
करूपे ॥ धृति रस्यास्ति । मतुप् ॥

धृत्वा । पुं । धर्म्मे ॥ विष्णौ ॥ ध्रियन्ते स्मि
न् भूतानि । धृङ् अवस्थाने । धरति
वा । धृञ्० । भीङ्शृणीत्यादिना क्व
निप् । तुक् ॥ अन्तरीक्षे ॥ विप्रे ॥
समुद्रे ॥ मेधाविनि ॥

धृत्वरी । स्त्री । भुवि ॥

धृषुः । त्रि । दक्षे ॥ प्रगल्भे ॥ पुं । सङ्घा
ते ॥ धृष्णोति । ञिधृषा० । धृषिदि

व्यधिरेधिधृष्टिम्य इतिक्तः ॥

धृष्टः । त्रि । वियाते । निर्लज्जे ॥ प्रगल्भे ॥ निर्दये ॥ नायकप्रभेदे ॥ व्यक्ताङ्गोनिर्भयोधृष्ट इत्यस्य लक्षणम् । भूयोनिःशङ्कः कृतदोषोपि भूयोनिवारितोपि भूयःप्रश्रयपरायणो धृष्ट इतिच ॥ धृष्णोतिस्म । ञिधृषा० । गत्यर्थेतिक्तः । धृषिमसीतीड भावः ॥

धृष्टद्युम्नः । पुं । द्रुपदपुत्रे । पाण्डवानां सेनापतौ ॥ धृष्टद्युम्नवत्तमस्य ॥

धृष्टा । स्त्री । असत्याम् । बन्धक्याम् ॥

धृष्णज् । त्रि । धृष्टे । वियाते ॥ धृष्णोति । धृषेश्चेतिनजिङ् ॥

धृष्णि. । पुं । किरणे ॥ धृष्णोति । ञिधृषा प्रागल्भ्ये । बाहुलकात् निमप्रत्ययोगुणाभावश्च ॥

धृष्णुः । पुं । कल्किकायाम् ॥ त्रि । धृष्टे ॥ धृष्णोति । ञिधृषा० । त्रसिगृधिधृषिक्षिपेःक्नुः ॥

धेनः । पुं । समुद्रे ॥ नदे ॥ धयन्तियम् । धेट् पाने । धेटश्चेतिनन् धातोरिदादेशः ॥

धेना । स्त्री । नद्याम् ॥ भारतीप्रभेदे ॥

धेनिका । स्त्री ।<br>धेनी । स्त्री । } धन्याके ॥

धेनुः । स्त्री । गोमात्रे ॥ गवांजातीस्तु वक्ष्यामिशृणुष्वैकमना द्विज । प्रथमा गौरकपिला द्वितीया गौरपिङ्गला । तृतीयारक्तकपिला चतुर्थीनीलपिङ्गला ॥ पञ्चमीशुक्लपिङ्गाक्षी षष्ठीतु शुक्लपिङ्गला । सप्तमी चित्रपिङ्गाक्षी अष्टमी बभ्रुरोहिणी ॥ नवमीश्वेतपिङ्गाक्षी दशमीश्वेतपिङ्गला । साष्टशास्त्रेप्यनड्वाहः कपिलास्तु प्रकीर्त्तिता इति वृहद्धर्मपुराणे उत्तरखण्डे १५ अध्यायः ॥ नवप्रसूतायांसाङ्गियाम् । नवसूतिकायाम् ॥ धयतिसुताम् । धीयतेवा । धेट्० । धेटश्चेतिनुः ॥ दानीया दशधेनवो यथा । यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः । तासां स्वरूपं वक्ष्यामिनामानिच धनाधिप ॥ प्रथमा गुडधेनुः स्यात् घृतधेनुरथापिवा । तिलधेनुस्तृतीयाच चतुर्थीजलसंज्ञिका ॥ क्षीरधेनुश्चविख्याता मधुधेनुरथापिवा । सप्तमीशर्कराधेनुर्दधिधेनुरथाष्टमी ॥ रसधेनुश्चनवमी दशमी स्यात्स्वरूपतः ॥ कुम्भाःस्युर्द्रवधेनूनामितरासान्तु राशयः । सुवर्णधेनुमप्यत्रकेचिदिच्छन्तिमानवाः ॥

धेनुकः । पुं । असुरविशेषे ॥ धेनुरिव । इवेप्रतिकृतौ विति कन् ॥ रतिबन्धविशेषे । तल्लक्षणंयथा । न्यस्तह

स्तयुगला निजे पदे योपि देतिकटि लदवल्लभा। अग्रतो यदि शनै रधोमुखी धेनुकं रुपवदुच्यते प्रिये ॥ अपरञ्च। सुप्तां स्त्रियं समालिङ्गय स्वयं सुप्तो रमेत् पुनः। लघुलिङ्गं धा लयेद्योन्यां यं धेनुकः स्मृतः॥ इति रतिमञ्जरी ॥

धेनुकसूदनः। पुं। श्रीकृष्णे ॥ धेनुकं सूदयति। सूद॰ ल्युः ॥

धेनुका। स्त्री। करिण्याम्। हस्तिन्याम् ॥ धेनौ। गवि ॥ धेनुरिव। इवेतिकन्। धेनुरेव। स्वार्थे कन्वा ॥

धेनुकारिः। पुं। श्रीकृष्णे ॥ धेनुकस्यारिः ॥

धेनुकासुरसूदनः। पुं। श्रीकृष्णे ॥

धेनुदुग्धम्। न। गोचीरे॥ चिर्भिटे॥

धेनुदुग्धकरः। पुं। गर्ज्जरे ॥

धेनुष्या। स्त्री। बन्धकेस्थितायां वीरभेय्याम् ॥ संज्ञायां धेनुष्येति धेनुशब्दस्य युगागमो यत् प्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम्। ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थं मुत्तमर्णाय दीयते सा सञ्ज्ञम् ॥

धेयः। त्रि। विधेये। प्रयोज्ये ॥

धैनुकम्। न। स्त्रीणां करणे ॥ धेनूनां समूहः ॥ अचित्तहस्तिधेनोष्ठगिति धेनुशब्दात् समूहार्थे ठक्। इसुसुक्तान्तात्कः ॥

धैर्य्यम्। न। धृतौ। धीरतायाम् ॥ स्थिरा चित्तोन्नति र्यात्तु तद्धैर्यमिति संज्ञितमिति भूपालकोषः ॥ अप्रमादे। अव्याकुलत्वे ॥ विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतावन्तःकरणवृत्तिविशेषे ॥ निर्विकारचित्तत्वे ॥ मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु। इति रससिन्धुः ॥ धीरस्य कर्मभावो वा। ष्यञ् ॥

धैवतः। पुं। तन्त्रीकण्ठोत्थितस्वरविशेषे ॥ सप्तस्वरान्तर्गतषष्ठस्वरे ॥ अश्वस्तु धैवतं रौति ॥ गत्वा नाभेरधोभागं वस्तिं प्राप्योर्ध्वगः पुनः। धावन्निव च यो याति कण्ठदेशं स धैवतः ॥ धीमतामयं धैवतः। पृ॰ ॥

धैवत्यम्। न। धीवनोभावे ॥ ष्यञ्। दाण्डिनायनेति निपातनात् संकारादेशः ॥

धोडः। पुं। डुण्डुभे। राजिले। घोडासर्प इति गौडभाषा ॥

धोरणम्। न। हस्त्यश्वरथदोलादौ वा यानमात्रे ॥ धोरति अनेन वा। धोरयति वा। धोर्कगतिचातुर्ये। ल्युः ल्युट्वा ॥ अश्वस्य प्रथमगतौ। धोरिते ॥

धोरणिः। स्त्री। परम्परायाम् ॥

धोरितम् । न । अश्वप्रथमगतौ । धोरणे । धौरितके ॥ धोरितं गतिमान्त्रं यद्योजितं वल्गितं पुरः । अथवा थः समुल्लासाकुञ्चिताख्यं भवल्गितकम् ॥ धोरणम् । धोर्कः० । भावे क्तः ॥

धोरितकम् । न । अश्वगतिभेदे । धौरितके ॥ स्वार्थे कन् ॥

धौतः । त्रि । मार्जिते । मृष्टे । निर्णिक्ते । प्रक्षालिते । धोया इतिभाषा ॥ धाव्यतेस्म । धाव्० । क्त ॥ उत्तेजिते ॥ शुभ्रे ॥ ईषद्धौतं स्त्रियाधौतं यद्धौतं रजकेनच । अधौतं तद्विजानीयादितिकर्मलोचनः ॥ न । रूप्ये ॥

धौतकटः । पुं । स्योने । प्रसेवके । स्थूलनिर्मितभाण्डे । धोकडा इतिगौडभाषा ॥

धौतकोषजम् । न । पत्रोर्णे ॥

धौतकौशेयम् । न । पत्रोर्णे । मुकुटा इतिभाषाप्रसिद्धे वस्त्रे ॥ धौतञ्चतत्कौशेयञ्च ॥

धौतशिलम् । न । स्फाटिके । शालिपिष्टे ॥

धौम्यः । पुं । देवलमहर्षेःकनिष्ठभ्रातरि । पाण्डवानांपुरोहिते ॥

धौम्र. । पुं । धूम्रवर्णे ॥ न । धूम्रत्वे ॥ वास्तुस्थानभेदे ॥

धौरः । पुं । धवृक्षे ॥ इ०भा०म० ॥

धौरितम् । न । धौरितके ॥ धोरणम् । धोर्कः० । भावेक्तः । इट् । प्रज्ञादित्वादण् ॥

धौरितकम् । न । तुरङ्गगतिचातुर्ये ॥ धौरितमेव । स्वार्थे कन् ॥

धौरेयः । त्रि । भारवाहे । धुर्य्यवृषे ॥ धुरंवहति । धुरोयड्ढकाविति ढक् ॥ पुं । अनडुहि ॥

धौर्य्यम् । न । धोरिते । अश्वप्रथमगतौ ॥

ध्माकारः । पुं । लोहकारके ॥ इतिहलायुधः ॥

ध्मातः । त्रि । सन्धुक्षिते । धमाया इति भाषा ॥ ध्मासभूयिष्ठतयादीर्घश्वस्य ध्वतेर्योवर्णो.सध्मातरच्युते ॥

ध्मापनम् । न । शोषणे ॥

ध्मापितः । त्रि । शोषिते ॥

ध्यातः । त्रि । ध्यानविषयीकृते । चिन्तिते ॥ ध्यैचिन्तायाम् । क्तः । नध्याख्येति न तस्य नत्वम् ॥

ध्यानम् । न । चिन्तने ॥ अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहे ॥ शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरित.प्रत्ययसन्तान एकाग्रतेतियमाहुरितिभाष्यम् ॥ ध्येयप्रत्ययैकतानतायाम् ॥ एकतधृतस्याचित्तस्य भगव

दाकारवृत्तिप्रवाहोत्तरोत्तराऽन्याकारप्रत्ययाव्यवहिते निदिध्यासनसंज्ञे ॥ चित्तस्यात्माकारप्रत्ययावृत्तौ ॥ ब्रह्मैवास्मीतिसद्वृत्त्यानिरालम्बतयास्थितिः । ध्यानशब्देनविख्यातापरमानन्ददायिनी ॥ परमात्मचिन्तने ॥ धारणानियतस्य चित्तस्य विनेयवस्त्वकाद्याकारविषयायां चिन्तायाम् ॥ चिन्तातद्विषयाध्यानमित्युक्तेः ॥ तत्रप्रत्ययैकतानताध्यानम् ॥ तस्मिन्देशे यत्र चित्तंधृतं तत्रप्रत्ययस्यज्ञानस्यैकतानता विसदृशपरिणामपरिहारेणयदेवधारणायामवलम्बनीकृतं तदालम्बनतयैवनिरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ ध्यानपदार्थमुक्तंतन्त्रे । यथा । ध्यैचिन्तायांस्मृतोधातुश्चिन्तातत्त्वेन निश्चला । एतद्ध्यानमिहप्रोक्तंसगुणं निर्गुणंद्विधा ॥ सगुणंमन्त्रभेदेननिर्गुणंकेवलंमतमिति ॥ अपिच । ध्यानंतुद्विविधं प्रोक्तंसरूपारूपभेदतः । अरूपंतद्यद्ध्यानमवाङ्मनसगोचरम् ॥ अव्यक्तंसर्वतोव्याप्तमिदमित्थंविवर्जितम् । अगम्यंयोगिभिर्गम्यंकृच्छ्रैर्बहुसमाधिभिः ॥ मनसोधारणार्थायशीघ्रंस्वाभीष्टसिद्धये । सूक्ष्मध्यानप्रबोधायस्थूलध्यानंवदामिते ॥ अरूपायाः कालिकायाःकालमातुर्महाद्युतेः । गुणक्रियानुसारेणक्रियतेरूपकल्पनेतिश्रीमहानिर्वाणतन्त्रेपञ्चमोल्लासः ॥ ध्यायते यत् । ध्यै॰ । बाहुलकात्कर्मणिल्युट् ॥

ध्याननिष्ठः । त्रि । ध्यायिनि ॥

ध्यानयोगः । पुं । ध्यानरूपयोगे ॥ यथा । विविक्तसेवीलघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरोनित्यं वैराग्यंसमुपाश्रितः ॥ इतिश्रीभगवद्गीता ॥ ध्यानयोगस्वरूपंतुसाक्षात्कारहेतुःश्वेताश्वतरशाखायामुक्तं । ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥

ध्यामम् । न । दमनकवृक्षे ॥ गन्धतृणे ॥ त्रि । श्यामले । दग्धसमानवर्णे ॥ ध्यायते पशुभिः । ध्यै॰ । बाहुलकान्मक् ॥

ध्यामकम् । न । रोहिषतृणे ॥

ध्यामा । पुं । परिणामे ॥ न । चिन्तायाम् ॥ तेजसि ॥ ध्यायति । ध्यै॰ । नामन्सीमन्निति साधुः ॥

ध्यायी । पुं । योगिनि ॥

ध्येयः । त्रि । उपास्ये । चिन्तनीये । ध्यातव्ये ॥ ध्येयं सदापरिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल

ध्वजाहृतः । पुं । सङ्ग्रामे स्वामिसकाशाज्जिते दासविशेषे ॥ न । अविभाज्यधनविशेषे ॥ सङ्ग्रामादाहृतं यत्तु विजित्य द्विषताङ्कुशम् । स्वाम्यर्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥

ध्वजी । पुं । पृथिवीधरे ॥ रथे ॥ ब्राह्मणे ॥ भुजङ्गमे ॥ तुरङ्गे ॥ मद्यविक्रयजीविनि । शौण्डिके ॥ मयूरे ॥

ध्वजिनी । स्त्री । सेनायाम् ॥ ध्वजाः सन्त्यस्याम् । अतइनिठनाविति इनिः ॥

ध्वजिनीपतिः । पुं । सेनापतौ ॥

ध्वजोत्थानम् । न । इन्द्रमहोत्सवे । भाद्रशुक्लद्वादश्यां विधीयमाने शक्रोत्सवे ॥

ध्वनः । पुं । शब्दे ॥ इति द्विरूपकोषः ॥

ध्वनमोदी । पुं । षट्पदे । भ्रमरे ॥

ध्वनिः । पुं । शब्दमात्रे ॥ ध्वननम् । ध्वन शब्दे । खनिकष्यज्यसीति इः ॥ कोऽयं ध्वनिर्नाम येन दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीदतश्च पटुमृद्वादिभेदं वर्णेष्वासञ्जयतीति शारीरकभाष्यम् ॥ स्त्री । शङ्कुकर्णस्थानस्थायां देव्याम् ॥

ध्वनिग्रहः । पुं । कर्णे । श्रोत्रे ॥ ध्वनिं गृह्णाति । ग्रह० । विभाषा ग्रहइति पचेऽच् ॥

ध्वनितः । त्रि । शब्दिते । कृतस्वनमृदङ्गादौ । स्वनिते ॥ स्तनिते ॥ ध्वन्यतेऽस्म । ध्वन० । क्तः ॥

ध्वनिनाला । स्त्री । वीणायाम् ॥ वेणौ ॥ काहलायाम् । काहलीति हिमवत्प्रान्तप्रसिद्धे धत्तूरपुष्पसदृशे वाद्यविशेषे ॥

ध्वनिविकारः । पुं । काकाम् । शोकभयादिना शब्दविकृतौ ॥

ध्वस्तः । त्रि । स्रस्ते । गलिते । च्युते ॥ ध्वस्यतेऽस्म । ध्वंसु अवस्रंसने । क्तः । गत्यर्थाकर्मकेति कर्त्तरि क्तोवा ॥

ध्वाङ्क्षः । पुं । काके ॥ मत्स्याशुगे । बके ॥ तक्षके ॥ भिक्षुके । अर्थिनि ॥ गृहे ॥ ध्वाङ्क्षति । ध्वाक्षि घोरवाशिते च । चात् काङ्क्षायाम् । पचाद्यच् ॥

ध्वाङ्क्षजङ्घा । स्त्री । काकजङ्घायाम् ॥

ध्वाङ्क्षजम्बूः । स्त्री । काकजम्ब्वाम् ॥

ध्वाङ्क्षतुण्डी । स्त्री । काकनासायाम् ॥

ध्वाङ्क्षदन्ती । स्त्री । } काकतुण्ड्याम् ॥
ध्वाङ्क्षनखी । स्त्री । }

ध्वाङ्क्षनाम्नी । स्त्री । काकोदुम्बरिकायाम् ॥

ध्वाङ्क्षनाशिनी । स्त्री । हपुषायाम् ॥

ध्वाङ्क्षनासा । स्त्री । } काकनासा-
ध्वाङ्क्षनासिका । स्त्री । }

याम् ॥

ध्वाङ्क्षपुष्ट. । पुं । कोकिले ॥

ध्वाङ्क्षमाची । स्त्री । काकमाच्याम् ॥

ध्वाङ्क्षनखी । स्त्री । काकनासायाम् ॥

ध्वाङ्क्षदन्ती । स्त्री । काकतुण्ड्याम् ॥

ध्वाङ्क्षारातिः । पुं । पेचके । उलूके ॥

ध्वाङ्क्षी । स्त्री । काकोलिकायाम् ॥ रवे.सङ्क्रान्तिविशेषे ॥ यथा विन्दुमा ।देभवेद्ध्वाङ्क्षनाम्नी तदाख्यत्वसौख्यं खभेदेववेभ्यः ॥

ध्वाङ्क्षोली । स्त्री । काकोल्याम् ॥

ध्वान । पुं । शब्दे ॥ ध्वननम् । ध्वन० । । भावेघञ् ॥

ध्वान्तम् । न । अन्धकारे ॥ ध्वन्यते । ध्वन० । क्त । क्षुब्धस्वान्तेतिनिपा ।तितम् ॥ नरकविशेषे ॥

ध्वान्तचित्त. । पुं । खद्योते ॥

ध्वान्तशत्रु. । पुं । ध्वान्तशात्रवे ॥

ध्वान्तशात्रवः । पुं । अर्के ॥ चन्द्रे ॥ वह्नौ ॥ श्योनाकवृक्षे ॥ ध्वान्तस्यशात्रवः ॥

ध्वान्तारातिः । पुं । सूर्ये ॥ चन्द्रे ॥ वह्नौ ॥

ध्वान्तोन्मेष । पुं । खद्योते ॥ ध्वान्तेउन्मेषोऽस्य ॥

न.

न । अ । निषेधे ॥ यथा । न मिथ्याभा षणं कुर्याच्च परानिष्टचिन्तनम् । प रस्त्रीगमनञ्चैव ब्रह्मचारी विवर्जये दिति ॥ उपमायाम् ॥ नह्यति । ण हबन्धने । डप्रत्ययः ॥

नः । पुं । सुगते ॥ बन्धे ॥ द्विरष्टे ॥ प्र स्तुते ॥ रत्ने ॥ नकारे ॥

नंशुकः । त्रि । नाशके ॥ नश्यत्यस्मि न वायुना । णश अदर्शने । पचि- नशोर्णुकन् कनुमौचेतिसाधुः ॥

नंष्टा । त्रि । नाशाश्रये ॥

न.क्षुद्रः । पुं । क्षुद्रनासिके ॥

नकिम् । अ । } वर्जने ॥
नकिर् । अ । }
नकीम् । अ । }

नकुटम् । न । नासिकायाम् ॥

नकुल. । पुं । चतुर्थे पाण्डुसुते ॥ बभ्रौ । सर्पशत्रौ । सूचिवदने ॥ शिवे ॥ पि ते ॥ निष्कुले ॥ नास्तिकुलमस्य । नभ्रा ण्नपादितिनञ् प्रकृत्या ॥

नकुलाढ्या । स्त्री । गन्धनाकुल्याम् ॥

नकुली । स्त्री । कुक्कुट्याम् ॥ मांस्याम् ॥ शङ्खिन्याम् ॥ कुङ्कुमे ॥ नकुल भार्यायाम् ॥

नकुलीशः । पुं । कालीपीठस्थभैरवे ॥

नकुलेश्वरी । स्त्री । देवीविशेषे ॥

नकुलेष्टा । स्त्री । रास्नायाम् ॥ नकुला ना मिष्टा ॥ नाईं इति प्रसिद्धे रास्ना

भेदे ॥

नक्तम् । न । निशि । रात्रौ ॥ अव्यया-न्नक्तमरेधि । यथा । उपवासात् परं भैक्षं भिक्षायप्रमयाचितम् । अया चितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत् ॥ देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा । पराह्णे पितृभिर्भुक्तं सन्ध्यायां गुह्यकादिभिः ॥ सर्ववेला मतिक्रम्य नक्तभुक्तमभोजनम् । वाससा रोमकादेवो नक्तेनैवातुरे नरम् ॥ इति देवी पु० ॥ अकाव्यवायुक्तं मालस्ये । दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे । नक्तं तत्त्व विजानीयान्नक्तं निशि भोजनम् ॥ नक्षत्रदर्शनान्नक्तं गृहस्थेषु विधीयते । यतेर्दिनाष्टमे भागे रात्रौ तस्य निषेधनमिति ॥

नक्तकः । पुं । जक्तके । कर्पटे । चासा इति भाषा ॥ नजते । ओलजी व्रीडे । बाहुलकात् तन् । स्वार्थे कन् । नक्तं क सुखमस्माद्वा । पृ० सलोप ॥

नक्तचारी । पुं । उलूके । भेचके ॥ विडाले ॥ त्रि । रात्रिचरमात्रे ॥

नक्तञ्चरः । पु । राक्षसे ॥ चौरे ॥ भेचके ॥ रयदंशादौ ॥ नक्तं चरति । चर० । चरेष्टः ॥ गुग्गुलौ ॥

नक्तन्दिवम् । अ । अहोरात्रे ॥ नक्तञ्च



दिवाच । अचतुरेत्यादिना सप्तम्यर्थवृत्त्यो रव्यययो द्वन्द्वे निपातनाद च् समासान्तः ॥

नक्तम् । अ । निशि । रजन्याम् ॥ नज ते । ओलजीव्रीडे । तन् प्रत्ययः ॥

नक्तमालः । पुं । करञ्जवृक्षे ॥ नक्तं मालोऽस्य । नक्तं मा अलति वा । अल० । पचाद्यच् ॥

नक्तमुखा । स्त्री । रात्रौ ॥ इति हलायुधः ॥

नक्तव्रतम् । न । दिवाभोजनाभावविशिष्टे रात्रिभोजने ॥ हविष्यभोजनं स्नानं सत्यं माहारलाघवम् । अग्निकार्यं मधः शय्यां नक्तभोजी षडाचरेत् ॥ इति भविष्यपुराणम् ॥ नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव कुर्यात् तत् सदिवाकरम् ॥ सदिवाकरन्तु तत् प्रोक्तमन्तिमे घटिकाद्वये । निशानक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा ॥ मार्कण्डेयः । एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन नैवाद्वादशिको भवेदिति ॥

नक्ता । स्त्री । कलिकायाम् ॥

नक्तान्धः । त्रि । राव्यन्धे ॥

नक्तान्ध्यम् । न । राव्यन्धतायाम् ॥

नक्रः । पु । कुम्भीरे । नांका इति तद्भाषा इति च भाषाप्रसिद्धे जलजन्तौ ॥ न ।

अग्रदाहयिः । जायकाठ इतिगौड भाषा ॥ नासायाम् ॥ नक्रामतिदूरस्थलम् । क्रम् । अन्यत्रापीतिडः । नभ्राडितिनलोपेन ॥

नक्रराट् । पुं । } ग्राहे । जलाटके ।
नक्रराजः । पुं । } गाड इतिभाषा प्रसिद्धे यादोविशेषे ॥

नक्रा । स्त्री । नासिकायाम् ॥

नक्षत्रम् । न । कृत्तिकादितारकासु । मे ॥ अथलिङ्गन्यानंयथा । हस्तास्वाती श्रवणा मघी वै मृगशिरा नपुंसिस्यात् । पुंसिपुनर्वसु पुष्यौ मूलन्तस्त्रीस्त्रियांशेषाः ॥ शेषाः ताराइतिसम्बन्धः ॥ मुक्तायाम् ॥ नक्षद् तेदिनक्ति । नक्षदेतिसौत्रोधातुर्हिंसार्थ आत्मनेपदी । ष्ट्रन् । नभ्राण्नपादितिनलोपेन ॥ यद्वा । णक्षगतौ । नक्षति । कस्मिन्नपिअयमिति ऽत्रन् ॥ नक्षयोति वा । क्षयहिंसायाम् । ष्ट्रन् । बाहुलकान्नलोपः ॥ क्षीयते: क्षरतेर्वा क्षमिति निपात्यते । नक्षत्रमिति वा । नलोपाभावः पूर्ववत् ॥

नक्षत्रकान्तिविस्तारः । पुं । धवलयावनाले ॥ इतिराजनिर्घण्टः ॥

नक्षत्रनेमिः । पुं । मन्त्रग्रहणोक्तषट्- ॥ विष्णौ ॥ ध्रुवे ॥ चन्द्रे ॥ चि

-त्रायाम् ॥ स्त्री । रेवत्याम् ॥ इति मेदिनी ॥

नक्षत्रपः । पुं । उडुपे । चन्द्रे ॥

नक्षत्रपद्योगः । पुं । यात्रायोगान्तरे ॥ यथा । मेषगे भास्करे षष्ठे लाभगे स्वोच्चगे यमे । नक्षत्रपद्योगोयं प्रचुमेषानिलो रवौ ॥

नक्षत्रपुरुषः । पुं । चैत्रेमास्यसिताष्टम्यां यदा मूलगतः शशी । भगवन्तं सह लक्ष्म्या पूजयेच्च विधानत इत्यादिना वामनपुराणोक्ते व्रतविशेषे ॥

नक्षत्रमाला । स्त्री । सप्तविंशतिमौक्तिकैर्निर्मिते एकावलीहारे ॥ नक्षत्राणांमालेव ॥ नक्षत्रश्रेण्याम् ॥

नक्षत्रविद्या । स्त्री । ज्योतिषे ॥

नक्षत्रशूलः । पुं । ज्येष्ठापूर्वाभाद्रपद्रारोहिण्युत्तरफाल्गुनी । पूर्वादिषुक्रमाच्छूला यात्रायां मरणप्रदाः ॥

नक्षत्रसूचकः । पुं । निन्दिते ज्योतिर्विदि ॥ यथा । अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । सपङ्क्तिदूषकः पापोज्ञेयो नक्षत्रसूचकः ॥ अपिच । तिथ्युत्पत्तिं नजानन्ति ग्रहाणां नैवसाधनम् । परवाक्येन वर्त्तन्ते तेवै नक्षत्र सूचकाः ॥

नक्षत्रसूची । पुं । नक्षत्रसूचके ॥ गहेम्हेगत्त्वा पृष्टस्तु नक्षत्राण्यभिम्या

दीनि ; शुभाशुभसूचकानि सूचय सीति तथा ॥

नखचेशः । पुं । चन्द्रे ॥ नखचाखामी शः ॥ कर्पूरे ॥

नखः । पुं । न । पुनर्भवे । करवहे ॥ पुं । खण्डे ॥, इति हेमचन्द्रः ॥ न । आमनखाख्येगन्धद्रव्ये । शुक्तौ । कोलदले ॥ शिया शङ्खनखाख्या व्याघ्रनखाख्यावदरीदला इतिरत्नमाला ॥ नखदयं व्रणशोधनं वातास्रज्वर कुष्ठहृत् । लघूष्णं शुक्रलं वर्ण्यं स्वादु विषविषापहम् ॥ अक्ष्णीमुखदै गैन्ध्यहृत् पाकरसयोः कटुः ॥ न खन्यते वा । खनु अवदारणे । अन्ये ऽड़ः ॥ नखमर्कोति वा । नभ्रा दिसिसाधुः ॥ यथा । नद्यास्ति । याच यन्धने । नहेर्ध्यलोपश्चेति खः ॥ स्व स्यपञ्चसवसी शुक्ति नेखरी यदरच्छदा । मत्स्यसी शङ्खनखः शङ्खाख्यो गन्धसारयः ॥

नखकुट्टः । पुं । नापिते ॥ इतिविकाण्डशेषः ॥

नखनिकृन्तनम् । न । नखच्छेदनार्थे नापितशस्त्रविशेषे । नहेर्ना इतिभाषा ॥

नखनिष्पावः । पुं । निष्पावीभेदे । कुलिफलायाम् । ग्राम्यायाम् ॥



नखपर्णी । स्त्री । वृश्चिकाचुपे ॥

नखपुष्पी । स्त्री । पृक्कायाम् ॥

नखमुचम् । न । धनुषि ॥

नखम्पचा । स्त्री । यवाग्वाम् ॥ नखम्पचमीतिविग्रहे मितनखेचेति नखकर्मोपपदात् पचेःकर्त्तरि खश् । अरुद्विषदितिमुम् । पचिराचतोपचारी ॥

नखरः । पुं । नखे । करकण्टके । करवहे ॥ नखं राति । रा ऽ । कः ॥

नखरजनी । स्त्री । ओषधिविशेषे ॥ तत्फले ॥ हरीतक्यादिभ्यश्चेति फलप्रत्ययस्य लुप् ॥ नखच्छेदनास्त्रविशेषे । नहेर्ना इतिभाषा ॥ यथा । चनन्तरतोपालवारिणी नखहारिणी । पुनर्भवच्छेदकरी गाद्यैव नखरजनीति ॥

नखरायुधः । पुं । कुक्कुटे ॥ व्याघ्रे ॥ सिंहे ॥

नखराह्वः । पुं । करवीरवृक्षे ॥ इति राजनिर्घण्टः ॥

नखरी । स्त्री । नखाम् ॥ चन्द्रनख्याम् ॥

नखविष्किरः । पुं । पक्षिविशेषेषु ॥ नखै विकीर्य येभक्षयन्ति । तेष श्ये नादयः ॥

नखवृक्षः । पुं । नीलवृक्षे ॥

नखशङ्खः । पुं । शम्बूके । चुद्रशङ्खे ॥

नखाघातः । पुं । रतिक्रीडायांस्थानवि

मोचेत पुरुषं साकदाचन । नचमूत्रं पुरीषं वा नचैव संस्पृष्टमैथुनमिति कूर्मपुराणम् ॥

नग्नाटः । पुं । दिगम्बरे ॥

नग्नाटकः । पुं । दिगम्बरयोगिनि ॥

नग्निका । स्त्री । अनागतार्त्तवायाम् । अप्राप्तरजस्कायाम् ॥ विवस्त्रायाम् ॥ नजतिस्म । ओलजी० । गत्यर्थेति क्तः । ओदितश्चेतिनः । स्वार्थेकन् ॥

नचेत् । अ । निषेधे ॥

नञ् । अ । नञभावे निषेधेच स्वरूपार्थे प्यतिक्रमे । ईषदर्थेच साद्दश्ये तद्विरुद्धतदन्ययोः ॥ इतिमेदिनी ॥ अपिच । तत् साद्दश्य मभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ साद्दश्ये यथा । अब्राह्मणः ॥ अभावे । यथा । अपापम् ॥ अन्यत्वे यथा । अघट पटः ॥ अल्पत्वे यथा । अनुदरा कन्या ॥ अप्राशस्त्ये यथा । अकेशी ॥ विरोधे यथा । असुरः ॥ अकारो न लोपेन न्विति विशेषणार्थः ॥ द्वौ नञौ प्रकृतमर्थं गमयतः । यथा । नाविष्णु कीर्त्तयेद्विष्णुं नाविष्णु विष्णुमर्चयेत् । नाविष्णु संस्मरेद्विष्णुं नाविष्णु विष्णु माप्नुयादिति महाभारतम् ॥

नटः । पुं । शैलूषे । कृशाश्विनि । नव रसाभिनयचतुरे । नर्त्तकविशेषे । व्याजीविनि ॥ वर्णसङ्करजातिविशेषे यथा । शौण्डिकायां गोपिका ज्जातो नटो मल्ल एवचेति पराशरपद्धतिः ॥ व्रात्यायांच क्षत्रियाज्जात इति मनुः ॥ अशोकवृक्षे ॥ श्योनाक वृक्षे ॥ नले । किम्पुपर्णि ॥ गोदन्तहरिताले ॥ आत्यास् चक्षियास् सवर्णाया मुत्पन्न व्रात्यक्षरे । क्षत्रे ॥ नटति । नटनृत्तौ । पचाद्यच् ॥ यद्वा । नमति । वाल० । अंमिदेश्याहिभानमेर्डटः । डित्त्वाट्टिलोपः ॥

नटनम् । न । नर्त्तने । नाट्ये । बाध्ये ॥ नट अवस्यन्दने । ल्युट् ॥ आगिरवे ॥

नटनारायणः । पुं । रागविशेषे ॥

नटभूषणम् । न । }
नटमण्डनम् । न । } हरिताले ॥

नटवरः । पुं । नटश्रेष्ठे ॥

नटसञ्ज्ञकः । पुं । गोदन्तहरिताले ॥ नटे ॥

नटान्तिका । स्त्री । लज्जायाम् ॥ इति हारावली ॥

नटी । स्त्री । नल्योषधौ ॥ वेश्यायाम् ॥ नटयोषायाम् ॥ गौरादित्वात् ङीष् ॥

नटेश्वरः । पुं । शिवे ॥ इति हेमचन्द्रः ॥

नट्या ॥ स्त्री । नटसमूहे ॥ पाशा०यः ॥

नडः । पुं । नलतृणे । मोटगले ॥ नडति । नडगहने । अच् ॥

नडकीयः । त्रि । नड्वले ॥ नडाः सन्त्यस्मिन् । नडादीनां कुक् चेतिछः ॥

नडप्रायः । त्रि । नडबहुलदेशे । नड्वति ॥

नडसंहतिः । स्त्री । नड्याम् ॥ नडानां संहतिः ॥

नडवः । त्रि । कान्ते । खचिते ॥ इति भूरिप्रयोगः ॥

नडवा । स्त्री । विलासिन्याम् ॥

नड्या । स्त्री । नडसंहतौ ॥ नडानां समूहः । पाशादिभ्यो यः ॥

नड्वान् । त्रि । नडप्रायदेशे ॥ नडाः प्रायाश्च । कुमुदनडवेतसेभ्यो ड्मतुप् । झय इति मादुपधायाः इति वत्वम् ॥

नड्वलः । त्रि । नडप्रायदेशे ॥ नडाः सन्त्यस्मिन् । नडशादाड्ड्वलच् ॥

नड्वाभूः । स्त्री । स्थलविशेषे । कुट्टिमे ॥ इति भूरिप्रयोगः ॥

नतः । पुं । गन्धनाडिकाविशेषे ॥ न । तगरपादाम् । तगरमूले ॥ त्रि । कुटिले ॥ नम्रे ॥ नमति स्म । क्त ॥

नतद्रुमः । पुं । लताशाले ॥ इतिरत्न० ॥

नतनासिकः । त्रि । चिपिटनासे । चबटीटे ॥ नता नम्रा नासिका ऽस्य ॥

नताङ्गी । स्त्री । नार्याम् ॥ इतिराजनि० ॥

नतिः । स्त्री । नमस्कारे ॥ नमने ॥ क्तिन् ॥ अथ सप्त प्रकारायानतेर्लक्षणानि । त्रिकोणमथषट्कोणमर्द्धचन्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रञ्च सप्तधानतिलक्षणम् ॥ ऐशानीवायकौवेरीदिक् कामाख्या प्रपूजने । प्रशस्ता अपिकादौच सर्वमूर्त्तेषु सर्वतः ॥ त्रिकोणादिव्यवस्थाञ्च यदि पूर्वमुखोयजेत् । पश्चिमाच्चाम्भवीं गत्वा व्यवस्थां निर्दिशेत् तदा ॥ यदेशत्तरामुखः कुर्यात् साधकोदेवपूजनम् । तदायाम्यास्तु वायव्यां गत्वाक्तु यांसु संक्षिपेत् ॥ दक्षिणाद्वायवीं गत्वादिशं तस्मात्तथाम्भवीम् । ततोऽपि दक्षिणां गत्वा नमस्कार स्त्रिकोणवत् ॥ त्रिकोणो योनमस्कार स्त्रिपुरा प्रीतिदायकः ॥ १ ॥ दक्षिणाद्वायवीं गत्वा वायव्याच्छ्रमपीततः । ततोऽपि दक्षिणां गत्वा तांत्यक्ताग्नौ प्रविश्यच ॥ अपितो राक्षसीं गत्वा ततश्चाप्युत्तरांदिशम् । उत्तराच्चतथाग्नेयीं भ्रमणं द्विस्त्रिकोणवत् ॥ षट्कोणोयो नमस्कारः प्रीतिदः शिवदुर्गयोः ॥ २ ॥ दक्षिणाद् वायवीं गत्वा तस्माद्व्यारभ्य दक्षिणम् । गत्वा यो ऽसौ नमस्कारः योऽर्द्धचन्द्रः प्रकीर्त्तितः ॥ ३ ॥ सकृत् प्रदक्षिणं कृत्वा

वर्त्तुलाकृतिसाधकः । नमस्कारः क
थ्यतेऽसौ प्रदक्षिण इति द्विजैः ॥ ४ ॥
त्यक्त्वा स्वमानसंस्थानं पश्चाद्गत्या
नमस्कृतिः । प्रदक्षिणं त्रिकोणात्तु नि
म्नत्रिभुविदण्डवत् ॥ दण्डइत्युच्यते
देवैः सर्वदेवौघमोदकः ॥ ५ ॥ पूर्व
वद्दण्डवद्भूमौ निपत्य हृदयेन तु
। चिबुकेन मुखेनाथ नासया हनुके-
न च ॥ ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भू
मिस्पर्शनं क्रमात् । तदष्टाङ्ग इति-
प्रोक्तो नमस्कारो मनीषिभिः ॥ ६
॥ प्रदक्षिणत्रयं कृत्वा साधको यस्तु चा
कृतिः । ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः
स्यान्नमस्कृतौ ॥ स उग्र इति देवौघै
रुच्यते विष्णुतुष्टिदः ॥ ७ ॥ नदानां
सागरो यादृग् द्विपदां ब्राह्मणो यथा ।
नदीनां जाह्नवी यादृग् देवानामिव
चक्रधृक् ॥ नमस्कारेषु सर्वेषु तथै
वोग्रः प्रशस्यते । त्रिकोणाद्यैर्नमस्का
रैः कृतैरेवन्तु भक्तितः । चतुर्वर्गं ल
भेद्भक्तानचिराद्देवसाधकः ॥ नम
स्कारो महायज्ञः प्रीतिदः सर्वदास-
दा । सर्वेषामपि देवानामन्येषामपि
भैरव ॥ योऽसावुग्रो नमस्कारः प्रीति
दः सततं हरेः । महामायाप्रीतिक
रः स नमस्कारयोः समः ॥ इति कालिका
पुराणम् ॥

नदः । पुं । पुनर्महे । भिद्य । शोणसि
न्धुभैरवदामोदरब्रह्मपुत्रादौ ॥ अ
ब्धौ ॥ निनदे ॥ नदति । णद० ।
पचाद्यच् ॥

नदनुः । पुं । मेघे ॥ सिंहे ॥ नदति ।
णद अव्यक्ते शब्दे । अनुङ्नदेश्चेति
अनुङ् ॥

नदी । स्त्री । सरिति । तरङ्गिण्याम् ।
तटिन्याम् ॥ तल्लक्षणम् । धनुः
सहस्राण्यष्टौ च गतिर्यासां न विद्यते
। न ता नदीशब्दवहा गर्त्तास्ताः प
रिकीर्त्तिताः इति ॥ सर्वा गुर्वी-
प्राङ्मुखी वाहिनी स्यात् लघ्वी पश्चा
द्वाहिनी निश्चयेन । देशे देशे तद्गु
णा सा विशेषा ज्ञेया यत्ने गौरवं ला
घवञ्च ॥ प्रायो मृदुवहा गुर्व्यो ल-
घ्व्यः शीघ्रवहाः स्मृताः । नद्यः पाषा
णसिकतावाहिन्यो विमलोदकाः ॥
हिमवत्प्रभवायाश्च जलं तास्वमृतो
पमम् । विन्ध्यात् प्राचीप्राच्यवाची
प्रतीची याचोदीची स्यान्नदी सा
क्रमेण । वातारोपं श्लेष्मपित्तार्त्तिलो
पं पित्तोद्रेकं पथ्यपाकं च धत्ते ॥ पा
रिपात्रभवा याश्च विन्ध्याद्रिप्रभवा-
श्च याः । शिरोहृद्रोगकुष्ठानां ता हे
तुः श्लीपदस्य चेति राजनिर्घण्टः ॥ प
चादिषु नदट् इति टित्वनिपातनात्-

टिड्ढेति ङीप् ॥ नदीनाञ्च विशेषोयः सवराहे निरूपितः । तथामत्स्यपुराणादौ द्रष्टव्योवेत्तुमिच्छुभिः ॥

नदीकदम्बः । पुं । महाश्रावणिकायाम् । मुण्डाम् ॥ न । नदीसमूहे ॥

नदीकान्तः । पुं । समुद्रे ॥ नद्याःकान्ता यस्य ॥ इज्जले । निचुलद्रुमे ॥ सिन्धुवारके ॥

नदीकान्ता । स्त्री । जंबाम् ॥ काकजङ्घोषधौ ॥ लतायाम् ॥

नदीकूलम् । न । सरित्तटे ॥ नद्याःकूलम् ॥

नदीकूलप्रियः । पुं । अम्बुवेतसे ॥ नदीकूलं प्रियं यस्य ॥

नदीजः । पुं । अर्जुनवृक्षे ॥ यावनालशरे ॥ हिज्जलवृक्षे ॥ न । स्रोतोञ्जने ॥ त्रि । नद्यां जाते ॥

नदीजा । स्त्री । अग्निमन्थवृक्षे ॥

नदीतरस्थलम् । न । } घट्टे ॥ नदी
नदीतरस्थानम् । न । } भिन्नस्थाने ॥

नदीनः । पुं । वरुणे ॥ समुद्रे ॥ नदीना मिनःस्वामी ॥

नदीनिष्पावः । पुं । धान्यप्रभेदे । कटुनिष्पावे । कर्बुरे ॥

नदीमातृकः । त्रि । नद्यम्बुसम्पन्नव्रीहिपालितेदेशे ॥ नदी माता ऽस्य । नद्यृतश्चेतिकप् ॥

नदीवङ्कः । पुं । वङ्कुरे । बाँकइतिभाषा ॥ इतिशब्दमाला ॥

नदीवटः । पुं । वटीवृक्षे ॥

नदीष्णः । त्रि । नदीस्नानकुशले ॥ नद्यांस्नाति । ष्णाशौचे । सुपीतिकः । निनदीभ्यामितिषत्वम् ॥ नदीष्णे ॥ इतिपुरुषोत्तमः ॥

नदीसरड । न । इन्द्रक्रीडासरोवरे ॥

नदीसर्जः । पुं । वीरतरौ । अर्जुनवृक्षे ॥

नदेयी । स्त्री । नादेय्याम् । भूमिजम्बाम् ॥

नद्धः । त्रि । बद्धे ॥ उद्धृत्से ॥ नह्यते । चहवन्धने । कर्मणि क्तः । नहोधइतिधत्वम् ॥

नद्ध्री । स्त्री । चर्ममयरज्जौ । वरत्रायाम् ॥ नह्यतेऽनया । बाहु० । दाम्नीतिष्ट्रन् ॥

नद्याम्रः । पुं । समष्ठिलावृक्षे ॥

नद्यावर्त्तकः । पुं । योगविशेषान्तरे । नन्द्यावर्त्तके ॥ यथा । स्वराशिगेगुरौ लग्ने सिते वा सुरवन्दिते । नद्यावर्त्तकयोगोयं-यातुरिष्टार्थसिद्धिदः ॥ अन्योपि । प्रसुते स्वोच्चगे लाभे सगकुम्भगते यमे । नद्यावर्त्तकयोगोयं रथेशपुरुषानघः ॥

ननन्दा । स्त्री । नन्दिन्याम् । स्वभर्त्तृभगिन्याम् । ननंद इतिभाषा ॥ नन

न्दति कृतायामपिसेवायां न तुष्यति । ननन्दयति आह्लादयितुं नाशक्यतामिति वा । शाजिषनन्देरिति ऋन् ॥

ननान्दा । स्त्री । ननन्दायाम् ॥ न नन्दति न तुष्यति । ननन्दयति आह्लादयितुं नाशक्यतामिति वा । टुनदि० । आजिषनन्देरिति ऋन् दीर्घश्चेतिकेचित् ॥

ननु । अ । विनिग्रहे ॥ अनुप्रश्ने ॥ परकृतौ ॥ अधिकारे ॥ संभ्रमे ॥ आमन्त्रणे ॥ अनुनये ॥ प्रश्ने ॥ अनुज्ञायाम् ॥ अवधारणे ॥ दुष्टोक्तौ ॥ सम्यगर्थे ॥ स्तुतौ ॥ वाक्यारम्भे ॥ आक्षेपे ॥ प्रत्युक्तौ ॥ उत्प्रेक्षाऽवज्ञारव्यञ्जके ॥ यथा । मन्ये शङ्के ध्रुवं नूनं किंवा प्रायो नु वेत्यपि । ननु नाऽनयि जानामि उत्प्रेक्षाव्यञ्जकानिमेतिकाव्यचन्द्रिका ॥ न नुदति । नुद० । मित०डुः ॥

ननुच । अ । विरोधोक्तौ ॥ ननु च चेतिनिपातद्वयस्य समाहारद्वन्द्वः ॥ प्रश्ने ॥

नन्दः । पुं । गोपविशेषे । श्रीकृष्णस्य पितरि ॥ नृपविशेषे । महानन्दिसुते । चणिप्रियंशान्ते ॥ आनन्दे ॥ निधिभेदे ॥ मार्दङ्गिकदारगृहे ॥ वेणुविशेषे ॥ यथा । महानन्दस्तथान्दोत्रिंशतोवनयकस्तथा । चत्वारस्त मात्रंशामातङ्गमुनिसम्मताः ॥ दृशाकुलेमहानन्दोनन्दएकादशाङ्गुलः । इतिसङ्गीतदामोदरः ॥ त्रि । सर्वाभिलषपणिभिःसमृद्धे ॥ नन्दति इति नन्दः । टुनदि० । पचाद्यच् ॥

नन्दकः । पुं । हरेःखड्गे ॥ भेके ॥ त्रि । हर्षके ॥ कुलपालके ॥ नन्दयति देवान् । टुनदि० । ण्वुल् ॥ नन्दतात् । आशिषिण्वेरिति वुन् वा ॥

नन्दकिः । स्त्री । पिप्पल्याम् ॥

नन्दकी । पुं । विष्णौ ॥ विद्यामयो नन्दकाख्योऽसिरस्य । अतइनिठना-वितीनिः ॥

नन्दगोपिता । स्त्री । राकायाम् ॥

नन्दथुः । पुं । आनन्दे । सुखे ॥ टुनदि० । द्वितोऽथुच् ॥

नन्दनः । पुं । सुते ॥ भेके ॥ आमोक्षायां पर्वतविशेषे ॥ षष्ठिवत्सरमध्ये वत्सरे । सुभिक्षं क्षेमम् आरोग्यं सस्यं भवति शोभनम् । बहुक्षीरा तथा गावो नन्दने नन्दने प्रिये ॥ न । इन्द्रस्योद्याने । गन्धमादनमूले गन्धर्वसुरसिद्धाप्सरोरमणोद्याने ॥ इतिसंक कच्छन्दःभेदे ॥ यथा । ननभजरैः सुरेफसहितैः शिवैः हयैः नन्दनम् ॥ यथा । तरणिसुतातटकूपवनैः सलिलमन्दोचितम् मधुरिपुपादपङ्कजर

जःसुपूतपृथ्वीतलम् । मुरहरचित्र
चेष्टितकलाकलापसंस्मारकं चि
तितनन्दने व्रज सखे सुखाय वृन्दा
वनम् ॥ त्रि । हर्षके ॥ आनन्दकार
के ॥ नन्दयति । टुनदि० । नं०ल्युः ॥

नन्दनवनम् । न । हरिचन्दने ॥

नन्दननन्दनः । पुं । श्रीकृष्णे ॥ नन्दस्य न
न्दनः ॥

नन्दननन्दिनी । स्त्री । दुर्गायाम् ॥

नन्दनमाला । स्त्री । श्रीकृष्णप्रीतिकु
सुमालिकाविशेषे ॥

नन्दना । स्त्री । दुहितरि ॥ इति जटा
धरः ॥

नन्दन्तः । पुं । पुत्रे ॥ नन्दात् । टुनदि०
। दृशिनन्दिजीविप्राणिभ्यःषिदाशि
षीति झच् ॥

नन्दपालः । पुं । वरुणे ॥

नन्दपुत्री । स्त्री । पार्वत्याम् ॥ इति त्रि
काण्डशेषः ॥

नन्दयन्तः । त्रि । अर्भके ॥ नन्दयति ।
टुनदि० । तृभूवहिवसिभासीस्था
दिनाऽझच्पित् ॥

नन्दा । स्त्री । गौर्याम् ॥ नन्दते सुरलो
केषु नन्दने वसतेऽथवा । हिमाच
ले महापुण्ये नन्दादेवी ततः स्मृता
॥ संस्थाप्य नन्दिता यस्मात् तस्मान्न
न्दा तु साऽभवत् । इति वचनामकार
णम् । संस्थाप्य ब्रह्मादिभिर्हिमगि
रावितिशेषः ॥ अलिञ्जरे । नाँदइ-
तिभाषा ॥ सम्पदि ॥ तिथिविशेषे ॥
यथा । प्रतिपदेकादशीषष्ठी नन्दा
ज्ञेयामनीषिभिः ॥ अर्कसङ्क्रमवि
शेषे । स्थिरेऽर्कीववारे तु नन्देतिसंज्ञा
तदाविमवर्गःसुखीमासमेकम् ॥ न
नन्दरि ॥ तीर्थविशेषे ॥

नन्दात्मजः । पुं । श्रीकृष्णे ॥ नन्दस्य आ
त्मजः ॥

नन्दात्मजा । स्त्री । दुर्गायाम् ॥

नन्दिः । पुं । नन्दिकेश्वरे । पिनाकिनः
प्रतीहारे ॥ पुं । न । द्यूताङ्गे ॥ आ
नन्दे ॥ नन्दति । टुनदि० । इन् ॥

नन्दिकः । पुं । नन्दिवृक्षे ॥

नन्दिका । स्त्री । इन्द्रक्रीडास्थाने ॥ अ
लिञ्जरे ॥

नन्दिकेश्वरः । पुं । शालङ्कायने । ताण्ड
वतालिके । शिवद्वारपाले ॥ पुराण
विशेषे ॥

नन्दिघोषः । पुं । अर्जुनरथे ॥ वन्दि
जनस्य घोषे ॥

नन्दितरुः । पुं । धवद्रुमे ॥

नन्दी । पुं । हरप्रतीहारे । गिरिगवे
विधि ॥ सन्निधिचक्रोवह्निपुराणे ॥
यथा । आद्यः कनकनन्दी च गिरिका
ख्यो द्वितीयकः । सोमनन्दी तृती

वर्णाख्ये धात्वायोगे ॥ नन्दयतीति नन्दी । नन्दी आवर्त्तोऽत्र ॥

नपात् । त्रि । अरक्षके ॥ न पाति । नपात् शपकः ॥

नपुंसकः । पुं । न । क्लीबे ॥ न स्त्री न पुमानित्यस्य पुंसकभावो नभ्राडित्यादिनिपातनात् ॥ नपुंसकोऽमवेदिति भाष्यात् पुंस्त्वव्ययम् ॥ अस्य लक्षणं यथा । सनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावेन पुंसकमिति ॥ * ॥ नपुंसकविशेषा यथा भावप्रकाशः- । यथा । आसेक्यश्च सुगन्धिश्च कुम्भीकश्चेर्ष्यकस्तथा । अमी सशुक्रा बोद्धव्या अशुक्रो षण्डसंज्ञकः ॥ तेषां लक्षणानि यथा । पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोच्छ्रितिमसंशयम् ॥ यः पूतियोनौ जायेत स हि सौगन्धिको भवेत् । स्त्रीगुदेऽब्रह्मचर्य्यतः यः स्त्रीषु पुंवत् प्रवर्त्तते । स कुम्भीक इति ज्ञेयो गुदयोनिः स संस्कृतः ॥ दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स तु विज्ञेयो दृष्टियोनिः स संस्कृतः ॥ यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते । ततः स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञकः ॥ इति भावप्रकाशः ॥

नप्ता । पुं । पौत्रे ॥ दौहित्रे ॥ न पतन्ति पितरोऽनेन । पतॢ० । नप्तृनेष्टृत्वष्टृेतिसाधुः । नञः प्रकृतिभावः पतेरच्छब्दलोपश्च निपातनात् ॥

नप्त्री । स्त्री । पौत्र्याम् ॥ दौहित्र्याम् ॥ न पतन्ति पितरोऽनया नप्तृवत् साधुः । ऋन्नेभ्यो ङीप् ॥

नभः । पुं । श्रावणमासे ॥ व्योम्नि ॥ नभते । णभ हिंसायाम् । पचाद्यच् ॥

नभःकान्ती । पुं । सिंहे ॥ इतिशब्दमाला ॥

नभः प्राणः । पुं । पवने ॥ इतित्रिकाण्डशेषः ॥

नभःसत् । पुं । निर्जरसि । देवे ॥

नभःसरित् । स्त्री । मन्दाकिन्याम् ॥

नभःस्थितः । पुं । नरकविशेषे ॥ त्रि । आकाशस्थिते ॥

नभःस्पृक् । त्रि । अत्युच्चव्यापिनि ॥ नभः स्पृशति । स्पृश० । क्विप् ॥

नभश्चक्षुः । पुं । सूर्य्ये ॥ इतिशब्दमाला ॥

नभश्चमसः । पुं । चन्द्रे ॥ पिष्टपूपे ॥ चन्द्रजाले ॥ इतिमेदिनी ॥

नभश्चरः । पुं । विहङ्गमे ॥ विद्याधरे ॥ मेघे ॥ वाते ॥ ग्रहे ॥ देवे ॥ राक्षसे ॥ त्रि । व्योमचारिणि ॥

नभाः । पुं । घने । मेघे ॥ भाषे ॥ ग्रा

श्रावणमासे ॥ विरहिणो नभ्यति नभ्नाति नभते वा । नभ० । असुन् ॥ वर्षायाम् ॥ विसतन्तौ ॥ पतद्गृहे ॥ त्रि । पलितशीर्षे ॥ नभ्यते मेघै; । आकाशे । नह्हेर्दिविभश्चेत्यसुन् भश्चान्तादेशः ॥

नभः । न । व्योम्नि । आकाशे ॥ नह्यते मेघैः । असुन् । नह्हेर्दिविभश्चेत्यसुन् भश्चान्तादेशः ॥ नभसि क्षिपा । असदीप्तौ । क्विप् ॥ नभनम् नभ्यते ऽनेनाधवा ॥

नभसः । पु । न । व्योम्नि । नभते नभ्नाति वा ॥ अत्यविचमितमीच्यादिना असच् प्रत्ययः ॥

नभसङ्गमः । पु । खगे ॥ पक्षिणि ॥ नभसं गच्छति । गम० ॥ गमेः सुपी तिखच् ॥

नभस्यः । पु । भाद्रमासे ॥ नभाःश्रावणः । तत्र साधुः । यत् ॥

नभस्वान् । पु । वायौ ॥ नभोऽस्यास्य यत्नेन अस्ति । मतुप् । तसौमत्वर्थे इतिभत्वात् रुत्वाभावः ॥ मस्य वः ॥

नभसद् । पु । देवे । सुरे ॥ नभसाकाशे सीदति गच्छति । सद्लृ० । सत्सूद्विषेत्यादिना क्विप् ॥

नभाकम् । न । तमे ॥ नभ्नाति । णभ० । पिनाकादित्वात् साधुः ॥

नभोमणः । पुं । वारिदे । मेघे ॥ इति त्रिकाण्डशेषः ॥

नभोगतिः । स्त्री । आकाशगमने । खगतौ ॥ यथा । मलीनोडुभिरसज्जनयनाननभोगतौ ॥ त्रि । खचरे ॥ नभसिगति र्यस्य ॥

नभोदुहः । पु ।
नभोद्वीपः । पुं ।
नभोधूमः । पुं ।
वारिदे । मेघे ॥ इति शब्दमाला ॥

नभोनदी । स्त्री ॥ स्वर्गङ्गायाम् ॥

नभोमणिः । पु । रवौ । सूर्ये ॥

नभोमण्डलदीपः । पु । इन्दौ ॥

नभोम्बुपः । पु । चातकखगे ॥

नभोरजः । न । अन्धकारे ॥

नभोरेणुः । स्त्री । कुज्झटिकायाम् ॥

नभोलयः । पुं । धूमे ॥

नभ्यः । पुं । चक्रे ॥ नाभये हितः । रथाङ्गसच्छिद्रनाभिः । तदनुप्रविष्टःकाष्ठविशेषश्च । तथा तदनुगुणत्वात् तस्मै हितः । अञ्जनतैलाभ्यङ्गः तदपि नाभिहितत्वान्नाभ्यम् । उगवादिभ्योयत् । नाभिनभञ्च ॥ त्रि । नभस्यन्विते ॥

नभ्राट् । पु । मेघे ॥ नभ्राजते दीप्तं वा । भ्राज० । क्विप् । नभ्राण्नपादिति साधुः ॥

नमत् । त्रि । प्रणते ॥

नरकीलकः । पुं । गुरुघ्ने ॥ गुरुधि ॥

नरगणः । पुं । नवसु नक्षत्रविशेषु ॥ यथा । हस्तास्वातिमृगाश्विनीहरिगुरुः पौष्णानुराधादितिभ्याहरोहिणिचोत्तराश्च भरणी पूर्वाश्च आनिधनम् । ज्येष्ठाश्लेषविशाखमूलवरुणावस्वादिचित्रामघाः कथ्यन्ते मुनिभिर्यथा क्रमभयाद्देवानराराक्षसाः ॥ संस्कारकन्ने ॥ तत्फलम् । मानुष्ये मदुकर्मसङ्गतमनाः भीतान्वितो धीवृत इति ॥ नरसमूहे ॥

नरङ्कः । पुं । वरण्डके । आराङ्गा इति गौड भाषा ॥ न । मेहने । शेफसि ॥

नरदेवः । पुं । श्रीरामचन्द्रे । राज्ञि ॥ नराणां देवः ॥

नरनारायणः । पुं । ऋषिरूपभे भगवतो ऽवतारविशेषे ॥

नरनारायणौ । पुं । २ । कृष्णार्जुनयोः ॥ नरश्च नारायणश्च तौ ॥

नरपतिः । पुं । राजनि ॥ नराणाम्पतिः ॥

नरपुङ्गवः । पुं । नरश्रेष्ठे ॥ नरेषु पुङ्गवः ॥

नरप्रियः । पुं । नीलवृक्षे । त्रि । नरस्य प्रियवस्तुनि ॥

नरवलिः । पुं । मायातौ ॥

नरभूः । स्त्री । भारतवर्षे ॥ नराणां भूः ॥

नरभूमिः । स्त्री । भारतवर्षे ॥ नराणां



भूमिः ॥

नरमानिका । स्त्री । } श्मश्रुयुक्ता-
नरमानिनी । स्त्री । } याम् ॥

नरमाला । स्त्री । मनुष्यमुण्डमालायाम् ॥

नरमालिनी । स्त्री । श्मश्रुयुक्तायाम् ॥ इतिहेमचन्द्रः ॥

नरमेधः । पुं । नरवधप्रधाने यज्ञविशेषे ॥ कलौ वर्जनीयः । यथोक्तं वृहन्नारदीये । समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैव कन्यायाः पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोमेधश्च तथा मखः । इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ इति ॥

नरवाहनः । पुं । पौलस्त्ये । कुवेरे ॥ नरो वाहनमस्य । ब० ॥ त्रि । पुरुषयानविशिष्टे ॥

नरविष्वणः । पुं । राक्षसे ॥ इति त्रिकाण्डशेषः ॥

नरव्याघ्रः । पुं । पुरुषोत्तमे ॥

नरसिंहः । पुं । हरौ । विष्णौ ॥ नरश्च

मकोषपानपरमधुकरगीतमनोज्ञ-तडाग. पञ्चमनादवादपरपरभृतकाननसतपरभाग: । वसन्तविप्रयुक्ताकुखवरतनुजीवितदामदुरन्त: किङ्कर नाथि वच्चि मम सखचरित्सविधि-मेति वसन्त: ॥

नरोत्तम: । पुं । कृतकृत्यपुरुषे ॥ यथा । य:स्वकात् परतोवेह जातनिर्वेदआत्मवान् । हृदिकृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तम: ॥ स्वकात् स्वत एव परत:परोपदेशाज्जात-वैराग्य: ॥

नर्कुटकम् । न । नासिकायाम् ॥ इति हेमचन्द्र: ॥

नर्त्तक: । पुं । केलके ॥ नटगले ॥ चारणे ॥ छिपे ॥ नटे । सर्ववेश्मनि ॥ त्रि । ताडावनुसारेणनर्त्तनकृति ॥ अस्य लक्षणंयथा । यादृशं स्वरूपं सङ्गीतयोग्यस्य तादृशम् । नृत्यस्य धारणात् पात्रं नर्त्तक: परि-कीर्त्तित: ॥ अपिच । असम्बद्धप्रलापी ... दाधुकुटिततत्पर: । हास... वाचालो नृत्यकोविद ... लोदर: ॥ नृत्यति । ... श्चिद्यिमिष्वुनि ... । गन्ध-

विन् इति रामजनी इतिचभाषा ॥ करेणौ ॥ नलिकानामसुगन्धिद्रव्ये ॥ नृत्यति । वृती० । प्वुन् । पि-त्त्वान् ङीष् ॥

नर्त्तनम् । न । नृत्ये ॥ वृती० । ल्युट् ॥

नर्त्तितम् । त्रि । सञ्जातनृत्ते ॥

नर्द्दटकम् । न । छन्दोविशेषे ॥ तल्लक्षणंयथा । यदिभवतो नजौ भजजला गुरु नर्द्दटकम् । इति ॥ यथा । व्रजवनितावसन्तलतिकाविलसन्मधुपे मधुमथनं प्रपञ्चजनवाञ्छितकल्पतरुम् । विभुमभिनौति कोपि-सुकृती मुदितेन हृदा रुचिरपदावलीघटितनर्द्दटकेनकविरिति ॥

नर्द्दनम् । न । शब्दे ॥

नर्म्मकील: । पु । भर्त्तरि । पत्यौ ॥ इति त्रिकाण्डशेष: ॥

नर्म्मठ: । पुं । चिवुके ॥ षिड्गे ॥ चूचुके ॥ परिहासके ॥ इतिश०र० ॥

नर्म्मद: । पुं । केलिसचिवे ॥ त्रि । हर्षदे ॥ नर्म्मददाति । कुदाभ्० । घति वा । दो० आतोनुपेतिक. ॥

नर्म्मदा । स्त्री । रेवायाम् । सोमोद्भवायाम् । मेकलकन्यकायाम् ॥ अस्या: स्मरणेन सर्पविषनाशोभवति । नर्म्मदायैनम:प्रातर्नर्म्मदायैनमोनिशि

। नमोऽस्तु नर्म्मदे तुभ्यं त्राहि मां विष सर्पत इति विष्णुपुराणम् ॥ पृक्कायाम् ॥ टाप् ॥

नर्म्मदाप्रभवः । पुं । तीर्थविशेषे ॥

नर्म्म । न । परिहासवाक्ये ॥ नरथम् । मृनये । मनिन् ॥

नर्म्मरा । स्त्री । दर्याम् ॥ भस्त्रायाम् ॥ सरलायाम् ॥ निष्कलाम् ॥ इत्युक्तिमेदिनिकरः ॥

नलः । पुं । नडे । पोटगले ॥ नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् । उष्णो हृद्वस्तियोन्यर्त्तिदाहपित्तविसर्पजित् ॥ नृपतिविशेषे । सूर्य्यवंशीयनिषधराजपुत्रे ॥ यथा । अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः । नलस्तु नैषधस्तस्मान्नभस्तस्मादजायत ॥ * ॥ वीरसेन नृपतेः पुत्रे ॥ यथा । नलौ द्वावेव विख्यातौ वंशे कश्यपसम्भवे । वीरसेनसुतस्तद्वन्नैषधश्च नराधिप. इति मात्स्ये १२ अध्याय ॥ * ॥ चन्द्रवंशीयनिषधराजपुत्रे । दमयन्तीपतौ ॥ यथा । कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति महाभारतम् ॥ पितृदेवे ॥ विश्वकर्म्मणः पुत्रे कपीश्वरे ॥ दैत्यविशेषे ॥ न । पद्मे ॥

नलकम् । न । शाखास्थि । नाडीवत् सरन्ध्रे ऽस्थिपर्व्वणि ॥ इतिहेमचन्द्रः ॥

नलकिनी । स्त्री । जङ्घायाम् ॥

नलकीलः । पुं । जानुनि ॥

नलकूबरः । पुं । कुवेरपुत्रे ॥ नलकूबरौ युगन्धरो ऽस्य ॥

नलदम् । न । पुष्परसे ॥ उशीरे ॥ जटामांस्याम् ॥ इतिमेदिनी ॥

नलदन्तुः । पुं । निम्बवृक्षे ॥ इतिभूरिप्रयोगः ॥

नलदा । स्त्री । मांस्याम् ॥ इतिहेमचन्द्रः ॥

नलपट्टिका । स्त्री । तल्पाख्याम् । दरमा इति गौडभाषाप्रसिद्धे कटविशेषे ॥

नलमीनः । पुं । चिलिचिममत्स्ये । नलवनचारिणि मत्स्ये ॥ नलवनस्थो मीनः नलमीन इति वा ॥

नलसेतुः । पुं । रामायणप्रसिद्धे समुद्रे सेतौ ॥ नलेन वानरविशेषेण निर्म्मितः सेतुः ॥

नलिका । स्त्री । करुणनाले ॥ नाड्याम् ॥ गौड भाषया नली इति प्रसिद्धे सुगन्धिद्रव्यभेदे । विद्रुमलतिकायाम् । कपोतचरणायाम् । इयमेतत्तरायणे प्रसिद्धा सुगन्धा प्रवालाकृतिः पवारी इति पंठारी इति क्वचित् प्रसिद्धा

॥ नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् । कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डूज्वरापहा ॥

नलितः । पुं । नालिता इति गौडभाषाप्रसिद्धे शाकविशेषे ॥

नलिनः । पुं । पानीयनारिकेले । पानीआमला इति गौडभाषा ॥ सारसपक्षिणि ॥ न । अम्बुजे । पद्मे ॥ तोये ॥ नीलिकायाम् ॥ नलति । गन्धे । घनन् ॥

नलिनी । स्त्री । पद्मिन्याम् । विसिन्याम् ॥ व्योमनिम्नगायाम् ॥ कमलाकरे ॥ नारिकेलमद्ये ॥ नलिकायाम् ॥ पद्मयुक्तदेशे ॥ नडाः सन्त्यत्र ॥ पुष्करादिभ्य इति इनिः । नलयोरैक्यम् ॥ यद्वा नलानां समूहः । खलादिभ्य इति इनिः ॥

नलिनीखण्डम् । न । नलिनीनां समूहे ॥ कमलादिभ्यः खण्डः ॥

नलिनीरुहम् । न । मृणाले ॥

नलिनेशयः । पुं । विष्णौ ॥ इति त्रि० ॥

नली । स्त्री । मनःशिलायाम् । कुनट्याम् ॥ नलिकायाम् । विद्रुमलतायाम् । शुषिरायाम् ॥ नलति । गन्ध० । अच् । गौ० ङीष् ॥

नलोत्तमः । पुं । देवनले ॥

नल्वः । पुं । किष्कुचतुःशते । चतुःशतहस्तपरिमिते देशे ॥ किष्कूणां हस्तानां चतुःशतम् । चतुर्गुणं शतम् । शा० ॥ नल्यते । णलबन्धने । उल्वादित्वात् वः ॥ कात्यस्तु नल्वं हस्तशतमित्याह ॥

नल्ववर्त्मगा । स्त्री । काकाङ्ग्याम् ॥ त्रि । नल्वपरिमितपथगामिनि ॥

नवः । पुं । स्तुतौ ॥ रक्तपुनर्नवायाम् ॥ त्रि । नव्ये । नूतने ॥ नूयते । णुस्तुतौ । ऋदोरप् ॥ अपूर्वे ॥

नवकारिका । स्त्री । नवोढायाम् ॥ इति शब्दमाला ॥ नवीनकन्यायाम् ॥ नवीने विवरणश्लोके ॥

नवकालिका । स्त्री । नवीने ॥ इति हारावली ॥

नवखम् । न । देहे ॥ नव खानि यस्य ॥ शब्दमाला ॥

नवग्रहाः । पुं । सूर्यादिनवसु ॥ ते यथा । सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नवग्रहाः ॥ नवग्रहमखं कृत्वा ततः कर्मसमारभेत् । अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥

नवच्छात्रः । पुं । त्रिधाकारे । प्रथमम् अध्ययने प्रवृत्ते नवीने विद्यार्थिनि ॥

नवतः । पुं । करिकम्बले । कुथे । नम्दा इति भाषा ॥ इति हेमचन्द्रः ॥

नवतरः । त्रि । नव्ये ॥

नवतिः । स्त्री । सङ्ख्याविशेषे । ९० नब्बे इति भाषा ॥ सङ्ख्येये ॥ नवद्शतः परिमाणमस्य । पङ्क्तिविंशति त्रिंशच्चत्वारिंश दिस्यादिनानिपातनात् प्रकृतेर्नवभावस्तिप्रत्ययश्च ॥

नवतिका । स्त्री । तूलिकायाम् ॥

नवदण्डम् । न । नृपाणां छत्रविशेषे ॥

नवद्वलम् । न । संवर्त्तिकायाम् । पद्मस्याभिनवकासमीपस्थदले ॥ नवश्चास दलञ्च ॥ सामान्यतो नूतने पत्रे ॥

नवदीधितिः । पुं । मङ्गलग्रहे । भौमग्रहे ॥ नवादीधितिर्यस्य ॥

नवदुर्गा । स्त्री । नवपत्रिकायाम् ॥ शैलपुत्र्यादिषु ॥ यथा । प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥ नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्त्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे । विषमे दुर्गमे चैव भयार्त्ताः शरणं गताः ॥ न तेषां जायते किञ्चिदशुभं रणसङ्कटे । नापदं तस्य पश्यामि शोकदुःखभयं नहि ॥ यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते ॥ इति मार्कण्डेयपुराणम् ॥

नवदोला । स्त्री । नवीनप्रेङ्खायाम् ॥

नवद्वारपुरम् । न । शरीरे । मनुष्यदेहे ॥ चक्षुषोर्द्वे देवच्छुषी द्वे नासिके श्रोत्रे द्वे शिरसि मुखं पायूपस्थाख्ये अध इति नवद्वाराणि सन्ति ॥ नवद्वाराणि यस्मिन् तत् नवद्वारम् । तच्च तत् पुरञ्चेति विग्रहः ॥

नवधा । अ । नवप्रकारे ॥ यथा । आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् । निष्ठा वृत्ति स्तपो दानं नवधा कुललक्षणम् ॥

नवधातवः । पुं । हेमादिनववस्तु ॥ यथा । हेमताररनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलोहञ्च धातवो नव कीर्त्तिताः ॥

नव । त्रि । सङ्ख्याविशेषे । ९ नौ इति भाषा ॥

नवनवत्वम् । न । नवप्रकारत्वे ॥ प्रकारैर्द्विर्भावः । कर्मधारयवद्भावात् सुपोलुक् ॥

नवनी । स्त्री । नवनीते । नैनी इति भाषा ॥ इति पुराणम् ॥

नवनीतम् । न । नवोद्धृते । घृतादि संयोगेनस्यन्दी । नैनीइति माखन इतिच भाषा ॥ नोत यदि नवनीतं

मातरजोऽङ्गनायाम् । नवरजः स्त्रियाम् ॥

नववधूः । स्त्री । नूतनपरिणीतायाम् । नवोढायाम् । नयी वहू इतिभाषा ॥

नववध्वागमनम् । न । नूतनपरिणीतायाः प्रथमतः क्रियमाणे भर्तृगृहागमने । गौनाइतिभाषा ॥

नवमः । त्रि । नवानाम्-पूरणः ॥ नवन् पूरणेडट् ॥ ङीपि नवमी ॥

नवमल्लिका । स्त्री । नवमालिकायाम् । नेयालि इति नेवोयारि इतिच गौड भाषा प्रसिद्धे पुष्पे ॥

नवमल्ली । स्त्री । नवमालिकायाम् ॥ नवा स्तुत्या मल्ली ॥

नवमालिका । स्त्री । नवमल्लिकायाम् । ग्रीष्मोद्भवायाम् । सप्तलायाम् । नेवारा इति नेवारी इतिच भाषा ॥ नवा स्तुत्या मालिका ॥

नवमी । स्त्री । शुक्लकृष्णपक्षयोस्तिथिविशेषे । इयं चन्द्रस्य नवमकला क्रियारूपा दुर्गाया स्थितिः ॥ अस्यां जातस्यफलम् । विरोधकर्त्ता सुजने रगम्यः परापकारार्थमतिः कुशीलः । आचारहीनः कुपथः कठोरः प्रसूतिकाले नवमी यदि स्यादिति ॥

नवयौवना । स्त्री । युवतौ । तरुण्याम् । दिक्कर्याम् । अतिक्रान्तमुग्धभावायाम् ।

नवं यौवनं तारुण्यं यस्याः सा ॥

नवरत्नम् । न । नवप्रकारमणिषु ॥ यथा ॥ मुक्तामाणिक्यवैदूर्यगोमेदान् वज्रविद्रुमौ । पद्मरागं मरकतं नीलञ्चेति यथा क्रमादिति तन्त्रसारः ॥ नवानां रत्नानां समाहारः ॥ * ॥ नवग्रहदोषशान्त्यै धार्याणि नवरत्नानि यथा । वैदूर्यं धारयेत्सूर्ये नीलञ्च स्वर्गवाचने । माणिक्यं पद्मरागं भौमास्त्रजे ॥ गुरौ मुक्तां भृगौ वज्रं शनौ नीलं विदुर्बुधाः । राहौ गोमेदकं धार्यं केतौ मरकतं तथेतिदीपिका ॥

नवरात्रम् । न । आश्विनशुक्लमासेषु शुक्लप्रतिपदादिनवमीपर्यन्तमवदिनकर्त्तव्ये दुर्गाव्रतविशेषे ॥ नवरात्र चतुष्टयमुक्तं देवीभागवते । चैत्रेऽश्विनेतथाषाढे माघेकार्यो महोत्सवः । नवरात्रे महाराज पूजाकार्या विशेषत इति ॥ नवानां रात्रीणां समाहारः ॥

नवरात्रिकम् । न । नवरात्रे ॥

नववरिका । स्त्री । नवोढायाम् ॥

नववल्लभम् । न । दाहागुरुणि ॥ त्रि । नवीनप्रिये ॥

नववस्त्रम् । न । नवाम्बरे । अनाहते ॥

नवयावकः । पुं । नवशाक इति गौड

भाषाप्रसिद्धे नवविधे गोपादिजातिविशेषे ॥ यथा । गोपो मालीच तैली तन्त्री मोदकवारजी । कुलालः कर्मकारश्च नापितो नवशायकाः ॥ इतिपराशरसंहिता ॥

नवश्राद्धम् । न । एकादशाहादिश्राद्धे ॥

नवसारः । पुं । न । नवसादरे ॥ तच्छुद्धिर्यथा । नवसारो भवेच्छुद्धश्चूर्णतो वेधिपाचितः । दोलायंत्रेण यत्नेन भिषग्भिर्योगसिद्धये इतिसारचन्द्रिका ॥

नवसादरम् । न । नौसादर इतिभाषाप्रसिद्धे द्रव्ये ॥ प्रतिश्यायेषु शिरसः पीडासु नवसादरम् ॥

नवसूतिका । स्त्री । अचिरप्रसूतायां धेनौ ॥ नवसूतं प्रसवोऽस्याः । शेषाद्विभाषेतिकप् । प्रत्ययस्थादितीत्वम् ॥

नवा । स्त्री । नवीनायाम् ॥

नवांशः । पुं । नवमांशे । मेषादिद्वादशलग्नानां नवमे भागे ॥ यथा । मेषाद्या मकराद्याश्च तुलाद्याः कर्कटादयः । क्रमान्नवांशा राशीनां स्वांशाद्यशोत्तमाः स्मृताः ॥ यथा । मेषे प्रथम नवांशेकांशोमेषस्य । द्वितीयांशोवृषस्य । तृतीयांशोमिथुनस्य । चतुर्थांश. कर्कटस्य । पञ्चमांशः सिंहस्य । षष्ठांशः कन्यायाः । सप्तमांशस्तुलायाः । अष्टमांशो वृश्चिकस्य । नवमांशोधनुषः ॥ * ॥ एवं वृषे प्रथमांशो मकरस्य । २ कुम्भस्य । ३ मीनस्य । ४ मेषस्य । ५ वृषस्य । ६ मिथुनस्य । ७ कर्कस्य । ८ सिंहस्य । ९ कन्यायाः ॥ * ॥ तथा मिथुने १ तुलायाः । २ वृश्चिकस्य । ३ धनुषः । ४ मकरस्य । ५ कुम्भस्य । ६ मीनस्य । ७ मेषस्य । ८ वृषस्य । ९ मिथुनस्य ॥ * ॥ एवं कर्के १ कर्कस्य । २ सिंहस्य । ३ कन्यायाः । ४ तुलायाः । ५ वृश्चिकस्य । ६ धनुषः । ७ मकरस्य । ८ कुम्भस्य । ९ मीनस्य ॥ एवं सिंहे मेषाद्याः ॥ कन्यायां मकराद्याः ॥ तुलायां तुलाद्याः ॥ वृश्चिके कर्कटाद्याः ॥ एवमेव धनुषि मेषाद्याः ॥ मकरे मकराद्याः ॥ कुम्भे तुलाद्याः ॥ मीने कर्काद्याः क्रमान्नवांशा ज्ञेयाः ॥ उक्तञ्च । मेषे नवांशा मेषाद्याः वृषे च मकरादिकाः । मिथुने च तुलाद्याः स्युः कर्कटे कर्कटादिका इति ॥

नवांशकः । पुं । नवांशे ॥

नवाङ्गम् । न । पाचनविशेषे ॥ यथा । किराताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः । कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥

नवाङ्गा । स्त्री । कर्कटशृङ्ग्याम् ॥

नवान्नम् । न । नवीनान्ने ॥ तद्विधि

त्यस्यार्द्दे ॥

नवापयस्या । स्त्री । नूतनायां क्षीरवि द्वार्य्याम् ॥

नवाभोगः । त्रि । अभिनवप्रयत्ने । महोत्साहे ॥ नवआभोगोयत्नोयस्य ॥

नवाम्बरम् । न । अनाहते । नवीन वस्त्रे ॥ नवञ्चतदम्बरञ्च ॥

नवार्च्चिः । पुं । मङ्गलग्रहे ॥ इति त्रिकाण्डशेषः ॥

नवाली । स्त्री । नवमालिकायाम् ॥

नवाहः । पुं । न । नवतिथौ । नवदिने ॥ प्रतिपत्तिथौ ॥

नवीनः । त्रि । नव्ये । नूतने ॥ नव एव । नवस्यनूत्नप्तनप्खाश्चप्रत्ययाः नूरादेशश्च ॥

नवीयस् । त्रि । नवतरे ॥

नवेदस् । पुं । अज्ञे ॥ नवेत्ति । विद० असुन् ॥

नवोढा । स्त्री । नववध्वाम् । अन्याम् । नववरिकायाम् ॥ मुग्धानायिकाभेदे ॥ यथा । वक्त्रान्नीतापार्श्वं मुखमनुमुखं नैवकुरुते धुनानामूर्द्धानं क्षिपति वदनं चुम्बनविधौ । हृदिन्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं रमयतिच सन्तापयतिचेतिरसमञ्जरी ॥ नवानूतना चासौ ऊढाविवाहिताचेतिविग्रहः ॥



नवोद्धृतम् । न । नवनीते ॥ नवञ्चतत् उद्धृतञ्च । विशेषणमितिसमासः ॥

नव्यः । त्रि । नवीने । नूतने ॥ नूयते । स्तुतौ । अचोयत् ॥ पुं । रक्तपुनर्नवायाम् ॥

नश् । न । नशने ॥ ग्राम० । आवेक्षिप् । नश्यति कर्त्तरिवाक्विप् । पङ्गवः यथा विधिकर्त्तव्याः ॥

नशाकः । पुं । काकविशेषे ॥

नशिता । त्रि । नाशाश्रये ॥ नशेस्तृन् ॥

नश्यत्प्रसूतिका । स्त्री । मृतवत्सायाम् । मृतपुत्रिकायाम् ॥

नश्वरः । त्रि । अशाश्वते । नाशप्रतियोगिनि ॥ नश्यति तच्छीलः । नश० इण्नशजिसर्त्तिभ्यः क्वरप् ॥ टिड्ढेति ङीपि । नश्वरी ॥

नष्टः । त्रि । तिरोहिते । अदर्शनविशिष्टे ॥ नाशाश्रये ॥ नश्यतिस्म । नश अदर्शने । गत्यर्थेति कर्त्तरि क्तः ॥ भावक्तान्तादर्शआद्यच् ॥

नष्टचन्द्रः । पुं । सौरभाद्रस्योभयपक्षे चतुर्थ्यामुदितेचन्द्रे ॥ यथा । नष्टश्चन्द्रो न दृश्यस्तु भाद्रेमासि सितासिते । चतुर्थ्यामुदितोऽमुत्र प्रसिद्धोमनीषिभिः ॥ चन्द्रस्यावलोकनं कलङ्कमतिदुष्करम् । तस्मा द

ददाति हैनन्द कामतो यदि पश्यति ॥ स्यमन्तकानले नरो दृष्ट्वामन्त्रपूतं जलं पिबेत् । तदा शुद्धो भवेत् सद्यो निष्कलङ्की मद्दीतले ॥ सिंहः प्रसेनमवधीत् सिंहो जाम्बवताहतः । सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥ इति मन्त्रेणपूतस्य जलस्य पिवेत् ध्रुवम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

नष्टचेष्टता । स्त्री । प्रलये । शोकादिभिर्निष्पन्दतायाम् । सर्वशोकादिभिः सकलचेष्टानाशे मूर्च्छापरपर्याये सात्विकभावे ॥ नष्टाचेष्टायस्य । तस्य भावः । तल् ॥

नष्टाग्नि. । पुं । प्रमादादिना कारणान्तरेवसेनवा त्यक्तवैताग्निके । धीरस्थि ॥ नष्टोऽग्निर्यस्य ॥

नष्टाजीव्यः । त्रि । गतजीविकासाधने ॥

नष्टासिद्धम् । न । लोप्त्रे । किञ्चित्सा सचौरनीतद्रव्ये । इति हारावली ॥

नष्टेन्दुकला । स्त्री । कुह्वाम ॥ नष्टा इन्दुकलायस्याम् ॥

नसा । स्त्री । नासिकायाम् ॥ इतित्रिकाण्डशेषः ॥

नसः । पुं । नासिकायाम् ॥ इतिशब्दमाला ॥ न । नस्ये ॥ इतिरत्नमाला ॥ पञ्चविधं नस्तकर्म यथा । प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा । शिरोविरेचनञ्चैव नस्तकर्मतु पञ्चधेति ॥

नस्ता । स्त्री । नासाकृतच्छिद्रे ॥

नस्तित । पुं । नस्तोतो । रज्जुनोस्यूत नासे गवादौ । नाथावैल इति भाषा ॥ नस्तमम् । नासकौटिल्ये । नः । नस्तं कृतमस्य । प्रातिपदिकाद्धात्वर्थे इतिणिच् । ततः कर्मणिक्तः ॥

नस्तोतः ॥ पुं । नस्तोते ॥ नस्यतेस्म । अनु० । कर्मणिक्तः । नस्तयाउतः ॥

नस्यम् । न । नस्ते । सावणे । नासिकादेयचूर्णादौ ॥ यथा । सिद्धार्थकंवचा हिङ्गुकरञ्जं देवदारुच । मञ्जिष्ठाषिफला श्वेताशिरीषो रजनीद्वयम् ॥ प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैवस्नानमुद्वर्त्तनं तथा ॥ अपस्मारविषोन्माद शोषालक्ष्मीज्वरापहम् । भूतेभ्यश्च भयं हन्तिराजद्वारेचशासेन मतिगारुडे १९९ अध्यायः ॥

नस्या । स्त्री । नासिकायाम् ॥ नासारन्ध्रम् । नकेस्यइति नाथइतिच भाषा ॥ त्रि । नासिकायां भवे ॥ नासिकायां भवा । नासिकायै हिता वा । शरीरावयवाद्यत् । नस्नासिकाया यत्तस्चुद्रेष्विति नसादेशः ॥

काञ्जिकेनच । पुनः पुटेच्छरावाभ्या मेवंषड्भिः पुटैर्मृतिः ॥ * ॥ नाग सिन्दूरवर्णाभो म्रियते सर्वकार्यकृत् ।संतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥ आयुः कीर्त्तिं वीर्यवृद्धिं करोति सेवनात्तदा । रोगाननुष्- णिमृतो नागो वङ्गवद्गुणकारकः ॥

नागकन्दः । पुं । हस्तिकन्दे ॥

नागकर्णः । पुं । रक्तैरण्डे ॥

नागकिञ्जल्कः । पुं । नागकेशरपुष्पे ॥

नागकुमारिका । स्त्री । गुडूच्याम् ॥ मञ्जिष्ठायाम् ॥

नागकेशरः । पुं । नागकेसरवृक्षे ॥

नागकेसरः । पुं । काञ्चनाह्वये । चाम्पेये । नागपुष्पे ॥ नागाख्यःकेसरः ॥

नागगन्धा । स्त्री । नाकुलीकन्दे ॥

नागगर्भम् । न । सिन्दूरे ॥

नागच्छत्रा । स्त्री । नागदन्त्याम् ॥

नागजम् । न । सिन्दूरे ॥ रङ्गे ॥ वि । नागजाते ॥ नागाज्जातम् । य- मोऽ० डः ॥

नागजिह्वा । स्त्री । अनन्तमूलायाम् ॥ मनःशिलायाम् ॥ नागानांजिह्वेव ॥

नागजिह्विका । स्त्री । नागजिह्वार्थे ॥ स्वार्थे कः ॥

नागजीवनम् । न । वङ्गे ॥ इति हेम- चन्द्रः ॥

नागदन्तः । पुं । हस्तिदन्ते ॥ गृहान्नि र्गतदारुणि । खूंटीइति दांतिया इति च भाषा ॥

नागदन्तकः । पुं । भित्तिस्थदारुणि । निर्यूहे ॥ नागदन्तएव । स्वा० कः ॥

नागदन्तिका । स्त्री । वृश्चिकाल्याम् । बिछिंटी इति गौड भाषा ॥ रास दूष्याम् ॥

नागदन्ती । स्त्री । श्वेतहस्तिन्याम् । ह- स्तिकर्णपलाशाम् । भूकुष्माण्डाम् ॥ कुम्भास्यभेपले । नागकुम्बीति प्रसि द्धौषधौ ॥

नागदमनी । स्त्री । क्षुपविशेषे । वन्- ध्याम् । दुःखशायाम् । मसणुन्याम् ॥

नागदलोपमम् । न । पद्मपफले । पान् का इति भाषा ॥

नागद्रुः । पुं । सुधायाम् । समन्तदुग्धा याम् ॥

नागद्वीपः । पुं । भारतवर्षस्थो पद्वीप विशेषे ॥

नागनामा । पुं । तीसके ॥

नागनिर्यूहः । पुं । नागदन्तके ॥

नागपत्रा । स्त्री । नागदमन्याम् ॥

नागपत्री । स्त्री । लक्ष्मणायामोषधौ ॥

नागपदः । पुं । रतिबन्धविशेषे ॥ यथा । पादौ स्कन्धे तथा हस्ते निधाय जङ्घे सध्य । कामदेत् कामुको नारी

वन्धो नागपदो मतः ॥ इति रति० ॥

नागपाशः । पुं । वरुणस्य आयुधे ॥ ग्रन्थिविशेषे । सार्द्धद्वयावर्त्तनासु नागपाश इति स्मृतः ॥ ग्रन्थिमयोऽस्त्रं नागपाश यथा प्रविश्यागमः ॥

नागपाशकः । पुं । रतिबन्धविशेषे । यथा । स्वजङ्घाद्वयमध्यस्थौ हस्ताभ्यां धारयेत् कुचौ । रमेत्रिःशङ्कितः कामी बन्धोऽयं नागपाशकः ॥ इति रतिमञ्जरी ॥

नागपुरम् । न । पाण्ड्यदेशेऽनेन नाम्ना प्रसिद्धे नगरे । उरगपुरे ॥ हस्तिनापुरे ॥ वङ्गपुराख्ये गङ्गायमुनयोः स्नायप्रसिद्धे देशविशेषे ॥

नागपुष्पः । पुं । पुन्नागवृक्षे ॥ नागकेसरे ॥ नागपुष्प. कषायोष्णो रूक्षो लघ्वामपाचनः । ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनः । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहः ॥ चम्पके ॥

नागपुष्पफला । स्त्री । कुष्माण्ड्याम् ॥

नागपुष्पिका । स्त्री । स्वर्णयूथ्याम् ॥

नागपुष्पी । स्त्री । गजपुष्प्यां लतायाम् ॥ नागिन्याम् ॥ नागदमन्याम् ॥

नागफणः । पुं । पटोले ॥

नागबन्धु । पुं । अश्वत्थवृक्षे ॥ नागानामबान्धवे ॥

नागबलः । पुं । भीमसेने ॥ त्रि । हस्तितुल्यपराक्रमे ॥

नागबला । स्त्री । गाङ्गेरुक्याम् । गोरक्षचाकुलिया इति गौडभाषा ॥ नागानां हस्तिनां बला ॥

नागभृत् । पुं । कुक्कुरसर्पे ॥ इति त्रिकाण्डशेषः ॥

नागमल्लः । पुं । ऐरावते । शक्रगजे ॥

नागमाता । स्त्री । कद्रवाम् ॥ मनसादेव्याम् ॥ मनःशिलायाम् ॥

नागमारः । पुं । केशराजे । भृङ्गराजे ॥ त्रि । हस्तिमारके ॥

नागयष्टिः । स्त्री । पुष्करिण्यादि खातकाष्ठविशेषे । नागाख्यकायाम् । इद काठ इति गौड भाषा । जाखम इति भाषा ॥

नागयष्टिका । स्त्री । खातस्थकाष्ठविशेषे । नागाख्यकायाम् । जाखम इति भाषा ॥

नागरः । पुं । देवरे ॥ नागरङ्गे ॥ न । मुस्तके ॥ शुण्ठ्याम् ॥ रतबन्धे । त्रि । विदग्धे ॥ नगरोद्भवे ॥ नगरेभवः । तत्रभवइत्यण् ॥ यद्वा । नगं राति । रा० । क. । न नगरः । नकारेण समुपेतिसमासः ॥

नागरकः । पुं । चौरे ॥ चित्रलेखका

दिग्विजयिनि ॥ नगरे भवः । नागरा-
त् कुलत्वप्रावीण्ययोरिति वुञ् ॥
रतिबन्धविशेषे । यथा । ऊरुमूले
परिक्षिप्य योषितूरुद्वयं यदि । यो
बाधृत्वान्तराभ्यां च बन्धो नागरकोम
त इति रतिमञ्जरी ॥

नागरत्तम् । न । सिन्दूरे ॥ नागरक्षो
षिते ॥

नागरघनः । पुं । नागरमुस्तायाम् ॥

नागरङ्गः । पुं । जम्बीरविशेषे । ऐराव
ते । नारङ्गे । नरङ्गी इति भाषाप्र-
सिद्धे । फलवृक्षे ॥ नागारङ्गोऽप्यत्र । र
त्ना० । फलरसेतिवचन ॥ नागरक्षि
न्द्रयथोरङ्गोऽस्त्वेति वा ॥

नागरमुस्तकम् । न । भद्रमुस्तके ॥

नागरमुस्ता । स्त्री । मुस्ताप्रभेदे । च-
क्राङ्कायाम् । नादेय्याम् । चूडाला-
याम् । नागरमोथा इति भाषा ॥

नागराजः । पुं । अनन्ते । शेषे ॥ नागा-
नां राजा । राजाहःसखिभ्यष्टच् ॥
पिङ्गलनागे ॥ ऐरावते ॥

नागराह्वम् । न । शुण्ठ्याम् ॥

नागरी । स्त्री । स्नुहीवृक्षे ॥ विदग्ध-
नार्याम् ॥ नागरभार्यायाम् ॥

नागरीटः । पुं । नागरीभिः कृतेऽन्नन्य
शब्दे ॥ विड्गे ॥

नागरुकः । पुं । नागरङ्गे ॥



नागरेणुः । पुं । सिन्दूरे ॥

नागरेयकः । त्रि । नगर्यां भवादौ ॥ क
त्र्यादित्वाड्ढकञ् ॥

नागलता । स्त्री । मेहने । शेफसि ॥
अतिविषकाण्डभेदः ॥ ताम्बूल्याम् ॥

नागलोकः । पुं । पाताले ॥ नागानां
लोकः ॥

नागवल्लरी । स्त्री । नागवल्ल्याम् ॥

नागवल्लिका । स्त्री । नागवल्ल्याम् ॥

नागवल्ली । स्त्री । ताम्बूल्याम् । पानकी
बेल इति भाषा ॥ नागलोकस्य वल्ली
। शा० ॥ इयं च श्रीमद्रामवाटादि-
नानाग्रामस्थानभेदादेवभिन्ना ।
एकाप्येषा देशसत्त्वाविशेषान्नाना
कारं याति नाम्ना गुणैश्च । यथा ।
श्रीवाटीमधुरा तीक्ष्णा वातपित्त-
कफापहा । रसाढ्या सरसा च वि
पाके शिशिरा मता ॥ आदमवाटी
कटुकाक्षारिका तीक्ष्णा तथोष्णानु
रूपाकरी । विदाहपित्तास्रविक्षो
भनी च विष्टम्भदा वातनिवर्हणी च ॥
सप्तसोमधुरा तीक्ष्णा कटु कषाय
पाचनी । गुल्मोदराध्मानहरा रुचि
कृद्दीपनी परा ॥ * ॥ अन्यच्च । गुहा
गरे सुस्थिरा प्रसिद्धा तत्पर्णचूर्णानि
रसातिरुच्या । सुगन्धितीक्ष्णा मधु
रातिहृद्या सन्दीपनी पुंस्त्वकरा च द-

ल्या ॥ विरेचनी वक्त्रसुगन्धिकारिणीति ॥ * ॥ नागवल्ल्या रसास्तीक्ष्णमधुरा रुच्या वह्निमार्दवनुत्पित्तो द्रेकस्वरासुदीपनकरी वल्ल्या मुखामोदिनी । स्त्रीसौभाग्यविवर्द्धिनी मदकरी श्रेया सदा वक्त्रगा गुल्माध्मानविबन्धजिच्च कथिता सामाखवेतुस्थिता ॥ अन्यिपुच्छिकानामकषायोष्णा कटुरसा । मलापकर्षा कफवातपित्तहा श्वासमापिनी ॥ वैधियी याकटुस्तीक्ष्णा हृद्या दीर्घदल्याघसा । कफवातहरा बल्या कटुदीपनपाचनीति राजनिर्घण्टः ॥

नागवारिकः । पुं । राजकुञ्जरहस्तिपे ॥ गणाध्यक्षे ॥ गरुडे ॥ चित्रमेखले । मयूरे ॥

नागवीटः । पुं । ख्याकरा इति गौडभाषाप्रसिद्धे । टाङ्करे ॥ इति चिकाण्डशेषः ॥

नागवीथी । स्त्री । अश्विन्यादिनक्षत्रत्रयघटितग्रहस्थानमध्यान्तर्गतो सञ्चारस्थानस्य पथविशेषे ॥ यथा । सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः । स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ॥ वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः । तदेव सर्वमोत्तरं दक्षिणमार्गस्य प्रत्येकं वीथीत्रयेणाभिधीयते । तथाहि । विभिस्त्रिभिरश्विन्यादिनक्षत्रै नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । तथा चोक्तम् । अश्विनी कृत्तिकायाम्या नागवीथीति शब्दिता । इति विष्णुपुराणम् ॥ कश्यपापत्यविशेषे ॥

नागवृत्तः । पुं । नागकेसरे ॥

नागशुण्डी । स्त्री । हस्तिशुण्डीफले ॥

नागसम्भवम् । न । सिन्दूरे ॥ नागसीसंसम्भवोऽस्य ॥

नागसुगन्धा । स्त्री । भुजङ्गाक्ष्याम् ॥

नागस्तोकम् । न । वत्सनाभे ॥

नागस्फोता । स्त्री । दन्त्याम् ॥ नागदन्त्याम् ॥

नागहनुः । पुं । नखनामगन्धद्रव्ये ॥

नागवन्ती । स्त्री । वन्ध्याकर्कोटक्याम् ॥

नागाख्यः । पुं । नागकेसरे ॥ न । हस्तिनापुरे ॥

नागाङ्गना । स्त्री । नागपत्न्याम् ॥ नागयष्टौ ॥ इति मेदिनी ॥ द्विरदस्य शुण्डे ॥ इति हेमचन्द्रः ॥

नागाम्बष्ठा । स्त्री । नागवत्स्याम् ॥

नागाधिपः । पुं । अनन्ते ॥ हस्तिराजे ॥

नागाननः । पुं । श्रीगणेशे ॥ नागस्यानन मस्य । समुदायशब्दा अवयवेष्वपि वर्त्तन्त इति नागमुखपरो नागशब्दः ॥

नागान्तकः । पुं । गरुडे ॥ नागानामन्तकः ॥

नागारातिः । पुं । वन्ध्याकर्कोटक्याम् ॥

नागालाबुः । स्त्री । कुम्भतुम्ब्याम् ॥

नागाशनः । पुं । गरुडे ॥ नागान् अश्नाति । अश० । ल्युः ॥ नागा अशनं यस्येति वा ॥

नागाह्वम् । न । हस्तिनापुरे ॥

नागाह्वा । स्त्री । लक्ष्मणाकन्दे ॥

नागिनी । स्त्री । नागपुष्प्याम् ॥ नागवल्ल्याम् ॥ नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तजित् । विनिहन्ति विषं शूलं योनिदोषविनिघ्नी ॥

नागी । स्त्री । उभयोपायाम् । स्नुषा-योगजयोरिति ॥ नागशब्दाक्त्वात् पदेति ङीष्योर्थे ङीष् ॥

नागोदम् । न । उदरत्राणे ॥ इति हेमचन्द्रः ॥

नागोदरम् । न । उरस्त्राणे ॥ इति शब्दरत्नावली

नाचिकेतः । पुं । अनले ॥ नचिकेतसा मासे वैदिकोपाख्यानविशेषे ॥

नाचिकेतुः । पुं । वह्नौ ॥ इति त्रिकाण्डशेषः ॥

नाटः । पुं । नृत्ये ॥ कर्णाट इति प्रसिद्धदेशे ॥

नाटकः । पुं । कामाख्यायां पर्वतविशेषे ॥ यथा । ऐशान्यां नाटकः शैलो यत्र शङ्करस्य महाश्रमम् । नित्यं वसति तन्नेशस्तद्धीनातुपार्वतीति कालिकापुराणम् ॥

नाटकम् । न । महारूपके । गद्यपद्यप्राकृतभाषामये ग्रन्थविशेषे ॥ देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः । राजर्षिदर्शनान्तं वा तैरपि दैवैः समामताः ॥ त्रि । नर्त्तके ॥ नाटयति । नाटेर्ण्वुल् ॥

नाटकशैलः । पुं । गिरिविशेषे ॥ यथा । अस्ति नाटकशैले तु सरो मानससन्निभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीडां सदाहरः ॥ कुरुते नरशार्दूल स्वर्णपङ्कजशोभिते । तस्य पश्चात् मध्यपूर्वभागे व्यथसरित्त्रयम् ॥ अवतीर्णं प्रयात्येव दक्षिणं सागरं प्रति । इति कालिकापुराणे ८० अध्यायः ॥

नाटकसन्धिः । पुं । मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यपञ्चभेदभिन्ने ॥ यथा । मुखं प्रतिमुखंचैव गर्भो विमर्श एव च । तथा निर्वहणञ्चेति नाटके पञ्चसन्धय इति ॥

नाटकीयम् । न । नाटकपर्य्ये ॥ नाटके भवम् । वृद्धाच्छः ॥

नाटाम्रः । पुं । तरम्बुजे । खर्ब्बूजे ॥

नाटारः। पुं। नटतनये॥ नटस्या म
त्यम्। आरगुदीचामित्यारक्॥

नाटिका। स्त्री। नाटकविशेषे॥

नाटेयः। पुं। नट्या अपत्ये॥

नाटेरः। पुं। नटीसुते॥ इति हेम
चन्द्रः॥

नाट्यम्। क्लीं। तौर्य्यत्रिके। नृत्यगीत
वाद्यात्मके॥ लास्ये, नर्त्तने॥ वाक्या
र्थाभिनये॥ नटस्येदम्। छन्दोगौ
क्थिकेति ञ्यः॥ यो यस्येदयितो भा
वः सतं नाट्येन निरीक्षते। अतः सर्व
मनोहारि नाट्यं कस्य न रञ्जकम्॥
अस्योत्पत्तिर्यथा। इत्थान्तु श्रूयते ब्र
ह्मा ब्रह्मणा प्रार्थितः पुरा। चकारा
हूय वेदेभ्यो नाट्यवेदन्तु पञ्चमम्
॥ उपवेदाश्च वेदानां चत्वारः कथि
ताः स्मृतौ। तथोपवेदो गान्धर्व्वः शि
वेनोक्तः स्वयम्भुवे॥ तेनापि भरता
योक्तस्तेन मर्त्ये प्रचारितः। शिवाज्ञ
योऽभिभरतात् साक्षादस्य प्रयोजका
इति सङ्गीतदामोदरः॥ नटानाञ्
कर्म। ष्यञ्॥

नाट्यधर्म्मिका। स्त्री। दर्शनार्थं शास्त्रो
क्तनाट्ये॥ यथा। गीतवाद्यन्त्यत्र
यं नाट्यं तौर्य्यत्रिकञ्च तत्। सङ्गीतं
प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मि
केति हेमचन्द्रः॥

नाट्यप्रियः। पुं। शिवे॥

नाट्यशाला। स्त्री। प्रासादद्वारसमी
पगृहे। नाट्यमण्डप इति भाषा॥ य
था। नाट्यशाला च कर्त्तव्या द्वारदे
शसमाश्रयेति गरुडपुराणम्॥

नाट्यालङ्कारः। पुं। सङ्गीतप्रसिद्धे च
तुष्षष्टिप्रकारे नाट्यभूषणहेतौ॥ त
च्चप्रकारः सङ्गीतदामोदरादिभ्यो ज्ञा
तव्यः॥

नाट्योक्तिः। स्त्री। नाटकविषयक-
वचसि॥ नाट्ये उक्तिः॥ सा यथा।
आर्य्येति ब्राह्मणे। महाराजेति च-
त्रिये। हलेति सख्यौ। हण्डे इति नी
चे। हञ्जे इति चेट्याम्। आर्य्यपुत्रेति
स्वामिनि॥ राष्ट्रियेति राजश्याले।
हङ्हो इति समाने। देवेति राजनि।
भट्टेति सार्व्वभौमे। आवुत्तेति भगिनी
पतौ। अज्जुका इति गणिकायाम्।
भाव इति विदुषि। आवुक इति जन
के। युवराजो भर्त्तृदारक इति च कु
मारे। देवो भट्टारक इति च राजनि
। भर्त्तृदारिकेति राजसुतायाम्। दे
वी इति कृताभिषेकायां नृपस्त्रियाम्
। भट्टिनी इति इतरासु राज्ञीषु। अन्य
स्त्रीणामित्थं यथोचितौ। अम्बेति मा
तरि। बाल इति बालायाम्। मारि
ष इति आर्य्ये। अन्तिकेति ज्येष्ठायां भ

गिन्याम् । निर्व्यापमितिनिष्ठायाम् ॥ इत्यमरः ॥

नाडिः । स्त्री । नाड्याम् ॥

नाडिकम् । न । कालशाके ॥ इतिभावप्रकाशः ॥

नाडिका । स्त्री । घटिकायाम् । घडी इतिभाषा ॥

नाडिकेलः । पुं । नारिकेले ॥

नाडिचीरम् । न । निर्वेष्टने । नलीइतिगौडभाषा ॥ इतिहारावली ॥

नाडिन्धमः । पुं । स्वर्णकारे ॥ नाडीं धमनीं धमति । ध्माधेटादिसंयोगयोः । नाडीमुष्ट्योश्चेति कर्त्तरि खश् । घ्मेतिध्मादेशः । खित्यनव्ययस्येतिह्रस्वः ॥

नाडिन्धयः । पुं । नाडीपानकर्त्तरि ॥ नाडीं धयति । धेट् । नाडीमुष्ट्योश्चेतिखश् । ह्रस्वः ॥

नाडिपत्रम् । न । नाडीचशाके ॥

नाडी । स्त्री । शिरायाम् ॥ तत्र कायनाडी त्रिविधा । तत्रैका वायुवहा । अन्या मूत्रविड्स्थिरसवाहिनी । अपरा आहारवाहिनीति कश्चिद्भरतः ॥ * ॥ अथ नाडीक्रमः । सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम् । नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्ध्वमधः स्थिताः ॥ द्विसप्ततिसहस्राणि तासां स्थूलाः प्रकीर्त्तिताः । देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणावहाः ॥ तासान्तु सूक्ष्मसुषिराणि शतानि सप्त स्युर्यैरसकृदन्नरसं वहद्भिः । आप्यायते वपुरिदं हि नृणाममीषां स्रोतःस्रवद्भिरिव सिन्धुशतैः समुद्रः ॥ आपादतः प्रततगात्रमशेषमेषामामस्तकादपि च नाभिपुरःस्थितेन । एतन्मृदङ्गइव चर्म्मचयेन नद्धं कायं नृणामिह शिराशतसप्तकेन ॥ * ॥ सप्तानां मध्ये चतुरधिका विंशतिः स्फुटास्तासाम् । एकापरीक्षणीया वृश्चिकाकरचरणविन्यस्ता ॥ चतुर्दिकेतितदुक्तम् । तिर्य्यक्कूर्म्मो देहिनां नाभिदेशे वामे वक्त्रं तस्य पुच्छं च याम्ये । ऊर्द्ध्वभागे हस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥ वक्त्रे नाडीद्वयं तस्य पुच्छे नाडीद्वयं तथा । पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥ तासां मध्ये एकैकेति । एकस्या एव पादाङ्गुष्ठमूलात् दक्षिणेति प्राधान्ये पुरुषाश्रयादुक्तम् । वामे भागे स्त्रिया योज्या नाडी पुंसस्तु दक्षिणे । इति प्रोक्ता मया देवि सर्व्वदेहेषु देहिनाम् ॥ * ॥ नपुंसकस्य तु स्त्रीपुंसयोरन्यतराकारप्रकटतामपेक्ष्य परीक्षा । साम्य

गुनस्यादेव । कूर्चिमस्यतुप्रकृतिस्थ
ता । चरणेति वामस्यतु दक्षिणाग्र
न्थिपश्चात्पार्श्वस्था । दक्षिणस्यतु
वामग्रन्थिपश्चात्पार्श्वस्थैव सदुपदे
शात् । करस्यातुवक्ष्यते ॥ * ॥ प
रीक्षाप्रकारमाह । सव्येन रोग
धृतिकूर्परभागभाजा पीडाथ दक्षि
णकराङ्गुलिकात्रयेण । अङ्गुष्ठमूलम
धि पश्चिमभागमध्ये नाडीं प्रभञ्ज
नगतिं सततं परीक्षेत् ॥ सव्येन क
रेण । रोगधृतिर्गृहधारणा भिषग्वा
पीडने हेतुः । रोगाणां वातादि पि
त्तकफानां धारकं यथा-स्यात् तथा
पीड्येति कश्चित् । भागइति समुदि
तकफोपिपरम् भाजेति परीक्षा
कालेपि तत्र स्थितये । आपी-
ड्येत्यर्थात् नाडीम् एतच्चापीडनं वा
तादि दीर्घापर्य्यायबोधनाय । अथे
त्या पीडनानन्तरम् ननु परीक्षा-
कालेप्यापीडनस्थितिः । दक्षिणेति
प्रायिकम् स्वपरीक्षाया अन्यथात्वा
त् । त्रयेति योग्यतया तर्जनीमध्य
मानामिकाग्रहणम् । पश्चिमेत्य
ङ्गुष्ठस्याधोभागः । मूलेति तदुक्तम् ।
अङ्गुष्ठस्यतु मूलेया धमनी जीवसा
क्षिणी । तच्चागतिवशाद्विद्यात् सु
खं दुःखञ्च देहिनाम् ॥ प्रभञ्जनग

नाडी

तिर्य्यचेति नाड्यन्तरनिरासः । सतत
मिति सुस्थतादशायामपि । तदुक्त
म् । भाविरोगाभिबोधाय सुस्थनाडी
परीक्षणमिति ॥ * ॥ परीक्षणीय
माह । वातं पित्तं कफं द्वन्द्वं सन्निपा
तं तथैवच । साध्यासाध्यविवेकञ्च
सर्वं नाडी प्रकाशयेत् ॥ सन्निपात
मिति सामान्यतः । साध्यासाध्यमि
ति विशेषतश्चेत्यर्थः । सर्वमित्यनेन
द्व्यन्यरोगादिक मित्युपसंहारः ॥
इति नाडीप्रकाशे प्रथमोद्योतः ॥ * ॥
अथ नाडीज्ञानसमय माह । प्रातः
कृतसमाचारः कृताचारपरिग्रहम्
। सुखासीनः सुखासीनं परीक्षार्थ
मुपाचरेत् ॥ प्रातरिति प्रायिकम् म
ध्याह्ने उष्णता इत्युक्तेः ॥ * ॥ नि
षिद्धकालमाह । सद्यः स्नातस्य भुक्त
स्य क्षुत्तृष्णातपसेविनः । व्याया
माक्रान्तदेहस्य सम्यङ् नाडी न बुध्य
ते ॥ तैलाभ्यङ्गेच सुप्तेचतथाचभो
जनान्तरे । तथा न ज्ञायते नाडी य
था दुर्गतरा नदी ॥ सुप्ते निद्राकाले
। भोजनान्तरे भोजनमध्ये भोजना
वसानमात्रेच । वातमूर्च्छादिस्थि
तरोगे नायंविधिः ॥ * ॥ अथ वाता
दिस्वभावक्रममाह । आदौच वहते
वातो मध्येपित्तं तथैवच । अन्तेच

वहते श्लेष्मा नाडिकापयलच्चयम्
॥ आदाविति। कफोऽग्निपीडितदिती
यचके। ननु तर्जनीनिवेशस्थले श्ले
ष्मभेदस्य कुतोऽप्यवस्थमावात् ॥ *
॥ सुस्थतापरिज्ञानार्थं माह। भुक्तमा
त्रमनुप्राया स्वच्छा स्वास्थ्यमयी शिरा।
प्रायेति बाहुल्येन। स्वच्छा परितो
ऽव्याख्यपेक्षिता। स्वास्थ्यमयी सुस्थता
व्यञ्जिकाच। तथा प्रातःस्निग्धमयी
नाडी मध्याह्ने चोष्णतान्विता। सा
याह्ने धावमानाच चिराद्रोगविवर्जि
ता ॥ चिरादिति। अतीतानागतयो
र्द्वयोरप्युक्तिः पथ्यासितानामेव ॥ *
॥ वातादीनां क्रमेण गतिमाह।
वाताद्वक्रगता नाडी चपला पित्त
वाहिनी। स्थिरा श्लेष्मवती ज्ञेया मि
श्रिते मिश्रिता भवेत् ॥ वक्रेति।
वायोस्तिर्यग्गमनात् तिरोवहन्ती
ति। एवं तत्प्रकोपादिना धमन्यादि
गतिरपि ज्ञातव्या। चपलेति। वह्ने
रूर्ध्वज्वलनादूर्ध्वं चञ्चला। स्थिरेति
जलस्य नीचगमनादनुल्बणा। मिश्रि
ते मिश्रितचिह्नाभवति। तेन द्विदो
षजे उभयचिह्ना। सर्वजे सर्वचिह्नेति।
चपलतास्थिरतयोः समयभेदेनावि
रोधः ॥ * ॥ उक्तरक्तादिसामान्यस्य
विशेषमाह। सर्पजलौकादि गतिं व



दन्ति विबुधाः प्रभञ्जनेन नाडीम्। पि
त्तेन काकलावकभेकादि गतिं विदुः
सुधियः ॥ राजहंसमयूराणां पारा
वतकपोतयोः। कुक्कुटादिगतिं धत्ते
धमनी कफसंगता ॥ काठिन्या वाते
सुषिरवक्रगति दीर्घायिता। काठिन्य
त्वेन पित्ते कलिङ्गकखञ्जादिगतिः
। कफे गजवराङ्गनादिगतिः ॥ * ॥ द्व
न्द्वजस्यापि क्रमेणैव भेदमाह। मु
हुः सर्पगतिं नाडीं मुहुर्भेकगतिं त
था। वातपित्तद्वयोद्भूतां प्रवदन्ति वि
चक्षणाः ॥ भुजगादिगतिं चैव राज
हंसगतिं धराम्। वातश्लेष्मसमुद्भूतां
भाषन्ते तद्विदो जनाः ॥ मण्डूकादि
गतिं नाडीं मयूरादिगतिं तथा। पि
त्तश्लेष्मसमुद्भूतां प्रवदन्ति मनी-
षिणः ॥ * ॥ त्रिदोषजां त्वाह। स
र्गादिलावकादिहंसादीनां च बिभ्र
ती गमनम्। वातादीनां च समं ध
मनीसन्धं भाषन्ते ॥ सममिति
न्यूनाधिकता निरासः। क्रमगत्यास्तु
नासाध्यत्वम्। तथा। वातपित्तादि
धर्मोकागमनं सन्निपाततः। कदाचि
न्मन्दगा नाडी कदाचित् शीघ्रगा भ
वेत् ॥ त्रिदोषप्रभवे रोगे विज्ञेया
हि भिषग्वरैः। पित्तकफतया कृ
च्छ्रसाध्यत्व मसाध्यत्वञ्च ॥ * ॥ सा

रुच्छ्राच वक्राच तामसाथां विदुर्बुधाः ॥ अष्युचा सहजतोप्युच्चतरा पृथगिवोन्नतावा। कदाचिद्दिति स्थिरा प्रणिधानेनैव गम्यमानस्पन्दा च। मांसवाहिनी मांसाधारद्व गलितती गुरुप्रायेति। तदुक्तम्। मांसेन गुरुाकृतिः। मांसेनसमं वहतीति यदुक्तं तद्रूपपरिचायकम कारणानुक्तत्वात्। इयमपिविशिष्ट बोधनाय। यावद्रुच्छ्राचवक्राचेति पृथगिववाक्यान्तरमिति ॥ * ॥ असाध्यत्वापवादमाह। भागमयाद्यमूर्च्छा भयशोकप्रमुखकारणान्नाडी। सम्मूर्च्छितापिगाढं पुनरपिसाजीवितं धत्ते ॥ चिरत्वबहुलभारोद्वहनेनवा विषवेगधारावाहिरुधिरदर्शनादिज्ञनितमूर्च्छयावा राक्षसादिसन्दर्शनादिभयेनवा पुत्रादिविरहजनितशोकातिरेकेणवा सम्मूर्च्छितापि अतिनिस्पन्दापि। गाढमिति सुतरां कार्श्यादियोगेपीत्यर्थः। पुनरितिस्वास्थ्यतां यातीत्यर्थः। भागानां रथ्यादीनां ग्रहाद्यदिति न युक्तम् भयशोकयोः पृथग्विधानात्। प्रमुखेत्यनेन हेत्वन्तराभिधानम्। तदुक्तम्। पतित. सन्धितो भेदी नष्टशुक्रश्च यो नरः। शाम्यते विस्मय स्तस्य न किंचिन्मृत्युकारणम् ॥ पतित उच्चादितः सन्धितोऽस्थ्यादिसन्धानेन संहितः। भेदी अतीसारवान्। नष्टशुक्रो यक्ष्मादिनातिरमणेनवा शुक्रक्षयात्। विस्मयोऽसाध्यत्वानुमानं शाम्यति नावतरति। कारणं प्रागुक्तमेतदेव। अन्यच्चापि। तथाभूताभिषङ्गेपिवित्रिदोषवदुपस्थिता। समाक्षयते नाडी तथाच न क्रमंगता ॥ भयरुग्भूतरोगार्त्ता नाडी सतु सन्निपातवत्। भूताभिषङ्गे तथा भूतसामान्याभिषङ्गेच देवगुर्वादौ नाडी सन्निपातधर्मयाविर्भीउपस्थिता। आयासतएव भवति नतु सत् फलप्रदा। भेदमाह। समेति। वातपित्तकफस्वभावक्रमवती तथाक्रमं व्यतिक्रमं नगता। तस्मादेव अपमृत्युः अपगतो मृत्यु र्यस्या. सा तथा। परमार्थत.सन्निपातवदपि सन्निपातजन्या न स्यादिति। तदुक्तम्। स्वस्थानहीने शोकेच हिमाक्रान्तेच निर्गदाः। भवन्ति निश्चला नाड्यो न किंचित् तत्र दूषण मिति ॥ स्वस्थानहीन उच्चादितः पतने। अङ्गुष्ठमूलस्थस्था इति तुल्यार्थः। निर्गदा इत्यत्रहसि. निर्गदा अपिनिश्चला भवन्ति। दूषणमसाध्यत्वभ्रमः। अन्ये

ध्रुवम् । तदानूनं मनुष्यस्य रुधिरा पूरिता मता. ॥ * ॥ आगन्तुकरूप मेदमाह । भूतज्वरे वेकद्याति वेगा धावन्ति नाड्योऽपि यथाग्निगामाः । तथा । एकाहिकेन क्वचन प्रदूरेण शान्तगामा विषमज्वरेण । द्वितीयके चापि तृतीयतुर्ये गच्छन्ति तप्ता भ्रमिवत् क्रमेण ॥ * ॥ अन्यचापि । उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते । उद्वेगक्रोधकामेषु भयचिन्ता श्रमेषु च ॥ भवेत् क्षीणगति र्नाडी ज्ञातव्या वैद्यसत्तमैः ॥ प्रसङ्गादाह । व्यायामे भ्रमणे चैव चिन्तायां श्रम शोकतः । नानाप्रभावगमना शिरा गच्छति विज्वरे ॥ * ॥ अजीर्णरूप माह । अजीर्णे तु भवेन्नाडी कठिना परितो जडा । प्रसन्ना च द्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥ * ॥ तच्छ्रेषमाह । पक्वाजीर्णे पुष्टिहीना मन्द मन्द वहेच्छिरा । असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी ॥ * ॥ प्रसङ्गात् भक्ष्यजातमाह । पुष्टिस्तैल गुडाहारे मांसे च लगुडाकृतिः । क्षीरे च स्तिमिता वेगा मधुरे भेकवद्गतिः ॥ रम्भागुडवटाहारे रूक्षशुष्का दिभोजने । वातपित्तार्त्तिरूपेण नाडी वहति निष्फुरम् ॥ * ॥ षड्रस



ज्ञानम् । मधुरे बर्हिगमना तिक्ते स्या दूर्भूलता गतिः । अम्ले कोष्णा प्लवग तिः कटुके भृङ्गसन्निभा ॥ कषाये कठिना म्लाना लवणे सरला द्रुता । एवं द्वित्रिचतुर्योगे नाना धर्मवती धरा ॥ तथा । द्रवेऽतिकठिना नाडी कोमला कठिनाशने । द्रवद्रव्यस्य काठिन्ये कोमला कठिनापि च ॥ चैवाहि पृथक् सन्निवेशपिष्टे पुष्टेव जायते ॥ * ॥ अग्निमान्द्यधातुक्षयलक्षणमाह । मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत् । तदुक्तम् । क्षीण धातोश्च मन्दाग्नेर्नाडी क्षीणतमा ध्रुवम् । तथा । मन्देऽग्नौ क्षीणतां याति नाडी हंसाकृतिस्तथेति । अन्येतु । आमाशये पुष्टिविवर्द्धनेन भवन्ति नाड्योऽग्निभुजाभिभूता । आहारमान्द्या दुपवासतो वा तथैव नाड्यो भुजगायमानाः ॥ * ॥ प्रसङ्गात् दीप्ताग्निमानमाह । लघ्वी भवति दीप्ताग्ने स्तथा वेगवती मता ॥ * ॥ प्रसङ्गात् अन्वरी मप्याह । पादे च हंसगमना करे मण्डूकसप्लवा । तस्याश्च मन्दता देहे त्वयत्रा अश्वरी गदे ॥ तथा । भेदेन याम्ता धरणी गदेन निर्वीर्यरूपा त्वतिसारभेदे । विलम्बिकायां प्लवगा कदाचित् दामा

तिसारेपृथुता जडाच ॥ * ॥ अथ विसूचिकाज्ञानम् । निरोधे मूत्रशकृतोर्विड्ग्रहे स्तिरास्थिताः । विसूचिकाभिभूतेच भवन्ति भेकवत् क्रमाः ॥ * ॥ प्रसङ्गा ज्ञानाश्मरूपकृच्छ्रज्ञान माह । आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिस्थता ॥ * ॥ शूलज्ञान माह । वातेन शूलेन मरुत् प्रवेन सदैव वक्रा हि शिरावहन्ती । ज्वालामयी पित्तविचेष्टितेन साध्या न शूलेनच पृष्ठक्रमा ॥ * ॥ अथप्रमेहज्ञानम् ॥ प्रमेहे ग्रन्थिरूपा स्याद्धता रक्तामदूषणे ॥ * ॥ विषविष्टम्भगुल्मज्ञानमाह । तत्पित्तरूपा विषदिष्टिकायांविष्टम्भगुल्मेन च वक्ररूपा । अन्त्यर्थवातेन अधःस्फुरन्ती संस्तानभेदिन्यसमास्काले ॥ * ॥ गुल्मे विशेष माह कश्चित् । गुल्मेन कम्पा ऽथ पराक्रमेण पारावतस्येव गतिञ्च करोति ॥ * ॥ अथ भगन्दरज्ञानम् । प्रयाति कठिने देहे प्रयाति पैत्तिकं क्रमम् । भगन्दरानुरूपेण नाडीप्रथानिवेदने ॥ प्रयाति वातिकं रूपं नाडी पावकरूपिणी ॥ * ॥ अथ वान्तादिज्ञानम् । वान्तस्य शल्याभिहतस्य जन्तोर्वेगावरोधाकुलितस्य भूयः । गतिं



विधत्ते धमनी गजेन्द्रमरालमाने च कफोल्वणेन ॥ * ॥ स्त्रीरोगादिकमपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ॥ क्वचित् प्रकरणोल्लेखात् क्वचिद्दौचित्यमाश्रितः । क्वचिद् देशात् क्वचित् कालात् सङ्कीर्णमहनिर्णयः ॥ नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन शास्त्रीन् मयोक्तं यत् तत् समाधेय सुत्तमैः ॥ * ॥ इतिशङ्करसेनकविराजकृतौ नाडीप्रकाशे तृतीयोल्लासः ॥ * ॥ * ॥ * ॥ अथ भावमिश्रोक्ता नाडी परीक्षा । पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः ॥ अङ्गुलीभिस्तिसृभिर्नाडी मवहितः स्पृशेत् । तच्चेष्टया सुखं दुःखं जानीयात् कायतो ऽखिलम् ॥ सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः । व्यायामश्रान्तदेहस्य सम्यङ् नाडी न बुध्यते ॥ वाते ऽधिके भवेन् नाडी प्रव्यक्ता तर्जनी तले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥ तर्जनीमध्यमामध्ये वातपित्ते ऽधिके स्फुटा । अनामिकायां तर्जन्यां व्यक्ता वातकफे भवेत् ॥ मध्यमानामिकामध्ये स्फुटा पित्तकफे ऽधिके । अङ्गुलि

चितेऽपि स्यात् मन्थरा सन्निपातिनः ॥ वाताद्वक्रगतिं नाडी पित्तादुत्प्लुत्यगामिनी । कफात् मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता ॥ वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः । वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिकेऽन्ततः ॥ उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके । कामात् क्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता ॥ स्थिरास्थिरा चलेद्या सा प्राणच्युता तथा । अतिक्षीणा च शीता च प्राणान् हन्ति न संशयः ॥ ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् । मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा मता ॥ चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा । सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता ॥ इति ॥ * ॥ * ॥ * ॥ प्रसङ्गाद्योगिनामुपकाराय इडादिनाडीनां निरूपणम् । दक्षिणाङ्गे स्मृतः सूर्यो वामभागे निशाकरः । नाडीद्वयं विदुस्तासु मुख्या तिस्रः प्रकीर्त्तिताः ॥ इडा वामे तयोर्मध्ये सुषुम्णा पिङ्गला परे । मध्या तास्वपि नाडी स्यादग्नीषोमस्वरूपिणी ॥ अनेका वाममुष्काधः स्याधनुर्वक्राधमनासापर्य्यन्तंगता । एवं पिङ्गला दक्षिणाण्डाधः स्या धनुर्वक्रा दक्षिणनासान्तंगता ॥ पृष्ठवंशान्तर्गता सुषुम्णा च स्थिरा ॥ इति सारदातिलकम् ॥ * ॥ नाडीनां संस्थानादि चक्रयोनिः खगाण्डवत् । तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ कन्दस्य पश्चात् योनि कल्पमिव स्थानं यावूकमिति यावत् ॥ प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः । इडा च पिङ्गला चैव सुषुम्णा च तृतीयिका ॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ॥ अलम्बुषा कुहूश्चैव शङ्खिनी च दश स्मृताः ॥ एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके । इडायाः पिङ्गलायाश्च मध्ये यासा सुषुम्णिका ॥ इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका । रजोगुणा च सव्या स्याद्विशिणी सत्त्वसंयुता ॥ तमोगुणा यच्च नाडी कार्य्यभेदक्रमेण चेति निबन्धतन्त्रे प्रथमः पटलः ॥ * ॥ इडापिङ्गलयोः स्वरूपं यथा । इडा च शङ्खचन्द्राभा तस्या वामे व्यवस्थिता । पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रितेति योगार्णवः ॥ इडायां संस्थितश्चन्द्रः पिङ्गलायां दिवाकर इति तन्त्रान्तरम् ॥ गुण्डकस्य काण्डे । नाले ॥ ग्रन्थान्तरे ॥ गण्डदूर्वायाम्

॥ कुहनचर्य्यायाम् ॥ षट्क्षणकाले । घटिकायाम् । षष्टिपलात्मककाले ॥ व्रणान्तरे ॥ वेष्टितसूत्रस्याधारभेदे ॥ नाडयति नलध्वनेनवा । न- लगन्धे । यथाच । डलयोरैकत्वम् । गौरादित्वात् ङीप् ॥ यद्वा । नाडयति नाड्यते वा । भक्ष्यांशे । चुरादिः । अच् । ङीप् ॥

नाडीकः । पुं । पट्टशाके । पटुआ इति भाषा ॥ नाडीकोरक्तपित्तघ्नो पिटक्षी वातकोपन इतिभावप्रकाशः ॥

नाडीकलापकः । पुं । सर्पाक्ष्याम् ॥

नाडीकेलः । पुं । नारिकेले ॥ इतिशब्दरत्नावली ॥

नाडीचः । पुं । शाकविशेषे । केचुके । विस्वरोचने ॥ नाडीचशाकं द्विविधं तिक्तं मधुरमेवच । रक्तपित्तहरंतिक्तं कृमिकुष्ठविनाशनम् ॥ मधुरपिच्छिलंशीतविष्टम्भिकफवातकृत् ॥ इतिराजवल्लभः ॥

नाडीचक्रम् । न । नाभिमण्डलस्थेच क्रविशेषे ॥ नाभिमण्डलमासाद्यकुक्कुटाण्डमिवस्थितम् । नाडीचक्रमितिप्राहु स्तस्मान्नाड्यः समुद्गताः ॥

नाडीचरणः । पुं । खगे । पक्षिणि ॥

नाडीजङ्घः । पुं । काके ॥ ब्रह्मणोद्



यितेवकविशेषे ॥ मुनिविशेषे ॥

नाडीतरङ्गः । पुं । काकोले ॥ हिण्डके ॥ रतहिण्डके ॥ इतिमेदिनी ॥

नाडीतिक्तः । पुं । नेपालनिम्बे ॥

नाडीदेहः । पुं । भृङ्गिनाम्नि शिवस्य द्वारपाले ॥

नाडीनक्षत्रम् । न । जन्मनक्षत्रे ॥

नाडीविग्रहः । पुं । भृङ्गिणि । शिवद्वारपालविशेषे ॥

नाडीव्रणः । पुं । संहारकद्रव्ये । नाडीसमर्हति नसूर इतिभाषा ॥ नाड्यांव्रणः ॥ विलङ्गत्रिफलाव्योषाच्चूर्णंखादसमांशिकम् । हन्तिकुष्ठंकृमीन्मेहनाडीव्रणभगन्दरान् ॥ इतिगरुडपुराणम् ॥

नाडीशाकः । पुं । नाडीके ॥

नाडीशेषः । पुं । भृङ्गिणि । शिवद्वाःस्थे ॥

नाडीहिङ्गु । न । हिङ्गुप्रभेदे । यथा शब्दे । रामठ्याम् ॥

नाणकः । त्रि । प्रशस्ते ॥ मुद्रा कुत्सित ॥ टङ्किवदु ॥ न । मुद्राचिह्नितनिष्कादौ ॥ यथा । तुलाशासनमानानां कूटकृन्नाणकस्यच । एभिश्चय व्यवहर्त्ता स दाप्योदण्डमुत्तममिति याज्ञवल्क्यः ॥

नातिमानिता । स्त्री । अतिमानित्वाभावे । पूज्येषु नम्रतायाम् ॥

नाथः । पुं । । कुलगुरौ ॥ कुलपरम्परागतस्वामिनि ॥ नासारज्जौ ॥ से व्ययुक्ते । अधिपे । आर्ये । स्वामिनि ॥ त्रि । प्रार्थनीये ॥

नाथमानः । त्रि । उपतप्यमाने ॥ याचमाने ॥

नाथवान् । त्रि । पराधीने । परतन्त्रे ॥ नाथोऽस्यास्ति) तदस्यास्तीति मतुप् ॥

नाथहरिः । पुं । पशौ ॥ नाथं हरतीति विग्रहे हरतेर्इतिनाथयोः पशाविति नाथकर्मोपपदाद्धरतेरिन् प्रत्ययः ॥

नादः । पुं । ध्वनौ । शब्दे ॥ वर्णे ॥ अर्द्धेन्दौ । अर्द्धमात्रायाम् ॥ णद० । घञ् ॥ ब्रह्मस्वरूपे घोषविशेषे ॥ यथा ॥ सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततोनादस्तस्माद्बिन्दुसमुद्भवः ॥ नादो बिन्दुश्च बीजञ्च सएव त्रिविधो मतः । भिद्यमानात् पराद्बिन्दोरुभयात्मा रवो भवत् ॥ स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत्परमिति ॥ सकलात् मूर्त्तात् । नादो घोषः । बिन्दुः प्रयत्नः सचवास्य सर्वैश्वर्यप्रभवत्वात् ॥ * ॥ नाभे रूर्द्धं हृद्दिस्थानान्मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ अपिच । आकाशाग्निमरुज्जातो नाभे रूर्द्धं समुच्चरन् । मुखेऽभिव्यक्त मायाति यः स नादइतीरितः ॥ सचप्राणिभवोऽप्राणिभवश्चोभयसम्भवः । आद्यः कायभवो वीणादिभवस्तु द्वितीयकः ॥ तृतीयो विषवंशादिभव इत्थं त्रिधा मतः । यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्चयोमतः ॥ तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः । वह्निमारुतसंयोगान्नादः समुपजायते ॥ न नादेन विना गीतं न नादेन विना स्वरः । न नादेन विना रागस्तस्मान्नादात्मकं जगत् ॥ न नादेन विना ज्ञानं न नादेन विना शिवः ॥ नादरूपं परं ज्योतिर्नादरूपी परं हरिः ॥ इति सङ्गीतदामोदरः ॥

नादेयम् । न । सैन्धवलवणे ॥ सौवीराञ्जने ॥ नदीनदसम्बन्धिजले ॥ शेषिकेष्वर्थेषु नद्यादिभ्यो ढक् ॥ नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् । नादेयमुदकं रूक्षं वातलं लघु दीपनम् ॥ अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ॥ नद्यः शीघ्रवहा लघ्व्यः सर्वायाश्चामलोदकाः । गुर्व्यः शैवलसञ्छन्ना मन्दगाः कलुषाश्च याः ॥ नदीसरस्तडागस्थेष्वपश्च

यथादिषे । उदके देशभेदेन गुणान् दोषांश्चलक्षयेत् ॥ पुं । काशवृक्षे ॥ वानीरवृक्षे ॥ त्रि । नदीनदसम्भिन्नलादौ ॥ नदीभवे ॥ अगाधे ॥ अवश्यदेये ॥ यथा । नादेयंनादेयं शरदि वसन्तेष नाऽऽदेयमिति । अस्यार्थः । नदीभवं नादेयं जलं शरदि न अदेयम् । अपितु देयं दातव्यमिति । वसन्तेष पुनरादेव नादेयं नद्याम्बुमिति ॥

नादेयिका । स्त्री । नादेय्याम् ॥ नादेय्येव । स्वार्थे कः । ह्रस्वः ॥

नादेयी । स्त्री । नागरङ्गे ॥ जयायाम् । पताकाविशेषे । वैजयन्तिकायाम् ॥ अम्बुवेतसे ॥ भूमिजम्बाम् ॥ जवायाम् ॥ बहुह्रे ॥ अग्निमन्थे ॥ काकजंघाम् ॥ नद्याभवा । नद्यादिभ्यो ढक् । टिड्ढेतिङीप् ॥

नाना । अ । विनार्थे ॥ नाना नारीं निष्फला लोकयात्रेतियथा ॥ अनेकार्थे ॥ यथा । नानाविधं देवभूतां समागमम् ॥ उभयार्थे ॥ नेति नाना । विनञ्भ्यांनानाञौनसहेति नञो-न.प्रत्ययः ॥

नानाकन्द. । पुं । पिण्डालौ ॥ बहुविधमूले ॥

नानात्वम् । न । अनेकभावे । द्वैतदर्शने ॥ यथा । जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते । नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसमिति गौडपादाः ॥ द्वैतं हि सर्वं प्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैःकुतार्किकैर्विरचितं नानात्वदर्शनं मनुसद्वितीयमेको स्यादित्युच्यानिन्द्यते यथेह वाचा. स्मृतेय इत्यादिश्रुत्याच ॥

नानाध्वनिः । पुं । वीणावेणुकांस्यतालादिशब्देषु ॥ इति शब्दावली ॥

नानाननः । त्रि । अनेकविधास्ये ॥ नानाप्रकाराणि आननानि यस्य ॥

नानारूपः । त्रि । बहुविधे । विविधे । अनेकप्रकारे ॥ नाना रूपं यस्य ॥

नानार्थः । त्रि । अनेकार्थे ॥ भिन्नप्रयोजने ॥

नानावर्णः । पुं । बहुविधशुक्लादिवर्णे । त्रि । कर्बुरे ॥ त्रि । तद्वति ॥

नानावादानुरोध. । त्रि । भगवति परमेश्वरे ॥ अस्ति नास्ति सर्वगः अल्पगः बद्धःमुक्त एकः अनेक इत्यादीन् नानावादान् अनुरुणद्धि माययानुवर्त्ततेय इतिव्याख्यानात् ॥

नानाविधः । त्रि । अनेकप्रकारे ॥ नानाविधा यस्यासः ॥

नानुष्ठेयः । त्रि । अकर्त्तव्ये । अननुष्ठेये ॥

नान्तरीयकम् । त्रि । अवश्यभाविनि ॥

यथा। प्रतिबन्धकाभावे नान्तरीयकी कार्य्योत्पत्तिः । अवश्यम्भाविनी-त्यर्थः ॥

नान्त्रम् । न । स्तोत्रे ॥ नमति अनेनना । पम० । असुजिशमिनकीतिष्ट्रन् इति ॥

नान्दी । स्त्री । समृद्धौ ॥ नाटकादौ मङ्गलश्लोके । मङ्गलपाठे ॥ यथोक्तं भरतादिभिः । आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्त्तते । देवद्विजनृपादीनां तस्मान्नान्दीति सा स्मृता ॥ * ॥ नाटके विघ्नविघातार्थादौ नान्दी कार्य्या । यदाह भरतः ॥ यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नप्रशान्तये ॥ देवद्विजनृपादीनामाशीर्वादपरायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिता ॥ अन्यच्च । देवद्विजनृपादीनां आशीर्वन्दनपूर्विका । नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुता ॥ गङ्गा नागपतिः सोमः सुधानन्दा जया प्रियः । एभिर्नामपदैः कार्य्या नान्दी धाराभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता । आशीर्वादपरा नान्दी योज्येयं मङ्गलात्मिका ॥ काचिदष्टपदा नान्दी काचिद्द्वादशपदा तथा । सूत्रधारः पठेन्नान्दीं मध्यम स्वरमाश्रितः ॥ इति भरतीमाधवटीका ॥

नान्दीकः । पुं । तोरणस्तम्भे ॥

नान्दीकरः । त्रि । नान्दीवादिनि । नान्दीपाठकारिणि ॥ नान्दी आशीर्मङ्गलादिरूपं मङ्गलं करोति यः इति । दिवाविभेतिटः ॥ भेरी प्राया नान्दीसवादनशीले इति केचित् ॥ अत्र दिक्ष्वौ वादनार्थो विख्याहुः ॥

नान्दीपटः । पुं । वीनाहे । कूपादीनां मुखबन्धने ॥ इति हेमचन्द्रः ॥

नान्दीमुखः । पुं ॥ कूपादिमुखबन्धने । नान्दीपटे ॥ वृद्धिश्राद्धभुजि, पितृगणे ॥ यथा । नान्दीमुखं पितृगणं, पूजयेत् प्रयतो गृहीति विष्णुपुराणम् । सपत्नकः पित्रादित्रिकम् मातामहादित्रिकञ्चेति ॥ न । वृद्धिश्राद्धे ॥

नान्दीमुखी । स्त्री । सामगेतरवृद्धिश्राद्धभुक्पितृगणे ॥ शर्करीछन्दोभेदे ॥ स्वरभिद्वियद्विनौती चनान्दीमुखी गौ । यथा । सारसखगकुलालापनान्दीमुखीयं शरद्भुजगताचारफेनच्छिन्तश्रीः । मुरहरकथयास्मिन्मासाद्य किन्न प्रमुदितहृदया भानुजा न्वती ह ॥

नान्दीवादी । त्रि । नान्दीश्लोकपाठकारिणि । नान्दीकरे ॥ नान्दीवदनशी

त्वः । सुपीतिवद्दोर्बोनिः ॥ न ट्का दे। मङ्गलार्थं भेर्यादिवादके ॥

नापितः । पुं । मार्हश्रतिख्याते वर्णसङ्करजातिविशेषे । क्षौरकर्मव्यवसायिनि । धुरिणि । पट्टिकायां कुबेरिणो जाते । इति प० प० ॥ शूद्रायां क्षत्रिया ज्जातोऽयमिति विवादार्णवसेतुः ॥

नापितशालिका । स्त्री । नापितशालायाम् । क्षौरगृहाम् ॥

नाभकः । पुं । वनतिक्ते ॥

नाभागः । पुं । नभगात्मजे ॥ नभगस्यापत्यम् । अण् ॥

नाभिः । पुं । मुख्यनृपे । क्षत्रियविशेषे ॥ चक्रमध्ये । रथचक्रपिण्डिकायाम् ॥ क्षत्रिये ॥ स्त्री । कस्तूरी ॥ पुं । स्त्री । प्राण्यङ्गविशेषे । उदरावर्ते । तुन्दकूप्याम् ॥ संज्ञीति भाषा ॥ त्रि । प्रधाने । मुख्ये ॥ नह्यते अत्र । नह० । नह्हो भश्चेति इञ् ॥ नभ्यते कर्णेन नभ्यते ऽनया ऽस्यां वा । णभ० । इञजादिभ्यः ॥ यद्वा नाभयति । स्वार्थे ण्यन्तादिञ् ॥

नाभिकण्टकः । पुं । गर्भण्डे ॥ आवर्ते ॥ इति शब्दरत्नावली ॥

नाभिका । स्त्री । कटभीवृक्षे ॥

नाभिगुडकः । पुं । गर्भण्डे । तोण्डे । फूलीसूंढी इति टूंडीर इति भाषा ॥

नाभिगोलकः । पुं । स्फीतनाभौ । नाभिकण्टके । गर्भण्डे ॥ नाभेर्गोलकः ॥

नाभिजः । पुं । ब्रह्मणि । कमलासने ॥

नाभिजन्मा । पुं । ब्रह्मणि । स्रष्टरि । विधातरि ॥ नाभौ जन्मास्य ॥

नाभिनाला । स्त्री । अमरायाम् । नाभिसम्बन्धिन्यां नाड्याम् ॥

नाभिभूः । पुं । अब्जयोनौ । ब्रह्मणि ॥

नाभिवर्षं । पुं । भारतवर्षे ॥

नाभी । स्त्री । नाभौ ॥ स्तम्भे ॥ कृदिकारादिति ङीष् ॥

नाभीलम् । न । नार्या वङ्क्षणे ॥ नाभिगाम्भीर्ये ॥ कृच्छ्रे ॥ गर्भण्डे । नाभिगोलके ॥

नाभ्यम् । त्रि । नाभिहिते ॥ नाभये हितम् । शरीरावयवाद्यत् । नाभि नभं चेति नाभेर्नभादेशस्तु न भवति । तस्यावयवादित्यतासन्निधेयाभिहितत्वेन रथनाभावेव प्रवृत्तेः ॥ नाभिसम्बन्धिनि ॥

नाम । अ । कोपे ॥ अभ्युपगमे ॥ विस्मये ॥ स्मरणे ॥ सम्भाव्ये । सम्भावनायाम् ॥ कुत्सायाम् ॥ प्राकाश्ये ॥ विकल्पे ॥ अलीके ॥ इत्यादेतदर्थे ॥ नामयति नाम्यते वा । सम्प्रत्ययो । अन्येभ्योऽपीति ड. ॥

नामकरणम् । न । संस्कारविशेषे ॥

 

नामकरणम्। तच्चनाम शर्म्मवर्म्मा द्युपपदं तत्त्वेन कर्त्तव्यम्। यथा। ततस्तु नाम कुर्व्वीत पितैव दशमेऽहनि। देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्॥ शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्त्रसंश्रयम्। गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः॥ नार्थहीनं न चाशस्तं नापशब्दयुतं तथा। नामाङ्गल्यं जुगुप्स्यं वा नाम कुर्य्यात् समाक्षरम्॥ नातिदीर्घं नातिह्रस्वं नातिगुर्व्वक्षरान्वितम्। सुखोच्चार्य्याक्षरं नाम कुर्य्यात् यत्प्रवणाक्षरम्॥ प्रवणाक्षरं लघ्वक्षरम्। इति विष्णुपुराणम्॥ *॥ अयुग्मदान्तं तथा स्त्रीणामिति गोभिलः। अयुग्मक अयुगक्षरम्। दान्तं दकारान्तम्। यथा। यशोदा धनदेत्यादि॥ *॥ अत्र महाभाष्यं यथा। दशम्यां पुत्रस्य। याज्ञिका पठन्ति दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्य्यान्न तद्धितमिति। न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुमिति॥ दशम्युत्तरकालमिति पञ्चमीति योगविभागात् समासः। तत्र कालशब्देन बहुव्रीहिः। क्रियाविशेषणञ्चैतत्। दशाहानन्याशौचं भवतीति दशम्युत्तरकालमित्युक्तम्। यदपि सूत्रकाराः पठन्ति दशम्यां पुत्रस्येति तैरपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम्। घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि। अन्तरन्तःस्थमिति। मध्ये यरलवा अस्येत्यर्थः। त्रिपुरुषानूकमिति। नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुक्रायत्वभिधत्त इति त्रिपुरुषानूकम् अन्येषामपि द्रष्टव्यमिति दीर्घेइति कैयटः॥ तत्र श्रीपूर्व्वकत्वं यथा। देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत्॥ स्वर्गकामित्वादिनासिद्धोऽधिकारो येषां नराणां नित्यत्वेन श्रीशब्दादिर्भवति श्रीमद्वादिश्चनाम्नो न सन्तानयेति शिष्टाचारः॥

नामद्वादशी। स्त्री। व्रतविशेषे॥

नामधेयम्। न। नामनि॥ नामैव। भागरूपनामभ्यो धेयः इति स्वार्थे धेयः॥ नामधेयानान्तु विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। तथाहि। उद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दो यागनामधेयम्। तेन च विधेयार्थपरिच्छेदः क्रियते॥

नाम । न । आकाशादिदेहान्ते संज्ञा
विशेषे । सत्त्वप्रधाने नामधेये । वाच
कशब्दे । अख्यायाम् । आह्वायाम् ।
पर्य्याये ॥ नम्यते ऽभिधीयते ऽर्थोनेन
। मन० । नामन्सीमन्निति निपाति
तः ॥ यद्वा । म्नायते । अभ्यस्यते ।
म्ना० । नाम न्निष्क्याद्विना निपातेमोन्त
लोपः ॥ न नामग्रहणं कुर्यात्कृपणस्य
गुरोस्तथा । भार्य्यायाश्चाभिशस्तस्य जन
कस्य विशेषतः ॥ आत्मनाम गुरोर्नाम
नामातिकृपणस्य च । श्रेयस्कामो
न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥
नमस्यार्थ्यातार्थं प्रतिविशेषणीभव
तीतिव्युत्पत्त्या स्यादिविभक्त्यर्हे शब्दे
॥ यथा । उणादयन्तं कृदन्तञ्च तद्धिता
न्तं समासजम् । शब्दानुकरणञ्चैव ना
म पञ्चविधं स्मृतम् ॥ सर्वाण्येतानि
नामानि परस्य ब्रह्मणोनघ । सर्वान्
कामानवाप्नोति समाराध्य जगद्गुरुम्
॥ सम्यक्त्वेन गोविन्दमिन्येतद्वाक्
भ्यनान्यथा । तत्र ये वाञ्छितान् का
मान् प्रदास्यामीति मानवः ॥ प्रतिवि
ष्णुधर्मवचनम् ॥ चक्रायुधस्य नामानि
सदा सर्वत्र कीर्त्तयेत् । नाशौचं कीर्त्त
नेतस्य स पवित्रकरो यतः इति पुराणम्
॥ भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशार
द । कलौ धर्मबहुलेन राज्ञां का गति

र्भवेत् । यद्यस्ति तदुपायोपि दयया
तं वदस्व मे । इति जन्मेजयप्रश्ने व्यास
उवाच ॥ एक एव महाराज त
त्रोपायोस्ति नापरः । सर्वदोषनि
रासार्थं ध्यायेद्देवीपदाम्बुजम् ॥ न
सन्त्यघानि तावन्ति यावती शक्ति
रस्ति हि । नाम्नि देव्याः पापदाहे तस्मा
द्भीतिः कुतो नृप ॥ अवशेनापि यन्ना
म लीलयोच्चारितं यदि । किं किं द
दाति तन्नूनं समर्थाः सर्वरादयः ॥
प्रायश्चित्तन्तु पापानां श्रीदेवीनाम
संस्मृतिः । तस्मात्कलिभयाज्ञानन्तु
घसन्देवेषु सन्नरः ॥ निरन्तरं परम्बा
या नामसंस्मरणं चरेत् । छित्त्वा भि
त्त्वा च भूतानि हत्वा सर्वमिदं जगत् ॥
देवीं नमति भक्त्या यो न स पापैर्वि
लिप्यते । रहस्यं सर्वशास्त्राणां मया रा
जनुदीरितम् ॥ विमृश्यैतदशेषेण
भज देवीपदाम्बुजम् । अजपां नाम
गायत्रीं जपन्ति निखिला जनाः ॥ म
हिमानं न जानन्ति मायाया वैभवं मह
त् । गायत्रीं ब्राह्मणाः सर्वे जपन्ति हृद
यान्तरे ॥ महिमानं न जानन्ति मायाया
या वैभवं महत् ॥ एतत्सर्वं समाख्या
तं यत् पृष्टन्त्वयानघ । युगधर्मव्यव
स्थायां किं भूयः श्रोतुमिच्छसि ॥ इ
ति श्रीदेवीभागवते महापुराणे ९ स्क

न्धे ११ ध्यायः ॥

नामयज्ञः । पुं । दीक्षितःसोमयाजी-त्यादिनामसमावस्यादकेऽध्वरे ॥ नाम्ने यज्ञः ॥

नामशेषः । त्रि । मृते ॥ इतिहेमचन्द्रः ॥

नामापराधः । पुं । पापोत्तरवक्ष्यमाणे साधुनिन्दादिरूपदुरदृष्टजनकव्यापारविशेषे ॥

नामापराधी । त्रि । नामापराधकर्त्तरि ॥

नायः । पुं । नये । नीतौ ॥ नयनम् । णीञ् प्रापणे । श्रिणीभुवोऽनुपसर्गइतिघञ् ॥ नयति । दुन्योरनुपसर्गइति णो वा ॥

नायकः । त्रि । नेतरि ॥ श्रेष्ठे । प्रधाने ॥ पुं । हारमध्यमणौ ॥ भर्त्तरि ॥ सेनापतौ ॥ शृङ्गारसाधके ॥ नयति । णीञ् । ण्वुल् ॥

नायकाधिपः । पुं । नरेन्द्रे । राजनि ॥

नायिका । स्त्री । दुर्गायाअष्टनायिकाशक्तिषु ॥ शृङ्गाररसालम्बनविभावरूपायांनार्याम् ॥ कस्तूरीविशेषे ॥ यथा । पूर्वाकृतिस्तुसदिका तिलकातिलाभा कौमत्यवीजसदृशीचकुलत्थिकाख्या । स्थूलाततःकियदियं किलपिण्डकाख्यात् तस्याश्चकिञ्चिदधिकाधिकनायिकैषा ॥ इतिराजनि

र्घण्टः ॥

नारः । पुं । तर्णके ॥ नीरे । जले ॥ न । नराणां समूहे ॥ त्रि । परमात्मसम्बन्धिनि ॥ नरसम्बन्धिनि ॥ नराणांसमूहेऽण् ॥ नरस्यायम् । तस्येदमित्यण् ॥ मलमूत्रपुरीषास्थिनिर्गतंस्नायुविस्तृतम् । नारंस्पृष्ट्वातुसचेलंसचेलोजलमाविशेदितिस्मृतिः ॥

नारकः । पुं । नरके ॥ नरान् कायति । कै । मू० । कृञादिभ्यःसंवुन् । ततः प्रज्ञाद्यण् ॥ त्रि । नरकस्थे ॥ नरकेभवः । तत्रभवइत्यण् ॥

नारकी । त्रि । नरकस्थे ॥ यथा । परेऽविवित्तंकर्मस्वकर्मैतिवदेश्च यः । स उच्यतेब्रह्मघाती महानारकिनारकी ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥

नारकीटः । पुं । अश्मकीटे । कुक्कुरकीटे । धग्गीइतिभाषा ॥ त्रि । स्वादृशाशाविघ्नकारि ॥ इतिमेदिनी ॥

नारङ्गः । पुं । पिप्पलीरसे । कामरसे ॥ यमजप्राणिनि ॥ विटे ॥ नारङ्गीतिख्याते । नागरङ्गे ॥ नारङ्गं मधुराम्लंस्याद्रोचनंवातनाशनम् । अपरन्त्वम्लमत्युष्णंदुर्जरंवातकृत्सरम् ॥ * ॥ लघुदीपकमत्यन्तं ॥ यथा । नारङ्गकेसरसपाकृतयौसपूरयोम्नाति खण्डमरिचोद्भवचूर्णमिश्रम् । अन्नं गले

मवत्वंद्दुतम् ॥

नाराचिका । स्त्री । नाराच्याम् ॥

नाराची । स्त्री । एषणिकायाम् । स्वर्णकारादीनां सौक्ष्मतुलाविशेषे । कांटा इति नारचा इति च भाषा ॥ गौरादित्वात् ङीष् ॥ स्वल्पो नाराचो वा अभेदो नाराचीतिकश्चित् ॥

नारायणः । पुं । अच्युते । भगवति । वासुदेवे ॥ निरुक्तिर्यथा ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति मनुः ॥ यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयते ऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥ इति मन्त्रगौः । नारायणाय नम इत्ययमुमेव सत्यं संसारघोरविषसंहरणाय-मन्त्रम् । मृण्वन्तु भव्यमतयो यतयो ऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्द्ध्वबाहुरिति न्वसिंहपुराणम् ॥ भाद्विकमित्याद्यतु नाराज्जातानि तत्त्वानि नाराणीतिविदुर्बुधाः । तान्येवायनं तस्य तेन नारायणः स्मृतः ॥ नराणां समूहो नारम् । तस्येदम् इत्यण् । तदयनमस्य । पूर्वपदादितिणत्वम् ॥ यद्वा । नराज्जाताः नाराः आपः । ता अयनं यस्य ॥ कचिन्मन्वन्तरे नरस्य धर्मस्यापत्यमुपगत-



इति । नरस्यापत्यम् । नडादिभ्यः फक् इति नारायणः ॥ श्रीकृष्णे ॥ नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी । नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव माया ॥ श्रीकृष्णस्य सेनाविशेषे ॥ धर्मपुत्रर्षिविशेषे ॥ सन्न्यासिनां परिणामके ॥ दण्डग्रहणमात्रेण नरो नारायणो भवेदिति स्मृतेः ॥

नारायणचक्रम् ॥ न । गङ्गाप्रवाहावधिहस्तचतुष्टयमिते नारायणस्वामिकस्थाने ॥ यथा । प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचनेति ॥

नारायणतैलम् । न । औषधमक्षतैलविशेषे ॥ तत् त्रिविधम् । स्वल्पं बृहन्महच्चेति भेदात् ॥ यथा । बिल्वाग्निमन्थश्योनाकपाटलाः पारिभद्रकाः । प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणे ऽम्भसः पचेत् ॥ पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम् । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ एषां द्विपलिकान् भागान्

पेषयित्वा विनिः क्षिपेत् । शतावरी
रसश्चैव तैलतुल्यं प्रदापयेत् ॥ आ
जं वायदि वा गव्यक्षीरं दत्त्वा चतुर्गुण
म् । * । पाने वस्तौ तथाभ्यङ्गे भोज्ये
चैव प्रशस्यते ॥ अश्वो वा वातसम्भग्नो
गजो वा यदि वा नरः । पङ्गुः पीठस
र्पी च तैलेनानेन सिध्यति ॥ अधोभा
गे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्र-
हे ॥ यश्च शुष्यति चैकाङ्गं गतिर्यस्य च
विह्वला । क्षीणेन्द्रिया नष्टशुक्रा ज्वर
क्षीणाश्च ये नराः ॥ बधिरा लल्लजिह्वा
श्च मन्दमेधस एव च । अल्पप्रजा च या
नारी या च गर्भं न विन्दति ॥ वातार्त्तौ
वृषणौ येषामन्त्रवृद्धिश्च दारुणा । एत
त् तैलवरं तेषां नाम्ना नारायणं स्मृत
मिति स्वल्पनारायणतैलम् ॥ * ॥ श
तावरी चांशुमती पृश्निपर्णी शटी बला
। एरण्डस्य च मूलानि बृहत्योः पूति
कस्य च ॥ गवेधुकस्य मूलानि तथा स
हचरस्य च । एषां दशपलान् भागा
न् जलद्रोणे विपाचयेत् ॥ पादशेषं
रसे पूते गर्भं चैनं समावपेत् । पुनर्न
वा वचा दारु शताह्वा चन्दनागुरु ॥ शै
लेयं तगरं कुष्ठमेला मांसी स्थिराव-
ला । अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि
च पेषयेत् ॥ गव्याजपयसः प्रस्थौ द्वौ



द्वावत्र प्रदापयेत् । शतावरीरसप्र-
स्थं तैलप्रस्थं विपाचयेत् ॥ * ॥ अस्य
तैलस्य सिद्धस्य शृणु वीर्यमतः परम्
। अश्वानां वातभग्नानां कुञ्जराणां
तथा नृणाम् ॥ तैलमेतत् प्रयोक्तव्यं
सर्ववातनिवारणम् । आयुष्मांश्च न
रः पीत्वा निश्चयेन दृढो भवेत् ॥ ग
र्भमश्वतरी विन्द्यात् किम्पुनर्मानुषी
तथा । हृच्छूलं पार्श्वशूलञ्च तथैवा
र्द्धावभेदकम् ॥ अपचीं गण्डमालाञ्च
वातरक्तं हनुग्रहम् । कामलां पाण्डु
रोगञ्च अश्मरीञ्चापि नाशयेत् ॥ तै
लमेतद् भगवता विष्णुना परिकीर्त्ति
तम् । नारायणमिति ख्यातं वातान्त
कारणं शुभमिति बृहन्नारायणतैलम्
॥ * ॥ बिल्वाश्वगन्धा बृहती श्वदंष्ट्रा श्यो
नाकवाट्यालकपारिभद्रम् । क्षुद्रा क
ठिल्लातिबलाग्निमन्थं मूलानि चैषां
सहचायुतानाम् ॥ मूलं विदध्याद्दशपा
टलीनां प्रत्येकमेषां प्रपदन्ति तज्
ज्ञाः ॥ सपादप्रस्थं विधिनोद्धृतास्वद्रो
णै रपामष्टभिरेव पक्त्वा ॥ पादावशे-
षेण रसेन तेन तैलाढकाभ्यां समसे
व दुग्धम् । छागस्य मांसद्रवमेव तुल्य
मेकत्र सम्यग् विपचेत् सुबुद्धिः ॥ दद्या
द्रसश्चैव शतावरीणां तैलेन तुल्यं पु
नरेव तत्र । रास्नाश्वगन्धाद्रुमदारुका

भवत्यंद्रुतम् ॥

नाराचिका । स्त्री । नाराच्याम् ॥

नाराची । स्त्री । एषणिकायाम् । स्वर्णकारादीनां लौहतुलाविशेषे । कांटा इति नारचा इति च भाषा ॥ गौरादित्वात् ङीष् ॥ स्वल्पो नाराचो वाऽस्य भेदो नाराचीति कश्चित् ॥

नारायणः । पुं । अच्युते । भगवति । वासुदेवे ॥ निरुक्तिर्यथा । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति मनुः । यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥ इति मन्त्रार्थः । नारायणाय नम इत्ययमेव सत्यः संसारघोरविषसंहरणाय मन्त्रम् । शृण्वन्तु भव्यमतयो यतयोऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्द्ध्वबाहुरिति नृसिंहपुराणम् ॥ श्राद्धकनिर्णीतास्तु नाराख्यास्तानि तत्त्वानि नाराणीति विदुर्बुधाः । तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥ नराणां समूहो नारम् । तस्य समूहस्य इत्यण् । तदयनमस्य । पूर्वपदात् इति णत्वम् ॥ यद्वा । नराज्जाता नारा आपः । ता अयनं यस्य ॥ क्वचिन्मन्वन्तरे नरस्य धर्मस्यापत्यत्वमुपगत-इति । नरस्यापत्यम् । नडादिभ्यः फक् इति नारायणः ॥ श्रीकृष्णे ॥ नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी । नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव माया ॥ श्रीकृष्णस्य सेनाविशेषे ॥ धर्मपुत्रर्षिविशेषे ॥ सन्न्यासिनि । परिव्राजके ॥ दण्डग्रहणमात्रेण नरो नारायणो भवेदिति स्मृतेः ॥

नारायणक्षेत्रम् । न । गङ्गाप्रवाहावधिहस्तचतुष्टयमिते नारायणस्वामिकस्थाने ॥ यथा । प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचनेति ॥

नारायणतैलम् । न । औषधपक्वतैलविशेषे ॥ तत् द्विविधम् । स्वल्पं बृहच्चेति भेदात् ॥ यथा । बिल्वाग्निमन्थश्योनाकपाटला पारिभद्रकाः । प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥ पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ चन्दनं तगरं कुष्ठं एलापर्णीचतुष्टयम् । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ एषां द्विपलिकान् भागान्

पेषयित्वाविनिःक्षिपेत् । शतावरी
रसञ्चैव तैलतुल्यं प्रदापयेत् ॥ आ
जवायद्विशागव्यचीरंदत्त्वा चतुर्गुण
म् । * । पाने वस्तौतथाभ्यङ्गेभोज्ये
चैवप्रशस्यते ॥ अश्वोवावातसम्भग्नो
गजोवाधदिवानरः । पङ्गुः पीठस
र्पीचतैलेनानेनसिध्यति ॥ अधोभा
गेचयेवाताः शिरोमध्यगताश्चये ।
दन्तशूलेहनुस्तम्भेमन्यास्तम्भेगलग्र-
हे ॥ सद्यश्शुष्यति चैवाङ्गंगतिर्यस्यच
विह्वला । चीणेन्द्रियानष्टशुक्राज्ज्वर
चीणाश्चयेनराः ॥ वधिराल्लजिह्वा
श्च मन्दमेधसएवच । अल्पप्रजाश्चया
नारीयाच गर्भंनविन्दति ॥ वातार्त्ता
वृषणौयेषामन्त्रवृद्धिश्चदारुणा । एत
त् तैलवरंतेषांनाम्नानारायणंस्मृत
मितिस्वल्पनारायणतैलम् ॥ * ॥ श
तावरीचांशुमतीपृश्निपर्णीशटीवला
। एरण्डस्यचमूलानि वृहत्योः पूति
कस्यच ॥ गवेधुकस्य मूलानितथास
हचरस्यच । एषांदशपलान् भागा
न् जलद्रोणे विपाचयेत् ॥ पादशेषं
रसे पूते गर्भं चैनं समावपेत् । पुनर्न
वावचादारुशताह्वाचन्दनागुरु ॥ शै
लेयंतगरं कुष्ठमेलामांसी स्थिराव-
ला । अश्वाह्वासैन्धवंरास्नापलार्द्धानि
चपेषयेत् ॥ गव्याजपयसः प्रस्थौद्वौ



श्चाविष प्रदापयेत् । शतावरीरसप्र-
स्थं तैलप्रस्थंविपाचयेत् ॥ * ॥ अस्य
तैलस्य सिद्धस्य शृणुवीर्यमतः परम्
। अश्वानांवातभग्नानां कुञ्जराणांत
थान्नृणाम् ॥ तैलमेतत् प्रयोक्तव्यं
सर्ववातनिवारणम् । आयुष्मांश्च
नः पीत्वानिश्चयेन दृढोभवेत् ॥ ग
र्भमश्वतरीविन्द्यात् किम्पुनर्मानुषी
तथा । हृच्छूलंपार्श्वशूलञ्च तथैवा
र्द्धावभेदकम् ॥ अपचींगण्डमालाञ्च
वातरक्तं हनुग्रहम् । कामलांपाण्डु
रोगञ्चअश्मरीञ्चापिनाशयेत् ॥ तै
लमेतद्भगवता विष्णुनापरिकीर्त्ति
तम् । नारायणमितिख्यातंवातान्त
करंशुभमितिवृहन्नारायणतैलम्
॥ * ॥ विल्वाश्वगन्धावृहतीश्वदंष्ट्राश्यो
नाकवाट्यालकपारिभद्रम् । चुद्राक
ण्टिकातिवलाग्निमन्थं मूर्वानिचैषां
सरलायुतानाम् ॥ मूलंद्विदशाद्यपा
टलीनां प्रत्येकशेषां प्रदद्भितज्
ज्ञाः ॥ समादप्रस्थं विधिनोद्धृताश्चद्रो
णै रपामष्टभिरेवपक्वा ॥ पादावशे-
षेणरसेनतेन तैलाढकाभ्यां समले
पदुग्धम् । छागस्य मांसद्रवमेव तुल्य
मेकत्रसम्यक्विपचेत्सुबुद्धिः ॥ ददा
द्रसञ्चैवशतावरीणां तैलेन तुल्यं पु
नरेवतत्र । रास्नाश्वगन्धादुमदारुका

ष्टं पर्णीचतुष्कागुरुकेशराणि॥ सिन्धूत्थमांसीरजनीद्वयञ्च शैलेयकं चन्दनपुष्कराणि । एलासयष्टीतगराब्दपत्रम् भृङ्गाह्वगोक्षुरवचापलाशम् ॥ स्थौणेयवृश्चीरकचोरकाख्यमेभिः-समस्तैर्द्विपलप्रमाणैः । कर्पूरकाश्मीरमृगाण्डजानां द्रव्यात् सुगन्धाय च दद्यात्केचित् ॥ प्रस्वेददौर्गन्ध्यनिवारणार्थं चूर्णीकृतानां द्विपलप्रमाणम् । आलोड्य सम्यग्विधिवद्विपक्वं नारायणं नाम महच्च तैलम् ॥ * ॥ सर्वैःप्रकारैर्विधिवत् प्रयोज्यमन्वक्ष पुंसां पवनार्द्दितानाम् । ये पङ्गवः पीठविसर्पिणश्च एकाङ्गहीनार्द्दितवेपमानाः । बाधिर्य्यशुक्रक्षयपीडिताश्च मन्याहनुस्तम्भशिरोगदार्त्ताः । मुक्तानरास्ते बलवीर्य्ययुक्ताः संसेव्य तैलं सकलाभवन्ति ॥ वन्ध्या च नारी लभते च पुत्रं वीरोपमं सर्वगुणोपपन्नम् । शाखाश्रिते कोष्ठगते च वाते वृद्धौ विधेयं पवनार्द्दितानाम् ॥ जिह्वानिलेदन्तगते च शूले श्चोन्मादकौब्जज्वरकर्षितानाम् । प्राप्नोति वन्ध्या प्रमदाप्रियत्वं जीवेच्चिरं चापि भवेद्युवेव ॥ देवासुरे युद्धवरे समीक्ष्य साध्वक्षिभग्नानसुरैः सुरान्द्र । नारायणेना पिस्वष्टं हितार्थं स्वनामतैलं विहितन्तु तेषाम्

॥ इति सुखबोधे महानारायणतैलम् ॥

नारायणप्रियः । पुं । शिवे ॥

नारायणबलिः । पुं । अतपतितादीनां प्रायश्चित्तात्मके कर्मविशेषे ॥

नारायणस्थानम् । न । तीर्थविशेषे ॥

नारायणाश्रमः । पुं । बदर्य्याश्रमे ॥

नारायणास्त्रम् । न । विष्णोरस्त्रभेदे ॥

नारायणी । स्त्री । लक्ष्म्याम् । श्रियि ॥ उमायाम् । पार्व्वत्याम् । दुर्गायाम् ॥ नारायणस्येयम् । नारायणस्य विष्णोःशक्तिः ॥ यथा । नारस्य जीवराशेरयनी स्थानभूता तत्स्वरूपेत्यर्थः॥ अथायना नराधारा समुद्रशयनाऽपि वा । नारायणीसमाख्याता नरंनारीप्रवर्त्तिका ॥ अस्त्यदृष्टोऽसर्वेषु भूतेष्वन्तर्हितायतः । देवी या सम्मिदं सर्वं जगत्स्थावरजङ्गममिति देवीपुराणम् ॥ गङ्गायाम् ॥ मुद्गलमुनेःपत्न्याम् ॥ शतावर्य्याम् । अभीरौ ॥

नारिकेरः । पुं । नालिकेरे ॥ रलयोरभेदः ॥

नारिकेलः । पुं । नालिकेरे ॥ नलति नल्यते वा । बाणगन्धे । बाहुलकादिय् । केनवायुना इलति चलति । इलगतौ । अण् । नारिकेलस्य

। रलयोरभेदः ॥

नारिकेलक्षीरी । स्त्री । क्षीरिकाभेदे ॥ यथा । नारिकेलं तनूकृत्य-च्छिन्नं पयसि गोः क्षिपेत् । सिताग व्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥ नारिकेलोद्भवा क्षीरी स्निग्धा शीता ऽतिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहेति भावप्रकाशः ॥

नारिकेलिः । पुं । स्त्री । } शिरःफले ।
नारिकेली । स्त्री । } सदापुष्पे ।
सदाफले ॥

नारी । स्त्री । स्त्रियाम् । योषिति । प्रतीपदर्शिन्याम् ॥ नृनरयोर्वृद्धिश्चेति शार्ङ्गरवादिगणपाठात् ङीन् जातिलक्षणङीषो ऽपवादो ङीन् तत् सन्नियोगेन वृद्धिश्च ॥ यथा । नृनरयोश्च धर्म्यो । स्त्रुतो ऽपिति नराश्चेतिवार्त्तिकात् । ङीन् ॥ अस्याश्चतस्रो जातयो भवन्ति । तथाहि । पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । चतस्रो जातयो नार्या रतौ ज्ञेया विशेषतः इति रतिमञ्जरी ॥ अथाख्यच्छन्दोभेदे । मोनरी ॥ यथा । गोपानां नारीभिः । श्लिष्टोव्यात् कृष्णोवः ॥ त्रिष्टुभि [ऽऽ] ॥

नारीकवचः । पुं । सूर्यवंशीयमूलकराजे । अश्मकपुत्रे ॥ योऽसौ निःक्षत्रे क्ष्मातलेऽस्मिन् क्रियमाणे विवस्त्राभिः स्त्रीभिः परिवार्य्य रक्षितः । ततस्तं नारीकवचमुदाहरन्तीति विष्णुपुराणे ४ अंशे ४ अध्यायः ॥

नारीकेलः । पुं । नारिकेरे ॥ इति शब्दचन्द्रिका ॥

नारीकेली । स्त्री । नारिकेले ॥ नारिकेलशब्दे ॥

नारीचम् । न । नाडिचा इति गौडभाषाप्रसिद्धशाकविशेषे ॥ तैले तु भाज्ये बहुनीरकान्विते सुस्वेदितं नारिचसंज्ञशाकम् । सवैन्धवं तक्रविलोड्य पाचितं सम्यापितं प्राकृतभाग्यकेन ॥ रुच्यं वातहरं बल्यं कफकृद्रोगनाशनम् । रुच्यं पित्तहरं किञ्चिच्छाकंनारीचसंज्ञकम् ॥

नारीतरङ्गः । पुं । } पिङ्गे । कामुके ॥
नारीतरङ्गकः । पुं । }

नारीदुग्धम् । न । स्त्रियाःक्षीरे ॥ नार्यो लघु पयः शीतं दीपनं वातपित्तजित् । चक्षुःशूलाभिघातघ्नं नस्याश्च्योतनयोर्वरम् ॥

नारीदूषणम् । न । स्त्रीणां दोषोत्पादके ॥ यथा । पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥

नारीष्टा । स्त्री । मल्लिकायाम् ॥

नार्य्यङ्गः । पुं । नागरङ्गे ॥ न । नार्य्या अङ्गे ॥

नालम् । न । काण्डे । नालायाम् । उत्पलादिदण्डे ॥ मृणाले ॥ नलति । बन्धने । ज्वलितोणिः ॥

नालः । पुं । नले । जलनिर्गमे ॥ यतः । प्रणालः ॥ काण्डे ॥ पद्मादिवृन्ते ॥ नलत्यनेन नालयति वा । नलगन्धे । ज्वलाद्येतिणन्वा ॥

नालवंशः । पुं । नले ॥

नाला । स्त्री । नाले । पद्मादिदण्डे ॥ नलति । अच० । ज्वलितिकसन्तेभ्यो णः ॥

नालिः । स्त्री । नाड्याम् । शिरायाम् ॥ पद्मादिदण्डे । शाकविशेषे ॥

नालिकः । पुं । महिषे ॥ न । पद्मे ॥

नालिका । स्त्री । नालिताभेदे । श्वेतकर्ण्याम् ॥ पद्मादिनाले ॥ चर्मकषायाम् ॥ हस्तिनः कर्णवेधन्याम् ॥ नाले ॥ काले ॥ सुषिरं भे ॥ विवरे ॥ वेणुभाजने ॥ नाड्याम् ॥

नालिकेरः । पुं । नारिकेले । नारियर इतिभाषा प्रसिद्धे ॥ नालिकेरफलं शीतं दुर्ज्जरं वस्तिशोधनम् । विष्टम्भि वृंहणं बल्यं वातपित्तास्रदाहनुत् ॥ विशेषतः कोमलनालिकेरं निहन्ति पित्तज्वरपित्तदोषान् । तद्देव जीर्णं गुरुपित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ॥ तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादु वस्तिशुद्धिकरं परम् ॥ * ॥ नालिकेरस्य तालस्य खर्ज्जूरस्य शिरांसि तु । कषायस्निग्धमधुरवृंहणानि गुरूणि च ॥ * ॥ प्रथमवयसि दत्तं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् । सलिलममृतकल्पं दद्युराजीवनान्तं नहि कृतमुपकारं साधवो विस्मरन्ति ॥ खण्डपाको यथा । कुडवं नालिकेरस्य सुश्लक्ष्णं दृषदि पेषितम् । गुडखण्डस्य कुडवं गव्यक्षीरे चतुर्गुणे ॥ कोष्णनालिकेरस्य जले सम्यङ्निपाचयेत् । धान्यकं पिप्पलीं शुण्ठीं चातुर्जातं सुचूर्णितम् ॥ शाणप्रमाणं प्रत्येकं शीतीभूते क्षिपेद्बुधः । नालिकेरखण्डोऽयं पुंस्त्वनिदानमग्र्यः ॥ अम्लपित्तं क्षयं कासं शूलं च परिणामजम् । नाशयेद्रक्तपित्तञ्च शुक्रदं पावनं तथा ॥ अत्र घृतपलेन कुष्माण्डवन्नालिकेरस्य भर्ज्जनं विधेयमिति ॥ बालस्य नालिकेरस्य जलं प्रायो विरेचनमिति वल्लभः ॥ नलति नल्यते वा । आल० । बाहुलकात् एर । केन वायुना ईर्य्यते । ईर० । घञ् । नालिश्चासौ

केरश्च ॥

नालिकेरकः । पुं । नालिकेरे ॥

नालिकेरक्षीरिका । स्त्री । नारिकेल क्षीरीम् ॥

नालिता । स्त्री । पट्टशाके । नारीचे ॥

नाली । स्त्री । शाककदम्बे । उत्पलस्य दू तिभायां ॥ स्वतःप्रसिद्धेशाकविशेषे ॥ नालेन रहिता नाली सुस्विन्ना मु ष्टिपीडिता ॥ एते सप्ते परिस्विन्ना, विश्विशीयषसंयुता ॥ नाली सरा- थगुः शीता पित्तनुत् कफवातला । प्रज्ञ्वोककरी चेया क्विता शोय- प्रिया मता ॥ हस्तिकर्णवेधन्याम् ॥ धम्याम् ॥ पद्मे ॥ पद्मदण्डे ॥ प्रणा ल्याम् ॥ वाद्यविशेषे ॥ नलति बन्ध या वा । वाच० । ज्वलचेतिघञ् ॥ नालयति वा । पचाद्यच् । गौरादि त्वात् ङीष् ॥

नालीकः । पुं । शरे ॥ शरे ॥ शल्ये ॥ मुखनालाय.संयुक्तेशरे ॥ न । अब्ज षण्डे ॥

नालीकिनी । स्त्री । पद्मसमूहे । पद्मि न्याम् ॥ नालीकानि सन्त्यासाम् । पुष्करादित्वादिनिः ॥

नालीघटी । स्त्री । दण्डज्ञेधिवादाम भेदे ॥

नालीव्रणः । पुं । नाडीव्रणे ॥

नावनम् । न । नस्ये । नासाग्राह्यौषधे ॥

नावयष्टिकः । पुं । कालविशेषे ॥ न र यचोऽस्मिन् वर्त्तते ॥ तद्भिन्न र्त्तनश्चपुष्पत्स्थानार्हम् ॥

नाविकः । पुं । कर्णधारे । नौपृष्ठदण्ड धारके ॥ नावा तरति । नौद्व्यच- ष्टितिठम् ॥ नौरत्न्यस्वत । नौद्या दित्वाट्ठन् ॥

नावी । त्रि । नौमति ॥ नौरस्त्यस्य । नौह्यादित्वादिनिः ॥

नाव्यम् । त्रि । नौतार्य्यदेशे ॥ न० । नौ तरणयोग्यजले ॥ नावा तार्यम् । नौ वयोधर्मेत्यादिनायत् । वान्तोयी- त्यवादेशः ॥

नाशः । पुं । पलायने ॥ निधने ॥ अनु पलब्धौ । अदर्शने ॥ परित्यक्तौ ॥ नशनम् । नश० । घञ् ॥ कुत्सनाश कारणंयथा । अन्ततात् पारदार्थाच्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौत धर्माचरणात् क्षिप्रं नश्यति वैकुण्ठ म् ॥ अश्रोत्रियेवेददाने ■ ऽपले- पतश्चैवच । विप्रनाचारणीनेषु क्षि प्रंनश्यति वैकुण्ठम् ॥ इतिदृ मेपुराण म् ॥ यावच्चेदधर्मो. स्तु योषित् स्वा च्छरार्चनम् । यावत्स्याच्छुचिश्च स्यच्च तावन्नाशोभवेन्नहि ॥

नाशनः । त्रि । नाशकर्त्तरि ॥ नाशय

ति । यश० । ल्युः ॥

नाशी । त्रि । नाशविशिष्टे ॥

नासत्यौ । पुं । अश्विनीकुमारयोः ॥ न सत्यं ययोः स्तः नसत्यौ । न नसत्यौ । नभ्राणनपान्नवेदेति नञः प्रकृतिभावः ॥ * ॥ संज्ञायाश्च रूपयोरथ मुत्सङ्गैः धृताश्वरूपा तपसन्यासीत् सूर्योपि तत्रङ्गमेत्य सुरङ्गरूपी समीपमगात् । सवितयान्यपुरुषधिया निरक्ता सन् तन्नासापुटेरेतोऽस्यधिचत् । तच्चैतौ जातावित्युपाऽऽख्यायते । नासात्यक्तवन्तौ नासत्यौ । अन्येष्वपीतिडः । ष्यापोरितिह्रस्वत्वमिति वा ॥

नासा । स्त्री । नासिकायाम् ॥ नासते । णास्रु शब्दे । गुरोश्चेत्यः ॥ नासतेऽनयावा । अच् । टावष्वेतिवक्ता ॥ अस्याः शुभाशुभलक्षणं यथा । शुकनासः सुखी स्याच्च शुष्कनासेतिजीवनम् । छिन्नाग्रहूपनासः स्यादगम्यागमनेरतः ॥ दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेंद्रियः । स्त्रीमृत्युश्चिपिटनास ऋजुर्भाग्यवतां भवेत् ॥ अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे । क्रूरेदक्षिणवक्रास्या इतिनांचसुतंस कृन्दतिगरुडपुराणम् ॥ द्वारोर्द्धस्थितदारुणि । स्तम्भधारणकाष्ठे । उपरिभित्तिधारककाष्ठे ॥ वासकवृक्षे ॥

नासाछिन्नी । स्त्री । पूर्णिकापक्षिणि ॥

नासादारु । न । द्वारोर्द्धस्थितकाष्ठे । ऊानकाठ इति कपालि इति च गौडभाषा ॥

नासायोनिः । पुं । सौगन्धिकाख्यक्लीबे ॥

नासालुः । पुं । कट्फलवृक्षे ॥

नासासंवेदनः । पुं । काण्डीरलतायाम् ॥

नासास्रावः । पुं । पीनसे ॥

नासिकन्धमः । त्रि । नासिकां शब्दायमानां यः करोति तच ॥ नासिकया धमत्यकर्त्तरि ॥ नासिकां धमति । नासिकास्तनयोर्ध्माधेटोरितिखश् । मुम् । खित्यनव्ययस्येतिह्रस्वः ॥

नासिकन्धयः । त्रि । नासिकया पानकर्त्तरि ॥ नासिकां धयति । धेट् पाने । नासिकास्तनयोरितिखश् । मुम् । ह्रस्वः ॥

नासिका । स्त्री । नासायाम् । गन्धवहायाम् । घ्राणेन्द्रिये । नाक इति भाषा ॥ नासते । णास्रु० । ण्वुल् ॥

नासिकामलम् । न । नासास्थितमले । शिङ्घाणे । सियाक इति रेँट इति च भाषा ॥

नासिकाशब्दः । पुं । घोत्कारे । घराडू इति भाषा ॥ यथा । श्यामं राघवं दृष्ट्वा तस्थे रावइति वामरः । नासा

यूथैस्तु घोलुकारै विंशद्भिर्वायुसेवकै रितिनारसिंह पुराणे ४५ अध्यायः॥

नासिक्यम्। न। नासिकायाम्॥ त्रि। नासायांभवे॥ शरीरावयवाद्यत्॥

नासिक्यौ। पुं। अश्विनीकुमारयोः॥

नासिक्यकम्। न। नासिकायाम्॥

नासीरम्। न। नायकाग्यके। नायकस्याग्रेसारिकायां सेनायाम्॥ सेनामुखे॥ पुं। अग्रेसरे॥

नास्ति। अ। अस्तित्वाभाववति। अविद्यमानतायाम्। नहिं इति भाषा॥ यथा। अतिथिर्बालकश्चैव राजा भार्यास्तथैव च। अस्तिनास्तिनजानन्ति देहिदेहि पुनः पुनः॥ इतिचाणक्यम्॥

नास्तिकः। पुं। ईश्वरनास्तित्ववादिनि पाषण्डे। वेदाप्रामाण्यवादिनि। नास्तिपरलोक इतिमतिविशिष्टे। लौकायतिके। बार्हस्पत्ये॥ सचषड्विधः। माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः चार्वाकः दिगम्बरश्चेति भेदात्॥ नास्ति परलोकः इतिमतिरस्य। अस्तिनास्तिदिष्टं मतिरिति नास्तीतिनिपातात् षष्ठ्यन्तस मर्थ्यान्नास्तीतिनिपाताच्चातसमुदायाद्वा ठक्॥ यद्वा। नास्ति यज्ञफलम् नास्ति परलोकः इत्येवंकायति। कैशब्दे। कः॥

नास्तिकता। स्त्री। मिथ्यादृष्ट्याम्। परलोकाद्यभावबुद्धौ। कर्मफलापवादकज्ञाने॥ नास्तिकस्य भावः। तल्॥

नास्तिकवृत्तिः। त्रि। नास्तिपरलोक इति प्रवर्त्तके॥

नास्तिक्यम्। न। शास्त्रीय फलवत्कर्मसु फलाभावबुद्धौ॥ नास्तिकस्य कर्म भावोवा। पुरोहितादित्वात् यक्॥

नास्तिदः। पुं। आम्रवृक्षे॥ इतिशब्दचन्द्रिका॥

नास्यम्। त्रि। बलीवर्दादिनासासम्बन्धिन्यां रज्जौ। नाथइति भाषा॥ नासायांभवम्। शरीरावयवाद्यत्॥

नाहः। पुं। बन्धने॥ कूटे॥

नाहलः। पुं। म्लेच्छजात्यन्तरे॥ इति हेमचन्द्रः॥

नाहुषिः। पुं। ययातिभूपतौ॥ नहुषस्य अपत्यम्। अतइञ्॥

नि। अ। निषेधे॥ भृशार्थे॥ नित्यार्थे॥ संशये॥ क्षेपे॥ कौशले॥ उपरमे॥ सामीप्ये॥ आश्रये॥ दाने॥ मोक्षे॥ अन्तर्भावे॥ बन्धने॥ राशौ॥ अधोभावे॥ विन्यासे॥ निश्चये॥ निषेधेपीति दुर्गादासः॥

निःक्षत्रः। त्रि। क्षत्रियशून्यदेशादे॥

निःशङ्कः। त्रि। निर्भये॥

निःशब्दः । त्रि । शब्दरहिते । चुप इति भाषा ॥

निःशलाकः । त्रि । निर्जने । रहसि ॥ निर्गता शलाका यस्मात् ॥ शलाकाया निर्गतो वा ॥

निःशल्या । स्त्री । दन्तीवृक्षे ॥

निःशूकः । पुं । शुकशाली ॥

निःशेषः । त्रि । निखिले । समस्ते ॥ निःक्रान्तं शेषात् । निरादय इति समासः ॥

निःशोकः । त्रि । शोकवर्जिते ॥

निःशोध्यः । त्रि । निर्मले । शुद्धे । शोधिते ॥ अनवस्करे ॥ निष्क्रान्तं शोध्यं यस्मात् ॥ शोध्यान्निष्क्रान्तमिति वा ॥

निःश्रयणी । स्त्री । ⎫ अधिरोहिण्याम् ॥
निःश्रयिणी । स्त्री । ⎭ इति शब्दरत्नावली ॥

निःश्रेणिः । स्त्री । वंशकाष्ठादिनिर्मिते सोपाने । अधिरोहिण्याम् । नसेनी इति सीढी इति च भाषा ॥ निश्चिता श्रेणिः पङ्क्तिरत्र ॥ खर्जूरीपादपे ॥

निःश्रेणिका । स्त्री । निश्रेणी इति कोशप्रसिद्धे तृणविशेषे । निरसायाम् । वनमल्लयाम् ॥ निःश्रेण्याम् । अधिरोहिण्याम् ॥ यथा । मानुष्यं दुर्लभं प्राप्य सेविता न महेश्वरी । निःश्रेणिकाग्रात् पतितं अधस्तस्य हि विद्धि हे ॥ अपि च । आसाद्य जन्म मनुजेषु चिराद् दुरापं तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् । नाभ्यर्चयन्ति जगतां जननीं ये त्वां निःश्रेणिकाग्रमधिरुह्य पुनः पतन्तीति देवीभागवतम् ॥

निःश्रेणी । स्त्री । अधिरोहिण्याम् ॥

निःश्रेयसम् । न । कल्याणे ॥ मोक्षे ॥ विज्ञाने ॥ अनुभावे ॥ भक्तौ ॥ पुं । शङ्करे । शिवे । निश्चितं नितरां वा श्रेयः निःश्रेयसम् । अचतुरविचतुरेत्यादिना निपातितम् ॥

निःश्रेयसकरः । पु । ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनि कर्मयोगे । स्वार्थे ॥ निःश्रेयसं करोति । कृञ्० । कृञोहेतुताच्छील्यानुलोम्येष्विति हेत्वर्थेटः ॥

निःश्रेयसकरी । स्त्री । विद्यायाम् ॥ टित्वान्ङीप् ॥

निःश्वासः । पुं । मुखाद्यभिर्निर्गमनमारुति वायौ ॥ निर्गतः श्वासः ॥ निःश्वसनं वा । श्वस० । घञ् ॥

निःषन्धिः । त्रि । दृढे ॥ सुषा० षत्वम् ॥

निःषमम् । अ । गर्हे । निन्द्यमाने ॥ निर्गतं समम् । तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावत्वम् । सुषिनिर्दुर्भ्यः इति षत्वम् ॥

निःसङ्गः । पु । देहादिसङ्गरहिते पर-

मात्मनि ॥ निःसङ्गस्य ससङ्गेन कूट स्थस्य विकारिणा । आत्मनोऽनात्म नायोगो वास्तवो नोपपद्यते ॥ स्व तोऽशुद्धं स्वतःशुद्धं स्वतोमुक्तं निरा- त्मिका । अविद्यादिससंसिद्धि रवि द्या लिङ्गते कथम् ॥ त्रि । सविष त्यकामस्वामासक्ते । निरपेक्षे ॥ ध ज्ञानमिति वेयवति ॥ मेलनरहिते ॥ यथा । सत्यस्य सङ्गा द्भवन्च यो मे सुतादिरागो मुषितो ऽस्मि तेन । निःसङ्गता मुक्तिपदं यतीनांसङ्गा दशेषाः प्रभवन्ति दोषाः ॥ निः सङ्गएव मुक्तात्मा दोषाः सर्वेऽपि स ङ्गजाः । सङ्गात्पतत्यहो ज्ञानी चाव र्यकिमुतात्पविद्दितिकृतार्थः ॥

निःसत्त्वः । त्रि । धैर्यशून्ये ॥

निःसन्धिः । त्रि । सन्धिरहिते । दृढे ॥

निःसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥

निःसरणम् । न । मरणे ॥ उपाये ॥ मोक्षे ॥ निर्गमे ॥ गेहादिमुखे । नि र्गमन प्रवेशमार्गे ॥ निःसरन्त्यनेन । ल्युट् ॥

निःसहतरः । त्रि । असह्यतरे ॥ सहेर्नि पूर्वात् पचाद्यजन्तात् तरप् ॥

निःसहत्वम् । न । अधमत्वे ॥ सहने । पद॰ । पचाद्यच् । उपसर्गेणसमा सेत्वप्रत्ययः ॥

निःसारः । पुं । श्योनाकप्रभेदे ॥ शा खोटवृक्षे ॥ त्रि । साररहिते ॥ यथा । मानुष्ये कदलीस्तम्भनिःसारे सा रमार्गणम् । यः करोति स सम्मूढे। जलबुद्बुदसन्निभे ॥ जगत् सर्वन्तु निः सार मनित्यं दुःखभाजनम् । उत्प द्यते यथादेशत् यथादेशविपद्यते ॥

निःसारकः । पुं । अतीसारभेदे ॥ दध्ना ससारेण समाचिकेन भुञ्जीत निः सारकपीडित स्तु । सुतप्तकुप्यक्वथि तेन चापि क्षीरेण शीतेन मधुप्लुते न ॥ भुञ्जीतपथ्यमितिशेषः ॥

निःसारणम् । न । गृहादीनां निर्गमा दिपथे । निःसरणे ॥ निष्कासने ॥

निःसारा । स्त्री । कदलीवृक्षे ॥

निःसारितः । त्रि । निष्कासिते । वहि ष्कृते ॥

निःसीमः । त्रि । अपर्य्यन्ते ॥

निःसृतः । त्रि । निर्गते ॥

निःस्नेहः । त्रि । स्नेहवर्जिते ॥ निर्गतः स्नेहोयस्मात् ॥

निःस्नेहा । स्त्री । अतस्याम् ॥ निर्गतः स्नेहो ऽस्याम् ॥

निःस्रावः । पुं । आचामे । भक्तरे । मां ड इति प्रसिद्धे भक्तरसे ॥

निःस्वः । त्रि । दरिद्रे ॥ अस्यास्य यो य था । सूर्पाकारौ विरूक्षौ च यस्यो पा

दौ गिरिशकौ । संशुष्कौ पाण्डुरन खौ निःस्वस्य विरलाङ्गुली ॥ इति गारुडे सामुद्रकम् ॥ निर्गतं स्वमस्य । स्वाद्विक्रान्तो वा ॥

निकटः । त्रि । समीपे । आसन्ने ॥ निकषम् । निकटायोन्ने. सम्मोदघ्नेति वात् कटच् ॥ निकटति वा । कटे० । पचाद्यच् ॥

निकरः । पुं । निवहे । सङ्घे ॥ सारे ॥ न्यायदातव्यवित्ते ॥ निधौ ॥ निकीर्यते । क्षिपेपे ॥ ऋदोरप् ॥

निकर्षणम् । न । सन्निवेशे । पुरादौ गृहादिरचनापरिच्छिन्नदेशे ॥ पुरादेर्बहिर्विहरणभूमौ ॥ कर्षणान्निर्गतम् । निरादय इति समासः ॥

निकषः । पुं । शाणपाषाणे । कषे ॥ निकषति । कष० । अच् ॥ निकषस्य नेनजा । गोचरसञ्चरेष्यः । षकारात् घोषा ॥

निकषणम् । न । उल्लेखने ॥

निकषा । अ । मध्ये ॥ समीपे । निकटे ॥

निकषा । स्त्री । विश्रवसो भार्यायाम् । राक्षसमातरि ॥ निकषणम् । कष हिंसायाम् । स्था सचिष्णुनिल्पिभ्याम् ॥

निकषात्मजः । पुं । राक्षसे ॥ निकषाया आत्मजः ॥

निकषोपलः । पुं । शाणे । निकषे ॥

निकामम् । न । यथेप्सिते । इष्टानतिक्रमे ॥ निकमनम् । कमु० । घञ् ॥

निकायः । पुं । लक्ष्ये ॥ सधर्मिप्राणिसंहतौ ॥ संहतानां समुच्चये ॥ निलये । सद्मनि ॥ परमात्मनि ॥ निचीयते । चिञ्० । संघे चानौत्तराधर्ये इतिघञ् आदेशश्च ॥ त्रि । कायरहिते ॥

निकाय्यः । पुं । निलये । गृहे ॥ निचीयते ऽस्मिन् धान्यादिकमितिनि वहे चिनोतेरधिकरणे ण्यत् आय्यादेशो धात्वादेः कुत्वञ्च पाय्यसान्नाय्यनिकाय्यधाय्या इत्यादिना निपात्यते ॥

निकारः । पुं । परिभवे ॥ उत्कारे । धान्यस्योत्क्षेपणे ॥ अपकारे । विप्रकारे ॥ निकृष्टीकरणम् । कृञो घञ् ॥ निकरणम् । क्षिपेपे । हो धान्य इति घञ् ॥

निकारणम् । न । वधे । मारणे ॥ ॥ कृञ् । स्वार्थणिजन्ताद्भावे ल्युट् ॥

निकारी । त्रि । अपकारिणि ॥

निकाशः । पु । प्रकाशे ॥ निकाशनम् । निकाशते वा । काशृ० । घञ् अच्वा ॥ समीपे ॥

निकाशः । पुं । नीकाशे ॥

निकुञ्चः । पुं । कुडवपादे । प्रसृत इति ख्याते ॥ निकुञ्चति । कुञ्च० । अच् ॥

निकुञ्चकः । पुं । निकुञ्चे ॥ स्वार्थे कः ॥ जलवेतसे । वानीरवृक्षे ॥

निकुञ्चितम् । न । सङ्गीतप्रसिद्धे अङ्गहारान्तर्गत शिरोविशेषे ॥

निकुञ्जः । पुं । न । कुञ्जे । लतादिपिहितस्थले ॥ कौजायते । कावन्नि वा । जनी० । सप्तम्यांजनेर्डः । पृ० । निरभोपसर्गान्तरनिवृत्त्यर्थः ॥

निकुञ्जिकाम्ला । स्त्री । कुञ्जवल्ल्याम् ॥ इयञ्जुब्धःश्रीवल्लीसदृशी ॥

निकुम्भः । पुं । कुम्भकर्णसुततनये ॥ दन्तिकौपधौ ॥

निकुम्भाख्यवीजम् । न । जयपाले ॥

निकुम्भितम् । न । नृत्यविषयकाऽष्टोत्तरशतकरणान्तर्गतकरणविशेषे ॥

निकुम्भिला । स्त्री । लङ्कायाः पश्चिमभागवर्त्तिन्यां शक्तिविशेषे ॥

निकुम्भी । स्त्री । दन्तीवृक्षे ॥

निकुरम्बम् । न । कदम्बके । समूहे ॥ निकुरति । निकुर्वतेवा । कुरच्छेदने । कुरशब्देवा । बाहुलकात्-म्बच् ॥

निकृतः । त्रि । विप्रलब्धे ॥ नीचे ॥ धिक्कृते ॥ प्रकृते ॥ अस्वेशे ॥ वञ्चिते ॥ दुःखी कृते ॥ न्यकारि । क्तः ॥

निकृतिः । स्त्री । भर्त्सने ॥ क्षेपे ॥ शठे ॥ शाठ्ये ॥ अभिभवे ॥ दैन्ये ॥ निकृष्टाकृतिः क्रिया परप्रतारणरूपा । यद्वा । पराभीष्टस्यनिकर्त्तनम् । कृती० । इकृष्याप्यादिभ्यस्तीक् ॥

निकृष्टः । त्रि । अधमे ॥ निकृष्यतेस्म । कृष० । क्तः ॥ चाण्डालादिभिर्निन्दिते ॥

निकेतः । पुं । निकेतने । आश्रये । वेश्मनि ॥ निकेतनम् । कितनिवासे । घञ् ॥

निकेतनम् । न । गृहे । गेहे ॥ निकेत्यतेऽस्मिन् । कित० । अधिकरणेल्युट् ॥

निकोचकः । पुं । अङ्कोठवृक्षे । टेराइतिभाषा ॥ निकुच्यते । कुचशब्देतारे । कुलादिभ्यातृवुन् ॥

निक्वाणः । पुं । वीणायाअन्यस्यचशिञ्जादेःशब्दे । प्रक्वाणे । क्वणे । क्वाणे ॥ क्वणशब्दे । नाविति अनुपसर्गेऽतिघानुवर्त्तमाने क्वणोवीणायाञ्चेत्यप् ॥

निक्वाणः । पुं । निक्वणे । क्वाणे ॥ क्वण० । क्वणोवीणायाञ्चेति पक्षेघञ् ॥

निचयम् । न । चुम्बने ॥ निचुम्बने । ल्युट् ॥

निक्षिप्तः । त्रि । परिक्षिप्ते । न्यस्ते ॥ स्थापितधनादौ ॥ निक्षिप्यतेस्म । क्षिपप्रेरणे । क्तः ॥

निक्षेपः । पुं । उपनिधौ । न्यासे । स्वधनस्यान्यस्मिन्नर्पणरूपे, व्यवहारविषये । धरोहर इतिभाषा ॥ यथा । "स्वद्रव्यं यत्र विस्रम्भात् निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत् प्रोक्तं व्यवहारपदं बुधैः ॥ असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च । याच्यमानो नचेद्दद्याद्वर्द्धते पञ्चकंशतमिति नारदः ॥ निक्षिप्यते । क्षिप० । घञ् ॥ क्षिविप इस्तेसंज्ञास्तुमर्पिते भाण्डे ॥

निक्षेपितः । त्रि । प्रयोज्येनान्येन निवेशिते ॥ क्षिपेर्ण्यन्तात् कर्मणि क्तः ॥

निक्षेप्ता । त्रि । निक्षेपस्यकर्त्तरि ॥ निक्षिपति । क्षिप० । तृच् ॥

निखर्व्वः । पुं । न । दशखर्वसङ्ख्यायाम् । १०००००००००००० ॥ निखर्वति । खर्वगतौ । पचाद्यच् ॥ त्रि । वामने । बौना इतिभाषा ॥

निखातः । त्रि । खनित्वारोपिते ॥

निखिलः । त्रि । अखिले । निःशेषे । समस्ते ॥ निर्गतं खिलं यस्मात् ॥

निगडः । पुं । न । बन्धने । शृङ्खलायाम् । बेडी इतिभाषा ॥ निगतो गडः सेचनमस्मात् कठिनत्वात् ॥ निगलति वा । गल अदने । अच् । डलयोरैक्यत्वम् ॥ हस्तिनो लोहमये पादबन्धोपकरणे । अन्दुके ॥

निगडितः । त्रि । बद्धे ॥ निगडःसञ्जातोऽस्य । तारकादित्वादितच् ॥

निगणः । पुं । होमधूमे ॥ इतित्रिकाण्डशेषः ॥

निगदः । पुं । भाषणे । कथने । निगादे ॥ निगदनम् । गद० । नौगदेत्यप् वा ॥ निगदस्तु जनैर्व्वाद्यस्यागमातुवचैर्जपे ॥

निगदितः । त्रि । उक्ते ॥

निगमः । पुं । वाणिजे । वणिजि ॥ निगमे पुर्य्याम् भवः । तत्रभवइत्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ पुर्य्याम् ॥ कटे ॥ वेदे ॥ वणिक्पथे ॥ निश्चये ॥ अध्वनि ॥ मतिकायाम् ॥ पर्य्यायकथनेन वेदार्थबोधकग्रन्थविशेषे ॥ निगम्यते ऽनेनवा । गम्लृ० । गोचरसञ्चरेतिसाधुः ॥

निगमनम् । न । प्रतिकूलप्रमाणाभावद्युक्तसाध्यप्रतिबोधोपसंहारवचने । तस्मात्तथेतिवचने ॥ यथा । असकृदनुचिन्तितानां नष्टाहततरनिजोप

देशानाम् । प्रामाण्यपरमसीमानि गमन मिदमेव निखिलनिगमाना म् ॥ १०३ ॥ इदमेव आत्मैकत्वमेव ॥ हेत्वपदेशात् प्रतिज्ञायाःपुनर्वच नंनिगमनम् । इतिगोतमः ॥ ३८ ॥ हेतोर्व्याप्तिविशिष्टपक्षधर्मत्व व्यपदे शात्कथनं प्रतिज्ञाया.प्रतिज्ञार्थस्य सा ध्यविशिष्टपक्षस्य वचनंनिगमनम् । तथाच व्याप्तिविशिष्टपक्षधर्मं हेतुक थनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः-व्याप्तपक्षधर्मं हेतुसाध्यसाध्यविशि-ष्टबोधकत्वाहाध्यसाध्यबोधकोवाक्या-वयवोनिगमनमिति । अस्य-स्यान्वयिव्यतिरेकिभेदाद्भेद इत्या शयः । व्यतिरेकिणितु तस्मात्तथे त्येवाकारइत्यपरे ॥

निगमाचार्यैवाक्यम् । न । वेदगुप्तवच ने । उपनिषद्व्याख्यातुरुपदेशे ॥ नि गमस्य आचार्यं तस्यवाक्यम् ॥ नि गमाचार्ययोर्वा वाक्यम् ॥

निगमान्तः । पुं । उपनिषदि ॥

निगरः । पुं । भोजने ॥

निगरणः । पुं । गले ॥ होमधूमे इति शब्दरत्नावली ॥ न । भोजने । नि गलना इतिभाषा ॥

निगादः । पुं । निगदे । कथने ॥ निग दनम् । गद० । नैगदेष्ववमावे घञ् ॥

निगारः । पुं । भक्षणे । गरणे ॥ निग रणम् । गनिगरणे । उद्योर्गेइति-घञ् ॥

निगालः । पुं । अश्वगलदेशे ॥ निगल त्यनेन । गलअदने । हलश्चेतिघ ञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ निगि रत्यनेनवा । गृ० । उद्योर्गेइतिघ ञ् । अचिविभाषेतिलत्वः ॥ घंसहा वन्यसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेवस्थितास्तेषामलः शुभकृत्स्मृतः । इत्यश्वशास्त्रम् ॥

निगालवान् । पुं । अश्वे ॥ अस्त्यर्थेम तुप् ॥

निगीर्णः । त्रि । गिलिते । निगला इति भाषा । निगीर्यतेस्म । गृ० । क्तः ॥

निगूढ. । पुं । यमगुह्ये ॥ त्रि । संवृते । गुप्ते ॥ यथा । आस्ते विधुः परमनि र्वृत एवमौलौ भक्तो रिति त्रिजग तीजनचित्तवृत्तिः । भगवन्निगूढन यनाम्बुपुष्पदाहं जानाति कः स्वय सते वत चीतरागे ॥ आच्छिन्निते । नितरांगुह्यते स्म । गुहू० । क्तः । यस्यविभाषेतीड्भावः ॥

निगूढतत्त्वः । त्रि । संवृतयाथार्थ्ये ॥ निगूढं तत्त्वंयस्यः ॥

निगृहीता । त्रि । तर्जिते ॥ पीडिते ॥

निगृहीतचेताः । त्रि । वशीकृतचित्ते ॥

निग्रहः । पुं । भर्त्सने ॥ मर्यादायाम् । सीमायाम् ॥ बन्धने ॥ अनुग्रहाभावे ॥ निराकरणे ॥ चिकित्सायाम् ॥ पराहङ्कृतिखण्डनरूपे निरोधे ॥ निषिद्ध प्रवृत्तितिरस्कारे ॥ मनसोनिरोधे ॥ सचहठनिग्रहरूपः क्रमनिग्रहरूपश्चेतिद्विविधः ॥ मारणे ॥ प्रवृत्तिनिवृत्त्योर्निरोधे ॥ निर्दिष्टकालयावत्स्थितौ ॥ नियमेनग्रहणम् । ग्रह० । ग्रहवृद्धिप्रप् ॥ निगृह्यतेवा । कर्मणि पचाद्यच्वा ॥

निग्रहस्थानम् । न । गोतमोक्तषोडशपदार्थेष्वन्तिमे पदार्थे ॥ यथा । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ ५९ ॥ निग्रहस्य खण्डीकारस्य स्थानंज्ञापकं निग्रहस्थानम् । तच्च विप्रतिपत्तिरप्रतिपत्तिश्च । विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः अप्रतिपत्तिः प्रकृताज्ञानम् । यद्यप्येतदन्यतरत्परनिष्ठं नोद्भावयितुं शक्यम् प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वंतदर्थः । उद्देश्यानुगुणसम्यक्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्यादावनुगतंतत्त्वंवा लक्षणमित्यपि वदन्ति ॥ प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तर मर्थान्तरं निरर्थक मविज्ञातार्थं मपार्थकमप्राप्तकालं न्यून मधिकं पुनरुक्त मननुभाषण मज्ञान मप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । अपचस्त्वर्थे । तेनैतानि तुनिग्रहस्थानानि न पुनरपस्मारादिना ऽननुभाषणाह्निकम् । सर्वाजटितिसंवरणेमतिरोहिताश्वयार्थी न्यर्थीलभ्यत इतिभावः । नव्यास्तु चकारोऽनुक्तसमुच्चये तेनदृष्टान्ताभासवैकल्यादीनां परिग्रहः ॥

निग्राहः । पुं । शापे ॥ निग्रहणम् । आक्रोशेवन्योर्ग्रहइति घञ् । निग्राहस्ते स्यवश्यभूयात् मधः स्त्यर्थः ॥ निग्रहे ॥

निघः । पुं । समविस्तारदैर्घ्ये । तुल्यारोहपरिणाहेवृक्षादौ ॥ नियतं निर्विशेषेणवा हन्यते ज्ञायते । निघो निमितमितिसाधुः ॥

निघण्टिका । स्त्री । गुलञ्चकन्दे ॥

निघण्टुः । पुं । नामसङ्ग्रहे ॥ इतिहेमचन्द्रः ॥

निघर्षः । पुं । घर्षणे ॥

निघसः । पुं । भोजने ॥ न्यदनम् । अद० । नौगचेत्यप् । घञपोश्चेति

घत्वादेशः ॥

निघातः । पुं । अनुदात्ते ॥

निघातिः । स्त्री । लौहघातिन्याम् । लौहमयदण्डे ॥ निश्चयेन हन्ति । हन० । वसिवपियजिराजिव्रजिसदिहनीत्याद्धिमा इञ् । कुत्वम् ॥

निघुष्टम् । न । घोषणे ॥ निघुष्यते स्म । घुषिरव्यशब्दे । क्तः ॥

निघृष्टः । त्रि । घर्षिते । घसा इति भाषा ॥ यथा । सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ॥

निघृष्वः । पुं । क्षुरे ॥ निघृष्यतेऽनेन । घृषु सङ्घर्षे । सर्वनिघृष्वरिष्वेति साधुः ॥

निघ्नः । त्रि । आयत्ते । अधीने ॥ निहन्यते निगृह्यते । हन्तेर्घनर्थे कः ॥ गुणिते ॥

निचयः । पुं । समुच्चये । वस्तुसमूहे ॥ यथा । सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितमिति ॥ निचीयते । चिञ्० । कर्मण्येरच् ॥

निचयकः । त्रि । निचये कुशले ॥ आकर्षादिभ्यः कन् ॥

निचयी । त्रि । उपचयवति ॥

निचायः । पुं । राशीकृते धान्यादौ । ढेर इतिभाषा ॥ निचीयते राशीक्रियते । चीञ् ० । परिमाणाख्यायां सर्वेभ्य इति घञ् ॥ यथा । एकस्तण्डुलनिचायः । अत्राख्येकत्वेन समुदायिनां परिच्छित्तिर्गम्यते ॥

निचिः । पुं । गोःकर्णशिरोदेशे ॥ इति रभसः ॥

निचिकी । स्त्री । उत्तमायां धेनौ । नैचिक्याम् ॥

निचितः । त्रि । सङ्कीर्णे ॥ आचिते ॥ पूरिते । व्याप्ते ॥ निर्मिते ॥

निचुलः । पुं । हिज्जले ॥ निचोले ॥ निचोलति । चुलसमुच्छ्राये । चुरादीनां णिज्वा । इगुपधेति कः ॥ वेतसभेदे ॥

निचुलकम् । न । निचोलके ॥ पुं । इष्विकामत्स्ये ॥

निचूलः । पुं । हिज्जलद्रुमे ॥ निचोले ॥

निचोलः । पुं । प्रच्छदपटे । गिलाफ इतिभाषा ॥ येनतूलशय्यादिप्रच्छाद्यते तस्मिन्निति स्वामी ॥ दोलिकाद्यावरणपटरूपे ॥ स्त्रीपिधानपटे बुरका इति प्रसिद्धे इत्यपरे ॥ निचोल्यते । चुल० । घञ् ॥ यद्वा । चोल्यते । चुडकृतौ । चु० । घञ् । डलयोरैक्यम् ॥

निचोलकः । पुं । भटादेश्चोलाकृति सन्नाहे । कूर्पासे । वारबाणे ॥ न । कुञ्चिकाख्यमत्स्ये ॥

निचोली । स्त्री । प्रच्छदांशुके ॥

निच्छविः । स्त्री । तीरभुक्तिदेशे । तिरहुत इतिभाषा ॥ इ०वि० ॥

निच्छिविः । पुं । वर्णसङ्करप्रभेदे । व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नेजातिविशेषे । जल्ले ॥ यथा । जल्लोम ल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैवखसोद्रविडएवचेतिमनुः ॥

निजः । त्रि । आत्मीये । स्वीये ॥ नित्ये ॥ निजायते । जनी० । उपसर्गेचसंज्ञायामिति डः ॥

निजविभवः । पुं । स्वविभूतौ ॥

निजात्मा । पुं । परात्मनि ॥

निडीनम् । न । खगगतिप्रभेदे । पक्षिणांशनैर्याने ॥ निडीनंनीचैःपतनमितिमल्लभारतम् ॥ भक्ष्य साध्यं वा पश्यतः पतने ॥

निपिडका । स्त्री । सतीलायाम् । तिपद्याम् । कलायभेदे । तेउडा इति गौडभाषा ॥

नितम्बः । पुं । स्त्रियःपश्चात्कटितटे ॥ स्कन्धे ॥ रोधसि ॥ कटेरधोभागे ॥ कटके ॥ कटिमात्रे ॥ नितम्यति नितम्यतेवा । तम्यगतौ । अच् घञ्वा ॥ यथा । निभृतंतम्यते कामुकैः । तमुकांक्षायाम् ॥ ताम्यते सुरतसम्मर्दात् तमुग्लानौ । उत्पादयश्च इतिसाधुः ॥

नितम्बिनी । स्त्री । स्त्रीविशेषे ॥ अतिशयितोनितम्बोयस्याः । अतइनिठनावितीनिः । ङीप् ॥ स्त्रीमात्रेपि ॥

नितराम् । अ । सुतरामर्थे ॥ अतिशयेनेत्यर्थे ॥ किमेत्तिङव्ययेत्यादिना आमुप्रत्ययः ॥

नितलम् । न । पातालविशेषे ॥

नितान्तम् । अ । एकान्ते । अत्यन्ते । अतिशये ॥ त्रि । तदति ॥ नितान्यतिस्म । तमुकाङ्क्षायाम् ॥ अकर्मकत्वात् कर्त्तरिक्तः । अनुनासिकस्येतिदीर्घः ॥

नितान्तनिर्मलस्वान्तः । त्रि । अत्यन्तशुद्धान्तःकरणे ॥ नितान्तंनिर्मलं स्वान्तं यस्य सः ॥

नित्यम् । न । सतते । अनारते । अजस्रे ॥ नियमेन भवम् । त्यप्नेर्ध्रुवे ॥ नियतम्भवदस्मिन् ॥ प्रध्वंसायजन कीभूताभावप्रतियोगिनि । यथा । एकात्म्यासुपेयपर्य नित्यम् ॥ ध्वंसप्रागभावाप्रतियोगिनि । यथा । गगनंनित्यम् ॥ अकरणेजायमाने । यथा । नित्यंक्रीडन्तिकुमाराः ॥ अकरणक्रियमाणत्वेन विधिबोधिते । यथा ॥ स्नानतर्पणादिकंनित्यम् ॥

अनवच्छिन्नपरम्पराके । यथा । वर्य्योनित्यः ॥ पुं । समुद्रे ॥ त्रि । शाश्वते । अवन्ध्ये वस्तुनि । कालत्रयव्यापिनि । ध्रुवे । अविनाशिनि । अध्वंसरूपे । आत्मस्वरूपे । ध्वंसाप्रतियोगिनि । उत्पत्तिविनाशरहिते । सर्वदाविद्यमाने । सर्वव्यापके ॥ नित्यवेदनोधितत्वेनाऽनादिपरम्परागते । पूर्वापरकोटिरहिते । सदकारणवति ॥ सङ्क्षे ॥ विनाशयोग्यतारूपदोषाभाववत्त्वं नित्यत्वम् ॥

नित्यकर्म्म । क्ली । अकरणे प्रत्यवायसाधनेषु सन्ध्यावन्दनादिषु ॥ प्रत्यवायशब्देनागामिदुःखमुच्यते । येषामकरणे विचार्यमाने तत्साध्यते प्राप्यते तानि नित्यानीत्यर्थः । अकरणेऽप्रत्यवायजनकानि नित्यानीति यावत् ॥ निमित्तमुपास्य दुरितक्षयार्थानि नित्यानीति नित्यकर्मलक्षणम् । तत्त्वकरणेऽप्रत्यवायोत्पादकानि नित्यानीति ॥ सन्ध्यावन्दनादीक्ष्यादिपदात् पञ्चमहायज्ञादिग्रहः ॥ प्रत्यवायजनकाभावप्रतियोगिकार्यं नित्यकर्मेति स्मृतिः ॥ तथा । नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा । षष्ठस्तथा विधा कर्म तन्निबोधमय पुत्रक ॥ पञ्चयज्ञाश्रि



तं नित्यं यदेतत् कथितं तव । नैमित्तिकं तथा चान्यत् पुत्रजन्मक्रियादिकम् ॥ नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादिपण्डितैरिति मार्कण्डेयपुराणम् ॥

नित्यकर्म्मफलम् । न । मनःशुद्धौ ॥

नित्यचौरम् । न । वेदेसरचौरे । रागमासमेर्य्यच्छेदने ॥ यथा । चूडोद्दिते स्त्रियः शुचे शुचेर्न्मो दिवसेन नरः । नित्यचौरं प्रकुर्वीत अन्यमासे न सुखचित् ॥

नित्यगतिः । पुं । वायौ ॥ नित्यं गतिरस्य ॥

नित्यतृप्तः । त्रि । परमानन्दस्वरूपप्रबोधेन सर्वत्र निराकाङ्क्षे ॥ नित्येन निजानन्देन तृप्तः ॥

नित्यत्वम् । न । कालाद्यनवच्छिन्नत्वे । नश्वासतीतिसोगत्वयेर्यवधारायोग्यत्वे ॥

नित्यदा । अ । अव्ययं । सातत्ये ॥

नित्यदानम् । न । प्रतिदिनं दीयमानेदाने ॥ यथा । अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकमिति गरुडपुराणम् ॥

नित्यनैमित्तिकफलम् । [illegible] । मनःशुद्धौ ॥ पिढनोक्रमात्सिद्धिनि स्यादी नामधान्तरफलम् । तथा आत्मफ

र्थैनिर्मिते छायागन्धर्वनृत्यर्षे इति छायागन्धर्वनृत्यविद्योकादिफल साधान्तरत्वमानुषङ्गिकम् । तदु द्देशेन नित्याद्वैरविधानात् । विवि दिषासंयोगस्य । विधानाच्छुद्धेव महाफलत्वम् ॥

नित्यप्रलयः । पु । चतुर्विधप्रलयान्तर्ग तप्रलयविशेषे ॥ यथा । नित्यः स दैवजातानां यो विनाशो दिवानि शमिति । सदैव दीपज्वालावत् सात त्येन जातानां दिवानिशं यो विना शः । सनित्यप्रलयइत्यर्थः ॥

नित्यम् । अ । सातत्ये ॥

नित्यमुक्तः । त्रि । कालत्रयेपिबन्धशू न्ये परमात्मनि ॥

नित्ययज्ञ । पुं । फलसंयोगंविना की वलादिनिमित्तसंयोगेन चोदिते । सर्वाङ्गोपसंहारासम्भवे प्रतिनिधा नुपादानेनाप्यङ्गलोपानुष्ठेये ॥ नि त्यप्यादौ प्रबन्ध ॥

नित्ययौवना । स्त्री । द्रौपद्याम् ॥ नि । स्थिरयौवने ॥

नित्यवैकुण्ठः । पुं । विष्णोः स्थानवि शेषे ॥ यथा । ऊर्द्ध्वं नभसि संविष्टो नित्यवैकुण्ठएव च । आत्माकाशस मोनित्योविस्तृतश्चन्द्रबिम्बवत् ॥ ई श्वरेच्छाविभूतो निर्लक्ष्यश्चनिरा



श्रयः । आत्माकाशवत् सुविस्तारश्चाम त्यरत्ननिर्मितः ॥ तत्रनारायणः श्री मान् वनमालीचतुर्भुजः । लक्ष्मी सरस्वती गङ्गातुलसीपतिरीश्वरः ॥ सुनन्दनन्दकुमुदपार्षदादिभिरन्वि तः । सर्वेशः सर्वसिद्धेशो भक्तानुग्रह कारक इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २५ अध्यायः ॥

नित्यसत्त्वस्थः । त्रि । सदासत्त्वगुणा ऽऽ श्रिते । रजस्तमसी अभिभूय सत्त्व माश्रावलम्बने ॥ नित्यमचलं यत् स त्वं धैर्यापरपर्यायं तस्मिंस्तिष्ठति । द्वागतिनिवृत्तौ, । कः ॥

नित्यसमासः । पुं । अविग्रहोनित्यस मासस्तत्समासविशेषे ॥ सम स्यमानपदस्वपदघटितविग्रहवाक्यर्हि- त्यसमासः ॥

नित्या । स्त्री । उमायाम् । पार्वत्याम् । शिवायाम् ॥ प्रकृतौ ॥ शक्ति वि शेषे ॥ मनसादेव्याम् ॥ नियमेन भवा । त्यव्नेर्ध्रुवे । टाप् ॥

नित्यानध्यायः । पुं । सर्ववावर्जनीयवे दपाठकालादौ । अन्वादिप्रोक्ते स्वा ध्यायाभावनिमित्ते ॥ यथा द्वावे वर्वर्ज्ये नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिंचाशुद्धां आत्मानंचा शुचिंद्विजइति ॥ विशेषस्तुमाषि

स्य सन्ध्यायां नधीयानो विवर्जयेदित्यादि मनुवचः स्मृत्यः ॥

नित्यानित्यवस्तुविवेकः । पुं । ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचने ॥ ब्रह्मसत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः । सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः ॥ नित्यश्च अनित्यश्च नित्याऽनित्ये ते च ते वस्तुनी च नित्यानित्यवस्तुनी । नित्यानित्यवस्तुनोर्विवेकः पृथगात्मता ॥

नित्यानित्यस्वरूपिणी । स्त्री । मायाब्रह्मस्वरूपिण्याम् भुवनेश्वर्याम् ॥ नित्यब्रह्म अनित्यमाया तदुभयरूपिणी ॥ तथाच भगवत्याउभयात्मकत्वात् कदाचिद्ब्रह्मरूपेणैव वर्णनं कदाचिच्छक्तिरूपेणैव वर्णनमिति इच्छाशक्तिरूपत्वेन श्रुत्यागमपुराणादौ वर्णनेऽपि दोषाभावोऽवबोध्यः ॥

नित्याभियुक्तः । त्रि । अनवरतमादरेण ध्याने व्यापृते । देहयात्रामात्रार्थमप्य प्रयतमाने ॥ नित्यम् अभियुक्तः ॥ सततंतत्परे ॥

नित्योदकः । त्रि । कृतावश्योदककर्मणि ॥

निदम् । न । विषे ॥ इ० म० चं० ॥

निदद्रुः । पुं । मनुष्ये ॥ त्रि । दद्रुग्रहिते ॥

निदर्शनम् । न । उदाहरणे । दृष्टान्ते ॥ ज्ञापके ॥ दृशिर् ० । ल्युट् ॥ यथा । आत्माह्याकाशवज्जीवैर्घटाकाशैरिवोदितः । घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनमिति ॥ यदात्मवस्तु हि प्रतिपिपादयिषया श्रुत्यात्मनो जायते जीवादीनां तदाजातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोक्तं आकाशवदित्यादीति भाष्यम् ॥

निदर्शना । स्त्री । काव्यालङ्कारविशेषे ॥ तल्लक्षणं यथा । अर्थान्तरप्रवृत्तेन किञ्चित्तत् सदृशं फलम् । सदसद्वा निदर्श्येत यदि सा स्यान्निदर्शना ॥ उदाहरणम् । उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयितुमृद्धीनां फलं सुहृदनुग्रहमिति दण्डी ॥ प्रान्ते ॥ यथा । शुभाशुभनिदर्शने तिंपुराणम् ॥

निदाघः । पुं । ग्रीष्मकाले । ज्येष्ठाषाढयोः । उष्णोपगमे ॥ उष्णे ॥ स्वेदाम्बुनि । घर्मे ॥ नितरां दह्यते ऽनेनवा । दह० । घञ् । कुत्वम् ॥ पुलस्त्यतनये ऋभोः शिष्ये वेदान्तविष्णुपुराणयोः प्रसिद्ध

माहात्म्ये परमहंसावधूते ॥

निदाघकरः । पुं । सूर्ये । भानौ ॥ निदाघा उष्णाः करा यस्य ॥

निदाघकालः । पुं । ग्रीष्मर्त्तौ । ज्येष्ठाषाढमासयोः ॥ यथा । प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसञ्चयः । दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये ॥

निदानम् । न । कारणे । हेतौ ॥ आदिकारणे ॥ शुद्धौ ॥ तपसः फलयाचने ॥ वत्सदाम्नि ॥ अवसाने ॥ निरन्तरं दीयते ऽसाधारणतया जन्यते ऽनेन । डुदाञ्० । करणेति ल्युट् ॥ रोगविनिर्णये । रोगहेतौ ॥ निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः निदानमाहुः पर्यायैः प्राग्रूपं येन लक्ष्यते ॥ इतिमाधवः ॥

निदिग्धः । त्रि । उपचिते । लेपादिना वर्द्धिते । पुष्टिमापिते ॥ निदिह्यते स्म । दिह उपचये । क्तः ॥

निदिग्धा । स्त्री । एलायाम् ॥

निदिग्धिका । स्त्री । कण्टकारिकायाम् । कटहलोइतिरङ्गिणी इतिच भाषा ॥ निदिह्यतेस्म । दिह० । क्तः । टाप् ॥ स्वार्थेकन् ॥ एलायाम् ॥

निदिध्यासन् । त्रि । निध्यातुमिच्छति ॥ निध्यातेः सन्नन्तात्शतृ प्रत्ययः ॥

निदिध्यासनम् । न । श्रुतस्य मतस्य तत्त्वैकध्याने ॥ निरन्तरविचारोऽयं श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥ आत्मानमन्यदपि त्यक्त्वा हृदि यद्यात्मनि चेद्भवेत् । पुनःपुनेन युद्धं तन्निदिध्यासमैकाग्र्यमवैति ॥ विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहे ॥ विजातीयप्रत्ययान्तरितेमसजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेनात्मचिन्तने ॥ निदिध्यासनं विचारविशेषात्मकम् । सच विचारविशेषोध्यानात्मा तद्ध्यानरूपं निदिध्यासनम् ॥ ताभ्यां निर्विचिकित्सेर्थे चेतसः स्थापितस्य यत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ताभ्यां श्रवणमननाभ्याम् ॥ अपरायत्तबोधैः ॥ अपरायत्तबोधैर्हि निदिध्यासनमुच्यते इतिवार्त्तिकोक्तेः ॥

निदेशः । पुं । शासने । आज्ञायाम् ॥ कथने । परिभाषणे ॥ उपकण्ठे । उपान्ते ॥ भाजने ॥ निपूर्वाद्दिशेर्घञ् ॥

आधारे । आश्रये ॥ निधीयते निक्षिप्यते तत्कालभोगायोग्यतया कालान्तरोपभोग्यं वस्त्वस्मिन्निति निधानम् । नि + धा + ल्युट् ॥ कार्य्यावसाने प्रवेशस्थाने ॥ यथा । एतज्ज्ञानावताराणां निधानं बीजमव्ययम् ॥

निधापनम् । क्ली । स्थापने ॥

निधिः । पुं । शङ्खपद्मादिसामान्यनिधौ । शेवधौ ॥ महापद्मादिनवविधेषु निधिषु ॥ यथा । महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्व्वश्च निधयो नव इति शब्दार्णवः ॥ मार्कण्डेयपुराणोक्ताष्टनिधिषु ॥ यथा । क्रोष्टुकिरुवाच ॥ भगवन्कथितं सर्व्वं विस्तरेण त्वया मम ॥ स्वरोचिषोद्भुतं जन्म तथा स्वारोचिषस्य तु ॥ या तु सा पद्मिनी नाम विद्या भोगोपपादिका ॥ तत्संश्रिता ये निधयस्तान्मे विस्तरतो वद ॥ अष्टौ ये निधयस्तेषां स्वरूपं द्रव्यसंस्थितिम् ॥ भवता कथितं सम्यक् श्रोतुमिच्छाम्यहं गुरो ॥ मार्कण्डेय उवाच ॥ पद्मिनी नाम या विद्या लक्ष्मीस्तस्याश्च देवता ॥ तदाधाराश्च निधयस्तान्मे निगदतः शृणु ॥ तत्र पद्ममहापद्मौ तथा मकरकच्छपौ ॥ मुकुन्दकुन्दौ नीलश्च शङ्खश्चैवाष्टमो निधिः ॥ सत्यां वृद्धौ भवन्त्येते सिद्धिः सह भवन्त्यमी ॥ एते ह्यष्टौ समाख्याता निधयस्तव क्रोष्टुके ॥ एभिरालोकितं चित्तं मानुषस्य महामुने ॥ यादृक्स्वरूपं भवति तन्मे निगदतः शृणु ॥ पद्मो नाम निधिः पूर्व्वं स यस्य भवति द्विज ॥ सतस्तत्तनयानाञ्च तत्पुत्राणाञ्च नान्यगः ॥ दाक्षिण्यसारः पुरुषस्तेन वाधिष्ठितो भवेत् ॥ सत्त्वाधारो महाभोगो यतो वै सात्त्विको निधिः ॥ सुवर्णरूप्यताम्रादिधातूनाञ्च परिग्रहम् ॥ करोत्यतितरां सोऽपि तेषाञ्च क्रयविक्रयम् ॥ करोति च तथा यज्ञान् दक्षिणाश्च प्रयच्छति ॥ सम्पादयति कामांश्च सर्व्वानेव यथाक्रमम् । सभा देवनिकेतांश्च तत्कारयति तन्मनाः ॥ १ ॥ * ॥ सत्त्वाधारो निधिश्चान्यो महापद्म इति स्मृतः ॥ सत्त्वप्रधानो भवति तेन चाधिष्ठितो नरः ॥ करोति पद्मरागादिरत्नानाञ्च परिग्रहम् ॥ मौक्तिकप्रवालानाञ्च तेषाञ्च क्रयविक्रयम् ॥ ददाति योगशीलेभ्यस्तेषामावसथांस्तथा ॥ स कारयति तच्छीलः स्वयमेव च जायते ॥ तत्प्रसूतास्तथाशीलाः पुत्रपौत्रक्रमेण च ॥ पूर्व्वर्द्धिमानः सप्तासौ पुरुषान्न मुञ्चति ॥ महापद्मस्तु विप्रर्षाय चार्थमुपजायते ॥ २ ॥ * ॥ तामसो

मकरोनामनिधिस्तेनावलोकितः ॥
पुरुषोधतमः प्रायः सुशीलोपिजा
यते ॥ बाणखड्गर्ष्टिधनुषां चर्मणांच
परिग्रहम् ॥ दंशनानांच कुरुतेया
तिमैत्रींचराजभिः ॥ ददातिशौर्यवृ
त्तीनांभूभुजांयेचतत्प्रियाः ॥ क्रय
विक्रयशस्त्राणां नान्यत्रप्रीतिमेतिच
॥ एकस्यैवभवत्येषनरस्यनसुतानुगः
॥ द्रव्यार्थंदस्युतोनाशं संग्रामेवापिस
व्रजेत् ॥ ३ ॥ * ॥ कच्छपाख्योनिधि
र्यान्योनरस्तेनाभिवीक्षितः ॥ तमः
प्रधानोभवतियतःसौतामसोनिधिः
॥ व्यवहारान्नशिष्टैःसपण्यजातं करो
तिच ॥ क्रियाः स्वानिखिलाश्चैवन
विश्वसितिकस्यचित् ॥ समस्तानियथा
ङ्गानिनिगृह्यास्तेहिकच्छपः ॥ तथा
वष्टभ्यवित्तानितिष्ठत्याकुलमानसः ॥
नददातिनचाभुंक्तेतद्विनाशभयाकु
लः ॥ निधानमुर्व्यांकुरुतेनिधिः सो
सोप्येकपूरुषः ॥ ४ ॥ * ॥ रजोगुणम
यश्चान्योमुकुन्दोनामयोनिधिः ॥ न
रोवलोकितस्तेनतद्गुणोभवतिद्विज
॥ वीणावेणुमृदंगादिगीतवाद्यपरि
ग्रहम् ॥ करोतिगायतांवित्तं नृत्यतां
चप्रयच्छति ॥ वंदिमागधसूतानांवि
टानांलास्यपाठिनाम् ॥ ददात्यहर्नि
शंभोगान्भुंक्ते तैश्चसमंद्विज ॥ कु



लटासुरतिश्चास्य भवत्यन्यैश्चतद्वि-
धैः ॥ प्रयातिसंगमेकंचसनिधिर्भज
तेनरम् ॥ ५ ॥ * ॥ रजःसत्वमयश्चा
न्यः कुन्दोनाममहानिधिः ॥ उपैति
स्तंभमधिकंनरस्तेनावलोकितः ॥ स
मस्तधातुरत्नानां पण्यधान्यादिकस्य
च ॥ परिग्रहंकरोत्येषसर्वंक्रयवि
क्रयम् ॥ आधारःस्वजनानांचाभ्याग
ताभ्यागतस्यच ॥ सहतेनापमानोक्तिं
स्वल्पामपिमहामुने ॥ स्तूयमान
श्चभवतीं प्रीतिंबध्नातियच्छति ॥ यं
यमिच्छतिवैकामं मृदुत्वमुपयातिच
॥ बह्व्योभार्याभवन्त्यस्य सूतिमत्यो
तिशोभनाः ॥ सप्तान्वयेसप्तनरान्नि
धिः कुन्दोनुवर्तते ॥ प्रवर्तमानोनुन
रमष्टमागेनसत्तम ॥ दीर्घायुश्चैव
सर्वेषांपुरुषाणां प्रयच्छति ॥ बन्धूना
मेषभरणं येचदूरादुपागताः ॥ तेषां
करोतिवैकुन्द परलोकेनचादृतः ॥
भवत्यस्यनसंतोषः सहवासिपुजायते
॥ पूर्वमित्रेश्वथैथिल्यंप्रीतिमन्यैः क
रोतिच ॥ ६ ॥ * ॥ तथैवसत्वतमसी
योबिभर्तिमहानिधिः ॥ निधिःसनी
लस्तत्संगीनरस्तच्छीलभाग्भवेत् ॥
वस्त्रकर्पासधान्यादिफलपुष्पपरिग्रह
म् ॥ मुक्ताविद्रुमशंखानां शुक्त्यादी
नांतथामुने ॥ काष्ठादीनांकरोत्येष

यत्नान्यज्जन्तुसंभवम् ॥ क्रयविक्रयम
प्येषांनान्यत्ररमते मनः ॥ तडागान्
पुष्करिण्यश्चतथारामान्करोतिच ॥
बंधंचसरितां वृक्षांस्तथारोपयतेनरः
॥ अनुलेपनपुष्पादिभोगभोक्ताचिजा
यते ॥ त्रिपूरुषश्चापिनिधिर्नीलोना-
मेष्वजायते ॥ ७ ॥ * ॥ रजस्तमोमय
श्चान्यः शंखसंज्ञोहियोनिधिः ॥ तेना
पिनीयते विप्रसद्गुणित्वंनिधीश्वरः ।
एकस्यैवभवत्येषनरं नान्यमुपैतिच
॥ यस्यशंखोनिधिस्तस्यस्वरूपंक्रोष्टुके
शृणु ॥ एकएवात्मनामिष्टमन्नंभुङ्क्ते
त्यांबरम् ॥ कदन्नभुक्परिजनोनचशो
भनवस्त्रधृक् ॥ नददातिसुहृद्भार्यासु
तपुत्रस्नुषादिषु ॥ स्वपोषणपरः शं
खीनरोभवतिसर्वदा ॥ ८ ॥ * ॥ द्वन्द्वे
तेनिधयः ख्याता नराणामर्थदेवताः ॥
मिश्रावलोकिताःमिश्रस्वभावफलदा
यिनः ॥ यथाख्यातस्वभावस्तुभवत्येक
विलोकनात् ॥ सर्वेषामाधिपत्येच-
श्रीरेषाहिपद्मिनी ॥ ६५ * ॥ इति
श्रीमार्कण्डेयपुराणेनिधिलक्षणं ना
मषष्टितमोध्यायः ॥ ६० ॥ नित
रांधीयते । धाञः किः ॥ नितरां
दधाति पोषयत्यनेनपुनर्वैदधाव-
निधातृभिः निधीयतेवा । धिधारणे
। सम्पदादित्वात् क्विप् । आगमशा

सनस्यानित्यत्वात् नतुक् ॥ आधा
रे ॥ यथा । गुणनिधिः ॥ नलिकाना
मगन्धद्रव्ये ॥ समुद्रे ॥ विष्णुमगदत्त्वा
मिधभूवालधनविशेषे ॥ महापद्मा
दिनिधिशब्दे ॥

निधित्सन् । त्रि । निधातुमिच्छति ॥
इत्यर्थे. सन्नन्ताच्छतृः प्रत्ययः ॥

निधिनाथः । पुं । }
निधीशः । पुं । } कुवेरे । धनदे ॥
निधीश्वरः पुं । }

निधुवनम् । न । कम्पे ॥ सुरते ॥ केलौ
। क्रीडायाम् ॥ निसृत्य धुवनं हस्त
पादादिचालनमत्र ॥

निध्यानम् । न । निर्ध्याने । दर्शने ॥
ध्याने ॥

निध्वानः । पुं । शब्दमात्रे ॥

निनङ्क्षुः । त्रि । नाशयितुमिच्छति ॥

निनदः । पुं । ध्वनौ । शब्दे ॥ निनद
नम् । णद० । नौगदनदपठस्वनइ
ति पक्षेअप् ॥ रक्षोघ्नघोषे ॥

निनयनम् । न । निष्पादने ॥ निनीय
ते । णीञ्० । ल्युट् ॥

निनादः । पुं । शब्दे ॥ निनदनम् । ण
द० । नौगदनदेत्यादिनापक्षे घञ् ॥

निनादितः । त्रि । शब्दिते ॥

निनीषुः । त्रि । नेतुमिच्छौ ॥ यथा ।
उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरे

दुषः । निनीपुःकुलमुत्कर्षमधमान धर्मांश्च्यन्नेदितिमनुः ॥

निन्दकः । त्रि । निन्दाकारके । निन्दाशीले ॥ निन्दति तच्छीलः । णिदि० । निन्दहिंसेतिवुञ् ॥ नभाराः सर्वे ता भारा नभाराः सप्तसागराः । निन्दकाहि महाभारा भारा विश्वासघातकाः ॥

निन्दतमः । त्रि । निन्दितश्रेष्ठे ॥

निन्दनम् । न । कुत्सने । निन्दायाम् ॥ णिदिकुत्सायाम् । ल्युट् ॥

निन्दा । स्त्री । अपवादे ॥ कुत्सायाम् । गर्हणे ॥ अविद्यमानदोषाभिधानं निंदेतिपरीवादाद्विशेषः । मीराःस्मिन्दामेवसहन्ते न गुरुदेवादिनिन्दाम् ॥ आत्मानं यदि निन्दसि स्वात्मानं स्वयमेवहि । शरीरं यदि निन्दसि सहायास्तेजनामम ॥ निन्दा समानादभ्यर्ण्णं भूषणं यस्ययोगिनः । धीविक्षेपःकथंतस्यवाचाटैः क्रियताभिह ॥ मन्निन्दयायदिजनःपरितोषमेतिनन्वप्रयत्नसुलभोयमनुग्रहोमे । श्रेयोर्थिनोहिपुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपिधनानिपरित्यजन्तीतिशिद्धुसमिश्राः ॥ निन्दनम् । णिदि० । गुरोर्यत्रपरीवादोनिन्दावापिप्रवर्त्तते । कर्णौ तत्रपिधातव्यौ गन्तव्यंवाततोऽन्यतः इतिमनुः ॥ भावेक्षियामः ॥ दोषकथने ॥ अ-

निष्टबोधनद्वाराविध्यर्थप्रवर्त्तकवचने ॥ नहिनिन्दानिन्द्यंनिन्दितुंप्रवर्त्तते ऽपितुविधेयंस्तोतुमितिन्यायः ॥

निन्दास्तुतिः । स्त्री । व्याजस्तुतौ ॥

निन्दितः । त्रि । गर्हिते । धिक्कृते । निन्दायुक्ते ॥ सर्वथैव निन्दितस्येपदेशः ॥

निन्दुः । स्त्री । मृतवत्सायाम् ॥ निन्द्यतेऽप्रजात्वेनासौ । णिदेरौणादिकउः ॥

निन्द्यः । त्रि । गर्ह्ये ॥

निपः । पुं । कदम्बवृक्षे ॥ पुं । न । कलशे ॥ नियतं पिबन्त्यनेन । पा० । घञर्थेकः ॥

निपठः । पुं । पाठे ॥ निपठनम् । पठ० । नैगदनदेष्वच्वा ॥

निपत्या । स्त्री । पिच्छिलायाम्भूमौ । किसनत् इतिभाषा ॥ निपतन्त्यस्याम् । पतॢ० । संज्ञायांसमजेतिक्यप् ॥ युद्धभूमौ ॥

निपाकः । पुं । पाके ॥

निपाठः । पुं । पठने । पाठे । निपठनम् । पठ० । नैगदनदेष्वभावे घञ् ॥

निपातः । पुं । पतने ॥ मृतौ ॥ निकृष्टपातः ॥ चादिषु ॥ प्रादिषु ॥ निपातानांद्योतकत्वनेव नतुवाचकत्त्वमित्यभ्युपगमः ॥ निपतनम् ।

पत्लृ० । घञ् ॥ उपसर्गातिरिक्तनिपातानां द्योतकत्वं वाचकत्वोभयस्वीकारोऽव्ययंविभक्तीतिसूत्रे भाष्ये स्पष्टस्तेनतेषांवाचकत्वमपि ॥ उपसर्गाणांतुद्योतकत्वमेवेति गतिर्गताविच्यवभाष्ये स्पष्टम् ॥

निपातनम् । न । अधोनयने । अवनाये ॥ पतेः स्वार्थणयन्ताल्ल्युट् ॥ लक्षणानुत्पन्नपदसाधने ॥ यल्लक्षणेनाऽनुत्पन्नंतत् सर्वंनिपातनात् सिद्धम् । निपातनादिष्टसिद्धिरित्युक्तेश्च ॥

निपातितः । त्रि । निक्षिप्ते ॥

निपानम् । न । आहावे । उपकूपजलाशये । कूपोद्गतजलस्थले । कूपादिसमीपे पशूनां जलपानार्थमुदकाधारे । खेल इतिभाषा ॥ नियतं पिबन्त्यस्मिन् । करणेतिपातेर्ल्युट् ॥ गोदोहनपात्रे । दोहन्याम् ॥

निपीडितः । त्रि । कृतपीडने । निष्पीडा इति निपीड्या इतिच भाषा ॥ नितरांपीडितः ॥

निपुणः । त्रि । प्रवीणे । त्रिषु । निष्णाते । कार्यक्षमे । तर्कादिकुशले । शिक्षिते ॥ यथा । निपुणोपि न कर्त्तव्यो वाग्यादृश्यत्वक्रमध्यत दृश्यागमः ॥ निपुणाति । पुण्यकर्मणिशुभे । इगुपधेतिकः ॥ कार्येषुकृत्स्नदृष्टौ ॥

निफला । स्त्री । ज्योतिष्मत्याम् ॥

निफेनम् । न । अफेने ॥ इतिराजनिर्घण्टः ॥

निबद्धः । त्रि । वशीकृते ॥ निबध्यतेस्म । बधबन्धने । क्तः ॥ अनुबद्धे ॥ रचिते ॥

निबन्धः । पुं । आनाहरोगे । मूत्रादिरोधे ॥ ग्रन्थसङ्ग्रहे । सङ्ग्रहविधौ ॥ प्रतिवर्षम् प्रतिमासादिवादातव्यत्वेन प्रतिश्रुतवस्तुरूपे ॥ निम्नद्धे ॥ बन्धे ॥ यथा दैवीसम्पद् विमोक्षाय निबन्धायासुरी मतेति ॥ निबन्धनम् । बन्धबन्धने । घञ् ॥ न । गीते ॥ इति शब्द० ॥

निबन्धनम् । न । बन्धने ॥ हेतौ ॥ वीणातन्त्रीनिबन्धनोर्द्ध्वभागे । उपनाहे ॥ निबध्यतेऽनेनाविन्या । बन्ध० । करणाधिकरणयोश्चेति ल्युट् ॥

निबन्धितः । त्रि । बद्धे ॥ निबन्धः सञ्जातोस्य । तारकादित्वादितच् ॥

निबोधित. । त्रि । उपदिष्टे ॥

निभः । पुं । व्याजे ॥ त्रि । उत्तरपदस्थः सदृशे ॥ यथा । पितृनिभः पुत्रो मातृनिभाकन्येष्टनिभमपत्यमिति ॥ नियतं भाति । भा० । आतश्चोपसर्गइतिकः ॥ प्रकाशे ॥

निभालनम् । न । दर्शने ॥

निमयः

निभृतम् । त्रि । भूतकाले । अतीते ॥ इति राजनिर्घण्टः ॥

निभृतः । त्रि । विनीते ॥ धृते ॥ नितराममारि । भृञ्० । क्त. ॥ निश्चले ॥ एकान्ते ॥ नितराम् पोषिते ॥ निराकगुप्ते ॥ निर्जने ॥ यथा । निभृतनिकुञ्जगृहङ्गतया निशि रहसि निलीयवसन्तमिति जयदेवः ॥ खातावच्छिन्ने ॥ अस्तायोपस्थिते ॥ यथा । नभसानिभृतेन्दुना तुलामुदितार्कन निशितिरघुः ॥

निमग्नः । त्रि । जलादौनितराम् प्रविष्टे ॥

निमज्जथु । पुं । शयने ॥ यथा । तल्पोकान्तामदैः सार्द्धमन्वभूद्धिः निमज्जथुमिति भट्टिः ॥

निमज्जनम् । न । अवगाहने । स्नाने ॥

निमन्त्रणम् । न । नियोगनविशेषे ॥ यत्राकरणे प्रत्यवायस्तन्निमन्त्रणम् । यथा । इहभुञ्जीतभवान् ॥ यस्याकरणे प्रत्यवायोनस्यान् तदामन्त्रणम् । यथा । इहशयीत भवान् । इतिमुग्धबोधटीका ॥

निमन्त्रितः । त्रि । भोजनार्थं नियोजिते ॥

निमय । पुं । परिवर्त्तने । परिदाने । विनिमये ॥ निमीयते । मीञ्हिंसायाम् । एरच् ॥

निमातव्यः । त्रि । परिवर्त्तनीये ॥ मेङोरूपम् ॥

निमानम् । न । मूल्ये ॥ निमीयते नीयते ऽनेन । माङ्० । ल्युट् ॥

निमिः । पुं । इक्ष्वाकुराजः पुत्रे ॥

निमितः । त्रि । समन्तान्मिते ॥

निमित्तम् । न । उत्पत्तिमात्रकारणे । हेतौ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधि राकाशकल्पः । रविलोकचेष्टानिमित्तं यथा यः सनित्योपलब्धिस्वरूपोहमात्मा ॥ लक्ष्मणि ॥ शरव्ये ॥ शकुने ॥ निमित्तानिचपश्यामि विपरीतानिकेशव ॥ निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मा देतानि यासकौराजा समुपलक्षयेत् ॥ फले ॥ निमेयति । निमिदा० । णीस - क्तः । संज्ञापूर्वकत्वान्नत्वम् । मवालने पदमित्तिसइति निर्देशाद्वा ॥

निमित्तकम् । न । चुम्बने ॥ मिमिषे ॥

निमित्तकारणम् । न । समवाय्यसमवाय्युभयभिन्ने कारणे ॥ यथा । तुरीवेमादिकम् पटस्य । यथा वा द्व्यणुकस्येश्वर । घटस्य प्रतिच कुलालदण्डचक्रसिलिलसूत्रादिकमिति ॥

निमित्तकृत् । पुं । काके ॥ इतिराजनि० ॥

निमित्तवित् । पुं । दैवज्ञे ॥ इति हेमचन्द्रः ॥ शकुनज्ञे ॥

निमिषः । पुं । कालप्रभेदे ॥ अक्षिनिमीलने । अक्षिपक्ष्मणोःस्वाभाविकस्योन्मेषस्य सहकारिणि ॥ निमिषति । मिष० । यथाच । कुटादित्वान्न गुणः ॥ इगुपधत्वात् को वा ॥

निमिषितम् । न । अक्षिव्यापारे ॥

निमीलम् । न । दीर्घनिद्रायाम् ॥

निमीलनम् । न । मरणे ॥ सङ्कोचने ॥ निमेषे ॥ मीलनिमेषणे । ल्युट् ॥

निमीलिका । स्त्री । व्याजे ॥ निमीलने ॥

निमीलितः । त्रि । मोहिते ॥ कृतनिमीलने ॥

निमेयः । पुं । परिवर्त्ते । नैमेये ॥ निमीयते । माङ्माने । अचोयत् । ईद्यति ॥

निमेषः । पुं । अक्षिनिमीलने । नेत्रपक्ष्मणोःस्वाभाविकस्योन्मेषस्य सहकारिणि । पलकमीचना इतिभाषा ॥ यथा । निमेषोन्मेषाभ्याम् प्रलयमुदयंयाति जगतीति ॥ दृष्टिनिमीलनात्मके । कालप्रभेदे । पक्ष्मस्पन्दनकाले ॥ पुंसेरयावत्कालमकृत्रिमनेत्रनिकाशानन्तरं पक्ष्माकुञ्चनं जायते स निमेषः । इत्यमरटीकायाम्भरतः ॥ अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः । द्वौ निमेषौ त्रुटिर्ज्ञेयः द्वे त्रुटी तु लवः स्मृतः । इत्यग्निपुराणम् ॥ लघ्वक्षरोच्चारणमात्रे काले ॥ लवद्वये ॥ निमिषति । मिषस्पर्द्धे । इगुपधेति कः ॥

निमेषकः । पुं । निमेषे ॥

निमेषकृत् । स्त्री । तडिति ॥ निमेषं करोति । डुकृञ्० । क्विप् ॥

निमेषरुक् । पुं । खद्योते ॥ इति त्रिकाण्डशेषः ॥

निम्नम् । त्रि । गंभीरे ॥ नीचा इति गहरा इति च भाषा ॥ निमनति । म्ना अभ्यासे । आतश्चेतिकः ॥ तृषादिपुरुष्यादिविशेषनाकाशे वाचा इतिमसिद्धे चिह्ने ॥

निम्नगा । स्त्री । नदीमात्रे ॥ त्रि । नीचगामिनि ॥ निम्नङ्गच्छति । गम्लृ० । अन्येभ्योपीतिडः ॥

निम्नोन्नतम् । त्रि । उन्नतानते । बन्धुरे ॥

निम्बः । पुं । अरिष्टे । सर्वतोभद्रे । पिचुमर्दे । नीम् इतिभाषा ॥ निम्बः शीतो लघु ग्राही कटुपाको ग्निवातनुत् । अहृद्यःश्रमतृट्कासज्वरारुचिकृमिप्रणुत् ॥ व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥ * ॥ निम्बप

पञ्चतं नेत्र्यं कृमिपित्तविषप्रणुत् ।
वातलं कटुपाकञ्च सर्वारोचककुष्ठ
नुत् ॥ * ॥ नैम्बंफलंरसेतिक्तं पा
केतुकटुभेदनम् । स्निग्धंलघूष्णंकुष्ठ
घ्नंगुल्मार्शःकृमिमेहनुत् ॥ * ॥ नि
म्बशाकन्तु । निम्बस्यकोमलदलानि
सुयत्नभृष्टान्याज्येविपेषदनुसैन्धवस
मयुक्तान् । आलोचयतपटुलवणान्
सचरामठेनचाथचारिताद्दसिरोचन
मेवलेह्याः ॥ * ॥ निम्बति स्वास्थ्य
म् । णिविसेचने । पचाद्यच् । बव-
योरैक्यम् ॥ कर्त्तानिम्बजफलंकृमि
कुष्ठप्रमेहजित् ॥ * ॥ निम्बतैलन्तु
कुष्ठघ्नंतिक्तंकृमिहरम् परमित्तिरा
जवल्लभः ॥ कार्य्येत्वग्राह्या ॥

निम्बकः । पुं । अरिष्टद्रुमे ॥ स्वार्थे कः ॥

निम्बतरुः । पुं । मन्दारवृक्षे । बकाय
म इतिभाषाप्रसिद्धे पारिभद्रे ॥ नि
यमयति । यमउपरमे । पृ० । निं
बतिवा । णिविसेचने । पचाद्यच् ।
बवयोरैक्यम् । कर्मणिघञ्वा । नि
म्बसंज्ञकस्तरुः । शाकपार्थिवादिः ॥

निम्बबीजः । पुं । राजादनीवृक्षे ॥

निम्बुकम् । न । } निम्बूके । कागदी
निम्बूः । स्त्री । } नींबू इतिभाषा ॥

निम्बूकम् । न । अम्लजम्बीरे । शोधने
। निंबाम् । दीप्ते ॥ निम्बूकमम्लंवा
तग्नंदीपनंपाचनंलघु ॥ * ॥ निम्बु
कं कृमिसमूहनाशनं तीक्ष्ण मम्ल-
मुदरग्रहापहम् । वातपित्तकफशू
लिने हितं कष्टनष्टरुचिरोचनम् प
रम् ॥ त्रिदोषवह्निक्षयवातरोगनि
पीडितानांविषविह्वलानाम् । मन्दा
ग्नेबद्धगुदेप्रदेयं विह्वचिकायांमुन
योवदन्ति ॥ * ॥ आर्द्रकं निम्बुकं
तोयं षड्भागं शर्कराष्टकम् । लव
ङ्गमरिचोन्मिश्रं पानकं पानकोत्तम
म् ॥ निम्बूफलभवं पानमत्यम्लं वा
तनाशनम् । वह्निदीप्तिकरं रुच्यं स
मस्ताहारपाचकम् ॥ इतिराजनि० ॥

निम्लोचत् । त्रि । अस्तङ्गच्छति ॥

निम्लोचनम् । न । अस्तगमने ॥

नियतः त्रि । निश्चिते ॥ नित्ये ॥ आ-
चारनिष्ठे ॥ वशीकृतेन्द्रिये ॥ न ।
निश्चयकर्मणि ॥ नियच्छति । यम० ।
अकर्मकत्वात् कर्त्तरि क्तः । मलोपः ॥
नियततेवा । यती० । पचाद्यच् ॥

नियतात्मा । त्रि । समाहितचित्ते ॥ सु
शिक्षितमनसि ॥ नियतः आत्मा
यस्य ॥

नियतिः । स्त्री । नियमे ॥ दैवे । दि
ष्टे । भागधेये । प्राक्तनशुभाशुभक
र्मणि ॥ नियम्यतेऽनया । यमउ
परमे । क्तिन् ॥

नियती । स्त्री । दुर्गायाम् ॥

नियतेन्द्रियः । त्रि । इन्द्रियदमनशीले । संयतेन्द्रिये ॥

नियन्ता । पुं । सारथौ ॥ त्रि । शासितरि ॥ पशुप्रेरके ॥ नियच्छतिविशिष्टेविषये स्थापयति । अन्तर्भावितण्यर्थोवा । यम० । तृच् ॥

नियन्त्रितः । त्रि । अनर्गले । अबाधे ॥ इतिहेमचन्द्रः ॥ नितरांयन्त्रितः ॥ नियमिते ॥

नियमः । पुं । यन्त्रणे ॥ प्रतिज्ञायाम् । अङ्गीकारे ॥ निश्चये ॥ यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधोगम्यते पञ्च पञ्चनखाभक्ष्याइत्युक्ते गम्यते एतदतोन्येऽभक्ष्याइति । अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा । अभक्ष्योग्राम्यकुक्कुट. अभक्ष्योग्राम्यशूकरइत्युक्ते गम्यते एतद् आरण्योभक्ष्यइतिमहाभाष्यम् ॥ भक्ष्यनियमइति भक्ष्यानुमतिरूपउपदेशइत्यर्थइति विवरणम् ॥ * ॥ प्रतिज्ञानिश्चये ॥ इतिमेदिनी ॥ व्रते ॥ आगन्तुसाधने ॥ यथा । नियमस्तुसयत्कर्माऽनित्यमागन्तुसाधनम् । यत् कर्म अनित्यम् नतु यावज्जीवंकर्त्तव्यम् आगन्तुभि.कादाचित्कै. कामनासमय(विशेषादिभि.साधनैः साध्यम् उपवासस्नानजपादि तन्नियमइत्यर्थः ॥ * ॥ नित्यकर्मणि । तत्तदाश्रमविहिताचरणे ॥ * ॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानेषु पञ्चसु ॥ अपोपवासप्रदक्षिणनमस्कारादिरूपः पुराणेऽधिकाउक्तास्तेएष्वेवान्तर्भाव्याः ॥ स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः । नियमागुरुशुश्रूषाशौचाक्रोधाप्रमादता. ॥ * ॥ अक्रोधादिषु ॥ अक्रोधोगुरुशुश्रूषाशौ(च)माहारलाघवम् । अप्रमादश्चसततंपञ्चैतेनियमाःस्मृताः ॥ * ॥ तपआदिदशसु । यथा । तपःसन्तोषमास्तिक्यंदानंदेवस्यपूजनम् । सिद्धान्तश्रवणञ्चैवह्रीर्मतिश्चजपोहुतम् ॥ दशैतेनियमाःप्रोक्तामयापर्वतनायकेतिदेवीगीता ॥ नियच्छति अनेनवा नियमनंवा । यमउपरमे । यमःसमुपनिविषुचेत्यपचाद्यच् । यमःसमुपनिविषुचेत्युप्रत्यया ॥ समातीयग्रथाऽपरविजातीयतिरस्कृतिः । नियमोऽपिपरानन्दोनियमात्क्रियतेबुधैः ॥ वेदयज्ञानियमपूर्वमधीताःफलवन्तोभवन्तीति महाभाष्यम् ॥

नियमनम् । पुं । नियमे ॥ निग्रहे । बन्धे ॥ वक्रेर्नियमनमितियथा ॥

नियमविधि. । पुं । नानासाधनसाध-

क्रियाया मेकसाधनप्राप्ता वप्राप्तस्य परसाधनस्य प्रापके विधौ ॥ नियमः पाक्षिकेसतीत्युक्तेः । पक्षे ऽप्राप्तस्य प्रापकोविधिर्नियमविधिर्भवति । यथा व्रीहीनवहन्तीत्यादिः । कथम स्यपक्षे ऽप्राप्तप्रापकत्वमितिचेत् इत्थम् । अनेनाऽवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेक सिद्धत्वात् किन्तुनियमः । सचाप्राप्तांशपूरणम् । वैतुष्यंहिनानोपायसाध्यत्वात् यदावघातंपरित्यज्योपायान्तरंगृहीतुमारभ्यतेतदाऽवघातस्या प्राप्तत्वेन तद्विधानमप्राप्तकमप्राप्तांशपूरणमेवानेनविधिनाक्रियते । अतस्त्वनियमविधावप्राप्तांशपूरणात्मकोनियमएववाक्यार्थः । पक्षे ऽप्राप्तावघातविधानमितियावत् ॥

नियमितः । त्रि । कृतनियमे ॥ यद्दे ॥ नियम. सञ्जातोस्य । ता°इतच् ॥

नियामः । पुं । नियमे ॥ नियमनम् । यम° । यम. समुपनिविषुचेति- घञ् ॥

नियामकः । पुं । नाविक इतिप्रसिद्धे गुणवृक्षोपरिस्थिते पोतवाहे ॥ कर्णधारे ॥ नियच्छतिपोतम् । यमनियमने । ण्वुल् ॥ त्रि । नियन्तरि ॥

नियामिका । स्त्री । नियमनकर्त्रीम् ॥

नियुक्तः । त्रि । अधिकृते ॥ नियोजिते ॥ आज्ञप्ते । प्रेरिते ॥ यथानियुक्तो ऽस्मितथा करोमि ॥ नियुज्यतेस्म । युजिर° । क्तः ॥ अवधारिते इतिराधाकान्तः ॥

नियुतम् । न । लक्षे । १००००० ॥ इति लीलावती ॥ शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । कोटिरर्बुदमितिक्रमाद्दशगुणोत्तरमिति रत्नकोश. ॥ धेनूनां नियुतं प्रादाद्विप्रेभ्यः समलङ्कृते । इत्यत्रनियुते दशलक्षे इति श्रीधरस्वामी ॥ २ ॥ दशलक्षे १०००००० । प्रयुते ॥ यथा । एकं दश शतञ्चैव सहस्र मयुतं तथा । लक्षञ्च नियुतञ्चैवकोटि रर्बुद मेवच ॥ वृन्दः खर्वो निखर्वश्च शङ्खपद्मौच सागर. । अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरम् ॥ इतिपुराणम् ॥

नियुद्धम् । न । बाहुयुद्धे ॥ निग्रहस्य नितरां वा युद्धम् ॥

नियोगः । पुं । अवधारणे ॥ आज्ञायाम् ॥ कार्य्ये ॥ नियुज्यते ऽस्मिन् । युजिर° । घञ् ॥

नियोगी । त्रि । नियुक्ते । कर्मसचिवे । नियोगविशिष्टे ॥ नियोगो ऽस्यास्ति । इनिः ॥

नियोग्य । त्रि । नियोगार्हे । प्रभौ ॥

स्थेयादौ । निरादय इतिसमासः ॥

निरनुयोज्यानुयोगः । पुं । निग्रहस्थाना-
भिधेये । गौ । निरनुयोज्यानुयोग इति-
गौतमलक्षिते च निग्रहस्थाने ॥ अ-
वसरे यथार्थे निग्रहस्थानोद्भावना-
तिरिक्तं यन्निग्रहस्थानोद्भावनं तदि-
त्यर्थः । एतेनानवसरे निग्रहस्थानो-
द्भावने एकनिग्रहस्थाने निग्रहस्था-
नान्तरोद्भावनेच नातिव्याप्तिः । सो-
यं चतुर्धा । छलं जातिराभासो ऽन-
वसरग्रहणञ्च । आभासो व्यभिचारा-
दावसिद्ध्याद्युद्भावनम् । अनवसरग्र-
हणञ्च अकाले एवोद्भावनम् । यथा
त्यक्तविवेत् प्रतिवादिनः विशेषय-
सिवेत् हेत्वन्तरम् । एवमवसरम-
तीत्यकथनमपि । यथा । उच्यमा-
नग्राह्यस्थापशब्दादेः परिसमाप्तौ ।
एवमनुक्ताग्राह्यव्याख्यानाद्यननुभाषणा-
वसरे ऽनुद्भाव्ययोः विक्षेपानुभा-
षणप्रवृत्ते वादिनि तदुद्भावनमि-
त्यादिकमूह्यम् ॥ इति ५ ध्याये ६५
सूत्रम् ॥

निरन्तरः । त्रि । घने । निविडे । सा-
न्द्रे ॥ निरवधौ ॥ नीरन्ध्रे ॥ निर्गत-
मन्तरात् । निर्गतमन्तरमस्मिन्वा ॥

निरन्तराभ्यासः । पुं । स्वाध्याये ॥ सत-
तावर्त्तने ॥ निरन्तरश्चासावभ्या-
सश्च ॥

निरपत्रपः । त्रि । धृष्टे । निर्लज्जे ॥ नि-
र्गतो ऽपत्रपाया लज्जायाः ॥

निरपेक्षः । त्रि । अपेक्षारहिते । अन-
पेक्षे ॥ विगतस्पृहे ॥ यथा । निरपे-
क्षोगृह्णाद्वियादिति ॥ निर्गतापेक्षा
यस्य ॥ निःसङ्गे ॥

निरयः । पुं । नरके ॥ निर्गतो ऽयात् ॥

निरयपतिः । पुं । यमपुरुषे ॥

निरर्गलः । त्रि । अबाधे । अर्गलार-
हिते । अनर्गले ॥ निष्क्रान्तमर्गला-
याः । निरादयइतिसमासः ॥

निरर्थः । त्रि । मोघे ॥

निरर्थकः । त्रि । निष्फले । मोघे ॥ न
। निग्रहस्थानविशेषे । निरर्थकञ्च
पतिगौतमः । वर्णक्रमनिर्देशवन्नि-
रर्थकम् ॥ ५१ ॥ वर्णानां क्रमेण नि-
र्देशो जबगडदशादिप्रयोगस्तत्तुल्यो
निर्देशो निरर्थकं निग्रहस्थानम् ।
अवाचकपदप्रयोगइतिफलितार्थः ।
वाचकत्वं शक्त्या निरूढलक्षणया वा
स्वपरिभाषया वा बोध्यम् । समयब-
न्धव्यतिरेकेणेति विशेषणीयम् । ते-
न यत्राप्यसंशयेन विचारः कर्त्तव्यइतिस-
मयबन्धस्तत्रापभ्रंशे न दोषः । क्रटि
तिसंवरणे तु न दोषः इत्युत्तप्रायम् ।
अस्यसम्भव प्रमादादित्यवधेयम् ॥

ष्ट ॥ निर्गतोऽर्थोऽस्मात् ॥

निरवग्रहः । त्रि । स्वच्छन्दे ॥ निष्क्रान्तोऽवग्रहात् नियमनात् । निरादय इति समासः ॥ वृष्टिप्रतिबन्धाभावे ॥

निरवद्यः । त्रि । उत्कृष्टे ॥ वातपित्तादिजन्याध्यात्मिकादितापत्रयरहिते आत्मनि ॥ रागादिशून्ये ॥

निरवयवः । पुं । परमाणौ ॥ त्रि । अवयवहीने ॥

निरवशेषः । त्रि । सर्वस्मिन् ॥

निरवसितः । त्रि । बहिष्कृते । येनभुक्ते पात्रं संस्कारेणापि न शुध्यति तत्र । चाण्डालादौ ॥

निरवहालिका । स्त्री । प्राचीरे ॥ इति शब्दमाला ॥

निरशनम् । न । भोजनाभावे । अनशने ॥ त्रि । तद्वति ॥

निरसनम् । न । प्रतिक्षेपे । प्रत्याख्याने ॥ असुक्षेपणे । ल्युट् ॥ वधे । निसूदने ॥ निष्ठीवने ॥

निरसा । स्त्री । निःश्रेणिकातृणे ॥

निरस्तः । त्रि । निष्ठ्यूते ॥ प्रेषितशरे ॥ द्रुतोदिते । त्वरितोदिते ॥ सन्त्यक्ते ॥ प्रतिहते ॥ प्रत्याख्याते ॥ भर्त्सिते ॥ निरस्यतेस्म । असु० । क्तः ॥

निरस्तदयः । त्रि । निष्कृपे ॥

निरहङ्कारः । त्रि । शरीरेन्द्रियादावहमस्मीत्यभिमानशून्ये ॥ विद्यावत्त्वादिनिमित्तात्मसम्भावनाविरहिते ॥

निराकः । पुं । पचने ॥ स्वेदे ॥ असत्कर्मफले ॥ इति हेमचन्द्रः ॥

निराकरणम् । न । निराकृतौ । निवारणे ॥ निराक्रियतेऽनेन । डुकृञ्० । ल्युट् ॥

निराकरिष्णुः । त्रि । क्षिप्णौ । निराकरणशीले ॥ निराकरोति तच्छीलः । अलङ्कृञित्यादिना इष्णुच् ॥

निराकर्त्ता । त्रि । निराकरिष्णौ ॥

निराकारः । त्रि । आकारहीने । देशाद्याकारवर्जिते परमात्मनि ॥ महदादिवत् कार्यातिरिक्त स्वस्वरूपाभावात् निर्गतः आकारोऽस्मात् । निरादय इति समासः ॥

निराकुलः । त्रि । आकुलताशून्ये ॥

निराकृतः । त्रि । प्रत्याख्याते । निरस्ते ॥ यथा । कैः पुष्पैरर्च्यताम् दृष्ट्वा भृङ्गाभुवि निमन्त्रिताः । केनचान्यकेनार्द्धचन्द्रं दत्त्वा निराकृता इति ॥ निराकारि । कृञः क्तः ॥ निस्सारिते ॥

निराकृतिः । पुं । पञ्चमहायज्ञानुष्ठानरहिते ॥ यस्तु पञ्चमहायज्ञविहीनः स निराकृतिरिति जटाधरः ॥ तथाच

छन्दोगपरिशिष्टे । निराकर्त्तामरादीनांसपिण्डेषा निराकृतिरिति ॥ स्त्री । निरसने । निराकरणे ॥ निराकरणम् । इकृञ्० । स्त्रियांक्तिन् ॥ त्रि । अनाकारे ॥ अस्वाध्याये ॥ आकृते रध्ययनचेष्टाया निर्गतः । आकृते र्जातेर्वा निर्गतः । अनधीत्याप्यि लेवेदमन्यत्कुरुते श्रमम् । सशी घ्रमेव शूद्रत्वमाशुगच्छति सान्वयः ॥ वारणे । निषेधे ॥

निरागमः । पुं । आगममूलविकले तर्के ॥ तर्कमात्रोपजीविषु बौद्धकाणादसांख्यादिषु ॥

निराचारः । त्रि । अनाचारे । आचारशून्ये ॥ निर्नैविद्यते आचारो यस्य सः ॥

निरातङ्कः । पुं । शिवे ॥ निर्गते आतङ्कतापशङ्के यस्मात् ॥ त्रि । आतङ्कहीने ॥

निरातपा । स्त्री । रजन्याम् ॥ त्रि । आतपशून्ये ॥

निरादेशः । त्रि । वार्त्तासञ्चाररहिते॥

निराधारः । त्रि । आश्रयशून्ये ॥

निराबाधः । त्रि । पक्षाभासविशेषे ॥ यथा । अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासंविवर्जयेदिति ॥ निराबाधम् अस्मात्प्रदीपप्रकाशेनायं गृहेऽध्ययनं करतीतिमिताक्षरा ॥

निराभासः । पुं । वृत्तिव्याप्यत्वेपि फलव्याप्यत्वशून्ये परमात्मनि ॥ निरवधारामाभिमुख्येन भासते । भास० । पचाद्यच् ॥ त्रि । निष्प्रतिबिम्बे ॥

निरामयः । पुं । वृद्धिके । वनच्छागले ॥ शूकरे ॥ त्रि । नीरुजि । वार्त्ते । रोगरहिते ॥ निष्क्रान्तआमयात् । निरादयः क्रान्ताद्यर्थे समासः ॥ निर्गतआमयो व्याधिर्यस्माद्वा ॥

निरामालुः । पुं । कपित्थे ॥

निरामिषः । त्रि । विषयाभिलाषरहिते ॥ आमिषशून्ये ॥

निरामिषाशी । त्रि । अमांसाशिनि ॥

निरालम्बः । त्रि । आश्रयशून्ये । निराश्रये । निर्विषये ॥

निरालम्बनत्वम् । न । देहानुसन्धानराहित्यतायाम् ॥

निरालम्बा । स्त्री । आकाशमांस्याम् ॥

निराशः । त्रि । आशाशून्ये ॥

निराशी । त्रि । वैराग्यदार्ढ्येन विगततृष्णे । निष्कामे ॥ निर्गताःआशिषःकामना यस्मात् ॥

निराश्रयः । त्रि । देहेन्द्रियाद्यभिमानशून्ये ॥ आश्रयोदेहेन्द्रियादिः अहंत्वदर्शनेन निर्गतो यस्मात् ॥ आ-

अयविहीने ॥ निर्गतः आश्रयो यस्मात् यस्य वा ॥

निरासनम् । न । निरसने ॥ निराङ् पूर्वासधातोर्ल्युट् ॥ आसनाभावे ॥ त्रि । तद्वति ॥

निराहारः । त्रि । आहाररहिते ॥

निरिङ्गिणी । स्त्री । तिरस्करिण्याम् । पट्याम् । यवनिकायाम् ॥

निरिन्द्रियः । त्रि । प्रजननासमर्थे । जीर्णे । इन्द्रियशून्ये ॥

निरीक्षणम् । न । दर्शने ॥

निरीक्षितः । त्रि । अवलोकिते ॥

निरीशम् । न । फाले । फले । यत्काष्ठेफालो निबध्यते तत्र । फालाधारे ॥ इत्यमरः ॥ ईशाया निर्गतः । निरादय इति समासः ॥ त्रि । ईशशून्ये ॥ नास्तिके ॥

निरीषम् । न । फले । फालाधारे । निरीशे ॥ इति भरतोऽमरटीकाकृत् ॥ निष्क्रान्तमीषायाः । निरादय इति समासः ॥

निरीहः । त्रि । निराकाङ्क्षे । प्राप्तमस्त्वैश्वर्ये ॥ निरीहस्य हृतं न्वपः ॥ ईहारहिते ॥ पुं । विष्णौ ॥

निरुक्तम् । न । वेदाङ्गविशेषे ॥ यथा । ज्योतिषामयनं चैव निरुक्तंचोप मुच्यत इतिस्मृतिः ॥ पदभञ्जने ॥ देवविद्यायाम् ॥ त्रि । निर्वचने ॥ स्पष्टे ॥ कथिते ॥ निश्चयेनोक्तोऽर्थो नेन । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

निरुक्तिः । स्त्री । निर्वचने ॥ निश्चितोक्तिः ॥

निरुद्धम् । न । ध्येयाकारवृत्तेर्निरोधे ॥ निरुद्धंचित्तं पञ्चमी चित्तस्यासम्प्रज्ञातसमाधिभूमिः । तदुक्तम् । तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति ॥ त्रि । संरुद्धे । रोधविशिष्टे ॥ निश्चयेन रुद्धम् ॥

निरूढप्रकाशः । पुं । मेहनगत क्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

निरुद्योगः । त्रि । उद्योगाभावविशिष्टे । निरुद्यमे ॥

निरुपद्रवः । त्रि । उत्पातरहिते ॥

निरुपप्लवः । त्रि । निर्बाधे ॥ निर्गत उपप्लवो यस्मात् ॥

निरुपमः । त्रि । अनुपमे । उपमाशून्ये ॥ निर्गता उपमा सादृश्यं यस्मात्सः ॥

निरुपाख्यः । त्रि । असति ॥ वाचोऽसन्सत्त्वागोचरे विषयतयोक्तेश्वायोग्ये ॥ निर्गतः उपाख्यायाः प्रत्यक्षत उपलब्धेः ॥ अस्फुटस्वरूपे ॥

निरपेक्षः । त्रि । अनपेक्षे । उपेक्षारहिते ॥ निर्गता उपेक्षा औदासीन्यं यस्मात् ॥

निरसः । त्रि । यज्ञादौ भागशः पृथक्कृते ॥

निरूढः । पुं । निरूढलक्षणाकेशब्दे ॥ यथा । पूर्वस्मिन् सम्बन्धाधीन तत् स्वाम्यपरत्वे यच्छब्दे स्वत्वं तत्र निरूढो यशब्द इति दायभागः ॥

निरूढलक्षणा । स्त्री । शक्तितुल्यलक्षणायाम् ॥ यथा । निरूढलक्षणाः काश्चित् काश्चिन्नैव शक्तितः इति काव्यप्रकाशटीकायां महेश्वरः ॥

निरूढा । स्त्री । लक्षणाविशेषे ॥

निरूढिः । स्त्री । प्रसिद्धौ ॥

निरूपणम् । न । आलोके ॥ विचारे ॥ निदर्शने ॥ इति मेदिनी ॥ आलोकानुकूलशब्दे ॥

निरूपितः । त्रि । नियुक्ते ॥ कृतनिरूपणे ॥ उपश्लिष्टे ॥

निरूहः । पुं । बस्तिभेदे ॥ यथा । बस्तिर्द्विधाऽनुवासाख्यो निरूहश्चेति संज्ञितः । यः स्नेहैर्दीयते स स्यादनुवासननामकः । कषायक्षीरतैलैर्यो निरूहः स निगद्यते इति ॥ निग्रहे ॥ तर्के ॥ त्रि । उपयुक्ते ॥ निश्चिते ॥

निरेनाः । त्रि । निष्पापे ॥

निरेभः । त्रि । निःशब्दे ॥

निरोधः । पुं । नाशे ॥ रोधे ॥ निरोधनम् । रुधिर्० । घञ् ॥ प्रलये ॥ निग्रहे ॥

निरोधनम् । न । निरोधे । प्रत्युपवेशने ॥ कारागारप्रवेशने ॥ रुधिर् आवरणे । ल्युट् ॥

निरोद्धव्यः । त्रि । रोधनीये ॥

निर्ऋतिः । पुं । दिक्पालविशेषे । नैर्ऋतकोणाधिपतौ ॥ स्त्री । अलक्ष्म्याम् ॥ नियतमृच्छति दुःखं यत्र । निर्गता ऋतेः शुभादिति वा ॥ त्रि । निरुपद्रवे ॥

निर्ऋथः । पुं । सामवेदे ॥ निरन्तरम् ऋच्छति । अस्मद्विप्रायणयोः । अस्मिन्निरीतियस्तु ॥ निर्भेषो द्विजो इति भाष्यम् ॥

निर्गः । पुं । देशे ॥ इति हेमचन्द्रः ॥

निर्गतः । त्रि । निःसृते ॥ बहिष्प्राप्ते ॥ निर्मुक्ते ॥ निसराङ्गतः ॥

निर्गन्धः । त्रि । गन्धशून्ये ॥

निर्गन्धनम् । न । मारणे ॥ गन्धार्दने । भावे ल्युट् ॥

निर्गन्धपुष्पी । स्त्री । शाल्मलिद्रुमे ॥

निर्गमः । पुं । निःसरणे ॥ निर्गमनम् । गम्लृ० । ग्रहवृदित्यप् ॥

निर्गमनम् । न । प्रतीहारे । द्वारे ॥

निर्गमनद्वारम् । न । नैर्याणिके ॥

निर्गुणः । पुं । परमात्मनि । परमात्मन्वे ॥ त्रि । परमार्थतः सत्त्वरजस्तमोगुणरहिते ॥ रूपादिगुणहीने ॥ निर्धर्मके ॥ निर्गताः गुणाः सत्त्वादयो रूपादयो वा यस्मात् ॥ विद्यादिशून्ये ॥

निर्गुणा । स्त्री । गुणत्रयोपचयापचयरहितसाम्यावस्थमायोपाधिकब्रह्मरूपिण्यां शक्तौ ॥

निर्गुण्डी । स्त्री । शेफालिकायाम् ॥ सिन्दुवारे । सँभालु इति भाषा । निसिन्दा इति गौडभाषा ॥ श्वेतनीलपुष्पभेदा निर्गुण्डी द्विविधा मता ॥ पद्मकन्दे । कट्फले ॥ निर्गुडति । गुड रक्षायाम् । इगुपधेति कः । पृषोदरादिः ॥ गुण्डाद्वेष्टनान्निर्गतेति स्वामी । गौरादिः ॥

निर्गूढः । पुं । वृक्षकोटरे ॥ त्रि । संवृते ॥

निर्ग्रन्थः । पुं । नग्ने । क्षपणके ॥ निःस्वे । निर्धने ॥ बालिशे । मूर्खे ॥ द्यूतकारे ॥ ग्रन्थेभ्यो निर्गतः ॥ मुनौ ॥ त्रि । निर्वेदरूपाने ॥ निःसहाये । निवृत्तहृदयग्रन्थाविति श्रीधरस्वामी ॥

निर्ग्रन्थकः । पुं । क्षपणके ॥ निष्फले ॥ त्रि । अपरिच्छदे ॥

निर्ग्रन्थनम् । न । मारणे ॥ ग्रथि कौटिल्ये । भावे ल्युट् ॥

निर्ग्रन्थिकः । पुं । क्षपणे ॥ त्रि । निपुणे ॥ हीने ॥

निर्ग्राह्यः । त्रि । निश्चेतुं शक्ये ॥

निर्घण्टम् । न । बहुमनुजसङ्कीर्णहट्टे ॥ इति शब्दरत्नावली ॥ कारुण्यहट्टे ॥ घटशून्ये ॥

निर्घण्टः । पुं । निघण्टौ । निर्घण्टने । शब्दसङ्ग्रहे । ग्रन्थानां सूचीति ख्याते ॥

निर्घातः । पुं । वाताभिहतवायुप्रपतनजन्यशब्दविशेषे ॥ यथा वसन्तराजः । पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तदा निर्घातः स च पापो दीप्तविहगरुतः ॥ १ ॥ अर्कोदयेऽधिकरणिकनृपधनियोधाङ्गनावणिग्वेश्याः । आप्रहराष्टांशे जातिकमुपहन्याच्छूद्रपौरांश्च ॥ २ ॥ आमध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीडयति । वैश्यजलदांस्तृतीये चौरान् प्रहरे चतुर्थे तु ॥ ३ ॥ अस्तं याते नीचान् प्रथमे यामे निहन्ति सस्यानि । रात्रेर्द्वितीययामे पिशाचसङ्घान्निपीडयति ॥ ४ ॥ तुरगकरिणस्तृतीये विनिहन्याद्यायिनश्च

तुर्थेच । भैरवजर्जरशब्दे । यान्ति य
त स्तां दिश्यहन्ति ॥ ५ ॥ भूम्यन्तरी
क्षगतउत्पातध्वनिरेवायम् ॥ निरव
श्ववज्रपाते ॥ यदाम्बरी चेवबयान्
मारुतोमरुसाहत: । पतत्यधःसनि
र्घातोजायतेवायुसम्भवइति ज्योति-
षम् ॥

निर्दय: । वि । निर्दये ॥

निर्घोष: । पुं । शब्दमात्रे ॥ निर्घोषश
म् । शुषधुष्टौ । निष्पूर्वात् घञ् ॥

निर्जन: । त्रि । विविक्त । जनैरना
कीर्णे ॥

निर्जर: । पुं । देवे । सुरे ॥ जरायानि
ष्क्रान्त: । निरादय:क्रान्ताद्यर्थेपञ्च
म्याइतिसमास: ॥ अनेकार्थादिनां
समपदार्थेषुपदार्थविशेषे ॥ तत्रथि
कागमनकेशोत्लुञ्चनादितप:सञ्चय
निर्जीर्णमीर्यन्त्कर्मनिर्जरशब्देन तेक-
थ्यते ॥ वि । जराभ्यक्ते ॥ न । सु
धायाम् ॥

निर्जरसर्षप: । पुं । देवसर्षपवृक्षे ॥

निर्जरा । स्त्री । गुडूच्याम् ॥ तालप
र्ण्याम् ॥

निर्जल: । वि । जलहीनदेशादौ ॥
यथा । सम्प्राप्तादशमंत्यजाद्यगतिना
सम्मूर्च्छितानिर्जले तुर्यद्वादयवद्वि
तीयमतिमश्चैकादशाभक्तानी । ता

षष्ठी त्र्यपंपञ्चमस्यनवमभू:सप्तमी
वर्जिता प्राप्तो ऽष्टमवेदनांप्रथमद्वे
तस्यास्ततीयोभवेतिवल्लालसेन: ॥

निर्जला । स्त्री । ज्येष्ठशुक्लैकादश्या
म् ॥ यथाऽस्यास्तोभीमसेनं प्रति ।
वृषस्थेमिथुनस्थेऽर्केशुक्लाह्येकादशी
हिया । ज्येष्ठे मासिप्रयत्नेन सोपाष्या
जलवर्जिता ॥ स्नानेचाचमने चैव व
र्जयित्वोदकंबुध: । उपयुञ्जीत नैवा
न्यद्व्रतभङ्गोऽन्यथा भवेत् ॥ उद-
यादुदयं यावद्वर्जयित्वाजलंबुध: ।
अपयत्नाद्वाप्नोति द्वादशद्वादशीफ
लमिति ॥

निर्जित: । त्रि । वशीकृते ॥ विजिते ।
प्राप्तपराभवे । पराभूते ॥ निरस्त-
चित्त: ॥

निर्जितेन्द्रियग्राम: । त्रि । यतौ ॥ इ
न्द्रियाणांच ग्राम: । निर्जितइन्द्रिय
ग्रामो येन ॥

निर्जीव: । त्रि । जीवात्मरहिते ॥ प्रा
णिशून्ये ॥

निर्झर: । पुं । झरे । पर्वतान्निस्सृतज
लप्रवाहे । झर्ना इतिभाषा ॥ निर्झ
रणम् । झृषवयोहानौ । ऋदोरप्
॥ सप्तम्यांसुलरक्षे ॥ तुषाग्नौ ॥

निर्झरिणी । स्त्री । नद्याम् ॥

निर्झरी । पुं । शैले । पर्वते ॥ निर्झ

माणमफलंभवेत् । खिलितंसाचिणोवापि पूर्वेभानेदितंनचेत् ॥ यथा पक्वेषुधान्येषु निष्फला:प्रावृषोगुणा: । निर्णीतव्यवहाराणां प्रमाणमफलं तथेतिव्यवहारतत्त्वम् ॥

निर्णेजक: । पुं । रजके ॥ निर्णेनेक्ति । णिजिर् शौचे । ण्वुल् । उपसर्गादसमासेऽपीतिणत्वम् ॥

निर्णेजनम् । नं । चालने ॥ निर्णिजे ल्युट् ॥

निर्णेता । त्रि । प्रतिभुवि ॥

निर्दंट: । त्रि । दयाहीने । निर्दये ॥ निष्प्रयोजने ॥ परापवादरक्ते ॥ अन्यदोषरते ॥ अन्येऽप्येतिशब्द०॥

निर्दय: । त्रि । दयाहीने ॥ निर्गता दया यस्मात् ॥

निर्दरम् । न । निर्भये ॥ सारे ॥ त्रि । कठिने ॥ अदये ॥ इतिमेदिनिकर: ॥ निर्गत. दरोयस्मात् ॥

निर्दहन: । पुं । भल्लातके ॥ अग्निमूल्ये ॥

निर्दहनी । स्त्री । मूर्वालतायाम् ॥

निर्दाता । त्रि । लवनकर्त्तरि ॥ यथा इरति निर्दाता कच धान्यस्य रचतीतिमनु: ॥

निर्दिग्ध: । त्रि । बलिनि । मांसले ॥ इति हेमचन्द्र ॥

निर्दिश्यमान: । त्रि । उच्चार्यमाणे ॥

निर्दिष्ट: । त्रि । प्रदिष्टे । प्रदर्शिते ॥ कथिते ॥ निश्चिते ॥

निर्देश: । पुं । निदेशे । शासने । आज्ञायाम् ॥ निर्देशनम् । दिश० । घञ् ॥ निर्दिश्यतेऽभिधीयतेऽनेनेतिव्युत्पत्त्या प्रतिपादकशब्दे । नाम्नि ॥ भृतौ ॥ नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत निर्देशं भृतकोयथा ॥ व्यवहारे ॥ कथने ॥ उपान्ते ॥ देशान् निष्क्रान्ते ॥ निरथ बहिर्भावे ॥

निर्देश्य: । त्रि । निर्देष्टुं शक्ये ॥

निर्देष्टा । त्रि । निर्देशकर्त्तरि ॥

निर्दोष: । त्रि । दोषरहिते ॥ यथा । निर्दोषं दर्शयिष्यामि सदोषं य: प्रयच्छति । समूल्यात् द्विगुणं दाप्यो विनयं तावदेवचेतिमिताक्षरा ॥

निर्द्धन । पु । जरद्गवे ॥ त्रि । धनहीने॥

निर्द्धर्म० । त्रि । धर्मरहिते ॥

निर्द्वार । पु । निश्चये ॥

निर्द्धारणम् । न । जातिगुणक्रियासंज्ञाभि. समुदायादेकदेशस्य पृथक् करणं ॥ तन्नयतश्चनिर्द्धारणइतिषष्ठी सप्तमीच विभक्तिर्भवति । यथा । मनुष्याणां मनुष्येषुवा क्षत्रिय: शूरतम: । गवांगोषुवा कृष्णासम्पन्नक्षीरा

। अध्वगानामध्वगेषु वा धावन्तः श्री धतमा इति ॥ निश्चये ॥

निर्द्धारणीयः । वि । निर्द्धार्य्ये । निर्द्धारितव्ये ॥

निर्द्धारितः । वि । कृतनिश्चये ॥

निर्द्धार्य्यः । वि । निर्द्धारणीये ॥ निःश्चक्ष कर्मकर्त्तरि ॥ निर्द्धार्य्यः कार्यकर्त्ता यः संयतन् सत्त्वसम्पदा । व्यसनेऽभ्युदयेवापि चाविकारं सदात्मनः । त त्सुसत्त्वमिति प्रोक्तम् ॥ तत् सम्पदा संयतन् उद्यमं कुर्वन्नित्यर्थः । संयुत इतिवा पाठः ॥ निश्चयेनध्रियते । धृञ्० । कर्म्मण्यत् ॥

निर्द्धूतः । वि । खण्डिते । परित्यक्ते ॥ नितराङ्कम्पिते ॥ समुन्मूलिते ॥

निर्द्धौतः । वि । प्रक्षालिते ॥ धावेः क र्म्मणि क्तः । च्छ्वोरिति वकारस्योठादेशः । एत्येधत्यूठ् स्विति वृद्धिः ॥

निर्ध्यानम् । न । निध्याने ॥ दर्शने ॥ ध्यै चिन्तायाम् । ल्युट् ॥

निर्द्वन्द्वः । वि । शीतोष्णादिद्वन्द्वसहिष्णौ ॥ रागद्वेषादिद्वन्द्वरहिते ॥ निर्गतोद्वन्द्वात् द्वन्द्वेभ्योवा ॥

निर्बन्धः । पुं । आग्रहे । अभिनिवेशे ॥ वपुर्वोधरेषु निर्बन्धः कर्म्मिणो ननु साधिधिः प्राणिनः साध्यलेपत्वेनिर्वन्धो नेतरत्क्वचि ॥ निश्चयेनबन्धः ॥

निर्बाधः । वि । निरुपद्रवे ॥ विविक्ते ॥

निर्भटः । त्रि । दृढे ॥

निर्भयः । पुं । अजानेये ॥ हयोत्तमे ॥ त्रि । भीतिरहिते ॥ निर्गतं भयं यस्मात् यस्य वा ॥

निर्भरम् । न । अतिशये ॥ निःशेषेण भरोभारोऽत्र । उपसर्गान्तरनिवृत्त्यर्थं निर्भरमित्युक्तम् ॥ वि । तद्वति ॥

निर्भर्त्सनम् । न । खलीकारे ॥ अलक्तके ॥ इतिमेदिनी ॥

निर्भर्त्सितः । वि । धिक्कृते । निन्दिते । कृतनिर्भर्त्सने ॥

निर्भाग्यः । वि । भाग्यहीने । मन्दे । मूढे ॥

निर्भाज्यः । वि । पृथक्कार्य्ये ॥

निर्भिन्नः । वि । नितरांदारिते ॥

निर्भिन्नचिर्भिटः । पुं । निर्भिन्नकर्कटी फले । फूट इतिभाषा ॥

निर्भीकः । वि । निर्भये ॥

निर्मक्षिकम् । अ । मक्षिकाणाम भावे ॥

निर्मठः । पुं । घट्टे ॥

निर्मथनम् । न । नितरांविलोडने ॥ अतिनिर्मथना दग्निश्चन्दनादपि जायते । विषायते ऽमृतमपि यथापथ्यमभूर्त्सः ॥

निर्मदः । पुं । मदहीनगजे । उद्भान्ते

॥ मदान्निर्गतः । निर्गतोमदोऽस्मात् ॥

निर्म्मधा । स्त्री । नखिकायाम् ॥

निर्म्मन्थ्यदारु । न । अरणौ । वह्निमन्थे ॥

निर्म्ममः । चि । ममत्वे ॥ देहेऽपिममेति प्रत्ययरहिते ॥ शरीरयात्रामात्रार्थेऽपि प्रारब्धकर्म्मोचितकौपीनाच्छादनादौ ममेदमित्यभिमानहीने ॥ देहपुत्रभार्य्यादिषु स्वीयेषु ममताशून्ये ॥

निर्म्मर्य्यादः । चि । अविनीते ॥ निर्गतोमर्य्यादायाः ॥

निर्म्मलम् । न । निर्म्माल्ये ॥ अभ्रके ॥ चि । मलहीने । शुद्धे ॥ रजस्तमोमलानभिभूते ॥ रागादिमलरहिते ॥ अविद्यातत्कार्य्यलक्षणमलरहितेः ॥ मलान्निर्गतम् । निर्गतं मलमस्मात् ॥

निर्म्मलोपलः । पुं । स्फटिके ॥

निर्म्माणम् । न । निर्म्मितौ ॥ सारे ॥ समञ्जसे ॥ कामभेदे ॥ इतिहेमचन्द्रः ॥

निर्म्माता । चि । निर्म्माणकर्त्तरि ॥ निर्म्माति । माङ्माने । तृच् ॥

निर्म्मानः । चि । मानरहिते ॥ निर्गतोमानात् ॥

निर्म्मानमोहः । चि । मानमोहाभ्यां निष्क्रान्ते । अहङ्काराविवेकाभ्यां रहिते ॥

निर्म्माल्यम् । न । देवार्पितोज्झिते । देवोच्छिष्टद्रव्ये ॥ यथा । सर्वाग्निसंभवाद्द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्म्माल्यं भवतिक्षणादिति ॥ चि । माल्यशून्ये ॥

निर्म्माल्या । स्त्री । पृक्कायाम् ॥

निर्म्मितः । चि । कृतनिर्म्माणे । निष्पादिते । रचिते ॥

निर्म्मितकः । चि । मन्त्रौषध्यादिभिर्निष्पादिते ॥

निर्म्मितिः । स्त्री । निर्म्माणे । रचनायाम् ॥ असाधारणचमत्कारकारिणीरचनाहिनिर्मितिरितिव्याख्यातारः ॥

निर्म्मुक्तः । पुं । मुक्तकञ्चुके भोगिनि ॥ चि । त्यक्तसङ्गे । निष्परिग्रहे ॥

निर्म्मुक्तिः । स्त्री । निवृत्तौ ॥

निर्म्मुटः । पुं । वनस्पतौ । अपुष्पवृक्षे ॥ खर्परे ॥ सूर्ये ॥ ■ । कारगृम्भेद ट्टे । पण्याजिरे ॥

निर्म्मोकः । पुं । मोचने ॥ व्योम्नि ॥ सन्नाहे ॥ सर्पकञ्चुके । अहिकोषे ॥ निश्चयेनमुच्यते । मुच्ल० । कर्म्मणिघञ् ॥

निर्म्मोक्षः । पुं । त्यागे ॥ मोक्षाभावे ॥

निर्य्यत्। त्रि। निर्गच्छति॥

निर्य्यन्त्रणः। त्रि। विशृङ्खले। अवाधे। निरर्गले। स्वच्छन्दे॥

निर्य्याणम्। न। हस्त्यपाङ्गदेशे॥ मोक्षे॥ अध्वनिर्गमे॥ पशूनांपादबन्धनदामनि॥ निर्य्यात्यनेन। याप्रापणे। ल्युट्॥

निर्य्यातनम्। न। वैरशुद्धौ॥ दाने। त्यागे॥ न्याससमर्पणे॥ यतनिकारादौ। स्वार्थणिजन्तः। भावकर्मकरणादौ ल्युट्॥ मारणे॥ इति हेमचन्द्रः॥

निर्य्यामः। पुं। पोतवाहे॥ इ० हे०॥

निर्य्यासः। पुं। कषाये। क्वाथे। कथितद्रव्यरसे॥ एकद्रवे। वृक्षान्निर्गच्छत्कठिनतायासेरसविशेषे। येटके। गेंद इतिभाषा॥

निर्य्युक्तिकः। त्रि। युक्तिरहिते॥ यथा। नहि क्रियारहितं वाक्यमस्तीति भाष्यप्रवादो निर्युक्तिकत्वादग्राह्य इति शब्दशक्तिप्रकाशिका॥ निर्युक्तिकं ग्रहाणास्तु नाम्नाभिर्विनिवार्य्यन्ते इतिन्यायः॥

निर्य्यूषः। पुं। निर्य्यासे॥ इतिश०मा०॥

निर्य्यूहः। पुं। आपीडे। शेखरे॥ द्वारे॥ निर्य्यासे॥ नागदन्तके॥ निर्य्यूहति। यूहलौकिको धातुः। इगुपधेति कः। निह्नुतिषा। पृषोदरादित्वात् धातोर्यङागमः॥ मत्तवारणे॥

निर्य्योगः। पुं। गोःपादबन्धनरज्जौ॥ निर्युज्यतेऽनेन। युजिर्। घञ्॥

निर्लक्षणः। त्रि। लक्षणहीने। पापकुरूपे॥ इतिहेमचन्द्रः॥

निर्लिप्तः। पुं। श्रीकृष्णे॥ त्रि। लेपरहिते॥

निर्लेखनम्। न। कर्षणे॥

निर्लेपः। त्रि। लेपवर्जिते॥ शुद्धे॥ आसङ्गरहिते॥ पापशून्ये॥

निर्लोडितः। त्रि। आलोडिते॥

निर्ल्वयनी। स्त्री। सर्पत्वचि। कञ्चुके॥ यस्यांत्वचिसर्पोनितरां लीयते सा निर्ल्वयनी सर्पत्वगिति व्याख्यातारः॥

निर्व्वचनम्। न। निरुक्तौ। शब्देनाभिधाने॥ निश्चितं वचनम्॥

निर्व्वपणम्। न। दाने। पित्रादीनां संविभागे॥ डुवप्०। भावेल्युट्॥

निर्व्वरः। त्रि। निर्दरार्थेषु। इतिहेमानेकार्थः॥

निर्व्वर्णनम्। न। दर्शने॥ वर्णशब्दात् सत्यापेतिणिच्। ल्युट्॥

निर्व्वर्त्तयन्। त्रि। कुर्वति॥

निर्व्वर्त्तितः। त्रि। निष्पादिते॥

निर्व्वहणम्। न। नाट्योक्तौ। प्रस्तुतकथासमाप्तौ। प्रकृताभिनयस्य निर्वाहे। निडायास्॥ निर्वाहो निर्वहणम्।

वहेर्ल्युट् ॥ नाटकसन्ध्यन्तरे ॥ यथा ॥ मुखं प्रतिमुखञ्चैव गर्भो विमर्ष एव च । तथा निर्वहणञ्चेति नाटके पञ्च सन्धय इति भरतः ॥

निर्वहणा । स्त्री । निष्ठायाम् । प्रकृताभिनयनिर्वाहे । निर्वहणे ॥ टाप् ॥

निर्वहिता । त्रि । निर्वाहिते ॥

निर्वाणम् । न । अस्तङ्गमने । विनाशे ॥ निर्वृतौ ॥ गजमज्जने ॥ सङ्गमे ॥ मोक्षे । अपवर्गे ॥ यथा । यतितव्यं समत्वेन निर्वाणमपि चेच्छता ॥ समत्वबुद्धे निर्वाणं फलमुक्तं श्रुतौ स्मृतौ ॥ सर्वदुःखोपशमलक्षणं परमानन्दरूपं निर्वाणमिति भाष्यकारः । सर्वदुःखोपशमात्मकत्वान्निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थकैवल्यरूपं ब्रह्म निर्वाणमित्युच्यत इति व्याख्याकारः ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नम इति विष्णो निर्वाणरूपत्वे भारतवचनम् ॥ निश्चले ॥ शून्ये ॥ विश्रान्ते ॥ अपवर्गसाधनग्रन्थविशेषे ॥ विद्योपदेशने ॥ आदिगुप्तविकल्पे ( ऽ ) ॥ त्रि । मुक्ते ॥ शान्ते मुनिवह्न्यादौ । चरमावस्थमुनौ ॥ चरमावस्थवह्नौ ॥ यस्मान्निर्गमनं निर्वाणम् । गत्यर्थक



वाधातोर्भावे ल्युट् ॥ निर्वातिस्म । वा गतिगन्धनयोः । गत्यर्थेति क्तः । निर्वाणोऽवात इति साधु ॥ आदिना निर्वाणो हस्ती निमग्न इत्यर्थः । आदिना निर्वाणमुक्तिनिर्वृतिष्वेष्वपि वदन्ति ॥ यथा । प्रियदर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । निर्वाणमाप्यते येन सरागेणापि चेतसेति ॥

निर्वाणमस्तकः । पुं । मुक्तौ ॥ इति त्रिकाण्डशेषः ॥

निर्वातः । त्रि । वायुरहिते ॥ निर्वातिस्म । वा० । गत्यर्थेति क्तः ॥ निर्गतो वातो यतो वा ॥

निर्वादः । पुं । लोकवादे ॥ परिनिश्चितवादे ॥ अपवादे ॥ निर्वदनम् । यद्वा ज्ञानार्थाच्चि वदेरभिवादनस्तुत्योर्वा । निष्पूर्वाद्वदेर्भावे घञ् ॥

निर्वापः । पुं । निवापे ॥

निर्वापणम् । न । वधे ॥ दाने ॥ टुवप० । स्वार्थण्यन्तः । ओर्वैशोषणे वा । ल्युट् ॥

निर्वाप्यः । त्रि । कर्त्तव्ये ॥

निर्वार्यः । त्रि । निःशङ्ककर्मकृति । सत्त्वसम्पदासम्पतन्कार्यकर्त्तरि ॥ भयविस्मयव्यसनाभ्युदयादौ निर्विकारं मनःसत्त्वम् तत्सम्पदा सम्पतन् उद्यमं कुर्वन् यो निःशङ्को भूत्वा कर्म कु

यते सनिर्वार्य्यउच्यते ॥ निश्चयेननि यते । वृष० । फल्गेतोर्य्यत् ॥

निर्व्वासनम् । न । मारणे । हिंसने ॥ नगरादेर्व्वहिष्कृतौ ॥ वासच्छेदे । चुरादिः । भावे ल्युट् ॥

निर्व्वासितः । त्रि । निष्कासिते ॥

निर्व्वास्यः । त्रि । निर्व्वासनीये ॥

निर्व्वाहः । पुं । कार्य्यसाधने ॥ निर्व्वह्यम् । वह० । घञ् ॥ मिप्यसौ । समाप्तौ ॥ यावता स्यात् स्वनिर्व्वाहः स्वीकुर्य्यात् तावदर्थवित् । आधिक्ये न्यूनतायाञ्च च्यवते परमार्थत इत्युपदेशः ॥

निर्व्वाहकः । पुं । कार्य्यसाधके । सम्पादके ॥ नहिस्वपरनिर्व्वाहकस्य परापेक्षा भवति ॥

निर्व्वाहकैक्यम् । न । सङ्गत्यन्तरे ॥ साक्षात्परम्परया वा एककार्य्यानुकूलत्वे ॥

निर्व्वाहणम् । न । निर्व्वहणे ॥

निर्व्वाहिका । स्त्री । प्रवाहिकायाम् ॥

निर्व्विकल्प । पुं । सर्व्वविकल्पशून्ये परमात्मनि ॥ त्रि । कल्पनाहीने ॥ निरन्तभेदे ॥ निर्गतोविकल्पोविविधाकल्पनायस्मात् ॥ भोगैकवासनांत्यक्त्वा त्यजत्वं भेदवासनम् । भावाभावौ ततस्त्यक्त्वा निर्व्विकल्पोसुखीभव ॥

निर्व्विकल्पकः । पुं । असम्प्रज्ञातसमाधौ । ध्यातृध्यानादिविकल्पभेदव्यपेक्षया ऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थाने ॥ तत्रदृष्टान्तः । जलाकाराकारितलवणानवभासेन जलमात्रावभासवत् अद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेवभासत इति । ततश्चास्यनिर्व्विकल्पकसमाधेः सुषुप्तेश्चाभेदशङ्का न भवति । उभयत्र वृत्त्यभाने समाने ऽपि तत्सद्भावासद्भावमात्रेण तयोर्भेदोपपत्तेरिति । सुषुप्तौ बुद्धिर्हि नास्ति बुद्धेः कारणात्मनावस्थानस्य तत्र स्वीकारात् । इहतु बुद्धिवृत्तेरद्वितीयवस्त्वाकाराकारितायाअवस्थानाङ्गीकारात् सुषुप्तेर्भेदोपपत्तेरितिभावः । नापिमुक्तावतिव्याप्तिः । तथापि अनिवार्त्तकार्य्यसंस्कारायाः स्वत्यन्तमुच्छेदात् । इदपुनर्व्युत्थानादिव्यवहारदर्शनेन तेषामनुवृत्तेरिष्टत्वात् । नापिजीवन्मुक्तौ प्रसङ्गः । तत्रव्युत्थानदशायामपिबाधितानुवृत्तिमात्रमपश्यावभासेपि स्वस्वरूपप्रवस्थानात् । साधकस्यबाधितानुवृत्तिमात्रमप्यनवभासान्नातिदोषः ॥

दिति भावप्रकाशः ॥

निर्विष्टः । त्रि । भुक्ते ॥ कृतनिवेशे ॥ प्राप्ते ॥ स्थिते ॥ विवाहिते ॥ कृताग्निहोत्रे ॥

निर्वीजा । स्त्री । काकलीद्राक्षायाम् । तस्मिन् प्रतिभाषा इति राजनिर्घण्टः ॥

निर्वीरः । त्रि । वीरशून्ये ॥

निर्वीरा । स्त्री । अवीरायाम् । पतिपुत्रविहीनायाम् ॥

निर्वीर्य्यः । त्रि । निष्प्रभावे ॥

निर्वृसः । त्रि । उपरतस्वभावे ॥

निर्वृतिः । स्त्री । सुस्थितौ ॥ अस्तगमने । मृत्यौ ॥ सुखे ॥ मोक्षे ॥ सिद्धौ ॥

निर्वृत्तः । त्रि । निष्पन्ने ॥ निर्वर्त्ततेस्म । वृतुवर्त्तने । क्तः ॥ प्राप्ते ॥

निर्वृत्तिः । स्त्री । निष्पादे ॥ समाप्तौ ॥ यथा ऽध्ययननिर्वृत्तिरिति ॥ त्रि । वृत्तिरहिते ॥

निर्वेदः । पुं । स्वावमानने ॥ एतावता कालेनाप्ययं न सिद्धः किमतः परं कष्टमित्यनुतापे । खेदे ॥ वैराग्ये ॥ यथा । यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चेति ॥ शान्तरसस्य स्थायिभावे । निर्वेदः स्थायिभावो ऽस्ति शान्तोऽपि नवमो रसः ॥ परवैराग्ये ॥ यथा । ततः कदाचिन्निर्वेदान्निराकाराश्रितेन च । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मयेति मोक्षधर्म्मः ॥

निर्वेशः । पुं । भोगे ॥ वेतने ॥ मूर्च्छने ॥ निर्वेशनम् निर्विश्यते ऽनेन वा । विश॰ । अकर्त्तरि चेति हलश्चेति वा घञ् ॥

निर्वेशनम् । न । उपभुक्तौ ॥

निर्वेष्टनम् । न । नाडिचीरे । सूत्रवेष्टनस्थाम् ॥ त्रि । वेष्टनरहिते ॥

निर्वैरः । त्रि । सर्वभूतेष्वपकारिष्वपि द्वेषरहिते ॥ निर्वृत्तो वैरात् ॥

निर्वोढः । त्रि । निर्वहितरि ॥

निर्व्यग्रः । त्रि । स्वस्थे ॥

निर्व्यथनम् । न । छिद्रे । रन्ध्रे ॥ व्यथ॰ । भावे ल्युट् । निश्चयेन व्यथनं भयं चलनं वा यत्र ॥

निर्व्यपेक्षः । त्रि । निस्पृहे ॥

निर्व्यूढः । त्रि । त्यक्ते ॥ समाप्ते ॥

निर्व्यूहः । पुं । शेखरे ॥ द्वारि ॥ निर्यासे ॥ नागदन्तके ॥ निर्व्यूहति । इगुपधेति कः ॥

निर्व्यूह्यमानः । त्रि । इतस्ततश्चाल्यमाने ॥

निर्हरणम् । न । दाहार्थं शवादिनय

ने ॥ निष्कोशने ॥ निःशेषेण हरणे ॥

निर्हारः । पुं । शल्याद्युत्पाटने । अभ्यवकर्षणे ॥ मलमूत्रादित्यागे । निर्हरणम् । हृञ् । घञ् ॥ यथेष्टविनियोगे ॥ न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥

निर्हारिगन्धम् । न । } विष्णुपादि-
निर्हारस्थानम् । न । }

त्र्यागाथगेहे । मोखरा इतिभाषा ॥

निर्हारी । पुं । दूरगामिगन्धे । समीकर्षिणि ॥ त्रि । सद्वति ॥

निर्हृतः । त्रि । हृते ॥

निर्ह्रादः । पुं । स्वाने । शब्दे ॥

निलयः । पुं । गृहे । वेश्मनि ॥ निलीयते ऽत्र । लीस्लेषणे । पुंसीतिघः ॥

निलयनम् । न । आधारे ॥ स्थाने ॥ निलीयतेस्मिन् । ली० । ल्युट् ॥

निलायी । त्रि । निलायिनि ॥

निलिम्पः । पुं । देवे । सुरे ॥ निलिम्पति । लिपउपदेहे । नौलिम्पेरिति शः । मुचादित्वान्नुम् ॥

निलिम्पा । स्त्री । स्त्रीगवि ॥

निलिम्पिका । स्त्री । निलिम्पायाम् सौरभेय्याम् ॥ स्वार्थेकन् ॥

निलीनः । त्रि । निःशेषेणलीने । संवृते ॥

निवचनेकृत्य । अ । } वाचं नियम्येत्यर्थे ॥ वचनाभावो निवचनम् । अर्थाभावेऽव्ययीभावः । तृतीयासप्तम्योर्बहुलम् । अधोपदे निवचनेचेतिगतिसंज्ञा । कुगतीतिसमासः ॥
निवचनेकृत्वा । अ । }

निवपनम् । न । पितुद्देश्यकदाने ॥

निवरा । स्त्री । कन्यायाम् । कुमार्याम् ॥ हृष० । वृञ्० । आभ्यां अपहृद्भ्यादिनांकर्मण्यप् ॥

निवर्त्तनम् । न । व्यावर्त्तने । निवृत्तौ ॥ यतोयतो निवर्त्तते ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्वतो नवेत्ति दुःखमण्वपि ॥ विंशतिवंशपरिमाणे ॥

निवर्त्तितः । त्रि । व्याकृष्टे ॥

निवर्हणम् । न । मारणे ॥ वर्हेहिंसायाम् । भावेल्युट् ॥

निवर्हणीयः । त्रि । वध्ये ॥

निवर्हितः । त्रि । अपहृते ॥

निवसतिः । स्त्री । गृहे ॥

निवसथः । पुं । ग्रामे ॥ इति हेमचन्द्रः ॥

निवसनम् । न । वस्त्रे ॥ गृहे ॥ निवसेर्ल्युट् ॥

निवहः । पुं । समूहे ॥ नितरामूह्यते । ऊह० । पुंसीतिघः ॥ वहत्यन्वर्गतथाद्युविशेषे ॥ नितरां वहति । वह० । पचाद्यच् ॥

निवातः । पुं । दृढसन्नाहे । अस्त्राभेद्यवर्मणि ॥ आश्रये ॥ त्रि । वातशून्ये ॥ निरुद्धो निवृत्तो वा वातोऽस्मात् ॥

निवातकवच. । पुं । अच्छिद्रकञ्चुके ॥ हिरण्यकशिपोः पौत्रे दैत्ये । संह्रादपुत्रे ॥

निवापः । पुं । पितृदाने । सपिण्डनादूर्ध्वं पितृदेशेनदाने ॥ न्युप्यते निवपनेन वा । डुवप० । कर्मणि भावे वा घञ् ॥ दानमात्रे ॥

निवारः । पुं । निवारणे ॥

निवारणम् । न । निश्चयेनवारणे ॥

निवारितः । त्रि । निराकृते । कृतनिवारणे ॥

निवासः । पुं । गृहे ॥ निवसन्त्यस्मिन् । वस० । घञ् ॥ निवासदेशे ॥ निवासो नाम यत्र सम्प्रत्युष्यत इति भाष्यम् ॥

निवासी । त्रि । निवसनशीले ॥ निवसति तच्छीलः । वस० । णिनिः ॥

निविडः । त्रि । सान्द्रे । घने । नीरन्ध्रे । दृढे ॥ निविडाः केशाः ॥ अवटीटे ॥ नासिकाया नतम् । नेर्विडज्बिरीसचौ । तद्योगान्नासिकानिविडा ॥

निविरीसः । त्रि । अवनाटे । निविडे ॥ नासिकायानतम् । नेर्बिडज्बिरीसचौ । तद्योगान्नासिका निविरीसा पुरुषोनिविरीसः ॥ सान्द्रे ॥

निविष्टः । त्रि । स्थिते ॥ निविश० । क्तः ॥ प्रविष्टे ॥ यथा । उडुगणपरिवारो नायकोप्योषधीनाममृतमयशरीरः कान्तियुक्तोपिचन्द्रः । भवति विकलमूर्तिर्मण्डलं प्राप्य भानोः परसदननिविष्टः कोलघुत्वंनयातीति ॥

निवीतम् । न । कण्ठलम्बिते यज्ञसूत्रे ॥ त्रि । प्रावृते । परिहितवस्त्रे ॥ निवीयतेस्म । व्येञ्संवरणे । क्तः । सम्प्रसारणादिः ॥ यथा । निवीयतेस्म । अन० । अजेर्विः । वीणाद्यादिषु वा । क्तः ॥ न्यनतिस्म निवेतिस्मवा । गत्यर्थेतिक्तः ॥ निम्नधोभागे वीसंगमनं यस्य या ॥

निवीती । पुं । कण्ठलम्बियज्ञसूत्रवति द्विजे ॥ शिरोवधाय दक्षिणपाण्योदावध्यन्तु हस्तकण्ठादेवसज्जने यज्ञप्रालम्बे यज्ञसूत्रे दत्ते वा निवीती द्विजो भवति ॥ निवीतमस्यास्ति । अतइनिठनाविनीनिः ॥ कृतोपवीती देवेभ्यो निवीतीच भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रा न्ऋषीस्तथा ॥

निवृतम् । त्रि । निवीते ॥ परिच्छिन्ने । परिस्यादिना वेष्टिते ॥ निवियते-

स्म । वृत्° । क्तः ॥

निवृत्तः । त्रि । व्यावृत्ते ॥ गते ॥ परिसमाप्ते ॥ निवृत्तिविशिष्टे । विरते ॥

निवृत्तचक्षुः । त्रि । आवृत्तनेत्रे ॥ निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि वाह्यानि करणानि येन ॥

निवृत्तात्मा । पुं । विष्णौ ॥ विष्णुस्तु निवृत्तात्मा कालकर्माद्यनपेक्षते ॥

निवृत्तिः । स्त्री । उपरतौ । उपरमे । विरतौ ॥ यद्विषयं यदाश्रय प्रमाणं तद्विषयतदाश्रयप्रमाणाभावात् तन्निवृत्ति र्भवति ॥ प्रवृत्तिप्रागभावे ॥ निवर्त्तते निवर्त्तनं वा । वृतु° । क्तिन् ॥

निवेदकः । त्रि । विज्ञापनस्य कर्त्तरि ॥

निवेदनम् । न । आवेदने । सम्मानपूर्वकविज्ञापने ॥ नि विद्° । ल्युट् ॥ समर्पणे ॥

निवेदितः । त्रि । कृतनिवेदने ॥

निवेशः । पुं । विन्यासे ॥ सैन्यविन्यासे ॥ शिविरे । आगन्तुकसैन्यवासे ॥ उद्वाहे ॥ स्थाने ॥ निवेशनम् । निविश° । घञ् ॥ निविशन्त्यस्मिन् । उञ्छ्वेति घञ् ॥ कटके ॥ इतिशब्दाम्बुधौ प्राणकृष्णः ॥

निवेशनम् । न । गेहे ॥ स्थितौ ॥ प्रवेशे ॥ निविश° । ल्युट् ॥

निवेशनीयः । त्रि । निवेष्टुयोग्ये । निवेशनार्हे ॥

निवेशितः । त्रि । विहिते ॥ विशतेर्ण्यन्तात् कर्म्मणि क्तः ॥

निवेश्यः । त्रि । निवेशनीये ॥

निट् । स्त्री । निशायाम् । रात्रौ ॥ नितरां श्यति तनूकरोति व्यापारान् । शोतनूकरणे । आतश्चोपसर्ग इतिकः । पृषोदरादिः ॥

निशठः । पुं । यदुदेवात्मजे ॥

निशमनम् । न । दृष्टौ ॥ श्रुतौ ॥

निशा । स्त्री । ज्योत्स्नाम् । रात्रौ ॥ नितरां श्यति तनूकरोति व्यापारान् । शो° । आतश्चोपसर्ग इतिकः ॥ टाप् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥ राशिविशेषे ॥ यथा । कर्णगोपतियुग्मञ्च कर्किधन्विमृगा स्तथा । निशासंज्ञाः स्मृतास्त्वेते शेषाश्चान्ये दिनात्मका इति ॥

निशाकरः । पुं । चन्द्रे ॥ निशां करोति । डुकृञ्° । दिवाविभानिशेति टः ॥ कुक्कुटे ॥

निशाख्या । स्त्री । हरिद्रायाम् ॥

निशागणः । पुं । गणरात्र । रात्रिसमूहे ॥

निशाचरः । पुं । राक्षसे ॥ फेरौ । शृगाले । पेचके । घूके ॥ सर्पे ॥ भूते

निशान्त | निशाव

॥ चक्रवाके ॥ चोरकमेचके ॥ निशायां चरति । चर° । चरेट. ॥ त्रि । रात्रिचरमात्रे ॥

निशाचरी । स्त्री । पांशुलायाम् । कुलटायाम् ॥ राक्षस्याम् ॥ अनिर्वृति निशाचरी समग्रहाम्बराले स्थिता निरन्तर सिताम्भमस्मृतिपुराणगा स्त्रीोदिताम् । क्रियां तदनुगा सखी हृदय एव चिन्ताश्रितम् तयोर्दमन कार्यो त्वमसिकेवलं भूपते ॥ केशिनीनामगन्धद्रव्ये ॥ टित्वात् ङीप् ॥

निशाचर्म्म । न । तमसि । अन्धकारे ॥

निशाजलम् । न । हिमे । तुहिने ॥

निशाटः । पुं । मेचके ॥ निशाया मटति । अट्° । अच् ॥ निशाचरे ॥

निशाटक. । पुं । गुग्गुलौ ॥ इतिराजनिर्घण्टः ॥

निशाटन । पुं । उलूके । मेचके ॥ निशाचरे ॥

निशात. । त्रि । तेजिते । निशिते । शोशिते ॥ निशायते स्म । शो° । क्तः । शाछोरिति पक्षेऽत्वाभाव. ॥

निशाद. । त्रि । निशाभुजि ॥

निशादिः । स्त्री । सन्ध्यायाम् ॥ इति राजनिर्घण्टः. ॥

निशानम् । न । तीक्ष्णीकरणे ॥

निशान्तम् । न । सद्मनि । गृहे । भवने ॥ उषसि । प्रभाते ॥ यथा । निशान्ते निशान्ताङ्गनामानयुक्ते स्फुरत्सारकामानुमद्भानुपूते । प्रसन्नाम्बरान्ते रटद्भृङ्गगीते जगद्वन्दितुमुच्च निशांहगन्ते ॥ इत्युत्कलदयारामभट्टाचार्य्यः ॥ त्रि । शान्ते ॥

निशान्ध । त्रि । रात्र्यन्धे ॥

निशान्धा । स्त्री । जतुकालतायाम् ॥

निशापतिः । पुं । चन्द्रे ॥ निशायाः पतिः ॥ कर्पूरे ॥

निशापुष्पम् । न । उत्पले ॥

निशाबलः । पुं । मेषवृषमिथुनकर्कटधनुर्मकरराशिषु ॥

निशाभङ्गा । स्त्री । दुग्धपुष्प्याम् । दुग्धफेया इतिगौडभाषा ॥

निशामणिः । पुं । चन्द्रे ॥ निशाया मणिरिव ॥

निशामनम् । न । दर्शने । चाक्षुषज्ञाने ॥ आलोचने ॥ श्रवणे ॥ चापसमाचे ॥

निशामृगः । पुं । शृगाले ॥

निशारणम् । न । मारणे । प्रहिंसायाम् । स्वार्थण्यन्त. । भावे ल्युट् ॥ पु । रात्रियुद्धे ॥

निशारत्न । पुं । चन्द्रे ॥ इतिहेमचन्द्र ॥

निशारूप. । पु । समरूपकान्तर्गतरूपकभेदे ॥ तल्लक्षणयथा । लघुद्वन्द

गुरुरन्त्यं तथ्या सतालिकः स्मृतः। चतुर्विंशति वर्णैस्तु रचेखासे निशापालः ॥ तालविशेषे ॥ यथा। प्रविश्यनर्त्तकोरङ्गं विकीर्य कुसुमादिकम्। निशापालेन तालेन कोमलं नृत्यमाचरेत् ॥ इति सङ्गीतदामोदरः ॥

निशाचमः। पुं। शवे ॥ इति राजनिर्घण्टः ॥

निशावेदी। पुं। कुक्कुटे इति हेमचन्द्रः ॥

निशाहसः। पुं। कुमुदे। कैरवे ॥ इति त्रिकाण्डशेषः ॥ निशायां हसः हसनं विकाशो ऽस्य ॥

निशाह्वा। स्त्री। हरिद्रायाम् ॥ निशा आह्वा यस्याः। निशापदेन सर्वे रात्रिपर्य्याया हरिद्रानामानि भवन्ति ॥

निशितः। त्रि। शाणिते। तीक्ष्णीकृते ॥ निशाधिते स्म। शो। क्तः। शाच्छो-रिति वेत्त्वम् ॥ न। लौहे ॥

निशिपालः। पुं। छन्दोविशेषे ॥ यथा। तालधररज्जुधररत्नवरसुन्दरम् भावयुततारगणमन्त्यकृतचामरम्। मुद्गमतिनागपतिचित्तकृतसङ्गमम् वृत्तनिशिपालमसिताचिह्नदयङ्गमम् ॥ यथा। चन्द्रमुखि जीवमपि याति मलयानिले याति मम चित्तमिव गाढमदनानले। तापकरकामशरमल्यभरशीलितं मा भिदुहिप-

स्य नहि रोष मतिसञ्चितमिति ॥

निशिपुष्पा। स्त्री।<br>निशिपुष्पिका। स्त्री। } शेफालिका-

याम्। सारजात इति हारसिङ्गार इति च भाषा ॥

निशिपुष्पी। स्त्री। निशिपुष्पिकायाम् ॥ निशि रात्रौ विकसितानि पुष्पाण्यस्याः। मध्यमपदलोपः। सप्तम्या अलुक्। पाककर्णेति ङीष् ॥

निशीथः। पुं। अर्द्धरात्रे ॥ निशेरते ऽस्मिन्। शीङ्। निशीथगोपीथावगथाः इति थक् ॥ राज्रिमात्रे ॥

निशीथिनी। स्त्री। त्रियामायाम्। रात्रौ ॥ निशीथो ऽस्त्यस्याम्। इनिः ङीप् ॥

निशीथिनीनाथः। पुं। चन्द्रमसि ॥

निशीथ्या। स्त्री। रात्रौ इति भूरि० ॥

निशुम्भः। पुं। शुम्भावरजे दानवविशेषे ॥ वधे ॥

निशुम्भनम्। न। मारणे ॥ इति हलायुधः ॥

निशुम्भमथनी। स्त्री।<br>निशुम्भमर्द्दिनी। स्त्री।<br>निशुम्भशुम्भमथनी। स्त्री। } दुर्गायाम् ॥

निशुम्भी। पुं। बुद्धविशेषे। वज्रकपालिनि। मञ्जटीके ॥

निशैतः। पुं। चक्रपक्षिणि ॥ इति त्रि

काण्डशेषः ॥

निशोथा । स्त्री । निवृतायाम् । रेचन्याम् ॥

निश्चयः । पुं । संशयान्यज्ञाने । निर्णये । सिद्धान्ते । अध्यवसाये । इदमित्थमेवेति संशयविपर्ययरहिते विषयपरिच्छेदे ॥ निश्चयनम् ॥ चिञ् ॥ ब्रह्मवृत्तनिश्चिगम अपेन्द्रियम् ॥ चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवाद्भुतम् । अस्यैवास्ति तदन्यन्नाकिञ्चिदपि निश्चयो विदुषामिति पूज्यपादाः ॥ प्रमाणनिबन्धने । शास्त्राचार्यवचसां तथ्यर्थविषये ऽर्थे ॥

निश्चलः । त्रि । अचले ॥ स्थिरे ॥ असम्भावनाविपरीतभावनारहिते ॥ आयत्नमर्दयनलक्षणविक्षेपरहिते ॥ अवहितकरणकलापे ॥

निश्चला । स्त्री । भूमौ । अचलायाम् ॥ शालपर्ण्याम् ॥

निश्चलाङ्गः । पुं । बके ॥ त्रि । पर्वतादौ ॥ स्पन्दरहिते ॥

निश्चायकः । त्रि । निर्णायके । निश्चयकर्त्तरि ॥

निश्चारकः । पुं । पुरीषस्यचये ॥ स्वैरे ॥ समीरणे ॥ इति मेदिनी ॥

निश्चितः । त्रि । विशेषतया ज्ञाते । प्रमाणतो निर्णीते ॥ यथा । जगतश्चयन्मूलं तत्परिज्ञानात् परं श्रेय इति सर्वोपनिषदां निश्चितोर्थ इति भाष्यम् ॥ निश्चितवति ॥ ब्रह्मविदि ॥ निर् चिञ् । कर्त्तरि क्तः ॥

निश्चिन्तः । त्रि । चिन्ताशून्ये । चिन्तामुक्ते ॥ निर्गता चिन्ता यस्मात् ॥ द्वावेव चिन्तया मुक्तौ परमानन्दमाप्लुतौ । यो विमुग्धो जडो बालो यो गुणेभ्यः परङ्गतः ॥

निश्चीयमानः । त्रि । निश्चयविषये ॥

निश्चीरानदी । स्त्री । तीर्थविशेषे ॥

निश्चुक्कणम् । न । दन्तशाणे । मिस्सि इति भाषा ॥ इति त्रिकाण्डशेषः ॥

निश्चेष्टः । त्रि । ईहारहिते । निरुद्योगे ॥ निर्गता चेष्टा यस्मात् ॥

निश्चेष्टता । स्त्री । कायिकव्यापाराकरणे ॥

निश्चेष्टाकरणः । पुं । कामबाणविशेषे ॥ मनःशिलाघटितौषधविशेषे ॥

निश्रेणी । स्त्री । अधिरोहिण्याम् । काष्ठादिकृतारोहणमार्गे । निसैनी इति भाषा ॥ नियता श्रेणिः पङ्क्तिरत्र ॥

निश्वासः । पुं । श्वसने । बहिर्मुखश्वासे ॥ निश्वसनम् । श्वसप्राणने । घञ् ॥

निश्वाससंहिता । स्त्री । वराहपुराणप्रसिद्धे शिवप्रणीतशास्त्रविशेषे ॥

निषद्गः । पुं । तूणीरे ॥ नितरां सज्यन्ते शराअत्र । पद्म० । हलश्चेतिघञ् ॥ सङ्गमे ॥

निषङ्गथिः । पुं । समालिङ्गे ॥ निषजति । षञ्जसङ्गे । नैषङ्गेर्गथिन् । च । जोरितिकुत्वम् ॥

निषङ्गी । त्रि । धनुर्द्धरे ॥ तूणीरे ॥ । निषङ्गोऽस्यास्मिन् वास्ति । इनिः ॥

निषण्णः । त्रि । आसीने ॥ यथाऽऽस्थाने स्थिते ॥ यथा । कदरे प्रमोदो भवति स्वस्ते रपि विचेष्टितैः । निषण्णं भोजयेत् तस्मान्मूकोऽचारी चकारयेदिति ॥ निषीदतिस्म । षद्लृ० । गत्यर्थेतिक्तः । रदाभ्यामितिनः ॥

निषण्णकम् । न । सुनिषण्णे ॥ त्रि । आसीने ॥

निषदनम् । न । स्थाने ॥ निषद्यतेऽनेन सीदन्त्यत्र । षद्लृ० । अधिकरणे ल्युट् ॥

निषद्या । स्त्री । आपणे । हट्टे ॥ निषीदन्त्यस्यां जनाः । षद्लृ० । संज्ञायांसमजेतिक्यप् । सदिरप्रतेरिति षः ॥ क्षुद्रखट्वायाम् ॥

निषद्वरः । पुं । जम्बाले । कर्दमे ॥ निसीदन्त्यत्र । षद्लृ० । नौसदेरिति ष्वरच् । सदिरप्रतेरितिषत्वम् ॥ यदा । निषदनम् । सं० । क्विप् । निषत् आसनस्य वरः आवरकः । वृञ् आवरणे आधृषीयः । पचाद्यच् ॥ स्मरे ॥

निषद्वरी । स्त्री । निशायाम् ॥ षित्त्वान्ङीष् ॥

निषधः । त्रि । कठिने ॥ पुं । देशविशेषे । बहुवचनान्तः ॥ तद्देशराजे ॥ निषादस्वरे ॥ पर्वतविशेषे । इलावृतस्य दक्षिणे हिरण्मयेऽजनविस्तीर्णे पूर्वतोऽदीर्घः हरिवर्षस्मर्यादाशैले ॥ निषीदति । षद्लृ० । अच् । पृषोदरादिः ॥

निषादः पुं । तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ निषादं रौति कुञ्जरः ॥ पारशवे । ब्राह्मणाच्छूद्रकन्यायामुद्रायामुत्पन्ने धीवरविशेषे ॥ चण्डाले ॥ निषीदति मनोऽस्मिन् पापमस्मिन्वा । षद्लृ० । कुत्सये निषण्णः । सदिरप्रतेरितिषत्वम् ॥ वेणोरुमन्थनादुत्पन्ने ॥ ह्रस्वस्तुषाम्र तीक्ष्णो विकटाख्यो तिष्ठत्वक्षः । किङ्करोमीति तान् सर्वानविप्राना ऽसंप्रातुरः ॥ निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् तत स्तत्सम्भवाज्ज्याता विन्ध्यशैलनिवासिनः ॥ निषादा मुनिशार्दूल पापकर्मोपलक्षणाः । तेन द्वारेण निष्क्रान्तं

तत् पापं सम्भूपतेः ॥ निषादास्ते ततो जाता वेनकल्मषनाशनाः ॥ इतिविष्णुपुराणम् ॥

निषादकर्षूः । पुं । देशविशेषे ॥

निषादाधिपः । पुं । रामायणप्रसिद्धे गुहाख्ये ॥ निषादानामधिपे ॥

निषादी । पुं । हस्तिपके । हस्त्यारोहे ॥ निषीदत्यवश्यम् । षद्लृ० । आवश्यकेणिनिः ॥ यद्वा । निषादयत्युपवेशयति हस्तिनम् । ग्रहादित्वात् आवश्यके वा णिनिः ॥ उपविष्टे ॥

निषिद्धः । त्रि । स्वसमानकालेष्टसाधनता निषेधकनञ्पदयोगिवाक्यगम्ये । विहितानुषक्तनञ्योगिवाक्यगम्ये ॥ बाधिते ॥ निषेधविषये ॥ निषिध्यति निषिध्यतेस्मवा । षिधु० । कर्त्तरिकर्मणिवा क्तः ॥

निषिद्धकर्म्म । न । नरकाद्यनिष्टसाधने ब्राह्मणहननादौ ॥ नरकादीन्यादिपदादेषु दुःखप्रदः । ब्राह्मणहननादीन्यादिपदात् सुरापानादिग्रहः ॥

निषेकः । पुं । गर्भाधाने ॥ न । रेतसि ॥ निषिच्यते । षिच० । घञ् ॥

निषेदिवान् । त्रि । निषण्णे ॥ भाषामांसदसस्नु इति क्वसुप्रत्ययः ॥

निषेदुषी । स्त्री । निषण्णायाम् ॥ ङीप् ॥

निषेधः । पुं । प्रतिषेधे । निदर्शने ॥ यन्दातेतन्निषिध्यते इतिविधिस्पृष्टे निषेधानवकाशत्वेतिन्यायः ॥ निषेधनम् । निपूर्वात् षेधतेर्घञ् । षामादिस्मात् षत्वम् ॥

निषेवणम् । न । सेवने ॥

निषेवितः । त्रि । नितरामनुष्ठिते ॥

निषेव्यः । त्रि । सेवनीये ॥ सेव्यमाने ॥ सेविते ॥ निषेवितुमर्हः । ण्यत् । सर्वैः सर्वदा निषेव्यो विभवान् भोगिनामव्ययापयः ॥

निष्कः । पुं । न । साष्टहेमशते । साष्टसुवर्णशते । अशीतिघोडशमाषकपरिमितं स्वर्णसुवर्णः तेषामष्टाधिकशते ॥ दीनारे । व्यावहारिकरूपके ॥ कर्षे । स्वर्णकर्षे ॥ वक्षोऽलङ्कारे ॥ हेमकाषे ॥ हेमपले ॥ निश्चयेन कायति । कै० । आतश्चेति कः । इदुदुपधस्येति षः ॥ यद्वा । निषीदति । षद्लृ० । नौसदेर्डिच्चेतिकन् । सदिर प्रतेरितिषः ॥ चतुर्भिः सुवर्णैः परिमितेमानविशेषे ॥ चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥ षोडशमाषो । मोषकः कादन इतिगौडभाषा ॥ माषकचतुष्टये ॥ इतिवैद्यकपरिभाषा ॥

निष्काटक: । त्रि । उपसर्गरहिते ॥

निष्काट: । पुं । वंशखदुमे ॥ इतिशब्दचन्द्रिका ॥

निष्कम्प: । त्रि । निस्तरङ्गे ॥ निर्वेपथौ ॥

निष्कर्ष: । पुं । निश्चये ॥ निष्कर्षणम् । कृष् । ल्युट् ॥ इयत्तापरिच्छेदे ॥

निष्कलम् । न । ब्रह्मणि । निरवयवे ॥ निर्गता: कला यस्मात् ॥ त्रि । कलाशून्ये ॥ नष्टवीर्ये ॥ निरुपायौ ॥ निर्गत: कलाभिः ॥ आधारेपुंसिङ्ग इति शब्दचन्द्रिका ॥

निष्कला । स्त्री । विगतार्त्तवायाम् । रजोहीनायाम् ॥ वृद्धायाम् ॥ कलाया निष्क्रान्ता । निरादय इति समास: ॥ निर्गतंकलं शुक्रमस्या वा ॥

निष्कली । स्त्री । विगतार्त्तवमार्याम् ॥ गौरादित्वात् ङीष् ॥

निष्काम: । त्रि । मानसकामनाशून्ये ॥ निस्त्रैगुण्ये विवेकिनि ॥ निस्त्रमाया-दिर्सा: कामा: प्रत्यकृतस्यविवेकिन: । यस्मा विनिर्गता: सोयं निष्काम इति भण्यते ॥ निर्गत: कामेभ्य: ॥

निष्कारण: । त्रि । फलापेक्षारहिते ॥ कारणशब्द: फलपर: । यथा ब्राह्मणेन निष्कारण: षडङ्गोवेदो ऽध्येयोज्ञेयश्चेत्यागम: ॥ निष्कारण-इतिहष्टं कारणमनपेक्ष्येत्यर्थ: ॥

निष्कालक: । पुं । मुण्डितलोम्नि घृताभ्यक्ते प्रायश्चित्तार्हे ॥

निष्काश: । पुं । प्रासादाद्युपस्थाने । छज्जाइ॰ वारछाइ॰ वारजाइ॰ पशिरा इतिचभाषा ॥ इतिमहाभारतम् ॥

निष्कासित: । त्रि । निर्गमिते । अवकृष्टे । निसारिते ॥ आहिते ॥ धिकृते ॥ निष्कासते स्म । कासगतौ । गत्यन्त: । क्त: ॥

निष्कुट: । पुं । गृहासन्नोपवने । गृहारामे ॥ कुटात् गृहात् निष्क्रान्त: । निरादय इति स॰ ॥ केदारे ॥ कपाटे ॥ पतन्याटे । क्वत: पुटे । वेत्ता रायमुकुटःवासइत्यादिभाषा ॥

निष्कुटि: । स्त्री । सूक्ष्मदेलायाम् । वक्षुलायाम् ॥ निश्चिताकुटि: कौटिल्यमस्या: । निष्क्रान्ता कुटेर्वा ॥

निष्कुटी । स्त्री । पृथ्वीकायाम् । सूक्ष्मदेलायाम् ॥ कृदिकारादितिङीष् ॥

निष्कुषित: । त्रि । निष्कासिते ॥

निष्कुषित: । त्रि । खण्डिते ॥ कुष्णाति: कर्मणि क्तः इनिष्ठायामितीडागम: ॥

निष्कुह: । पुं । कोटरे । वृक्षादिरन्ध्रे ॥ निश्चयेन कुह्यते । कुहविस्मापने । घञादयश्च ॥

निष्कृत: । त्रि । नाशिते ॥ प्रायश्चित्ते ॥

निष्कृति: । स्त्री । निर्मुक्तौ । निस्तारे ॥

निष्करणम् । कृञ्० । क्तिन् ॥ शुद्धौ । उत्पन्नपापस्य नाशे ॥ ब्रह्मघ्ने चैव मित्रघ्ने सुरापे गुरुतल्पगे । सर्वथा विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥

निष्कृपः । त्रि । निर्दये ॥

निष्कृष्टः । त्रि । सारे । निचोड इति भाषा ॥

निष्कृष्टार्थः । त्रि । सारार्थे ॥

निष्कोषणम् । न । अङ्गारमध्यगानां बहिर्निःसारणे ॥

निष्क्रमः । पुं । बुद्धिसम्पत्तौ । धीशक्तौ ॥ निर्गमे ॥ दुष्कुले ॥ निष्क्रमण संस्कारे ॥ निष्क्रमणम् ॥ क्रमु० । घञ् । नोदात्तेति वृद्धिर्न ॥

निष्क्रमणम् । न । दशसंस्कारान्तर्गत संस्कारविशेषे । चतुर्थे मासि कर्त्तव्य शिशोर्निष्क्रमणे गृहादिभ्यो बहिर्विधिविहिते सूर्य दर्शने ॥ गृहादेर्बहिर्निर्गमने ॥

निष्क्रयः । पुं । विक्रये ॥ भृतौ । वेतने ॥ निष्क्रयणम् । डुक्रीञ्० । एरच् ॥ वुद्धियोगे ॥ सामर्थ्ये ॥ निर्गतौ ॥ प्रत्युपकारे ॥ विनिमये ॥ निष्क्रियते प्रत्याक्रियते ऽनेन परगृहीतम् । डुक्रीञ्० । एरच् ॥

निष्क्रान्तः । त्रि । निर्गते ॥

निष्क्रियः । त्रि । क्रियारहिते ॥ न ।

ब्रह्मणि ॥

निष्क्वाथः । पुं । रसके । मांसादिक्वाथे । जोल इति रसा इति च भाषा ॥

निष्कुटः । त्रि । वर्णाश्रमादिभ्यो निर्गते चाण्डालादौ ॥ निर्गतः । निरोगतः इत्यत्र प्रत्ययः । इस्वात्तादाविति षत्वम् ॥

निष्ठा । स्त्री । निर्वहणे । नाट्यसन्धिस मापने । नाट्योक्ता प्रस्तुतकथासमाप्तौ ॥ निष्पत्तौ ॥ नाशे ॥ अन्ते ॥ याच्ञायाम् ॥ उत्कर्षे ॥ व्यवस्थायाम् ॥ क्लेशे ॥ व्रते ॥ गुरुशुश्रूषादौ तत्परतायाम् ॥ नियतं स्थानम् । आतश्चोपसर्गे इत्यङ् ॥ उपसर्गादिति षत्वम् । टाप् ॥ निश्चयेन स्थितौ ॥ धर्मादौ श्रद्धायाम् ॥ यथा । निष्ठया हि प्रतिष्ठा स्यादनिष्ठस्य कुतः फलम् । शक्नोति नैष्ठिकः स्वीयं धर्मं पातुं न चेतर इति ॥

निष्ठानम् । न । तेमने । व्यञ्जने । भक्ताद्युपसेचने दध्यादौ ॥ निष्ठीयते ऽत्र । ष्ठा० । ल्युट् ॥

निष्ठितः । त्रि । निष्पन्ने ॥ नितरां स्थिते ॥ निष्ठाविशिष्टे ॥ निष्ठा सञ्जाता ऽस्य । ता० इतच् । निश्चयेन स्थिते ॥

निष्ठीवः । पुं । निष्ठीवने ॥

निष्ठीवनम् । न । मुखेन श्लेष्मनिरसने

। निष्ठेवने ॥ ष्ठिवुनिरसने । ल्युट् ।
ष्ठिमुसिव्योर्ल्युटिदीर्घो वेति स्वामी ।
। पृषोदरादित्वादिति,मुकुटः ॥
निष्ठुरः । त्रि । कर्कशवाग्युक्ते । परुषे ॥
कठोरे ॥ निस्तिष्ठति । स्था० । बहु०
उरच् । उपसर्गात्सुनोतीतिषत्वम् ।
॥ न । वचनविशेषे ॥ यथा । गुह्यासा
मेध्यसंस्मारो वचनं निष्ठुरं विदुः ।
यदन्यदा वचोनीचं स्त्रीपुंसो निधु
नाश्रयमिति ॥
निष्ठेवः । पुं । निष्ठीवे । निष्ठीवने ॥
ष्ठिवु० । घञ् ॥
निष्ठेवनम् । न । निष्ठीवने ॥ ष्ठिमु० ।
ल्युट् ॥
निष्ठ्यूतः । त्रि । आविद्धे । नुन्ने । चि
प्ते ॥ निष्ठीव्यते स्म । ष्ठिवु० । क्तः ।
यस्येतिनेट् । च्छ्वोःशूडित्यूठ् ॥
निष्ठ्यूतिः । स्त्री । निष्ठीवने ॥ ष्ठिवु० ।
क्तिन् । च्छ्वोरित्यूठ् ॥
निष्णातः । त्रि । कुशले । निपुणे । वि
ज्ञे ॥ न्यष्णासीत् । ष्णाशौचे । गत्य
र्थेतिक्तः । निनदीभ्यामितिषत्वम् ॥
पारङ्गते ॥
निष्पक्कः । त्रि । क्वथिते ॥ निश्चयेन-
पक्कः ॥
निष्पचनम् । न । निष्पाके ॥
निष्पत्तिः । स्त्री । सिद्धौ ॥ निष्पदन-



म् । पद० । स्त्रियांक्तिन् ॥ समाप्तौ ॥
निष्पत्राकृतिः । स्त्री । समयाकृतौ । अ
त्यन्तपीडायाम् ॥
निष्पत्रिका । स्त्री । करीरवृक्षे ॥ इति
राजनिर्घण्टः ॥
निष्पद्यानम् । न । नावि । तर-
ण्याम् ॥ अथ निष्पद्यानेदेशो
यथा । नौकाख्यं निष्पदं यानं तच्च
जलयानमुच्यते । अश्वादिकन्तु यद्
यानंस्थले सर्वं प्रतिष्ठितम् । जले-
नौकैव यानं स्या द्दतस्तां यत्नतो व
देत् ॥ * ॥ अथ समयो यथा । सु
धारवेलातिथिचन्द्रयोगे चरेविल-
ग्ने मकरादिषट्के । सुधेन्द्यसत्त
त्वतिरेकतोन्ये वदन्ति नौकाघटना
दिकर्म ॥ * ॥ अश्विपरांशुमघानि
धिपूर्णेश्विपधनाम्बुलभे शुभचन्द्रे । ता
रकयोगतिथीन्दुविशुद्धौ नौगमनं
शुभदं शुभवारे ॥ * ॥ वृक्षायुर्वेदे
गदिता वृक्षजातिश्चतुर्विधा । समा
सेनैव गदितं तेषां काष्ठं चतुर्विध
म् ॥ तद्यथा । लघु यत् कोमलं
काष्ठं सुघटं ब्रह्मजाति तत् । दृढाङ्गं ल
घु यत् काष्ठमघटं क्षत्रजाति तत् ॥
कोमलं गुरुयत्काष्ठं वैश्यजाति तदु
च्यते । दृढाङ्गं गुरु यत् काष्ठं शूद्रजा
तितदुच्यते ॥ लक्षणद्वययोगेन द्वि

॥ दिङ्मात्रमिदमुद्दिष्टं नौकावैचित्र्यमग्रजम् । प्रधानेष्वेव नियमो न प्रधाने न निर्णयः ॥ लघुता दृढता चैव गामिता च्छिद्रता तथा । समतेति गुणोद्देशो नौकानां सम्प्रकाशितः ॥ एवं विचिन्त्य यो राजा नौकायानं करोति च । स चिरं सुखमाप्नोति विजयं समरे श्रियम् ॥ यो ऽज्ञानाद् न्यथायानं नौकानां कुरुते नृपः । तस्यैताभिर्विनश्यन्ति यशोवीर्यं बलं धनम् ॥ इति निष्पद्यानोद्देशे नौकायानम् ॥ * ॥ अथान्यजलयानानि यथा । नौकान्यतो जलेयानं जघन्यमिति गद्यते । तद्भेदावपि ज्ञेयौ तु मा व्याख्यातौ प्रकीर्त्तितौ ॥ द्रोणीरूपमन्तु यद्यानं द्रोणीयानं तदुच्यते । घटीभिर्घटितं यानं घटीनौकेति गद्यते ॥ तुम्ब्याद्यैस्तुफलैर्यानं फलयानं प्रचक्ष्यते । चर्मभिस्तूलपूर्णैर्यत् चर्मयानं तदुच्यते ॥ यानं यत्तृणभिर्वृन्दैस्तृणयानं तदुच्यते । अन्तभिः सलिले यानं जन्तुयानं प्रचक्ष्यते ॥ बाहुभ्यां सन्तरेद् वारि जघन्येषु न निर्णयः ॥ * ॥ इति युक्तिकल्पतरौ निष्पद्यानोद्देशः ॥

निष्पक्षः । त्रि । निर्वृत्ते । सिद्धे । सम्पक्वे ॥ निष्पद्यते स्म । पद० । अन्य



वैदिकः ॥

निष्पक्वत्वम् । न । विषमामकावस्थान्यत्वे ॥

निष्परिग्रहः । त्रि । परमहंसे ॥ निर्गतः कन्याकौपीनाध्यात्मपुस्तकादिव्यतिरिक्तः परिग्रहो यस्मात् सः ॥ त्यक्तसङ्गे ॥

निष्पाकः । पुं । निष्पचने ॥

निष्पातः । पुं । प्रहारे ॥

निष्पादः । पुं । निष्पादने ॥

निष्पादनम् । न । सम्पादने । निष्पत्तौ ॥ निस् पूर्वात् पदेर्ण्यन्ता ल्युट् ॥

निष्पादना । स्त्री । निष्पत्तिप्रेरणे ॥

निष्पादितः । त्रि । कृतनिष्पादने ॥

निष्पाद्यः । त्रि । साध्ये । निष्पादनीये ॥

निष्पापः । त्रि । पापरहिते ॥ निर्गतः पापेभ्यः ॥ निरादयइति समासः ॥

निष्पावः । पुं । शूर्पपवने ॥ धान्यादिनिस्तुषीकृतौ । पवने ॥ निष्पूयते शोध्यते तुषाद्यपनयनेन । पूञ्० । परिमाणाख्यायां सर्वेभ्य इति घञ् ॥ यथा । द्वौ शूर्पनिष्पावौ । शूर्पयोनिष्पावौ । करणात्तृतीयान्तस्य कर्तृकरणे कृता बहुलमिति समासः । अत्र शूर्पसङ्ख्यया तण्डुलादेरपि परिच्छित्तिर्गम्यते । शूर्पे द्वित्वन्त्वार्थिकं न तु शाब्दम् । यद्यप्यत्र निरभ्योः पूल्वोरिति

निस्तुषरत्नम् । न । स्फटिके ॥

निस्तुषितः । त्रि । त्यक्ते ॥ त्वग्विहीने ॥ लघूकृते ॥ इतिमेदिनी ॥

निस्तेजाः । त्रि । तेजोरहिते ॥

निस्तोदः । पुं । पीडाविशेषे ॥

निस्त्रिंशः । पुं । खड्गे ॥ निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्यः । निरादयइति स० । खड्गस्यायामस्तत्पुरुषप्रमाणत्वात् ॥ त्रि । निर्दये । निर्घृणे ॥

निस्त्रिंशपत्रिका । स्त्री । स्नुहीवृक्षे ॥

निस्त्रैगुण्यः । त्रि । निष्कामे ॥ निष्क्रान्तस्त्रैगुण्यात् ॥ पुं । त्रिगुणातीते परमेश्वरे ॥ त्रैगुण्यः संसारस्तद्रहितत्वात् ॥

निस्त्रैणपुष्पिकः । पुं । राजधत्तूरके ॥

निस्नेहः । त्रि । प्रेमशून्ये ॥

निस्नेहफला । स्त्री । श्वेतकण्टकार्याम् ॥

निस्पन्दः । पुं । स्पन्दने ॥ इतित्रिकाण्डशेषः ॥ त्रि । स्पन्दरहिते । ईषत्स्पन्दहीने ॥

निस्पन्दतरः । त्रि । एकान्तस्पन्दरहिते ॥

निस्पृहः । त्रि । अतिविरक्ते ॥ निर्गता दोषदर्शनेन सर्वेभ्योदृष्टादृष्टविषयेभ्यः स्पृहातृष्णा यस्य सः ॥ व्यासादिषु ॥ व्यासादीनां निस्पृहाणां पाराशर्योभिधीयते ॥

निस्पृहा । स्त्री । अग्निशिखावृक्षे ॥

निस्यन्दः । पुं । स्यन्दने । क्षरणे ॥ निस्यन्दतेऽनेन । स्यन्द० । स्यदोजवे इति घञन्तोनिपातितः ॥

निस्यन्दनम् । न । स्यन्दे । स्यन्द० ल्युट् ॥

निस्रावः । पुं । मासरे । भक्तसमुद्भवे मण्डे । माँड इति भाषा ॥ निस्राव्यते । स्रु० । घञन्तः । एरच् घञ्चा ॥

निस्वः । त्रि । निर्धनत्वात् ॥

निस्वनः । पुं । शब्दे ॥ निस्वननम् । स्वनशब्दे । नौगदनदपठस्वन इत्यप् ॥

निस्वानः । पुं । निनादे । शब्दे ॥ निस्वननम् । स्वन० । नौगदनदपठस्वन इति पाक्षिकोघञ् ॥

निस्सारितः । त्रि । निष्कासिते ॥ निराकृते ॥

निस्सीमः । त्रि । अपर्यन्ते ॥

निहतः । त्रि । नाशिते ॥

निहननम् । न । वधे । मारणे ॥ हन्तेर्भावेल्युट् ॥

निहन्ता । त्रि । हननकर्त्तरि ॥

निहवः । पुं । आह्वाने ॥ ह्वेञ्० निपूर्वः । ह्वः सम्प्रसारणञ्चान्यभ्युपविष्विष्वप् सम्प्रसारणञ्च ॥

निहाका । स्त्री । गोधिकायाम् ॥ नियतं जहातिभुवम् । नौहश्चेति हाक. कन् । बाहुलकात् न ह्रस्वः ॥

निहारः । पुं । नीहारे । हिमे ॥ नि-

नीतिसारः । पुं । इन्द्रप्रतिबृहस्पत्युक्तनीतिशास्त्रविशेषे ॥ स च गरुडपुराणेऽष्टास्वध्यायेष्वस्ति ॥

नीथः । पुं । नेतरि । प्रापयितरि ॥ स्तोत्रे इति वेदभाष्यम् ॥ नयति । णीञ्० । हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ न । जले ॥

नीध्रम् । न । नीध्रे । वल्मीके । पटलप्रान्ते । आकाशे । ओलाती इति भाषा ॥ नितरां ध्रियते । धृङ् अवस्थाने । निश्चयेन धरति जलमिति वा । धृञ् धारणे । मू० कः । अन्येषा० दीर्घः ॥ वने ॥ नेमौ ॥ चन्द्रे ॥ रेवतीनक्षत्रे ॥

नीपः । पुं । कदम्बे । हलिप्रिये ॥ बन्धूके ॥ नीलाशोकद्रुमे ॥ धाराकदम्बे ॥ नीपो महाकदम्बः स्याद्धाराकदम्ब इत्यपीति साम्प्रः ॥ नयति नीयते वा । णीञ्० । पानीविषिभ्यः पः । बाहुलकात् गुणाभावः ॥ ध नेनीतिप्रा वकूल्य. ॥

नीयमानः । वि । प्राप्यमाणे ॥

नीरम् । न । क्षीरे । अम्बुनि । जले ॥ शरदा नीरजोत्पल्या नीराश्रयप्रकृति ययुः । भ्रष्टानामिव चेतांसि पुनर्योगनिषेधया ॥ रसे ॥ नीयते । णीञ्० । स्फायितञ्चीतिरक् ॥ निर्गत रादस्मैवा । निरादय इति समासः । अग्नेराप इतिश्रुतेः ॥ निर्गतो रेऽग्निरस्मात् । प्रादिभ्योधातुजस्येतिवक्तव्यो बहुव्रीहिः । अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमितिस्मृतेः ॥ निश्चयेन राति सुखम् । रा० । आतश्चेतिके ढूलो परतिदीर्घः ॥ मिष्टीमाह्नक् मकृन्म् चविषाणसुनं सङ्गितम् ॥

नीरजम् । न । कुष्ठौषधौ ॥ पद्मे ॥ मुक्तायाम् ॥ वि । जलजाते ॥ नीरे जातम् । जनी० । डः ॥ पुं । उशीरिणि ॥ उद्रे ॥

नीरजाः । वि । निर्धूलिदेशपुष्पादौ ॥ स्त्री । अरजस्कायाम् ॥

नीरन्ध्रः । त्रि । निविडे ॥

नीरतरङ्गः । वि । विरते सुरतरागे । रसाभाववति ॥ यथा । आयाताः सखि वर्षा वर्षादपि यासु वासरादीर्घाः । दिशिदिशि नीरतरङ्गो नीरतरङ्गो ममापि हृदयेशः इति ॥

नीरदः । पुं । मेघे ॥ मुस्तके ॥ वि । दन्तशून्ये ॥ यथा । आस्वाद्य निरवशेष विरहिवधूनां मृदूनि मांसानि । करकामिषेण मन्ये निष्ठीवति नीरदो ऽस्थीनीति ॥

नीरदिनी । स्त्री । मेघपत्याम् ॥

नीरधिः । पुं । अब्धौ । समुद्रे ॥ नीराणि धीयन्तेऽस्मिन् । डुधाञ् । कर्म-

ण्यधिकरणेचेति किः ॥

**नीरनिधिः ।** पुं । अकूपारे । समुद्रे ॥ नीराणिनितरां धीयन्तेऽत्र । डुधाञ्० । किः ॥

**नीरन्ध्रः ।** त्रि । सान्द्रे । घने ॥ छिद्ररहिते ॥ यथा । श्रीमन्नायतवाञ्छिते। क्षितयशःसंशुद्धमुक्तावली माला वैवविधिर्विधित्सुरमलंहारं तदी यैर्गुणैः । नीरन्ध्रामवलोक्यतामपि ततो मान्तं गुणानामहोऽतत्पितसु गैगनान्तरे समकिरत्ताखास्तता रकाः ॥ इतिकालिदासः ॥

**नीरसः ।** पुं । दाडिमे ॥ त्रि । रसहीने ॥ यथा । शृङ्गारी चेत् कविःका व्ये जातं रसमयं जगत् । सएव चेद शृङ्गारी नीरसं सर्वमेव तत् ॥

**नीराखुः ।** पुं । उद्रे । जलबिडाले ॥

**नीराजनम् ।** न । आरात्रिके । दीपा दिना सत्कृतौ ॥ पञ्चनीराजनं कुर्यात् प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥ चूताश्वत्थादिपत्रैश्च चतुर्थम्परिकीर्त्तितम् । पञ्चमंप्रणिपातेनसाष्टाङ्गेनयथाविधि ॥ आश्विनशुक्लदशम्यामश्वादेःपूजने ॥ यथा शरत्कालेम हाष्टम्यांदुर्गायाःपरिपूजनम् । नीराजनंदशम्यान्तुकुर्याद्बलवृद्धये ॥ निःशेषेणराजनमत्र । नीरस्यशान्त्युद-कस्यअजनं क्षेपोयत्रवा । नीरेणजलेअजनंस्पर्शनं वा ॥

**नीराजना ।** स्त्री । आरात्रिके । दीपादिनासत्कृतौ ॥ निःशेषेण नितरांवा राजनम् । राजृदीप्तौ प्यन्तः । युजासम्ब्येतिभावेयुच् ॥

**नीरिन्दुः ।** पुं । शाखोटके । शाखेओडा इतिगौडेषुख्याते वृक्षे ॥

**नीरुक् ।** पुं । स्त्री । रोगाभावे । स्वास्थ्ये । अनामये ॥ त्रि । रोगरहिते । उल्लाघे । पटौ ॥ निरोगते । रुज् ० । क्विप् । नहिवृतिवृषीतिदीर्घः ॥

**नीरुजम् ।** न । कुष्ठौषधौ ॥ त्रि । रोगाऽभाववति ॥ रुजायानिर्गतम् ॥

**नीरूपः ।** त्रि । रूपाभावविशिष्टे ॥ नीरूपस्यापिकालस्येन्द्रियवेद्यत्वाभ्युपगमेनेतिवेदान्तपरिभाषा ॥

**नीलः ।** पुं । निधिभेदे ॥ पर्वतविशेषे इलावृतस्योत्तरस्मिन् विततयो जनविस्तीर्णे प्रागायते रम्यकवर्षस्य मर्यादापर्वते ॥ भारतवर्षस्थे शैलविशेषे ॥ वानरविशेषे ॥ वर्णविशेषे ॥ नीलौषधौ ॥ लाञ्छने ॥ मञ्जुघोषे ॥ वटवृक्षे ॥ कृष्णवर्णे ॥ वृषोत्सर्गवृषे ॥ चरणानि मुखं पुच्छं यस्यश्वेतानि गोपतेः । ला

चारसत्तवर्णश्च तं नीलमितिनिर्दि-
शेत् ॥ अपिच । लोहितो यस्तु वर्णेन
पुच्छाग्रेणतु पाण्डुरः । श्वेतः खुर
विषाणाभ्यां स नीलो वृष उच्यते ॥
नीलति । नीलवर्णे । इगुपधेति कः
॥ न । नीलीरक्ते ॥ नीलारक्तम् ।
नीलाञ्जन ॥ इन्द्रनीलमणौ । नी
लम् इति भाषा प्रसिद्धे वैरिरत्ने ॥
काचलवणे ॥ तालीशपत्रे ॥ विषे ॥
सौवीराञ्जने ॥ तुत्थे ॥ नृत्याङ्गाष्टो
त्तरशतकरणान्तर्गतकरणविशेषे ॥
वर्णवृत्तभेदे ॥ तालपयोधरनाय
कलोमरवञ्चधरम् मायियुतञ्च वि
भावय भामिनि वृत्तवरम् । नील
मिदम् फणिनायकपिङ्गलसंकथित
म् पण्डितमण्डलिकासुखदं सखि
कर्णगतम् ॥ यथा । सुन्दरि सुन्दरि
पीनशिखाविनि किन्तु रुपे मानि
नि मानिनिकाममिदं हृदयं परवे
। हारिणि हारिणि ते हृदये निहि
तोदयितो भामिनि भाविनि वासिम
नोऽस्य चिराय गतः इति ॥ नीलच्छ्म
छिद्ररूप उत्पातः । तथाच वराहः ।
सपर्वणि यदाराहुग्रस्तं चन्द्रसूर्ययोः
। चन्द्रार्कमण्डलं छिद्रं दृष्ट्वा जनपद
चायः इति ॥ यदानीलं लक्ष्म च
न्द्रचक्रेद्दृश्यते तदेवोत्पाति

कं नैल्यमधिकृत्योक्तम् । यदादि-
त्ये नैल्यंतदानश्येदिति ॥ त्रि । नी
लवर्णयुक्ते ॥

नीलकम् । न । कालालूण इतिभाषा
प्रसिद्धेकाचलवणे ॥ वर्त्तलोहे ॥ पुं
। असनवृक्षे ॥

नीलकण्ठः । पुं । शिवे । हरे ॥ क्षीरा
ब्धेर्मथ्यमानाच्च विषं हालाहलोऽ
भूत् । हरेण धारितं कण्ठे नीलकण्ठ
स्ततोहरः ॥ दात्यूहे ॥ ग्रामचटके
॥ मयूरे ॥ खञ्जने ॥ नीलः कण्ठोय
स्य सः ॥ पीतसारे ॥ न । मूलके ॥
इतिराजनिर्घण्टः ॥

नीलकण्ठशिखा । स्त्री । मयूरशिखा
याम् ॥ नीलकण्ठशिखा लघ्वी पित्त
श्लेष्मातिसारजित् ॥

नीलकण्ठाक्षम् । न । रुद्राक्षे ॥ त्रि ।
खञ्जनाक्षे ॥

नीलकन्दः । पुं । महिषकन्दप्रभेदे ।
विषकन्दे । महिषीकन्दे ॥ इतिरा
जनिर्घण्टः ॥

नीलकमलम् । न । नीलवर्णपद्मे । उ
त्पले । हिमाब्जे ॥

नीलकुन्तला । स्त्री । गौर्याःसखीविशे
षे ॥ त्रि । नीलकुन्तलविशिष्टे ॥

नीलकुरण्टकः । पुं । नीलझिण्ट्याम् ॥

नीलकान्ता । स्त्री । विष्णुकान्तायाम् ॥

नीलकण्ठः । पुं । नीलवर्णे । दीर्घ-ग्रीवे ॥

नीलग्रीवः । पुं । शिवे ॥ नीलाग्रीवा यस्यसः ॥

नीलङ्गुः । पुं । मक्षने ॥ शृगाले ॥ स र्पे ॥ कृमिविशेषे ॥ निरर्ता नङ्गति । खगि० । नीलति वा । नीलवर्णे । खल्वरक्कितिनिपातनात् साधुः ॥ स्त्री । भ्रमरराज्याम् ॥

नीलचर्म । न । मरूषके ॥ नीलवर्णा जिने ॥

नीलजम् । न । वर्त्तलोहे ॥ त्रि । नी लाज्जाते ॥

नीलझिण्टी । स्त्री । नीलकुरण्टके ॥

नीलतरुः । पुं । नारिकेले ॥

नीलतालः । पुं । तमाले ॥ हिन्ताले ॥

नीलदूर्वा । स्त्री । श्यामायाम् । भार्ग व्याम् । रुहायाम् ॥ नीलदूर्वाहिमा तिक्तामधुरा तुवरा हरेत् । कफपि त्तास्रवीसर्पतृष्णादाहत्वगामयान् ॥ नीलाचासौदूर्वाच ॥

नीलध्वजः । पुं । तमालवृक्षे ॥ माहि ष्मत्याः पुर्याराजविशेषे ॥ त्रि । नी लध्वजविशिष्टे ॥-

नीलनिर्गुण्डी । स्त्री । नीलसिन्धुवारे ॥

नीलनिर्यासकः । पुं । नीलासनवृक्षे ॥

नीलपङ्कम् । न । अन्धकारे ॥

नीलपत्रम् । न । इन्दीवरे ॥ नीलानि पत्राण्यस्य ॥ पुं । गुण्डतृणे ॥ अश्म न्तकवृक्षे ॥ नीलासनवृक्षे ॥ दा डिमे ॥

नीलपद्मम् । न । इन्दीवरे ॥ नीलञ्च त त् पद्मञ्च ॥

नीलपिच्छः । पुं । श्येनखगे ॥

नीलपुनर्नवा । स्त्री । कृष्णवर्णपुनर्नवा याके । नीलायाम् । नीलशाढ्षपको वा इति भाषा ॥

नीलपुष्पः । पुं । नीलभृङ्गराजे ॥ नीला म्लाने ॥ पीतसहे । निर्गुण्डीभूमे ॥ न । ग्रन्थिपर्णे ॥ नीलवर्णपुष्पे ॥

नीलपुष्पा । स्त्री । विष्णुक्रान्तायाम् ॥

नीलपुष्पिका । स्त्री । नील्याम् ॥ अत स्याम् ॥

नीलपुष्पी । स्त्री । नील्याम् ॥ निर्गु ण्ड्याम् । सिन्दुके ॥ अतस्याम् ॥ नी लदूर्वायाम् ॥

नीलफला । स्त्री । जम्ब्वाम् ॥

नीलभृङ्गराजः । पुं । नीलवर्णभृङ्गराजे । महाभृङ्गे । श्यामले । नीलाभंग रा इतिभाषा ॥

नीलमणिः । पुं । इन्द्रनीलमणौ । म सारे । नीले ॥ क्षीरमध्ये क्षिपेन्नी लं क्षीरस्वेनीलता भजेत् । इन्द्रनी लमितिख्यात माणख्ये रत्ननिर्णये

॥नीलीरक्तनिभाःकेचित्कृष्णारुण निभाःपरे इत्यादिनागस्त्रोनरत्नाष्टके यथोमेकादशविधाहयोक्ता ॥

नीलमाधवः । पुं । विष्णौ ॥

नीलमाषः । पुं । राजमाषे ॥

नीलमृत्तिकः । पुं । खद्योते ॥

नीलमल्लिका । स्त्री । पुष्पकासीसे ॥ । कृष्णपर्यायांस्तद्दि ॥

नीललोहम् । न । वर्त्तलोहे ॥

नीललोहितः । पुं । शिवे । धूर्जटौ ॥ नीलश्चासौ लोहितश्च । कण्ठेजटा सुच । नीलः कण्ठो लोहिताश्चके शा अस्येति स्वामी ॥ नीलरक्तमिश्रितवर्णे ॥ वस्तविशेषे ॥

नीललोहिता । स्त्री । भूमिजम्बाम् ॥

नीलवर्षाभूः । स्त्री । नीलपुनर्नवायाम् ॥ पुं । कृष्णभेके ॥

नीलवल्ली । स्त्री । वन्दायाम् ॥

नीलवसनः । पुं । शनौ ॥ बलायुधे । नीलाम्बरे ॥ त्रि । नीलवस्त्रयुक्ते ॥

नीलवस्त्रः । पुं । बलदेवे ॥ न । नील वर्णवसने ॥ यथा । स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं नदुष्यति । नीली वस्त्रंनस्पृशेच्चनोलिमासम्बन्धेचेद्दिति गारुडेप्रायश्चित्ताध्यायः ॥ तद्धारणप्रायश्चित्तमाहुक्तंप्रायश्चित्तविवेके । तत्रभविष्यपुराणे । शृणुष्वेतिमहाबाहोनीलीरक्तस्यधारणात् । वाससो मधास्यादृणगदतो ममकुतस्तथः ॥ पालनाद्विक्रयाच्चैव उदृतैरुपजीवनात् । पतितस्तुभवेद्विप्रस्त्रिभिःकृच्छ्रैर्विशुध्यति ॥ नीलीरक्तेनवस्त्रेण यत्कर्मकुरुतेद्विजः । स्नानंदानंतपो होमःस्वाध्यायःपितृतर्पणम् ॥ वृथा तस्यमहायज्ञोनीलीवस्त्रस्य धारणात् । नीलीरक्तं यदावस्त्रं कश्चिद्विप्रस्तुधारयेत् ॥ अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यतीति । इदम ज्ञाने । ज्ञानेतुद्विगुणम् । अथापवादमाहापस्तम्बः । नीलीव्यमुद्दत्तौ । स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यतीति ॥

नीलवासाः । पुं । शनैश्चरे ॥ बलभद्रे ॥ नीलेवाससीयस्यसः ॥

नीलवृन्ता । स्त्री । कलान्याम् । कतिलोमशायाम् । नीलवर्णवोना इति गौडभाषा ॥

नीलवृक्षः । पुं । वृक्षविशेषे । वातारौ । शोफनाशने ॥

नीलवृन्तकम् । न । तूले ॥ इतिराजनिर्घण्टः ॥

नीलवृषः । पुं । कृष्णवर्णवृषे ॥ वृषविशेषे ॥ पश्चाल्लक्षणवृषे ॥

नीलवृषा । स्त्री । वार्त्ताक्याम् ॥

नीलव्रतम् । न । व्रतविशेषे ॥ नीललोहितव्रते ॥

नीलशिखण्डः । पुं । नीलजटाधारे रुद्रे ॥ नीलःशिखण्डोऽस्य ॥

नीलशिग्रुः । पुं । शोभाञ्जने ॥

नीलसरस्वती । स्त्री । तारायाम् । चीनाधिवासिन्यां बुद्धशक्तिविशेषे ॥

नीलसारः । पुं । तिन्दुकवृक्षे ॥

नीलसिन्धुकः । पुं । } निर्गुण्ड्याम् ।
नीलसिन्धुवारः । पुं । } शीतसहायाम् ॥

नीला । स्त्री । मक्षिकाप्रभेदे । पर्य्यायाम् ॥ नीलति । नीलवर्णे । अच् ॥ देवीविशेषे ॥ नीलपुनर्नवायाम् ॥ नोल्याम् ॥ मल्लाररागभार्यायामिति सङ्गीतदामोदरपुराणम् ॥

नीलाङ्गः । पुं । सारसखगे ॥ चाषे ॥

नीलाङ्गुः । पुं । कृमौ ॥ निसरांलङ्गति । लगिगतौ । खरवङ्कुरपीयुनीलङ्गुलिगु इति निपूर्वाल्लगेः कुः प्रत्ययोनेर्दीर्घे नीलङ्गुः । नीलाङ्गु इतिपाठान्तरे तु धातोरपि दीर्घो निपात्यते ॥ स्त्री । भ्रमराल्याम् ॥ सुषिरे ॥ प्रसूने ॥

नीलाञ्जनम् । न । सौवीराञ्जने ॥ तुत्थे ॥

नीलाञ्जना । स्त्री । विद्युति ॥ इतिजटाधरः ॥

नीलाञ्जनी । स्त्री । कालाञ्जनीक्षुपे ॥

नीलाञ्जसा । स्त्री । अप्सरोभेदे ॥ नदीभेदे ॥ विद्युति ॥

नीलाण्डकः । पुं । ऋष्ये । गवये ॥

नीलापराजिता । स्त्री । नीलवर्णापराजितालतायाम् । महानील्याम् ॥

नीलाब्जम् । न । नीलोत्पले ॥

नीलाम्बरः । पुं । बलदेवे । अच्युताग्रजे ॥ कौणपे । राक्षसे ॥ शनैश्चरे ॥ नीलमम्बरं यस्य ॥ न । तालीशपत्रे । शुक्रोदरे ॥ नीलवस्त्रे ॥ त्रि । नीलवस्त्रविशिष्टे ॥

नीलाम्बा । स्त्री । देवीविशेषे ॥ नीलाद्रिपर्वतोपरिस्थितस्थाने ॥

नीलाम्बुजन्म । न । नीलोत्पले ॥ नीलमम्बुतदम्बुजन्मच ॥

नीलाम्लानः । पुं । पुष्पवृक्षविशेषे । दासाम् । आर्त्तगलायाम् ॥

नीलाम्ली । स्त्री । क्षुपविशेषे । श्यामाम्लायाम् ॥

नीलालुः । पुं । कन्दविशेषे । श्यामशालुके ॥

नीलाश्मा । पुं । नीलमणौ ॥

नीलासनः । पुं । नीलदपे । नीलद्रुमे ॥ रतिबन्धविशेषे ॥ यथा । जिह्नोपरिस्थिता नारी शय्यां कृत्वा पदद्वय

॥ नीलीरसनिभाः केचित् कृष्णजम्बु-
निभाः परे इत्यादिनागस्त्वेन रत्नाय
से एषामेकादश विधाख्यायोक्ता ॥
नीलमाधवः । पुं । विष्णौ ॥
नीलमाषः । पुं । राजमाषे ॥
नीलमौलिकः । पुं । खद्योते ॥
नीलमल्लिका । स्त्री । पुष्पकासीसे ॥
कृष्णवर्णायांसदि ॥
नीललोहम् । न । वर्त्तलोहे ॥
नीललोहितः । पुं । शिवे । धूर्जटौ ॥
नीलश्चासौ लोहितश्च । कालेजटा
स्तुष । नीलः कण्ठो लोहितश्चकेशा
यस्येतिस्वामी ॥ नीलरक्तमि-
श्रितवर्णे ॥ व्रतविशेषे ॥
नीललोहिता । स्त्री । भूमिजम्बाम् ॥
नीलवर्णाभूः । स्त्री । नीलपुनर्नवाया-
म् ॥ पुं । कृष्णभेके ॥
नीलवल्ली । स्त्री । वन्दायाम् ॥
नीलवसनः । पुं । शनौ ॥ हलायुधे ।
नीलाम्बरे ॥ त्रि । नीलवस्त्रयुक्ते ॥
नीलवस्त्रः । पुं । बलदेवे ॥ न । नील
वर्णवसने ॥ यथा । स्त्रीक्रीडाशयनी
यादौ नीलवस्त्रं नदुष्यति । नीली
वस्त्रं नस्पृशेद्यत्नो विभाचरकं चेदिति
गारुडे प्रायश्चित्ताध्यायः ॥ तद्धारस्य
प्रायश्चित्तमाहुक्तं प्रायश्चित्तविवेके । त
त्रभविष्यपुराणे । शृण्वेतिमहावा
होनीलीरक्तस्यधारणात् । वासमो
गवयादूर्ध्वमदतो मम कृतन्तथः ॥
पालनाद्विक्रयाच्चैव उद्गृहेचपजीव
नात् । पतितस्तु भवेद्विप्रस्त्रिभिः कृ
च्छ्रैर्विशुध्यति ॥ नीलीरक्तेनवस्त्रेण
यत्कर्मकुरुते द्विजः । स्नानं दानं तपो
होमः स्वाध्यायः पितृतर्पणम् ॥ वृथा
तस्य महायज्ञो नीलीवस्त्रस्य धारणा
त् । नीलीरक्तं यदावस्त्रं कश्चिद्वि
प्रस्तु धारयेत् ॥ अहोरात्रोषितो भू-
त्वा पञ्चगव्येन शुध्यतीति । इदम
स्नाने । स्नानेतु दैगुण्यम् । अपापस्त
म्बाद्यापस्तम्बः । नीलीत्यनुवृत्तौ
। स्त्रीणां क्रीडार्थसंयोगे शयनीये
न दुष्यतीति ॥
नीलवासाः । पुं । शनैश्चरे ॥ बलभद्रे
॥ नीलेवाससी यस्य सः ॥
नीलवृन्ता । स्त्री । अजान्त्याम् । कालि
लोमशायाम् । नीलवर्णवोना इति
गौडभाषा ॥
नीलवृक्षः । पुं । वृक्षविशेषे । वातारौ
। शोफनाशने ॥
नीलवृन्तकम् । न । तूले । ॥ इतिराज
निर्घण्टः ॥
नीलवृषः । पुं । कृष्णवर्णवृषे ॥ वृषवि
शेषे ॥ पश्यालक्षणवृषे ॥
नीलवृषा । स्त्री । वार्त्ताक्याम् ॥

नीलव्रतम् । न । व्रतविशेषे ॥ नीललोहितव्रते ॥

नीलशिखण्डः । पुं । नीलजटाभारे । रुद्रे ॥ नीलःशिखण्डोऽस्य ॥

नीलशिग्रुः । पुं । शोभाञ्जने ॥

नीलसरस्वती । स्त्री । तारायाम् । चीनाधिवासिन्यां वुद्धशक्तिविशेषे ॥

नीलसारः । पुं । तिन्दुकवृक्षे ॥

नीलसिन्दुकः । पुं । } निर्गुण्ड्याम् ।
नीलसिन्दुवारः । पुं । } नीलसहचर्याम् ॥

नीला । स्त्री । मक्षिकाप्रभेदे । वर्वणायाम् ॥ नीलति । नीलवर्णे । अच् ॥ देवीविशेषे ॥ नीलपुनर्नवायाम् ॥ नील्याम् ॥ मल्लाररागस्य भार्याभिति सङ्गीतदर्पणम् ॥

नीलाङ्गः । पुं । सारसखगे ॥ चाषे ॥

नीलाङ्गुः । पुं । कृमौ ॥ नितरां लङ्गति । लगि गतौ । खरशङ्कपीयुनीलङ्गुलिगु इति निपूर्वाल्लगेः कु प्रत्ययेन दीर्घे नीलङ्गुः । नीलाङ्गु इतिपाठान्तरे तु धातोरपि दीर्घो निपात्यते ॥ स्त्री । भ्रमराल्याम् ॥ शुषिरे ॥ प्रसूने ॥

नीलाञ्जनम् । न । सौवीराञ्जने ॥ तुत्थे ॥

नीलाञ्जना । स्त्री । विद्युति ॥ इतिनाटाधरः ॥

नीलाञ्जनी । स्त्री । कालाञ्जनीक्षुपे ॥

नीलाञ्जसा । स्त्री । अप्सरोभेदे ॥ नदीभेदे ॥ विद्युति ॥

नीलाण्डकः । पुं । ऋष्ये । गवये ॥

नीलापराजिता । स्त्री । नीलवर्णापराजितालतायाम् । महानील्याम् ॥

नीलाब्जम् । न । नीलोत्पले ॥

नीलाम्बरः । पुं । वलदेवे । अच्युताग्रजे ॥ कौणपे । राक्षसे ॥ शनैश्चरे ॥ नीलमम्बरं यस्य ॥ न । तालीशपत्रे । शुकोदरे ॥ नीलवस्त्रे ॥ त्रि । नीलवस्त्रविशिष्टे ॥

नीलाम्बा । स्त्री । देवीविशेषे ॥ नीलाद्रिपर्वतोपरिस्थितसुस्थाने ॥

नीलाम्बुजन्म । न । नीलोत्पले ॥ नीलं तदम्बुजन्म च ॥

नीलाम्लानः । पुं । पुष्पवृक्षविशेषे । दासाम् । आर्त्तगलायाम् ॥

नीलाम्ली । स्त्री । क्षुपविशेषे । श्यामावल्याम् ॥

नीलालुः । पुं । कन्दविशेषे । श्यामालुके ॥

नीलाश्मा । पुं । नीलमणौ ॥

नीलासनः । पुं । नीलपर्वे । नीपद्रुमे ॥ रतिवन्धविशेषे ॥ यथा । स्त्रियोपरिस्थिता नारी शय्यां कृत्वा पदद्वय

म । हृदये दत्तहस्तश्च वन्द्यो नीलासनोमतः ॥ इति स्कं० ॥

नीलिका । स्त्री । नीलिन्याम् ॥ क्षुद्ररोगभेदे ॥ नेत्ररोगविशेषे ॥ शेफालिकायाम् ॥ जलस्यज्वरे ॥ यथा । भूमेरूषरो वृक्षस्य कोटरो जलस्य नीलिकेत्यादिज्वरप्रकरणे विजयरक्षितः ॥ नीलवर्णा नीलादोषधौ प्राणिनि चेति ङीप् । स्वार्थे कन् ॥

नीलिनी । स्त्री । नीलीवृक्षे ॥ कृष्णपिष्टलि ॥ जलनीलपत्न्याम् ॥ नीलो वर्णोऽस्त्यस्याः । इनिः । ङीप् ॥

नीली । स्त्री । नीलिकारोगे ॥ नीलिन्याम् । काक्षायाम् । रञ्जन्याम् । नीलकाष्ठ इति भाषा ॥ नीलाख्यानपदेश्यनाच्छादनेर्थे ङीप् । नीलादोषधौ प्राणिनि च नित्यं ङीप् । संज्ञायान्तु वा ॥ नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान् ॥ आमवातमुदावर्त्तं मदञ्च विषमुद्धतम् ॥

नीलीरागः । पुं । स्थिरसौहृदे पुरुषे ॥

नीलीधृचाकृतिः । पुं । शरपुङ्खे ॥

नीलोत्पलम् । न । इन्दीवरे । नीलशपलाइनि गौड़भाषा ॥

नीलोत्पली । पुं । मञ्जुघोषे ॥ इति-



त्रिकाण्डशेषः ॥

नीलोपलः । पुं । इन्द्रनीलमणौ ॥

नीवरः । पुं । वाणिज्ये ॥ वणिजके ॥ परिव्राजि । भिक्षुके ॥ नयति नीयते वा । णीञ् । छित्वरच्छत्वरधीवरपीवरेत्यादिना साधुः ॥

नीवाकः । पुं । प्रयामे । मूल्योत्कर्षार्थं धान्यादिसञ्चये ॥ महार्घहेतोर्धान्यादिषु जनानामादरातिशये ॥ तुच्छावरत्वाधिक्ये ॥ तुलाकृतन्यूनाधिक्यं क्रयादरो वेति स्वामी ॥ नियतं वचनम् । वच० । घञ् । उपसर्गस्येति दीर्घः ॥ मूल्याधिक्यहेतोर्निश्चयेन परिच्छेदने इति भरतः ॥ वचनाभावे ॥

नीवारः । पुं । श्यामाकादितृणधान्ये । मुनिधान्ये । अरण्यधान्ये ॥ निव्रीयते । वृञ् वरणे । नौवृधान्ये इति घञ् । दीर्घः ॥ नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ॥

नीविः । स्त्री । परिपणे । वणिङ्मूलधने ॥ उच्चये । स्त्रीणां कटीवसनबन्धने ॥ स्त्रीणामित्युपलक्षणम् पुंस्कटीवस्त्रबन्धेऽपि ॥ निव्ययति निवीयते वा । व्येञ्० । नौव्योर्यलोपः पूर्वस्य च दीर्घश्चेतीञ् ॥ नितरां मिन्वन्ति । इति नीवने आगमशास्त्रा

निषत्त्वात्नुम्। इगुपधात्किदिति नीन्॥

नीवी। स्त्री। नीविशब्दार्थे॥ राजपुत्रादेर्ग्रन्थके। परिपणे॥ कृदिकारादितिङीष्॥

नीवृत्। पुं। स्त्री। जनपदे। देशे। अन्नादिजननिवासस्थाने॥ नियतो वर्त्तते। अधिकरणाख्यं कर्तृत्वविवक्षाय। वृत्°। क्विप्। नहिवृतीति दीर्घः॥ नीवृद्दयोर्भेतादेशे इति शब्दाम्बुधिः॥

नीशारः। पु। हिमानिलनिवारणप्रावरणे। थोड इति भाषा॥ नैशारिकाकुसनीशारः प्रावेश शिशिरे कृशः॥ नितरां शीर्यते हिमानिलावचाने नवा। अहिंसायाम्। शृणायुवर्णभि द्यतेर्घ्विति घञ्॥ उपसर्गस्य घञी तिदीर्घः॥

नीहारः। पुं। अवश्याये। तुषारे। हिमे। धुवारा इति भाषा॥ निह्रियते। हृञ्°। घञ्। उपसर्गस्य घञीतिदीर्घः॥ कफवायुवर्द्धेतायम्॥

नु। अ। वितर्के॥ अपमाने॥ विकल्पे॥ अनुनये॥ अतीते॥ प्रश्ने॥ हेतौ॥ अपदेशे॥ अनुशये॥ नुदति नौतिवा। णुद्°। णु° वा। मि तद्र्वादित्वात् डु.॥

नुतः। त्रि। स्तुते॥

नुतिः। स्त्री। स्तुतौ। स्तोत्रे॥ नूयतेऽनेन। णु°। स्त्रियाङ् क्तिन्॥ पूजायामिति शब्दरत्नावली॥

नुन्नः। त्रि। प्रेरिते॥ नुद्यतेस्म। णुदे°। क्तः। नुदविदेति पाक्षिकोन त्वाभावः॥

नुत्तः। त्रि। नुत्ते। अस्ते। प्रेरिते॥ नुद्यतेस्म। णुद्°। क्तः। नुदविदेति वामत्वम्॥ निरस्ते॥

नुन्नानुन्नन्। त्रि। अतिपीडितपीडके॥ अतिशयेन नुन्नोनुन्ननुन्नः तं नुदतीतिविग्रहः॥

नुन्नसारः। त्रि। परिचिप्तधैर्ये॥

नूतः। त्रि। स्तुते॥

नूतन। त्रि। प्रत्यग्रे। अभिनवे। नवीने॥ नवएव। नवस्तनप्तनप्नप्तप्रत्ययाः नूरादेशश्च॥

नूत्न। त्रि। नवे। नव्ये। नूतने॥ नवएव। नवस्नप्तनम् प्रत्ययेनूरादेश.॥

नूदः। पुं। ब्रह्मदारुवृक्षे। अश्वत्थाकारे पार्श्वपिप्पल इतिख्याते॥ तूत इति प्रसिद्धेपि॥ नुदति पापम्। नुद्°। इगुपधेतिक। पृ°॥ यद्वा। नुवदति। वद्°। मू° क। कर्मणि. कर्तृत्वम्॥ यद्वा। नूयते। णु०। रा° द.। कुटादि॥

नूनः । त्रि । समर्थे ॥ नकूनः । म० ॥

नूनम् । अ । निश्चिते ॥ तर्के ॥ आर्थे ॥ वाक्यपूरणे ॥ नुवा स्तुत्या नमति । किप् ॥ यद्वा । नुञ्जनयति । ऊनप रिहाणे । अच् ॥

नूपुरः । पुं । न । पादाङ्गदे । मञ्जीरे । नेवर इति बिछुवा इति च भाषा ॥ ॥ नुवनम् नूयतेवा । णू० । सं० कि प् । नुवि पुरति । पुर अग्रगमने । इ गुपधेति कः ॥

ना । पुं । मनुष्ये । पुरुषे ॥ नयति म र्यादया । णीञ्० । नयतेर्डित्वेत्यृन् । नरौ । नरः ॥

नृकरोटिका । स्त्री । नरकपाले ॥ नृ करोटिका ॥

नृकेसरी । स्त्री । नरसिंहावतारे ॥

नृगः । पुं । पुराणप्रसिद्धे नृपविशेषे ॥

नृगधूमः । पुं । तीर्थविशेषे ॥

नृचक्षाः । पुं । राक्षसे ॥ नॄन् चष्टे । च क्षिङ्० । सर्वधातुभ्यइत्यसुन् । अस नयोश्चेति न ख्यादेशः ॥ यद्वा । चष्टे बहुलमिति चक्षिः । सार्वधातु कसंघत्वात् ख्याञ् न ॥ नृणां दृष्टिः ॥

नृता । स्त्री । पुंस्त्वे । नुर्भावः । तल् ॥

नृतिः । स्त्री । नर्त्तने ॥ इतिशब्द० ॥

नृतुरङ्गः । पुं । हयग्रीवावतारे ॥

नृतुः । पुं । नर्त्तके ॥ नृत्यति । नृती०



। नृतिगृधोः कुः ॥

नृत्तम् । न । नर्त्तने । ताण्डवे । लास्ये ॥ नृतीगात्रविक्षेपे । भावे क्तः ॥ भा वाश्रयन्तु नृत्तंस्यान्नृत्यं तालल्या श्रयम् । वाक्यपदार्थाभिनयो मार्गो देशीतथा परः ॥ मधुरोद्धतभेदेन तद्द्वयं द्विविधंपुनः । लास्यताण्डवरूपे ण नाटकाद्युपकारकम् ॥ गात्रविक्षे पमात्रे ॥

नृत्यम् । न । तालमानरसाश्रयसवि लासाङ्गविक्षेपे । ताण्डवे । नटने । नाच इतिभाषा ॥ देवस्याग्रतो गीतवाद्यतालमानरसाश्रयः । सविला सोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥ * ॥ ताण्डवञ्च तथालास्यं द्विवि धं नृत्यमुच्यते । मेवंविधं तु रूपञ्च ताण्डवं द्विविधंमतम् ॥ अङ्गविक्षेप बाहुल्यं तथाभिनयशून्यता । यत्तस्य वखिलस्याः संग्रदेशीति स्रोकतः ॥ छेदनं भेदनं यत्र बहुरूपाच्च लाव ली । ताण्डवं बहुरूपं तदाकर्णाग समुद्धृतम् ॥ * ॥ इतिसङ्गी० ॥ नृ त्येनात्मरूपेण सिद्धिर्नृत्यस्य रूप तः । सार्वधिजानयन् नृत्यं नृत्य- मन्यच्छिवस्त्वनेति ॥ गेयादुत्तिष्ठते वा द्यं वाद्यादुत्तिष्ठतेलयः । लयतालस मारब्धं ततो नृत्यं प्रवर्त्तते ॥ नृती०

। न्टदुपधात्वात्कृपिचृतेरिति काप् ॥

न्टदुर्गम् । न । चतुर्दिगवस्थायिग त्वस्थरथयुक्तबहुपदातिरचिते रा त्रोवसतिस्थले ॥

न्टदेव: । पुं । राजनि ॥

न्टधर्मा । पुं । धनदे । कुबेरे ॥ नुरिव धर्मआचार: शास्यत्वत्वादिर्वा ऽस्य । धर्मादनिच् केवलात् ॥

न्टप: । पुं । भूपे । राजनि ॥ न्टन् पा ति । पारक्षणे । आतोनुपेतिक. ॥ चतुर्योजनपर्यन्त मधिकारो न्टपस्य च ॥ अस्यप्रशंसा यथा । अपुत्रस्य न्ट प: पुत्रो निर्धनस्य धनं न्टप: । अमा तुर्जननी राजा कतातस्यपिताम्टप: ॥ अनाथस्यन्टपोनाथो ह्यभर्त्तु: पा र्थिव. पति. । अभृत्यस्य न्टपोभृत्यो न्टपएवन्टणांसखा ॥ सर्वदेवमयो रा जा तस्मात् त्वामयये न्टपेति का लिकापुराणम् ॥ षोडशसहस्रा याम् ॥

न्टपकन्द । पुं । राजपलाण्डौ ॥

न्टपति. । पुं । धनदे । कुबेरे ॥ भूपतौ । राजनि ॥ न्टन्पाति । पा० । पाति डति: ॥ न्टणांपतिर्वा ॥

न्टपतिप्रिय: । त्रि । राजवल्लभे ॥ न्टपस्य प्रिय: ॥

न्टपतिवल्लभ: । पुं । न्टपवल्लभ इतिख्या



ते औषधविशेषे ॥ यथा । जाती फलं ... ल्वङ्गेलाटङ्करामठम् । जीरकञ्च यमानीच विश्वसैन्धवपच काम् ॥ लौह भस्म रसं गन्धं ताम्रं प्रत्येकश: पलम् । मरिचं त्रिपलं दत्त्वा छागीदुग्धेन पेषयेत् ॥ धात्री रसेन वा पिष्ट्वा वटिका कुरुयत्नत: । श्रीमद्गहनगाथेन निर्मितम्परिनि र्मित. ॥ सूर्यवर्त्मसद्गसाचाऽयं रसो न्टपतिवल्लभ: । अष्टादशवटी खादे त् पवित्र: सूर्यदर्शक: ॥ * ॥ हन्ति मन्दानलं सर्वं आमदोषं विसूचि- काम् । प्लीहगुल्मोदराष्ठीलायकृत् पाण्डुहलीमकम् ॥ शूलञ्च कण्ठ शूलञ्च वस्ति.शूलञ्च कासश्वासम् । शिर:शूलं कटीशूलं नानाप्रमेह शूलकम् ॥ कासश्वासक्षतञ्च क्षी पदं ग्रीवमर्बुदम् । गलगण्डं गण्डमा ला अन्त्रपित्तञ्च गर्दभीम् ॥ क्रिमि कुष्ठानि दद्रूणि वातरक्तं भगन्दरम् । उपदंशं अतीसारं ग्रहण्यर्श. प्रमे हकम् ॥ अश्मरीं मूत्रकृच्छ्रञ्च मूत्रा घात मसृग्दरम् । ज्वरं जीर्णज्वरं कण्डुं तन्द्रालस्यं वमिं भ्रमिम् ॥ दा हविद्रधिहिक्काश्च जडगद्गदमूकता: । वाधिर्यं स्वरभेदञ्च वृध्नदृष्टिविसर्प- कान् ॥ऊरुस्तम्भ रक्तपित्तं गुदभ्रंशं

सावधिं हृयाम्। कर्णनासानुशोथां श्चदन्तरोगश्च पीनसम्॥ मौख्यञ्च शीतपित्तञ्च स्थावराणि विषाणि च। वातपित्तकफोत्थांश्च द्वन्दजान् सान्निपातिकान्॥ सर्वरोगभयान्हन्ति चण्डांशु रिवपावकः। वलवर्णकरो ह्येष आयुष्यो वीर्यवर्द्धनः॥ परं वाजीकरः श्रेष्ठ. पट्टतामन्त्रसिद्धिदः। अरोगी दीर्घजीवी स्यात् रोगी रोगं विमुञ्चति॥ रसस्यास्य प्रसादेन सुवुद्धिर्जायते नरः। इतिरत्नावली॥

नृपद्रुमः। पुं। आरग्वधे॥ राजादनीवृक्षे॥

नृपप्रियः। पुं। वेहुवांस इतिगौडभाषाप्रसिद्धे वेहवंशे॥ राजपलाण्डौ॥ राजशुके॥ रामशरे॥ शालिधान्ये॥ आम्रे॥ त्रि। राजवल्लभे॥ नृपस्यप्रियः॥

नृपप्रियफला। स्त्री। वार्त्ताकाम्॥ इतिराजनिर्घण्टः॥

नृपप्रिया। स्त्री। केतक्याम्॥ राजखर्जूर्याम्॥ राजभार्यायाम्॥

नृपबदरः। पुं। राजबदरवृक्षे॥ न। तत्फले॥

नृपमन्दिरम्। न। सौधे। राजसदने॥

नृपमाङ्गल्यकम्। न। आहुल्यवृक्षे॥

नृपमानम्। न। भूभुजांभुक्तिकाले वेदकवाद्यविशेषे॥ इतिशब्दाम्बुधिः॥

नृपलक्ष्म। न। राजच्छत्रे॥ राजचिह्ने॥ नृपस्यलक्ष्म॥

नृपलिङ्गधरः। पुं। राजवेशधारिणि॥ यथा। निजयाहौजसा धीरः कलिं दिग्विजयेक्वचित्। नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदे॥ इति श्रीभागवतम्॥ प्रवृद्धे कलिकाले तु तद्विधास्तव भूभुजः। प्रजाधनादानपराः म्लेच्छतोद्भवभागिनः॥

नृपवल्लभः। पुं। राजाम्रे॥ त्रि। राजप्रिये॥

नृपवल्लभा। स्त्री। राजमहिष्याम्॥ केविकापुष्पे॥

नृपशुः। पुं। कार्याकार्यविवेकशून्ये॥ ना पशुरिव। उपमितसमासः॥

नृपसभम्। न। राज्ञांसभायाम्॥ नृपाणांसभा। सभाराजामनुष्यपूर्वेति क्लीवत्वम्॥

नृपात्मजा। स्त्री। राजपुत्र्याम्॥ नृपस्य आत्मजा॥ कटुतुम्ब्याम्॥

नृपाध्वरः। पुं। राजसूययज्ञे॥

नृपान्नम्। न। राजान्नमामधान्ये॥ राजान्ने॥

नृपाभीरम्। न। भक्ततूर्ये। राजभोजनकालीनवाद्यविशेषे॥

नृपामयः। पुं। राजयक्ष्मणि। चयरो

नृहरिदासः । पुं । प्रह्लादे ॥

नेजकः । निर्णेजके । रजके ॥ नेनेक्ति । णिजिर् । ण्वुल् ॥

नेत् । अ । शङ्कायाम् ॥ प्रतिषेधे ॥ विचारे ॥ समुच्चये ॥

नेता । त्रि । प्रभौ । नायके ॥ प्रवर्त्तके ॥ नयति । णीञ् । तृच् ॥ निम्बवृक्षे ॥ प्रापयितरि ॥ निर्वाहके ॥ यथा । भगवद्भक्तनिर्वाहको नेतेति विष्णुसहस्रनामभाष्यम् ॥

नेत्रम् । न । मन्थगुणे ॥ वस्त्रभेदे ॥ द्रुमस्य मूले ॥ रथे ॥ जटायाम् ॥ नाड्यामिति विश्वः ॥ वस्तिशलाकायाम् ॥ चक्षुषि ॥ अथ नेत्रपरीक्षा । नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथारुणम् । कोटरान्तःप्रविष्टञ्च तथास्थ्यपि लोचनम् ॥ हरिद्राखण्डवर्णाभं रक्तं वा हरितं तथा । दीपद्वेषि सदाहञ्च नेत्रं स्यात्पित्तकोपतः ॥ चक्षुर्बलासबाहुल्यात् स्निग्धं स्यात्क्लिन्नमस्रुतम् । तथा धवलवर्णञ्च ज्योतिर्हीनञ्च तान्वितम् ॥ नेत्रं त्रिदोषबाहुल्यात् स्याद्दोषद्वयलक्षणम् । त्रिदोषलिङ्गं सन्येन तन्मारयति रोगिणम् । त्रिदोषदूषितं नेत्रमन्तर्मग्नं भवेत् । त्रिलिङ्गं सन्निपातस्य विभ्रान्तौ नेत्रमीलयत्यपीति ॥ नयति नीयतेऽनेन वा । णीञ् । सर्वधातुभ्यः ष्ट्रन् । दाम्नीशसादिना वा ष्ट्रन् ॥ त्रि । नेतरि । नयनसाधने । प्रापयितरि ॥ प्रवर्त्तकेऽपि ॥

नेत्रच्छदः । पुं । अक्षिपुटे । नेत्रपिधायकचर्मपुटे । आँखकाढकन इति भाषा ॥

नेत्रपर्य्यन्तः । पुं । अपाङ्गे ॥ त्रि । नयनावधौ ॥

नेत्रपिण्डः । पुं । बिडाले ॥ इति हारावली ॥ चक्षुर्गोलके ॥

नेत्रपुष्करा । स्त्री । रुद्रजटायाम् ॥

नेत्रबन्धः । पुं । बालानां क्रीडाविशेषे । आँखमिचौनी इति भाषा ॥

नेत्रमलम् । न । दूषिकायाम् ॥ नेत्रयोर्मलम् ॥

नेत्रमीना । स्त्री । यवतिक्तालतायाम् ॥

नेत्रयोनिः । पुं । इन्द्रे । वासवे ॥

नेत्ररञ्जनम् । न । कज्जले ॥ नमस्यामेषा योजयेत्तु साधको नेत्ररञ्जनमिति कालिकापुराणम् ॥

नेत्ररोगः । पुं । चक्षूरोगे ॥ तन्निदानमाह माधवः । कुपितास्तत्समास्थिमिहे वितश्चविशूचधातागमनिग्रहाच्च । उष्णाभितप्तस्य जलप्रवेशात् दूरेक्षणात् स्वप्नविपर्य्ययाच्च । स्वेदाद्रजोधूमनिषेवणाच्च छर्द्दिर्विघातात् वमना

तियोगात् । प्रसक्तसंरोदनशोकता पाच्छिरोऽभिघातादतिमद्यपानात् ॥ तथाऽत्रतूनाञ्च विपर्ययेण क्लेशाभि घातादतिमैथुनाच्च । वातात् पित्ता त् कफाद् रक्ताद्विनिघ्नन्स्वतुर्विधः । प्रायेण जायते घोरः सर्वनेत्रामया करः इतिच ॥ वातप्रकाशात् सूर्याभि रीक्षणाच्च नेत्रविकारान् जनयन्ति दोषाः ॥

नेत्ररोगहा । स्त्री । वृश्चिकालीवृक्षे ॥ त्रि । चक्षूरोगनाशके ॥

नेत्रामयः । पुं । नेत्ररोगे ॥

नेत्राम्बु । न । अश्रुणि ॥ नेत्रयोरम्बु ॥

नेत्रारिः । पुं । सेहुण्डवृक्षे ॥

नेत्री । स्त्री । नद्याम् ॥ नाड्याम् ॥ त्रि त्रि । लक्ष्म्याम् ॥ नेतृशब्दात्स्त्रिया म् ङीप् ॥ प्रापयकर्त्र्याम् ॥

नेत्रोपमफलः । पुं । वाताद्रे । बदाम इति भाषा ॥

नेत्रौषधम् । न । पुष्पकासीसे ॥ चक्षू रोगौषधमात्रे ॥

नेत्रौषधी । स्त्री । अजशृङ्ग्याम् ॥

नेदिष्ठः । त्रि । अत्यासन्ने ॥ अयमेषा मतिशयेनान्तिकः । इष्ठन् । अन्तिक कयाढयोर्नेदसाधौ ॥ निपुणे ॥ अङ्कोठ वृक्षे ॥

नेदीयान् । त्रि । अत्यन्तसमीपे । अयमनयोरतिशयेनान्तिकः । ईय सुन् । अन्तिकस्य नेदादेशः ॥

नेपः । पुं । पुरोहिते ॥ नयति नीयते वा । णीञ्० । पानीविषिभ्यः पः ॥

नेपथ्यम् । न । रङ्गभूम्याम् । रङ्गभू मौ ॥ पुं । अलङ्कारे । प्रसाधने । वे षे ॥ वेषस्थाने ॥ नयति । णीञ्० । विच् । गुणः । नयेनेपस्य नेपथ्यं पथ्यः ॥

नेपालः । पुं । स्वनामप्रसिद्धे हिमाल यैकदेशविशेषे ॥ यथा । अटेश्वरं समारभ्य योगेश्यन्तं महेश्वरि । ने पालदेशो देवेशि त्र्युक्तं श्रीगणेश सङ्गमे ॥

नेपालकम्बलः । पुं । कृतमाल्ये ॥

नेपालनिम्बः । पुं । नेपाले । रुयनि म्बे । भराजके । भावीतिक्ते ॥

नेपालमूलकम् । न । हस्तिदन्तसदृशे मूलकविशेषे ॥ नेपालमूलकं चान्य च्छक्तवेत्रजदन्तवत् ॥

नेपालिका । स्त्री । मनःशिलायाम् ॥

नेमः । पुं । काले ॥ अवधौ ॥ अर्द्धे । खण्डे ॥ प्रकारे ॥ कैतवे ॥ गर्त्ते ॥ नीयते । णीञ्० । अर्त्तिस्तुसि ति मन् ॥ नाद्यादौ ॥ अन्यस्मिन् । इ तिशब्द० ॥

नेमिः । पुं । जिनविशेषे ॥ तिनिशवृ

धे । तिनाश्च इतिभाषा ॥ स्त्री । त्रि कायाम् ।[१] कूपसमीपे रज्जुधारणा र्थं निदारुयन्त्रे ॥ चक्रान्ते । प्रधौ । रथचक्रस्य भूमिस्पर्शिभागे ॥ कूपा न्तिके समारुह्यस्थलभागे ॥ इति शब्द रत्नावली ॥ नयतिरथम् नयन्त्यने-नवा । णीञ्० । मियोमिः ॥

नेमिचक्रः । पु । परीचिद्वंशजे असीम कृष्णस्य पुत्रे ॥

नैमिषम् । न । नैमिषारण्याख्ये क्षेत्रे ॥ ब्रह्मणाविसृष्टस्य चक्रस्य नेमिः शी र्यते क्षीणीभवति यत्र तत् ॥

नेमी । स्त्री । कूपस्थपिकायाम् ॥ च क्रान्तभागे । प्रधौ ॥

नेष्ट. । वि । निषिद्धे ॥

नेष्टु । पुं । लोष्टे ॥ इतिशब्दाम्बुधि ॥

नेष्टा । पु । ऋत्विग्विशेषे ॥ नयति । णीञ् । नयतेः षुक्चेतितृन् ॥ नप्तृ नेष्ट्रितिसाधु ॥

नैस्वम् । न । निस्वतायाम् । दुर्गतौ ॥

नैकटिक । पु । भिक्षौ ॥ भिक्षुर्णा ग्रा मात् क्रोशे वसथ्यमितिशास्त्रम् । ग्र मोऽजनान्निकटे वसति । ठक् ॥ वि । निकटवर्तिनि ॥

नैकट्यम् । न । निकटत्वे ॥

नैकभेद । वि । बहुविधे । उच्चावचे ॥ अनेकप्रकारे ॥ एकोभेदोऽस्य । न एकभेदः । सुप्सुपेति समासः ॥ न एकोभेदोऽनेकधा । उत्तरपदशब्द स्य समासचरभागयवेकृतत्वान्मध्य पदे न लोपाभावः ॥

नैकषेयः । पुं । राक्षसे ॥ निकषाया ऋपत्यमित्यर्थे ढक् ॥

नैकृतिकः । वि । स्वस्मिन्नुपकारिस्व धममुत्पाद्यपरवृत्तिच्छेदनेन स्वार्थपरे ॥ निकृत्यापरापकारेणजी-वति । निकृत्यानिष्ठुरतया चरतिवा । ठक् ॥

नैगमः । पुं । न । उपनिषदि ॥ वणि जि । वाणिजे ॥ नागरे । पौरे ॥ न ये ॥ स्त्रियाम् ॥ निगमे भवः । त त्रभव इत्यण् ॥ निगमवचना । प्र० कण् ॥ वि । निगम सम्बन्धिनि ॥

नैचिकम् । न । गोः शिरोदेशे ॥ इति हेमचन्द्रः ॥

नैचिकी । स्त्री । उत्तमायांगवि ॥ नी चैश्चरति । चरतीति ठक् । अध्य-यानामितिटिलोपः । यद्वा । निचि. कर्णशिरोदेशे इतिरभसः । तस्. म्यार्थेकन् । प्रशस्तांनिचिकमस्या. । ज्योत्स्नादिभ्य इत्यण् ॥

नैज. । वि । निजसम्बन्धिनि । स्वीये ॥

नैत्यम् । न । नित्यत्वे ॥ इ०राधाकान्त ॥

नैत्यकम् । न । नित्यानुष्ठेये । नप

यज्ञे । ब्रह्मयज्ञादिरूपे ॥ यथा । वेदोपकरणे चैव स्वाध्याये चैव नैत्यके । नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हीति ॥ नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् । ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतमिति मनुः ॥

नैत्यशब्दिकः । पुं । नित्यशब्दत्ववादिनि ॥ नित्यः शब्द इति आह । तदाहेति माशब्दादिभ्य उक् ॥

नैदानिकः । त्रि । निदानविदि ॥ निदानाध्येतरि ॥

नैद्रः । त्रि । निद्रासम्बन्धिनि ॥

नैपालः । पुं । नेपालनिम्बे ॥ त्रि । नेपालदेशसम्बन्धिनि ॥

नैपालिकम् । न । ताम्रे ॥ इति राजनि० ॥

नैपाली । स्त्री । नवमाल्याम् ॥ वनज्योत्स्नायाम् । मनःशिलायाम् ॥ सुवहायाम् । शेफालिकायाम् ॥ नेपाले भवा । तत्र भव इत्यण् ॥ नीलशालीति शब्दरत्नावली ॥

नैपुणम् । न । नैपुण्ये ॥ निपुणस्य भावः ॥

नैपुण्यम् । न । निपुणत्वे ॥ निपुणस्य कर्म भावो वा । ब्रा० ष्यञ् ॥

नैमित्तिकम् । न । पुत्रजन्माद्यनुबन्धिपुत्रोत्पत्त्यादिकर्मसु । निमित्तमासाद्यावश्यकर्त्तव्यतया विहितेषु ॥ त्रि । हेतुमति । निमित्तादागते ॥ ठक् ॥

नैमित्तिकक्रिया । स्त्री । निमित्तनिश्चयवदधिकारिकर्त्तव्ये कर्मणि ॥

नैमित्तिकदानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये दाने ॥ यथा । यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितमिति गरुडपुराणम् ॥

नैमित्तिकधर्मः । पुं । निमित्ताश्रितधर्मे ॥ निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

नैमित्तिकलयः । पुं । प्रलयविशेषे ॥ चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः ॥

नैमित्तिकस्नानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये स्नाने ॥ यथा । चाण्डालशवपूयादि स्पृष्ट्वा स्नातो रजस्वलाम् । स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तदिति ॥

नैमिशम् । न । नैमिशारण्ये ॥ नैमिशमेव । स्वार्थेऽण् ॥ तीर्थविशेषे ॥

नैमिशारण्यम् । न । प्रसिद्धेऽरण्यविशेषे ॥ नैमिशञ्च तदरण्यञ्च ॥

नैमिषम् । न । नैमिषारण्ये ॥ तीर्थ

विशेषे ॥

नैमिषकुञ्जम् । न । तीर्थविशेषे ॥

नैमिषारण्यम् । न । स्वनामख्यातप्रसिद्धे ऽरण्यविशेषे ॥ अथारण्ये निमिषेण दानवबलं विष्णुना निहतम् । तथा हि । तेन चक्रेण ससैन्य मासुरं दौर्जयं ग्रपात् । निमिषान्तरमात्रेण भस्मसाद्बहुधाकृतम् ॥ एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिं स्ततस्तेन नैमिषारण्य संज्ञितम् । भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः ॥ इति वराहपुराणे गौरमुखं प्रति भगवद्वाक्यम् ॥ शुकयादिव्यधिष्ठितेसिद्दसिद्धस्थानम् ॥ स्कन्दात्तत्र देवता । देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरेत्यागमोक्तेः ॥ नैमिषेतु महाख्याने देवीसाक्षिरूधारिणीतिदेवीगीता ॥

नैमेयः । पुं । परीवर्त्ते । परिदाने । विनिमये ॥ निमानम् । मेड् प्रणिदाने । अचोयत् । ईद्यति । गुणः । प्रज्ञाद्यण् ॥

नैयग्रोधम् । न । न्यग्रोधफले ॥ न्यग्रोधस्यविकारः । अचादित्वादण् । तस्य विधानसामर्थ्यात्फलेनलुक् । न्यग्रोधस्य चकेवलस्यैचागमः ॥ न्यग्रोधजातेश्चमसादौ ॥

नैयङ्कवम् । त्रि । न्यङ्कुमृगजातवस्त्रचर्मादौ ॥

नैयमिकम् । न । नित्यनैमित्तिकविधिप्राप्तेसन्ध्याध्ययनजातेपृथ्यादौ ॥

नैयायिकः । त्रि । सांवादिके । स्याद्वादे । तर्कशास्त्राध्येतरि । तद्वेत्तरि च ॥ न्यायमधीते वेत्तिवा । क्रतूक्थादित्ति ठक् ॥

नैयासिकः । त्रि । न्यासाभिज्ञे ॥ न्यासमधीते वेदवा । उक्थादित्वाट्ठक् ॥

नैरन्तर्य्यम् । न । निरन्तरत्वे ॥

नैराश्यम् । न । आशायाअभावे ॥

नैरुक्तः । त्रि । निरुक्तसम्बन्धिनि ॥

नैरुक्तिकः । त्रि । निरुक्ताध्येतृवेदिनोः ॥ निरुक्तमधीते वेदवा । उ० ठक् ॥

नैर्ऋतः । पुं । राक्षसे ॥ पश्चिमदक्षिणकोणाधिपतौ ॥ सैंहिकेये ॥ निर्ऋतेरपत्यम् । तस्यापत्यमित्यण् ॥

नैर्ऋती । स्त्री । असुरपत्नी ॥ अथ पश्चिमप्रतीच्योर्मध्यायांदिशि । नैर्ऋतकोणे ॥

नैर्गुण्यम् । न । निर्गुणत्वे ॥

नैर्झरम् । न । भीमसेनपानीयप्रभेदे । निर्झरसम्बन्धिजले ॥ शैलसानुस्रवद्वारिभवाहो निर्झरो झरः । सतु प्रस्नवणश्चापि तत्पयं नैर्झरंम

लम् ॥ नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकञ्च वातलं स्यादपित्तलम् ॥

नैर्मल्यम् । न । निर्मलत्वे ॥ विषयवैराग्ये ॥ यथा । विषयेष्वतिसंरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतमिति ॥

नैर्वाचिकम् । न । माध्या. निर्गमनद्वारे ॥

नैविड्यम् । न । संप्रफुल्लारगुणविशेषे ॥ यथा । नैविड्यं प्रौढताचापिस्तुस्वरस्वस्वरीप्सता । माधुर्यमितिपञ्चामी फुल्लकृतेषुगुणाः स्मृता. ॥ निविडत्वे । सघनतायाम् ॥

नैवेद्यम् । न । निवेदनीयद्रव्ये ॥ अवाग्विसर्जनाद् द्रव्यं नैवेद्यं सर्वमुच्यते विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥

नैशम् । त्रि । नैशिके ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति शैषिकेषु पाक्षिकोऽण् ॥

नैशिकम् । त्रि । नैशे ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति पक्षे ठञ् ॥

नैषधः । पुं । नलभूपतौ ॥ निषधदेशाधीश्वरे ॥ निषधानामयम् । तस्येदमित्यण् ॥ त्रि । निषधसम्बन्धिनि ॥

नैषादकिः । पुं । निषादतनये ॥

नैष्कर्म्यम् । न । ब्रह्मविषयविचारनिष्पन्नज्ञाने ॥ सर्वकर्मशून्यत्वे । कर्मत्यागरूपेसन्न्यासे ॥ निष्कर्मणोभावः । ष्यञ् ॥ वेदोक्तमेवकुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यसिद्धिंलभते रोचनार्थाफलश्रुतिः महाभागवते एकादशस्कन्धः ॥

नैष्किकः । पुं । रूप्याध्यक्षे । टङ्कशालायां नियुक्ते ॥ निष्के हेम्नि नियुक्तः । तत्रनियुक्तइति ठक् ॥ त्रि । निष्केणक्रीते ॥ निष्कस्याधिकारे ॥ क्रीतवत् परिमाणादित्यतिदेशात् असमासे निष्कादिभ्य इति ठक् ॥

नैष्ठिकः । पुं । ब्रह्मचर्येण यावज्जीवंगुरुकुलेवासिनि । निष्ठासंसारसमाप्तिकालमयोगने ब्रह्मचारिविशेषे ॥ यथा । नैष्ठिको ब्रह्मचारीच वसेदाचार्यसन्निधौ । तदभावेऽस्यतनये पत्न्यांवैश्वानरेऽपिवा ॥ अनेनविधिना देहं साधयेद्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति नचेहाऽऽजायते पुनः ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येनशुद्ध्येत् स आत्महा ॥ आरूढपतितं विप्रं मण्डलाद्विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत् ॥

विशेषे ॥

नैमिषकुञ्जम् । न । तीर्थविशेषे ॥

नैमिषारण्यम् । न । स्वनामप्रसिद्धेऽरण्यविशेषे ॥ अथारण्ये निमिषेण दानवबलं विष्णुना निहतम् । तथाहि । तेन चक्रेण तत्सैन्यं नासुरं दौर्जयं क्षणात् । निमिषान्तरमात्रेण भस्मवद्धुधाकृतम् ॥ एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिंस्ततस्तेन नैमिषारण्यसंज्ञितम् । भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः ॥ इति वराहपुराणे गौरमुखं प्रति भगवद्वाक्यम् ॥ शुकयाद्यधिष्ठितेसिद्धसिद्धस्थानम् ॥ स कथा तत्र देवता । देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरैः ख्यातमेनोक्तः ॥ नैमिषे तु महास्थाने देवी सा लिङ्गधारिणीति देवीगीता ॥

नैमेयः । पुं । परीवर्त्ते । परिदाने । विनिमये ॥ निमानम् । मेङ् प्रणिदाने । अधोक्त । ईवति । गुणः । प्रज्ञाद्यण् ॥

नैयग्रोधम् । न । न्यग्रोधफले ॥ न्यग्रोधस्य विकारः । प्लक्षादिभ्योऽण् । तस्य विधानसामर्थ्यात् फलेऽलुक् । न्यग्रोधत्वपक्वेमफले फ्येनागसः ॥ न्यग्रोध जातेचमसादौ ॥

नैयङ्कवम् । त्रि । न्यङ्कुमृगजातवस्त्रचर्मादौ ॥

नैयमिकम् । न । नित्यनैमित्तिकविधिप्राप्तेसन्ध्याध्ययनशान्तिपुष्ट्यादौ ॥

नैयायिकः । त्रि । सांवादिके । स्वाच्यपादे । तर्कशास्त्राध्येतरि । तद्वेत्तरि च ॥ न्यायमधीते वेत्ति वा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

नैयासिकः । त्रि । न्यासाभिज्ञे ॥ न्यासमधीते वेद वा । उक्थादित्वाट्ठक् ॥

नैरन्तर्य्यम् । न । निरन्तरत्वे ॥

नैराश्यम् । न । आशाया अभावे ॥

नैरुक्त । त्रि । निरुक्तसम्बन्धिनि ॥

नैरुक्तिकः । त्रि । निरुक्ताध्येतृवेदित्रोः ॥ निरुक्तमधीते वेद वा । उ॰ ठञ् ॥

नैर्ऋतः । पुं । राक्षसे ॥ पश्चिमदक्षिणकोणाधिपतौ ॥ सैंहिकेये ॥ निर्ऋतेरपत्यम् । तस्यापत्यमित्यण् ॥

नैर्ऋती । स्त्री । असुरपत्नी ॥ अवाचीप्रतीच्योर्मध्यवर्तिदिशि । नैर्ऋतकोणे ॥

नैर्गुण्यम् । न । निर्गुणत्वे ॥

नैर्झरम् । न । भीमसेनपानीयस्य भेदे । निर्झरसम्बन्धिजले ॥ शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः । स तु प्रस्रवणस्यापि तज्जन्यं नैर्झरं म

लम् ॥ नैऊरं रुचिकृत्क्षीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकञ्च वातलं स्यादपित्तलम् ॥

नैर्म्मल्यम् । न । निर्म्मलत्वे ॥ विषयवैराग्ये ॥ यथा । विषयेष्वतिसंरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्म्मल्यं समुदाहृतमिति ॥

नैर्यानिकम् । न । वाय्वाः निर्गमनद्वारे ॥

नैविड्यम् । न । वंशफूत्कारगुणविशेषे ॥ यथा । नैविड्यं प्रौढता चापि सुस्वरत्वञ्च शीघ्रता । माधुर्य्यमिति पञ्चामी फूत्कृतेषु गुणाः स्मृताः ॥ निविडत्वे । सघनतायाम् ॥

नैवेद्यम् । न । निवेदनीयद्रव्ये ॥ अ वीग्विसर्जनाद् द्रव्यं नैवेद्यं सर्वमुच्यते विसर्जिते जगन्नाथे निर्म्माल्यं भवति क्षणात् ॥

नैशम् । त्रि । नैशिके ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति शैषिकेष्वणु प्राचिकोणु ॥

नैशिकम् । त्रि । नैशे ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति पक्षे ठञ् ॥

नैषधः । पुं । नलभूपतौ ॥ निषधदेशाधीश्वरे ॥ निषधानामयम् । तस्येदमित्यण् ॥ त्रि । निषधसम्बन्धिनि ॥

नैषादिकिः । पुं । निषादतनये ॥

नैष्कर्म्यम् । न । ब्रह्मविषयविचारनिष्पन्नज्ञाने ॥ सर्वकर्मशून्यत्वे । कर्मत्यागरूपसन्न्यासे ॥ निष्कर्मणोभावः । ष्यञ् ॥ वेदोक्तमेवकुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यसिद्धिंलभते रोचनार्थाफलश्रुतिः महाभागवते एकादशस्कन्धः ॥

नैष्किकः । पुं । रूप्याध्यक्षे । टङ्कादिशालायां नियुक्ते ॥ निष्केहेम्नि नियुक्तः । तत्रनियुक्तइति ठक् ॥ त्रि । निष्केणक्रीते ॥ निष्कस्यविकारे ॥ क्रीतवत् परिमाणादित्यनेन देशात् असमासेनिष्कादिभ्य इति ठक् ॥

नैष्ठिकः । पुं । ब्रह्मचर्य्येण यावज्जीवंगुरुकुलेवासिनि । निष्ठासंसारसमाप्तिस्तत्प्रयोजने ब्रह्मचारिविशेषे ॥ यथा । नैष्ठिको ब्रह्मचारीच वसेदाचार्य्यसन्निधौ । तदभावेऽस्यतनये पत्न्यांवैश्वानरेपिवा ॥ अनेनविधिनादेहं साधयेद्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोतिनचेहाऽऽजायतेपुनः ॥ आरूढोनैष्ठिकंधर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येनशुद्ध्येत् स आत्महा ॥ आरूढपतितं विप्रमण्डलाच्चविनिःसृतम् । उद्बद्धंकृमिदष्टञ्चस्पृष्ट्वाचान्द्रायणं चरेत् ॥

निष्ठाविद्यतेऽस्य । मत्वर्थीयठक् ॥ निष्ठायां भवः भवार्थेठञ्वा ॥ त्रि । निश्चले॥

नैष्ठिकी । स्त्री । निश्चलायाम् ॥ टिड्ढे तिङीप् ॥

नैसर्गिकः । त्रि । स्वाभाविके ॥

नैस्त्रिंशिकः । त्रि । असियोधे । असिहेतौ ॥ निस्त्रिंशः प्रहरणमस्य । प्रहरणमिति ठक् ॥

नो । अ । अभावे ॥ नह्यति । नह० । डो प्रत्ययः ॥

नोचेत् । अ । निषेधे ॥

नोदना । स्त्री । चोदनायाम् ॥

नोदितः । त्रि । प्रवर्त्तिते ॥ प्रेरिते ॥

नोधाः । पु । ऋषिविशेषे ॥ नूयते । णु० । नुवोधुट्चेत्यसि । नवं दधातिवा ॥

नोपस्थाता । त्रि । दूरस्थे ॥ हीनार्थिविशेषे । अनुपस्थिते । पास नहीं इति भाषा ॥ यथा । अन्यवादीक्रियाद्वेषी नोपस्थातानिरुत्तरः । आहूतप्रपलायीचहीनः पञ्चविधः स्मृतः ॥ न उपसमीपे तिष्ठति । ष्ठा० । तृच् ॥

नौः । स्त्री । नौकायाम् ॥ नौकाविशेषे । कसकी नाव इतियस्यादेशभाषा इष्टिम्बोट इतीङ्ग्रेजभाषाच ॥ यथा । ततः प्रवासितो विद्वान् विदुरेणनरस्तदा । पार्थानाम्दर्शयामास मनोमारुतगामिनीम् ॥ सर्ववातसहां नावं यन्त्रयुक्तांपताकिनीम् । शिवेभागीरथीतीरे नरैर्विस्रम्भिभिः कृताम् ॥ इतिमहाभारते आदिपर्वणिजतुगृहे १४६ अध्यायः नुद्यते । णुद० । ग्लानुदिभ्यांडौः ॥ यद्वा । नयति । णीञ्० । अन्येभ्यो० डः । नम् भवति । क्विप् । ज्वरत्वरेत्यूठ् । वृद्धिः ॥

नौका । स्त्री । नावि । तरण्याम् । निष्पद्याने । तर्याम् ॥ नौशब्दात्स्वार्थेकः ॥

नौकादण्डः । पुं । क्षेपण्याम् । नौकापार्श्वद्वयबहुचालनकाष्ठे । दाँड इति भाषा ॥ नौकाया दण्डः ॥

नौतार्य्यः । त्रि । नाव्ये ॥ नावातार्य्यः ॥

न्यक्का । स्त्री । विट्कीटे ॥ न्यक्काविट्कीटकेस्त्रियामिति शब्दाम्बुधिः ॥

न्यक्कवका । स्त्री । विट्कीटे । शकृत्कृमौ ॥ इतिहारावली ॥

न्यक्करणम् । न । तिरस्कारे ॥

न्यक्कारः । पुं । अनादरे । अवहेलने ॥

न्यक्कृतिः । स्त्री । रीढायाम् । न्यक्कारे ॥

न्यच्चः । पु । यामदग्न्ये । परशुरामे ॥

महिषे ॥ न । कात्स्न्यें ॥ त्वये ॥ त्रि । निकृष्टे ॥ नियमानि निकृतानि वा कमाणियस्य यस्मिन् वा ॥

न्यग्रोधः । पुं । व्यामे । व्यामपरिमाणे ॥ वटवृक्षे ॥ शमीद्रुमे ॥ न्यक्रुधा दि । रुधिर० । कर्मण्यण् ॥ हरौ ॥ न्यगर्वाक् रोहति सर्वेषामुपरिवर्त्त मा० वतस्य. ॥ सर्वाणिभूतानिन्यक् कृत्य निजमायया ऽऽवृणोतिरुणद्धी तिवा ॥ विषपर्ण्याम् ॥ मोहनाख्यौ षधौ ॥

न्यग्रोधपरिमण्डल. । पुं । व्यामपरिमि तोच्छ्रायपरीणाहेपुरुषे ॥ एताहृशा. पुरुषास्त्रेतायुगे चक्रवर्त्तिन आसन् । यथा । सत्ताधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः । सर्वेलक्षण सम्पन्ना न्यग्रोधपरिमण्डलाः ॥ न्यग्रोधौतु स्मृतौ बाहू व्यामोन्यग्रोधउच्यते । व्यामेनवोच्छ्रयोयस्य अधऊर्द्ध्वं देहि नः ॥ समोच्छ्रयपरीणाहोन्यग्रोधपरि मण्डलः॥ इतिमात्स्ये ११८ अध्यायः ॥

न्यग्रोधपरिमण्डला । स्त्री । अङ्गनावि शेषे ॥ यथा । स्तनौसुकठिनौयस्या नितम्बेचविशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डलेति श ब्दमाला ॥

न्यग्रोधा । स्त्री । न्यग्रोधाम् ॥

न्यग्रोधी । स्त्री । उपचित्रायाम् । मूषि कपर्ण्याम् ॥ न्यक्रुधादिबहुमूलत्वा त् । रुधिर० । पचाद्यच् । गौरादि त्वात्ङीष् ॥

न्यञ्चं रुणद्धि इतिवा । कर्मण्यण् ॥

न्यङ्कुः । पुं । मुनिविशेषे ॥ बहुविषा णेमृगविशेषे । बारहसिंगा इति भा षा ॥ न्यङ्कुः स्वादुर्गुरुर्बल्यो वृष्यो दोषत्रयापहः ॥ नितरामञ्चति । नावञ्चेरिच्चु. । न्यङ्क्वादित्वात् कु त्वम् ॥

न्यङ्कुभूरुहः । पुं । श्योणाकवृक्षे । श्यो नाके ॥

न्यक्कम् । न । अवदेशतिवाकुणावर्ग्येमि ताक्षरा ॥

न्यच्छम् । न । क्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

न्यञ्च् । त्रि । निम्ने ॥ नीचे ॥ कात्स्न्यें ॥ न्यञ्चति । अञ्चु० । ऋत्विगिति क्विन् ॥

न्यञ्चितम् । त्रि । अधः क्षिप्ते ॥

न्यन्तः । पुं । अरमप्रदेशे । पश्चिमभागे ॥ नितरामन्त. ॥

न्ययः । पुं । नाशे ॥ निपूर्वादिण् एरच् । न्ययंगतः पापः । नाशमित्यर्थः ॥

न्यस्तः । त्रि । निसृष्टे । त्यक्ते । निहि ते । स्थापिते ॥ यथा । शरणं मम न

, च्छिन्नजननी न पिता न सुता न सोदरा नान्यै, । परमं शरणमिदमेव चरणं मम न्यूहि देशिक न्यस्तोऽस्मि ॥

न्यस्यते स्म । अस् ० । क्त ॥

न्यस्तदण्डः । पुं । सन्न्यासिनि ॥

न्यस्तशस्त्रः । पुं । पितृषु ॥ त्रि । अस्त्रशस्त्ररहिते ॥ न्यस्तानि शस्त्राणि यैर्येन वा ॥

न्याक्यम् । न । भूंजी भुजकी फरुरी इत्यादि भाषाप्रसिद्धे भृष्टान्ने ॥ इति शब्दचन्द्रिका ॥

न्यादः । पुं । आहारे ॥ न्यदनम् । अद० । नौ घञ्घेस्त्यदेशः ॥

न्यायः । पुं । अभेदे । कल्पे । देशरूपे उचिते ॥ नियमेन ईयते । इण्० । परिन्योर्नीणोर्द्यूताभ्रेषयोरिति घञ् । एषोऽनन्याय उचितमित्यर्थः ॥ गोतमप्रणीते षोडशपदार्थनिरूपणपरे शास्त्रविशेषे । तर्कविद्यायाम् । आन्वीक्षिक्याम् ॥ एतद्दर्शनमते नित्येच्छाकृतिमतिसहितः परमात्मा ईश्वरः । एतु अस्मत्पदार्थो जीवातिरिक्तः । एतच्छास्त्रप्रयोजनं चार्वाकादि मतनिराकरणपूर्वकं जगत्कारणतयेश्वर संस्थापनं प्रमाणादि निरूपणेन वेदार्थनिर्धारणञ्च । एतद्दर्शनकारो गोतमः । तत्सूत्र प्रमाणादिषोडशपदार्थनिरूपणम् । तेषां तत्त्वज्ञानान्निःश्रेयसम् । तस्य भाष्यकारो वात्स्यायनः । तद्वार्त्तिककारः काश्यपः । तट्टीकाकारो वाचस्पति मिश्रः तच्छायवदयनाचार्यः । कुसुमाञ्जलिप्रभृति ग्रन्थकर्त्ता । तच्छिष्यप्रशिष्यादयो रामभद्रगङ्गेशोपाध्यायचिन्तामणिकारादयो बहवः ॥ ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकपञ्चावयववाक्ये ॥ यथा । पर्वतो वह्निमान् धूमात् यो यो धूमवान् स स वह्निमान् यथा महानसम् वह्निव्याप्यधूमवांश्चायम् तस्माद्वह्निमान् ॥ नीयते प्राप्यते विवक्षितार्थो येनेति न्यायः । अध्यायन्यायेति घञन्तो निपातितः ॥ नीतौ ॥ उपाये ॥ लोके ॥ युक्तौ ॥ युक्तिमूलकदृष्टान्तविशेषे ॥

न्यायपथः । पुं । मीमांसादिशास्त्रे ॥

न्यायवृत्तः । त्रि । शास्त्रविहिताचारे । यथाशास्त्रव्यवहारिणि ॥

न्यायसारिणी । स्त्री । भुप्ताम् । युक्तिपूर्वककर्मकारिण्याम् ॥ इति शब्दरत्नावली ॥ न्यायस्थले ॥

न्यायी । त्रि । न्यायवति ॥

न्याय्य. । त्रि । न्यायसिद्धे । युक्ते औपयिके ॥ न्यायादनपेतम् । धर्म्यपथ्य